# श्रीकूर्म महापुराणम्

# THE KŪRMA MAHĀPURĀṆAM



राष्ट्रिय-संस्कृत-संस्थान

नई दिल्ली

खेमराज श्रीकृष्णदासेन सम्पादितस्य मुम्बई श्री वेंकटेश्वरस्टीम मुद्रणालयेन प्रकाशितस्य पुनर्मुद्रणम्

# श्रीकूर्ममहापुराणम्

# THE KŪRMAMAHĀPURĀṆAM

कार्यकारोपाह्व डॉ. सी. आर. स्वामीनाथेन
भूमिकापाठशोधनाभ्यां परिष्कृतम्,
श्रीनागशरणसिंह सम्पादितश्लोकानुक्रमण्या सहितं



राष्ट्रिय-संस्कृत-संस्थानम्
५६-५७ इन्स्टीट्यूशनल एरिया, जनकपुरी, नई दिल्ली - ११००५८

प्रकाशकः

प्रो. वी. कुटुम्ब शास्त्री

निदेशकः

राष्ट्रिय-संस्कृत-संस्थानम्

५६-५७ इन्स्टीट्यूशनल एरिया, जनकपुरी,

नई दिल्ली - ११००५८

पुनः मुद्रण २००२

मूल्यम्: रू ६६.००

मुद्रक




नाग पब्लिशर्स

११ ए यू.ए., जवाहर नगर, दिल्ली-११०००७



डा. मुरली मनोहर जोशी
DR. MURLI MANOHAR JOSHI

मानव संसाधन विकास मंत्री
भारत
नई दिल्ली - ११० ००१
MINISTER OF
HUMAN RESOURCE DEVELOPMENT
INDIA
NEW DELHI-110 001

## सन्देशः

संस्कृतसाहित्ये सन्ति बहूनि ग्रन्थरत्नानि येषां पठनपाठनम् अनुसन्धानं च सहस्रेभ्यो वर्षेभ्यः राष्ट्रेऽस्मिन् निरन्तरं प्रवर्तमानम् आसीत्। वेदशास्त्रस्मृतिपुराणादिरूपं विशालकायं वाङ्मयं संस्कृते उपलभ्यमानमस्ति। तदेतत् वाङ्मयं प्रतिष्ठितैः विद्वद्भिः तदा तदा महता परिश्रमेण महता च धनव्ययेन अंशतः प्रकाशितमप्यासीत्। परन्तु गच्छता कालेन संस्कृत- मुद्रितपुस्तकानामुपलब्धिः पण्डितेभ्यः छात्रेभ्यः तथा सामान्यजनेभ्यः दुर्लभा जाता। अतः सुदुर्लभान् सुसम्पादितान् एतान् बहूपयोगिनः संस्कृतग्रन्थान् छायाचित्रद्वारकमुद्रणविधिमनुसृत्य पुनर्मुद्रयित्वा न्यूनतममूल्येन विक्रयणं कर्तुं काचित् महत्त्वपूर्णा योजना मानवसंसाधनविकासमन्त्रालयेन स्वीकृता तदङ्गभूत - राष्ट्रियसंस्कृतसंस्थानेन कार्यान्विता चासीत्। ऐषमः पुस्तकवर्षे विक्रीतचराणाम् एकपञ्चाशत् ग्रन्थानां मुद्रणं विधातुं संस्थानेन संकल्पितमस्ति।

अहमाशासे यत् दूरगामिना एतेनोपक्रमेण संस्कृतविद्वांसः, छात्राः संस्कृतप्रेमिणः सामान्यजनाश्च लाभान्विताः भवेयुः, संस्कृतनिष्ठं ज्ञानवैभवम् इतोऽपि अधिकतरं विशदायमानं च भवेत्। कामये यत् राष्ट्रियसंस्कृतसंस्थानं योजनायामस्यां भिन्नभिन्नान् महत्त्वपूर्णान् ग्रन्थान् प्रकाश्य संस्कृतस्य सेवां इतोऽप्यधिकं कुर्यादिति।

संस्कृत साहित्य में अनेक ग्रन्थरत्न विद्यमान हैं जिनका पठन-पाठन एवं अनुसन्धान इस राष्ट्र में सहस्रों वर्षों से चला आ रहा है। वेद, शास्त्र, स्मृति एवं पुराण जैसे विशाल ग्रन्थ संस्कृत वाङ्.मय का अंग हैं। यह वाङ्.मय समय-समय पर प्रतिष्ठित विद्वानों द्वारा परिश्रम एवं आर्थिक व्यय से अंशतः प्रकाशित भी हुआ है। किन्तु समय के साथ इन ग्रन्थों की मुद्रित पुस्तकें छात्रों, विद्वानो एवं सामान्यजनों को दुर्लभ होने लगी हैं। अतः इन दुर्लभ सुसम्पादित ग्रन्थों का पुनर्मुद्रण कर न्यूनतम मूल्य पर उपलब्ध कराने की योजना मानव-संसाधन-विकास-मंत्रालय एवं उसके अंगीभूत राष्ट्रिय-संस्कृत-संस्थान के द्वारा कार्यान्वित की गयी है। इस पुस्तक वर्ष में इक्यावन पुस्तकों का पुनर्मुद्रण संकल्पित है जो संस्थान के विक्रय विभाग में सम्प्रति अनुपलब्ध हो चुकी हैं।

मैं आशा करता हूँ कि इस दूरगामी उपक्रम से संस्कृत के विद्वान्, छात्र एवं संस्कृतप्रेमी सामान्यजन लाभान्वित होंगे तथा संस्कृत के ज्ञान वैभव का विस्तार होगा। साथ ही मैं यह भी कामना करता हूँ कि राष्ट्रिय संस्कृत संस्थान इस योजना में अन्य महत्त्वपूर्ण ग्रन्थों को भी प्रकाशित कर संस्कृत की श्रीवृद्धि करेगा।

(डॉ० मुरली मनोहर जोशी)

नई दिल्ली
09-04-02

# आमुखम्

सुविदितं विदुषां यत् पुराणानि प्राचीनभारतस्य इतिहास-विद्या-कला-स्थापत्य-शिल्प-साहित्यशास्त्रप्रभृतिविषयाणां ज्ञानस्य प्रथमसाधनभूतानि समाजे प्रतिष्ठितानि वर्तन्ते। यदपि पुराणविद्या महापुराणोपपुराणभेदेन द्विधा कल्प्यते तथापि वेदमार्गोपवृंहण-परत्वात् द्वयोरपि समानं महत्त्वं स्वीक्रियते। अस्माकं प्रत्नैः अष्टादशसंख्यानां पुराणग्रन्थनां संकेतभाषया इत्थं परिगणनं कृतम्।

मद्वयं भद्वयं चैव बत्रयं वचतुष्टयं।

अनापल्लिंगकूस्कानि पुराणनिपृथक् पृथक्॥ इति।

तेन मद्वयमिति मात्स्य-मार्कण्डेये, भद्वयमिति भविष्यद्भागवते, बत्रयमिति ब्रह्म-ब्रह्माण्ड-ब्रह्मवैवर्तानि, वचतुष्टयमिति वामन-विष्णु-वायु-वाराहपुराणानि, **अ**-अग्निपुराणं, **ना**-नारदीयं, **प**-पाद्मं, **लिं**-लैंगं, **ग**-गारुडं, **कू**-कौर्मं, **स्क**-स्कान्दं च पुराणम्। एकैकस्याप्यस्य संप्रदायानुगुणम् उपपुराणमपि दृश्यते। ऊनविंशतिशतके सर्वाण्यपि पुराणानि इतस्ततः प्रकीर्णाध्यायानि समग्रतया दुर्लभान्यासन्। तस्मिन् काले भारतीयवाङ्मयप्रकाशकाः केचन पुण्यकर्माणः पुराणानां अपि प्रकाशनं कृतवन्तः। तत्रापि मुम्बईस्थक्षेमराजप्रेसद्वारा प्रथमतः सम्यक् संशोधितं रूपं संस्कृतविदुषां साहाय्येन प्रकाश्यं नीतम्। प्रथमं पत्राकाररूपेण वाचनपठनसौकर्याय पुराणानां प्रकाशनमभूत्। महता प्रयासेन धनव्ययेन च प्रकाशितचराः ईदृशाः ग्रन्थाः कालान्तरे दुर्लभतां गताः। तेन च संस्कृताध्ययन-अनुसन्धानक्षेत्रे काठिन्यम् अनुभूयमानमासीत् भारतशासनान्तर्गतमानवसंसाधनविकास-मन्त्रालयस्य प्रकाशितचराणां दुर्लभानां च ग्रन्थानां पुन-र्मुद्रणात्मकपरियोजनायां पुनर्मुद्रिताः अपि इमे ग्रन्थाः कालक्रमेण भूयोऽपि दुर्लभतां गताः। अतः

द्वितीयवारमपि पुनर्मुद्रणं कारयित्वा पुस्तकानां सुलभता सम्पादनीया इत्येतत् मन्त्रालयस्य संकल्पमनु ग्रन्थरत्नस्यास्य पुनर्मुद्रणं प्रकाशनं च विधीयमानमस्ति ।

सन्दर्भेऽस्मिन् अपेक्षितं मार्गदर्शनं तथा शुभसन्देशं च प्रदाय राष्ट्रियसंस्कृतसंस्थानं समेधितवद्भ्यः मानवसंसाधनविकासमन्त्रिवर्येभ्यः डा० मुरलीमनोहरजोशीमहाभागेभ्यः आधमर्ण्यं वहामि । संस्थानस्य अर्थसमितेः अध्यक्षेभ्यः निर्णयस्यास्य स्वीकारे सहकृतवद्भ्यः संस्थानस्य उपाध्यक्षेभ्यः श्री नी० गोपालस्वामी महोदयेभ्यः हार्दान् धन्यवादान् व्याहरामि । प्राशासनिकं साहाय्यं विधाय कार्यसाफल्याय सहकृतवत्यै मानवसंसाधनविकासमन्त्रालयस्य भाषाविभागे संयुक्तसचिवायै श्रीमत्यै बेलाबैनर्जीमहाभागायै तथा अन्येभ्यश्च तद्विभागीयाधिकारिभ्य धन्यवादान् व्याहरामि । संकल्पस्यास्य साकारतासम्पादने योग्यं प्रयासं कृतवन्तं संस्थानस्य शोधप्रकाशनविभागस्य सहायकनिदेशकं डा० प्रकाशपाण्डेयं तदनुयायिकार्यकर्तृगणं च साधुवादैः सम्भावयामि ।

योग्ये काले सुन्दरं पुनर्मुद्रणं विधाय उपकृतवते नाग पब्लिशर्स इति मुद्रणालयस्य पतये श्री नरेन्द्र प्रतापाय साधुवादान् व्याहरामि । आशासे यत् भूयः कृतेन अनेन द्वितीयपुनर्मुद्रणप्रयत्नेन संस्कृतविद्वांसः संस्कृतच्छात्राः संस्कृतप्रेमिणश्च लाभान्विताः प्रेरिताश्च भवेयुः इति ।

दिनाङ्कः
१०.४.२००२

संस्कृतसेवकः
वेम्पटिकुटुम्बशास्त्री
निदेशकः
राष्ट्रिय-संस्कृत-संस्थानम्, नवदेहली ।

# INTRODUCTION

In the priority of canonical literature of the Hindus, Śruti namely the Vedas occupy the pre-eminent position, since they are revelations free from the defects of human origin. Next come the Smṛtis which are the products of human recollection of the implications of Vedic revelation. Next in order come the Purāṇas which are didactical and historical narratives meant to substantiate the truth of the first two sources of knowledge.

The Purāṇas are often considered as unauthentic and a jumbling of religious thoughts; Unauthentic because of their internal contradictions; a mixture of fiction and facts and hence unreliable as historical documents and being a combination of poetry and versification, not fit to be called good literature.

Textual veracity of the Purāṇas are often questioned since the purity of the oral tradition of the Vedic texts has not been observed or maintained in the case of the transmission of the Purāṇa literature from one generation to the other. With the development of the practice of writing down our scriptures, the Purāṇic tradition became more corrupted by inter-polations and alterations often caused by the prejudices and predilictions of the scribes.

In spite of all these, the Indologists have recognised that there are very useful peaces of information in the Purāṇic texts which if properly scanned and re-arranged and assessed in the light of the critical texts of the epics and Sūtra literature, can provide many connecting links in our literary, religious and historical traditions. It is in this context that the publication of the Purāṇic texts becomes significant.

The All India Kashi Raj Trust, Varanasi has already started the difficult task of preparing critical editions of all the Mahāpurāṇas. Obviously, this is going to be a time-consuming exercise since each Purāṇa has got at least half a dozen regional textual traditions to be reconciled before deciding the original texts. During this long period of reconstruction, we cannot afford a complete stoppage of activity as far as research in the Purāṇas are concerned and hence attempts like the one presented in this volume to reproduce the vulgate text of the Purāṇa is essential in the present circumstances.

The Kūrma Purāṇa, as the name itself indicates, was narrated by Lord Viṣṇu in his incarnation as the tortoise at the time of the churning of the milky ocean by Devas and Asuras who were in quest of the immortalising nectar. It starts with a discourse on the concept of Māyā as a potent tool in the hands of the supreme being to work out His scheme of creation. The same concept when not well-husbanded by the ordinary mortals becomes the cause of

degradation, illusion and stuper.

The wellknown five items that should invariably form parts of a Purāṇa have all been faithfully represented in the Kūrma. Among the Manvantaras, the period of Svayambhuva Manu has been reliably dealt with. The story of Dakṣa and the sacrifice he performed with a view to insult Śiva, the doom he met with due to wrath of Śiva and the self-annihilation of his daughter, Dākṣayāni, and her reappearance as the daughter of Himavān, have been described more or less on the lines of the other Purāṇas. The incarnation of Viṣṇu as Varāha and Narasiṁha and a short account of the story of Rāma also find place in this Purāṇa. The degradation of the Brahmin caste due to mutual jealousy, elaborately dealt with in the Devī Bhāgavata in the episode of Sage Gautama being blackmailed by the Brahmins who are given shelter and food by him, is recalled here. The Brahmins who were cursed and excommunicated from the Vedic society, as a result of their treachery to Gautama, were provided with non-Vedic Śāstras like Kāpāla, Pāśupata etc. There is an obvious attempt to group all these sectarian schools of Śaivism and Vaiṣṇavism as outside the Vedic lore. Still the Purāṇa concedes that the cursed souls have the hope of redumption through these non-Vedic paths after hard and long struggle. The story of Andhaka being vanquished by Śiva and the story of Pururavāsa and Urvaśī are narrated in detail and the royal line of the Lunar dynasty is described. Dealing with the Yādavas, Kṛṣṇa worshipping Śiva for the sake of progeny is highlighted. The origin of Liṅga worship and the identification of Śiva and Viṣṇu in the form of Liṅga are significantly highlighted in this Purāṇa. Incidently the greatness of the city of Banaras is elaborately dealt with. The various pilgrimage spots in and around Kāśī and the story of emancipation of Piśāca; the association of Vyāsa with that city and the importance of Prayāga are also given in detail. Then follows the geographical set-up of the universe; the various continents; the movement of the Sun and Moon and the Astrophysical set up are all described alongwith details of the universe.

We have also a detailed description of the Vedic traditions and how in each cycle of the four Yugas, there appears a Vyāsa to rearrange the Vedic texts. 28 such Vyāsas have been enumerated. From time to time, the different schools (Śākhās) have been regrouped by the Vyāsa of that Kalpa. 21 Śākhās of the Ṛgveda, hundred branches of the Yajurveda, one thousand schools of the Sāmaveda and 18 divisions of the Atharvaveda have been made available by last of the Vyāsas for the present Kalpa.

The second part of the Purāṇa starting from the 54th chapter contains metaphysical speculations and the main theme is Advaita. Here and there, the identity of Śiva and Viṣṇu is specially emphasised not only in support of

the monistic philosophy but also with a view to discourage the speculations about the superiority of one over the other. In one place Viṣṇu is described as forming the left half of Śiva's body. The entire discourse on philosophy is given by Śiva to seekers of truth like Sanaka, on the request of Viṣṇu and in his immediate presence.

More or less on the lines of the Bhagavat Gītā, Bhakti Jñāna and Karma Yogas are dealt with as complimentary to each other. In order to attain Yoga Siddhi, meditation, breath control, Āsana, Celibacy, Ahimsā etc. are described in detail. Then follows the duties of the various castes and the Āśramas; the importance of Guru and the duties of a disciple are enumerated.

The importance of Mūrtipūjā and of the oblation to the departed ancestors is highlighted. The ritual of Śrāddha, the efficacy of Dāna, the importance to maintaining the purity of food and the various purificatory rights to wash off one's sins are also discussed.

In short, this Purāṇa has all that is conventionally expected to be found in a Purāṇa and motive throughout is the unity of Śiva and Viṣṇu.

13th Aug. 1983 Dr. C. R. Swaminathan

श्रीवेङ्कटेशो विजयतेतराम् ।

# अथ कूर्मपुराणविषयानुक्रमणिका।

अध्यायाः विषयाः



अध्यायाः विषयाः

इति श्रीकूर्ममहापुराणविषयाऽनुक्रमणिका समाप्ता ।

॥ ❀ ॥ श्रीगणेशाय नमः ॥ ❀ ॥ श्रीगुरुभ्यो नमः ॥ ❀ ॥ अथ कूर्मपुराणं प्रारभ्यते ॥ ❀ ॥ अथ इन्द्रद्युम्नस्य मोक्षप्राप्ति वर्णनम् ॥ ❀ ॥ ॐ नमस्कृत्याप्रमेयाय विष्णवे कूर्मरूपिणे ॥ पुराणं संप्रवक्ष्यामि यदुक्तं विश्वयोनिना ॥ १ ॥ संत्रान्ते सूतमनघं नैमिषेया महर्षयः ॥ पुराणसंहितां पुण्यां पप्रच्छू रोमहर्षणम् ॥ २ ॥ त्वया सूत महाबुद्धे भगवान् ब्रह्मवित्तमः ॥ इतिहासपुराणार्थं व्यासः सम्यगुपासितः ॥ ३ ॥ तस्य ते सर्वरोमाणि वचसा हृषितानि यत् ॥ द्वैपायनस्य तु भवांस्ततो वै रोमहर्षणः ॥ ४ ॥ भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः ॥ मुनीनां संहितां वक्तुं व्यासः पौराणिकीं पुरा ॥ ५ ॥ त्वं हि स्वायम्भुवे यज्ञे सुत्याहे वितते सति ॥ संभूतः संहितां वक्तुं स्वांशेन पुरुषोत्तमः ॥ ६ ॥ तस्माद्भवन्तं पृच्छामः पुराणं कौर्ममुत्तमम् ॥ वक्तुमर्हसि चास्माकं पुराणार्थविशारद ॥ ७ ॥ मुनीनां वचनं श्रुत्वा सूतः पौराणिकोत्तमः ॥ प्रणम्य मनसा प्राह गुरुं सत्यवतीसुतम् ॥ ८ ॥ रोमहर्षण उवाच ॥ नमस्कृत्य जगद्योनिं कूर्मरूपधरं हरिम् ॥ वक्ष्ये पौराणिकीं दिव्यां कथां पापप्रणाशिनीम् ॥ ९ ॥ यां श्रुत्वा पापकर्मापि गच्छेत परमां गतिम् ॥ न नास्तिके कथां पुण्यामिमां ब्रूयात्कदाचन ॥ १० ॥ श्रद्दधानाय शान्ताय धार्मिकाय द्विजातये ॥ इमां कथामनुब्रूयात्साक्षान्नारायणेरिताम् ॥ ११ ॥ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥ १२ ॥ ब्राह्मं पुराणं प्रथमं पाद्मं वैष्णवमेव च ॥ शैवं भागवतञ्चैव भविष्यं नारदीयकम् ॥ १३ ॥ मार्कण्डेयमथाग्नेयं ब्रह्मवैवर्त्तमेव च ॥ लैङ्गं तथा च वाराहं स्कान्दं वामनमेव च ॥ १४ ॥ कौर्म्मं मात्स्यं गारुडञ्च वायवीयमनन्तरम् ॥ अष्टादशं समुद्दिष्टं ब्रह्माण्डमिति संज्ञितम् ॥ १५ ॥ अन्यान्युपपुराणानि मुनिभिः कथितानि तु ॥ अष्टादश पुराणानि श्रुत्वा संक्षेपतो द्विजाः ॥ १६ ॥ आद्यं सन

---

१ सवान्ते इति पा० । २ सूतमनघा इति पा० । ३ ब्रह्मसंयुतः इति पा० । ४ संहिता वक्तुं व्यासः पौराणिकीः पुरा इति पा० । ५ सत्यादौ इति पा०—सप्ताहे इति पा० । सुत्याहे सुत्या यज्ञार्थं स्नानं तस्याः अहः तस्मिन् इत्यर्थः । ६ हरिः इति पा० । ७ गच्छेत इति आर्षमात्मनेपदम् । ८ वैष्णवमुच्यते इति पा० । ९ वराहञ्च इति पा० । १० मात्स्यञ्च गरुडम् इति पा० । ११ मनूत्तमम् इति पा० ।

त्कुमारोक्तंनारसिंहमतः परम् ॥ तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥ १७ ॥ चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥ दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥ १८ ॥ कापिलं वामनञ्चैव तथैवोशनसेरितम् ॥ ब्रह्माण्डं वारुणञ्चैव कालिकाह्वयमेव च ॥ १९ ॥ माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ॥ पराशरोक्तं मारीचं तथैव भार्गवाह्वयम् ॥ २० ॥ इदन्तु पञ्चदशकं पुराणं कौर्ममुत्तमम् ॥ चतुर्द्धा संस्थितं पुण्यं संहितानां प्रभेदतः ॥ २१ ॥ ब्राह्मी भागवती सौरी वैष्णवी च प्रकीर्त्तिताः ॥ चतस्रः संहिताः पुण्या धर्मकामार्थमोक्षदाः ॥ २२ ॥ इयन्तु संहिता ब्राह्मी चतुर्वेदैस्तु सम्मिता ॥ भवन्ति षट् सहस्राणि श्लोकानामत्र संख्यया ॥ २३ ॥ यत्र धर्म्मार्थकामानां मोक्षस्य च मुनीश्वराः ॥ माहात्म्यमखिलं ब्रह्म ज्ञायते परमेश्वरः ॥ २४ ॥ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंशानुचरितं पुण्या दिव्या प्रासङ्गिकी कथा ॥ २५ ॥ ब्राह्मणाद्यैरियं धार्या धार्मिकैर्वेदपारगैः ॥ तामहं वर्णयिष्यामि व्यासेन कथितां पुरा ॥ २६ ॥ पुरामृतार्थं दैतेयदानवैः सह देवताः ॥ मन्थानं मन्दरं कृत्वा ममन्थुः क्षीरसागरम् ॥ २७ ॥ मथ्यमाने तदा तस्मिन्कूर्मरूपी जनार्दनः ॥ बभार मन्दरं देवो देवानां हितकाम्यया ॥ २८ ॥ देवाश्च तुष्टुवुर्देवं नारदाद्या महर्षयः ॥ कूर्मरूपधरं दृष्ट्वा साक्षिणं विष्णुमव्ययम् ॥ २९ ॥ तदन्तरेऽभवद्देवी श्रीर्नारायणवल्लभा ॥ जग्राह भगवान् विष्णुस्तामेव पुरुषोत्तमः ॥ ३० ॥ तेजसां विष्णुमव्यक्तं नारदाद्या महर्षयः ॥ मोहिताः सह शक्रेण श्रेयोवचनमब्रुवन् ॥ ३१ ॥ भगवन् देवदेवेश नारायण जगन्मय ॥ कैषा देवी विशालाक्षी यथावद्ब्रूहि पृच्छतांम् ॥ ३२ ॥ श्रुत्वा तेषां तदा वाक्यं विष्णुर्दानवमर्दनः ॥ प्रोवाच देवीं संप्रेक्ष्य नारदादीनकल्मषान् ॥ ३३ ॥ इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी ॥ माया मम प्रियानन्ता ययेदं धार्यते जगत् ॥ ३४ ॥ अनयैव

---

१ पराशरोक्तमपरं० मारीचम् इति पा० । २ सर्वपापप्रणाशनाः इति पा० । ३ ब्रह्मन् ज्ञायते पारमेश्वरम् इति पा० । ४ शान्तमानसैरिति पा० । ५ दधार मन्दरं देवो लोकानाम् इति पा० । ६ तदन्तरे–तत्र अवकाशे तदा इत्यर्थः । ७ तेजसा अव्यक्तं दुर्दर्शेन ज्योतिषा अस्पष्टदृष्टमित्यर्थः । ८ श्रेयोवचनं श्रेयःप्रधानं वचनं प्रशस्यतमं वचनमित्यर्थः । ९ यथावद्वक्तुमर्हसि इति पा० । १० पृच्छतां नः, सम्बन्धविवक्षायां षष्ठी । ११ मोहितामिति पा० ।

जगत्सर्वं सदेवासुरमानुषम् ॥ मोहयामि द्विजश्रेष्ठा ग्रसामि विसृजामि च ॥ ३५ ॥ उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ॥ विद्ययां वीक्ष्य चात्मानं तरन्ति विपुलामिमाम् ॥ ३६ ॥ अस्यास्त्वंशानधिष्ठाय शक्तिमन्तोऽभवन् सुराः ॥ ब्रह्मेशानादयः सर्वे सर्वशक्तिरियं मम ॥ ३७ ॥ सैषा सर्वजगत्सूतिः प्रकृतिस्त्रिगुणात्मिका ॥ प्रागेव मत्तः संजाता श्रीः कल्पे पद्मवासिनी ॥ ३८ ॥ चतुर्भुजा शङ्खचक्रपद्महस्ता स्रगन्विता ॥ कोटिसूर्यप्रतीकाशा मोहिनी सर्वदेहिनाम् ॥ ३९ ॥ नालं देवा न पितरो मानवा वासवोऽपि च ॥ मायामेतां समुत्तर्तुं ये चान्ये भुवि देहिनः ॥ ४० ॥ इत्युक्ता वासुदेवेन मुनयो विष्णुमब्रुवन् ॥ ब्रूहि त्वं पुण्डरीकाक्ष यदि कालत्रयेऽपि च ॥ ४१ ॥ अथोवाच हृषीकेशो मुनीन्मुनिगणार्चितः ॥ अस्ति द्विजातिप्रवर इन्द्रद्युम्न इति श्रुतः ॥ ४२ ॥ पूर्वजन्मनि राजासावधृष्यः शङ्करादिभिः ॥ दृष्ट्वा मां कूर्मसंस्थानं श्रुत्वा पौराणिकीं स्वयम् ॥ ४३ ॥ संहितां मन्मुखाद्दिव्यां पुरस्कृत्य मुनीश्वरान् ॥ ब्रह्माणञ्च महादेवं देवांश्चान्यान् स्वशक्तिभिः ॥ ४४ ॥ मच्छक्तौ संस्थितान् बुद्ध्वा मामेव शरणं गतः ॥ सम्भाषितो मया चाथ विप्रयोनिं गमिष्यसि ॥ ४५ ॥ इन्द्रद्युम्न इति ख्यातो जातिं स्मरसि पौर्विकीम् ॥ सर्वेषामेव भूताना देवानामप्यगोचरम् ॥ ४६ ॥ वक्तव्यं यद्गुह्यतमं दास्ये ज्ञानं तवानघ ॥ लब्ध्वा तन्मामकं ज्ञानं मामेवान्ते प्रवेक्ष्यसि ॥ ४७ ॥ अंशान्तरेण भूम्यां त्वं तत्र तिष्ठ सुनिर्वृतः ॥ वैवस्वतेऽन्तरेऽतीते कार्यार्थं मां प्रवेक्ष्यसि ॥ ४८ ॥ मां प्रणम्य पुरीं गत्वा पालयामास मेदिनीम् ॥ कालधर्मं गतः कालाच्छ्वेतद्वीपे मया सह ॥ ४९ ॥ भुक्त्वा तान्वैष्णवान् भोगान्योगिनामप्यगोचरान् ॥ मदाज्ञया मुनिश्रेष्ठा जज्ञे विप्रकुले पुनः ॥ ५० ॥ ज्ञात्वा मां वासुदेवाख्यं यत्र द्वे निहितेऽक्षरे ॥ विद्याविद्ये गूढरूपे यद्ब्रह्म परमं विदुः ॥ ५१ ॥ सोऽर्चया-

---

१ विज्ञायान्वीक्ष्य चात्मानं भवन्ति इति पा० । विज्ञायोद्वीक्ष्य इति पा० । विज्ञाय वीक्ष्य इति पा० । २ द्विजाः इति पा० । ३ पद्मे कल्पवासिनी इति पा० । ४ शुभान्विता इति पा० । सुकान्तिका इति पा० । ५ यदि कालत्रयेऽपि सः इति, येन सा तारिता पुरा इति, यथा कालत्रयेऽपि च इति च पा० । ६ मुनीनां पुरतः प्रभुः इति पा० । ७ पौराणिकान्वयमिति पा० । ८ स चोदितो मया चैव इति पा० । ९ अंशावतारे इति पा० । १० विपुलान् इति पा० । ११ गूढरूपे इति पा० ।

मास भूतानामाश्रयं परमेश्वरम् ॥ व्रतोपवासनियमैर्होमैर्ब्राह्मणतर्पणैः ॥ ५२ ॥ तदाशीस्तन्नमस्कारस्तन्निष्ठस्तत्परायणः ॥ आराधयन् महादेवं योगिनां हृदि संस्थितम् ॥ ५३ ॥ तस्यैवं वर्त्तमानस्य कदाचित्परमा कला॥ स्वरूपं दर्शयामास दिव्यं विष्णुसमुद्भवम् ॥५४॥ दृष्ट्वा प्रणम्य शिरसा विष्णोर्भगवतः प्रियाम् ॥ संस्तूय विविधैः स्तोत्रैः कृताञ्जलिरभाषत ॥ ५५ ॥ इन्द्रद्युम्न उवाच ॥ का त्वं देवि विशालाक्षि विष्णुचिह्नाङ्किते शुभे ॥ याथातथ्येन वै भावं तवेदानीं ब्रवीहि मे ॥ ५६ ॥ तस्य तद्वाक्यमाकर्ण्य सुप्रसन्ना सुमङ्गला ॥ हसन्ती संस्मरन्विष्णुं प्रियं ब्राह्मणमब्रवीत् ॥ ५७ ॥ श्रीरुवाच ॥ न मां पश्यन्ति मुनयो देवाः शक्रपुरोगमाः ॥ नारायणात्मिकामेकां मायाहं तन्मयी परा ॥ ५८ ॥ न मे नारायणाद्भेदो विद्यते हि विचारतः ॥ तन्मय्यहं परं ब्रह्म स विष्णुः परमेश्वरः ॥ ५९ ॥ येऽर्चयन्तीह भूतानामाश्रयं पुरुषोत्तमम् ॥ ज्ञानेन कर्मयोगेन न तेषां प्रभवाम्यहम् ॥ ६० ॥ तस्मादनादिनिधनं कर्मयोगपरायणः ॥ ज्ञानेनाराधयानन्तं ततो मोक्षमवाप्स्यसि ॥ ६१ ॥ इत्युक्तः स मुनिश्रेष्ठ इन्द्रद्युम्नो महामतिः ॥ प्रणम्य शिरसा देवीं प्राञ्जलिः पुनरब्रवीत् ॥ ६२ ॥ कथं स भगवानीशः शाश्वतो निष्कलोऽच्युतः ॥ ज्ञातुं हि शक्यते देवि ब्रूहि मे परमेश्वरि ॥ ६३ ॥ एवमुक्ताथ विप्रेण देवी कमलवासिनी ॥ साक्षान्नारायणो ज्ञानं दास्यतीत्याह तं मुनिम् ॥ ६४ ॥ उभाभ्यामथ हस्ताभ्यां संस्पृश्य प्रणतं मुनिम् ॥ स्मृत्वा परात्परं विष्णुं तत्रैवान्तरधीयत ॥ ६५ ॥ सोऽपि नारायणं द्रष्टुं परमेण समाधिना ॥ आराधयद्धृषीकेशं प्रणतार्त्तिप्रभञ्जनम् ॥ ६६ ॥ ततो बहुतिथे काले गते नारायणः स्वयम् ॥ प्रादुरासीन्महायोगी पीतवासा जगन्मयः ॥ ६७ ॥ दृष्ट्वा देवं समायान्तं विष्णुमात्मानमव्ययम् ॥ जानुभ्यामवनिं गत्वा तुष्टाव गरुडध्वजम् ॥ ६८ ॥ इन्द्रद्युम्न उवाच ॥ यज्ञेशाच्युत गोविन्द माधवानन्त केशव ॥ कृष्ण विष्णो हृषीकेश तुभ्यं विश्वात्मने नमः ॥ ६९ ॥ नमोऽस्तु ते पुराणाय हरये विश्वमूर्त्तये ॥ सर्गस्थितिविनाशानां

१ प्रभामिति पा० । २ आर्षःप्रयोगः, ब्रूहि । ३ आर्षः प्रयोगः संस्मरन्ती । ४ भूतानामालयम् इति पा० । ५ ज्ञानेनाराधयेशानम् इति पा० । ६ एवमुक्ता तु देवेन इति पा० । ७ आद्यं परं हृषीकेशं प्रणतार्त्तिप्रणाशनम् इति पा० । ८ आविरासीत् इति पा० । ९ विष्णवे विश्वयोनये इति पा० ।

हेतवेऽनन्तशक्तये ॥ ७० ॥ निर्गुणाय नमस्तुभ्यं निष्कलाय नमोनमः ॥ पुरुषाय नमस्तेऽस्तु विश्वरूपाय ते नमः ॥ ७१ ॥ नमस्ते वासुदेवाय विष्णवे विश्वयोनये ॥ आदिमध्यान्तहीनाय ज्ञानगम्याय ते नमः ॥ ७२ ॥ नमस्ते निर्विकाराय निष्प्रपञ्चाय ते नमः ॥ भेदाभेदविहीनाय नमोऽस्त्वानन्दरूपिणे[2] ॥ ७३ ॥ नमस्ताराय शान्ताय नमोऽप्रतिहतात्मने ॥ अनन्तमूर्त्तये तुभ्यममूर्त्ताय नमो नमः ॥ ७४ ॥ नमस्ते परमार्थाय मायातीताय ते नमः ॥ नमस्ते परमेशाय ब्रह्मणे परमात्मने ॥ ७५ ॥ नमोऽस्तुते सुसूक्ष्माय महादेवाय ते नमः ॥ नमः शिवाय शुद्धाय नमस्ते परमेष्ठिने ॥ ७६ ॥ त्वय्येतत्[5]सृष्टमखिलं त्वमेव परमा गतिः ॥ त्वं पिता सर्वभूतानां त्वं माता पुरुषोत्तम ॥ ७७ ॥ त्वमक्षरं परं धाम चिन्मात्रं व्योमं निष्कलम् ॥ सर्वस्याधारमव्यक्तमनन्तं तमसः परम् ॥ ७८ ॥ प्रपश्यन्ति परात्मानं ज्ञानदीपेन केवलम् ॥ प्रपद्ये भवतो रूपं तद्विष्णोः परमं पदम् ॥ ७९ ॥ एवं स्तुवन्तं भगवान् भूतात्मा भूतभावनः ॥ उभाभ्यामथ हस्ताभ्यां पस्पर्श प्रहसन्निव ॥ ८० ॥ स्पृष्टमात्रो भगवता विष्णुना मुनिपुङ्गवः ॥ यथावत्परमं तत्त्वं ज्ञातवांस्तत्प्रसादतः ॥८१॥ ततः प्रहृष्टमनसा प्रणिपत्य जनार्दनम् ॥ प्रोवाचोन्निद्रपद्माक्षं पीतवाससमच्युतम् ॥८२॥ त्वत्प्रसादादसन्दिग्धमुत्पन्नं पुरुषोत्तम ॥ ज्ञानं ब्रह्मैकविषयं परमानन्दसिद्धिदम् ॥ ८३ ॥ नमो भगवते तुभ्यं वासुदेवाय वेधसे ॥ किं करिष्यामि योगेशं[11] तन्मे वद जगन्मय ॥ ८४ ॥ श्रुत्वा नारायणो वाक्यमिन्द्रद्युम्नस्य माधवः[12] ॥ उवाच सस्मितं वाक्यमशेषं जगतो हितम्[13] ॥ ८५ ॥ श्रीभगवानुवाच ॥ वर्णाश्रमाचारवतां पुंसां देवो महेश्वरः ॥ ज्ञानेन भक्तियोगेन पूजनीयो न चान्यथा ॥ ८६ ॥ विज्ञाय तत्परं तत्त्वं विभूतिं कार्यकारणम् ॥ प्रवृत्तिश्चापि मे ज्ञात्वा मोक्षार्थीश्वरमर्चयेत् ॥ ८७ ॥ सर्वसंगान्परित्यज्य ज्ञात्वा मायामयं जगत् ॥ अद्वैतं भावयात्मानं द्रक्ष्यसे परमे

---

१ निष्कलायामलात्मने इति पा० । २ नमस्त्वानन्दमूर्त्तये इति पा० । ३ मायातीनाय ते नमः इति पा० । ४ नमस्ते शिवरूपाय इति पा० । ५ त्वय्यैव सृष्टमखिलम् इति पा० । ६ व्योमसंस्थितम् इति पा० । ७ प्रविशन्ति महात्मान इति, प्रपश्यंति महात्मान इति पा० । ८ प्रपद्यन्ते ततो रूपम् इति पा० । ९ प्रोवाच तं स पद्माक्षम् इति पा० । १० हेतवे इति पा० । ११ योगेन इति पा० । १२ धीमतः इति, धीमते इति पा० । १३ मशेषजगतो हितमिति पा० ।

श्वरम् ॥८८॥ त्रिविधां भावनां ब्रह्मन्प्रोच्यमानां निबोध मे ॥ एका मद्विषया तत्र द्वितीया व्यक्तसंश्रया ॥८९॥ अन्या च भावना ब्राह्मी विज्ञेया सा गुणातिगा ॥ आसामन्यतमाञ्चाथ भावनां भावयेद्बुधः ॥ ९० ॥ अशक्तः संश्रयेदाद्यामित्येषा वैदिकी श्रुतिः ॥ तस्मात्सर्वप्रयत्नेन तन्निष्ठस्तत्परायणः ॥ ९१॥ समाराधय विश्वेशं ततो मोक्षमवाप्स्यसि ॥ इन्द्रद्युम्न उवाच ॥ किन्तत्परतरं तत्त्वं का विभूतिर्जनार्दन ॥ ९२ ॥ किङ्कार्यं कारणं कस्त्वं प्रवृत्तिश्चापि का तव ॥ श्रीभगवानुवाच ॥ परात्परतरं तत्त्वं परं ब्रह्मैकमव्ययम् ॥ ९३ ॥ नित्यानन्दमयं ज्योतिरक्षरं तमसः परम् ॥ ऐश्वर्यं तस्य यन्नित्यं विभूतिरिति गीयते ॥ ९४ ॥ कार्यं जगदथाव्यक्तं कारणं शुद्धमक्षरम् ॥ अहं हि सर्वभूतानामन्तर्यामीश्वरः पुरः ॥ ९५ ॥ सर्गस्थित्यन्तकर्तृत्वं प्रवृत्तिर्मम गीयते ॥ एतद्विज्ञाय भावेन यथावदखिलं द्विज ॥ ९६ ॥ ततस्त्वं कर्मयोगेन शाश्वतं सम्यगर्चय ॥ इन्द्रद्युम्न उवाच ॥ के ते वर्णाश्रमाचारा यैः समाराध्यते परः ॥ ९७ ॥ ज्ञानञ्च कीदृशं दिव्यं भावनात्रयसंस्थितम् ॥ कथं सृष्टमिदं पूर्वं कथं संह्रियते पुनः ॥ ९८ ॥ कियत्यः सृष्टयो लोके वंशा मन्वन्तराणि च ॥ कानि तेषां प्रमाणानि पावनानि व्रतानि च ॥ ९९ ॥ तीर्थान्यर्कादिसंस्थानं पृथिव्यायामविस्तरम् ॥ कति द्वीपाः समुद्राश्च पर्वताश्च नदीनदाः ॥ १०० ॥ ब्रूहि मे पुण्डरीकाक्ष यथावदधुना पुनः ॥ श्रीकूर्म उवाच ॥ एवमुक्तोऽथ तेनाहं भक्तानुग्रहकाम्यया ॥ १०१ ॥ यथावदखिलं सम्यगवोचं मुनिपुङ्गवाः ॥ व्याख्यायाशेषमेवेदं यत्पृष्टोऽहं द्विजेन तु ॥ १०२ ॥ अनुगृह्य च तं विप्रं तत्रैवान्तर्हितोऽभवम् ॥ सोऽपि तेन विधानेन मदुक्तेन द्विजोत्तमाः ॥ १०३ ॥ आराधयामास परं भावपूतः समाहितः ॥ त्यक्त्वा पुत्रादिषु स्नेहं निर्द्वन्द्वो निष्परिग्रहः ॥ १०४ ॥ स न्यस्य सर्वकर्माणि परं वैराग्यमाश्रितः ॥ आत्मन्यात्मानमन्वीक्ष्य स्वात्मन्येवाखिलं जगत् ॥ १०५ ॥

---

१ निशामय इति, मया शृणु इति च पा० । २ अव्यक्तसंश्रया इति पा० । ३ नित्यानन्दपरम् इति पा० । ४ अहं हि सर्वभावानामीश्वरः प्रभुरव्ययः इति, अन्तर्योगीति पा० । ५ पुण्यम् इति पा० । ६ मिश्रितम् इति पा० । ७ पृथिव्या आयामो दैर्घ्यं विस्तरो विस्तारश्च तयोः समाहारः 'तत विस्तरे' इति पा० । ८ यथावदखिलं मम इति पा० । ९ सर्वमवोचम् इति पा० । १० भावैः सदभिप्रायैः पूत इत्यर्थः, भावयुक्तः इति पा । ११ संन्यस्य इति पा० ।

संप्राप्य भावनामन्त्यां ब्राह्मीमक्षरपूर्विकाम् ॥ अवाप परमं योगं येनैकं परिपश्यति ॥ १०६ ॥ यं विनिद्रा जितश्वासाः काङ्क्षन्ते मोक्ष काङ्क्षिणः ॥ ततः कदाचिद्योगीन्द्रो ब्रह्माणं द्रष्टुमव्ययम् ॥ १०७ ॥ जगामादित्यनिर्देशान्मानसोत्तरपर्वतम् ॥ आकाशेनैव विप्रेन्द्रो योगैश्वर्यप्रभावतः ॥ १०८॥ विमानं सूर्यसङ्काशं प्रादुर्भूतमनुत्तमम् ॥ अन्वगच्छन्देवगणा गन्धर्वाप्सरसां गणाः ॥ १०९ ॥ दृष्ट्वान्ये पथि योगीन्द्रं सिद्धा ब्रह्मर्षयो ययुः ॥ ततः स गत्वानुगिरिं विवेश सुरवन्दितम् ॥ ११० ॥ स्थानं तद्योगिभिर्जुष्टं यत्रास्ते परमः पुमान् ॥ संप्राप्य परमं स्थानं सूर्यायुतसमप्रभम् ॥ १११ ॥ विवेश चान्तर्भवनं देवानाञ्च दुरासदम् ॥ विचिन्तयामास परं शरण्यं सर्वदेहिनाम् ॥ ११२ ॥ अनादिनिधनं चैवं देवदेवं पितामहम् ॥ ततः प्रादुरभूत्तस्मिन् प्रकाशः परमाद्भुतः ॥ ११३ ॥ तन्मध्ये पुरुषं पूर्वमपश्यत् परमं पदम् ॥ महान्तं तेजसो राशिमगम्यं ब्रह्मविद्विषाम् ॥ ११४ ॥ चतुर्मुखमुदाराङ्गमर्चिभिरुपशोभितम् ॥ सोऽपि योगिनमन्वीक्ष्य प्रणमन्तमुपस्थितम् ॥ ११५ ॥ प्रत्युद्गम्य स्वयं देवो विश्वात्मा परिषस्वजे ॥ परिष्वक्तस्य देवेन द्विजेन्द्रस्याथ देहतः ॥ ११६॥ निर्गत्य महती ज्योत्स्ना विवेशादित्यमण्डलम् ॥ ऋग्यजुःसामसंज्ञं तत्पवित्रममलं पदम् ॥११७॥ हिरण्यगर्भो भगवान् यत्रास्ते हव्यकव्यभुक् ॥ द्वारं तद्योगिनामाद्यं वेदान्तेषु प्रतिष्ठितम् ॥ ११८ ॥ ब्रह्मतेजोमयं श्रीमंद्दृष्टा चैव मनीषिणाम् ॥ दृष्टमात्रो भगवता ब्रह्मणार्चिर्मयो मुनिः ॥ ११९ ॥ अपश्यदैश्वरं तेजः शान्तं सर्वत्रगं शिवम् ॥ स्वात्मानमक्षरं व्योम यत्र विष्णोः परं पदम् ॥१२० ॥ आनन्दमचलं ब्रह्म स्थानं तत्परमेश्वरम् ॥ सर्वभूतात्मभूतस्थः परमैश्वर्यमास्थितः ॥ १२१ ॥ प्राप्तवानात्मनो धाम यत्तन्मोक्षाख्यमव्ययम् ॥ तस्मात्सर्वं प्रयत्नेन वर्णाश्रमविधौ स्थितः ॥१२२॥ समाश्रित्यान्तिमं भावं मायां लक्ष्मीं तरेद्बुधः ॥ सूत उवाच ॥ व्याहृता हरिणा त्वेवं नारदाद्या

---

१ येनैव इति पा० । २ विनिद्रया अनालस्येन जितो वशीकृतः श्वासो यैस्तथोक्ताः । ३ द्रष्टुमुद्यतः इति पा० । ४ मानसोत्तरपर्वतम् । मानससरसः उत्तरस्यां दिशि स्थितं पर्वतं मेरुमित्यर्थः । ५ दृष्टोऽयैः पथि योगीन्द्र इति पा० । ६ देवमिति पा० । ७ प्रकाशः ज्योतिरित्यर्थः । ८ परमात्मनः इति पा० । ९ सर्वं इति पा० । १० चतुर्भुज इति पा० । ११ श्रीमन्निष्ठौ इति, यन्ता वेदमनीषिणामिति पा० । १२ आनन्दनपरमिति पा० । १३ भूतः सः इति पा० ।

महर्षयः ॥ १२३ ॥ शक्रेण सहिताः सर्वे पप्रच्छुर्गरुडध्वजम् ॥ ऋषय ऊचुः ॥ देवदेव हृषीकेश नाथ नारायणाव्यय ॥ १२४ ॥ तद्व दाशेषमस्माकं यदुक्तं भवता पुरा ॥ इन्द्रद्युम्नाय विप्राय ज्ञानं धर्मादिगोचरम् ॥१२५॥ शुश्रूषुश्चाप्ययं शक्रः सखा तव जगन्मय ॥ ततः स भगवान् विष्णुः कूर्मरूपी जनार्दनः ॥ १२६ ॥ रसातलगतो देवो नारदाद्यैर्महर्षिभिः ॥ पृष्टः प्रोवाच सकलं पुराणं कौर्ममुत्तमम् ॥१२७॥ सन्निधौ देवराजस्य तद्वक्ष्ये भवतामहम् ॥ धन्यं यशस्यमायुष्यं पुण्यं मोक्षप्रदं नृणाम् ॥१२८॥ पुराणश्रवणं विप्राः कथनञ्च विशेषतः ॥ श्रुत्वा चाध्यायमेवैकं सर्वपापैः प्रमुच्यते ॥१२९॥ उपाख्यानमथैकं वा ब्रह्मलोके महीयते ॥ इदं पुराणं परमं कौर्मं कूर्मस्वरूपिणा ॥१३०॥ उक्तं वै देवं देवेन श्रद्धातव्यं द्विजातिभिः ॥१३१॥ इति श्रीकूर्मपुराणे इन्द्रद्युम्नमोक्षवर्णनं नाम प्रथमोऽध्यायः ॥१॥

अथ वर्णाश्रमवर्णनम् ॥ कूर्म उवाच ॥ शृणुध्वमृषयः सर्वे यत्पृष्टोऽहं जगद्धितम् ॥ वक्ष्यमाणं मया सर्वमिन्द्रद्युम्नाय भाषितम् ॥ १ ॥ भूतैर्भव्यैर्भवद्भिश्च चरितैरुपबृंहितम् ॥ पुराणं पुण्यदं नृणां मोक्षधर्मानुकीर्तनम् ॥ २ ॥ अहं नारायणो देवः पूर्वमासीन्न मे परम् ॥ उपास्य विपुलां निद्रां भोगिशय्यां समाश्रितः ॥ ३ ॥ चिन्तयामि पुनः सृष्टिं निशान्ते प्रतिबुध्य तु ॥ ततो मे सहसोत्पन्नः प्रसादो मुनिपुंगवाः ॥ ४ ॥ चतुर्मुखस्ततो जातो ब्रह्मा लोकपितामहः ॥ तदन्तरेऽभवत्क्रोधः कस्माच्चित्कारणात्तदा ॥ ५ ॥ आत्मनो मुनिशार्दूलास्तत्र देवो महेश्वरः ॥ रुद्रः क्रोधात्मको जज्ञे शूलपाणिस्त्रिलोचनः ॥ ६ ॥ तेजसा सूर्यसङ्काशस्त्रैलोक्यं संदहन्निव ॥ तदा श्रीरभवद्देवी कमलायतलोचना ॥ ७ ॥ सुरूपा सौम्यवदना मोहिनी सर्वदेहिनाम् ॥ शुचिस्मिता सुप्रसन्ना मङ्गला महिमास्पदा ॥ ८ ॥

---

१ नारायणामल इति पा० । २ धर्मार्थगोचरम् इति पा० । ३ भगवान् इति पा० । ४ मयांशम् इति पा० । ५ देवाधिदेवेन इति पा० । ६ शृणुध्वं मुनयः इति पा० । ७ भूतैर्भव्यैर्भविष्यद्भिः इति-भवन्ति इति भवा एव भव्याः वर्तमानाः । यद्यपि भव्यशब्दः भविष्यदर्थे रूढस्तथाप्यत्र तद्धित-यप्रत्ययसिद्धतया न तदर्थबोधकः । ८ मोक्षधर्मानुवर्तिनाम् इति । ९ अहं पूर्वमासं मे परं मत्तः अन्यत् किञ्चित् न आसीदिति शेषः । १० आत्मना इति पा० । ११ निर्दहन्निव इति पा० । १२ सुसंपन्ना इति पा० ।

दिव्यकान्तिसमायुक्ता दिव्यमाल्योपशोभिता ॥ नारायणी महामाया मूलप्रकृतिरव्यया ॥ ९ ॥ स्वधाम्ना पूरयन्तीदं मत्पार्श्वं समुपाविशत् ॥ तां दृष्ट्वा भगवान् ब्रह्मा मामुवाच जगत्पतिम् ॥ १० ॥ मोहायाशेषभूतानां नियोजयं सुरूपिणीम् ॥ येनेयं विपुला सृष्टिर्वर्द्धते[2] मम माधव ॥ ११ ॥ तथोक्तोऽहं श्रियं देवीमब्रवं[3] प्रहसन्निव ॥ देवीदमखिलं विश्वं सदेवासुरमानुषम् ॥ १२ ॥ मोहयित्वा ममादेशात्संसारे विनिपातय ॥ ज्ञानयोगरतान्दान्तान् ब्रह्मिष्ठान् ब्रह्मवादिनः ॥ १३ ॥ अक्रोधनान् सत्यपरान्दूरतः परिवर्ज्जय ॥ ध्यायिनो निर्ममान् शान्तान्धार्मिकान्वेदपारगान्[4] ॥ १४ ॥ याजिनस्तापसान्विप्रान्दूरतः परिवर्ज्जय[5] ॥ वेदवेदान्तविज्ञानसंछिन्नाशेषसंशयान् ॥ १५ ॥ महायज्ञपरान्विप्रान्दूरतः परिवर्ज्जय ॥ ये यजन्ति जपैर्होमैर्देवदेवं महेश्वरम् ॥ १६ ॥ स्वाध्यायेनेज्यया दूरात्तान् प्रयत्नेन वर्ज्जय ॥ भक्तियोगसमायुक्तानीश्वरार्पितमानसान् ॥ १७ ॥ प्राणायामादिषु रतान्दूरात्परिहरामलान् ॥ प्रणवासक्तमनसो रुद्रजप्यपरायणान् ॥ १८ ॥ अथर्वशिरसो वेत्तॄन्[6] धर्मज्ञान् परिवर्ज्जय ॥ बहुनात्र किमुक्तेन स्वधर्मपरिपालकान् ॥ १९ ॥ ईश्वराराधनरतान्मन्त्रियोगान्न[1] मोहय ॥ एवं मया महामाया प्रेरिता हरिवल्लभा ॥ २० ॥ यथादेशं चकारासौ तस्माल्लक्ष्मीं समर्च्चयेत् ॥ श्रियं ददाति विपुलां पुष्टिं मेधां यशो बलम् ॥ २१ ॥ अर्चिता भगवत्पत्नी तस्माल्लक्ष्मीं समर्चयेत् ॥ ततोऽसृजत्स भगवान् ब्रह्मा लोकपितामहः ॥ २२ ॥ चराचराणि भूतानि यथापूर्वं ममाज्ञया ॥ मरीचिभृग्वङ्गिरसं पुलस्त्यं पुलहं क्रतुम् ॥ २३ ॥ दक्षमत्रिं वसिष्ठञ्च सोऽसृजद्योगविद्यया ॥ नवैते ब्रह्मणः पुत्रा ब्राह्मणा[7] ब्राह्मणोत्तमाः ॥ २४ ॥ ब्रह्मवादिन एवैते मरीच्याद्यास्तु साधकाः ॥ ससर्ज्ज ब्राह्मणान्वक्रात् क्षत्रियांश्च भुजाद्विभुः ॥ २५ ॥ वैश्यानूरुद्वयाद्देवः पद्भ्यां शूद्रान् पितामहः ॥ यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं ससर्ज्ज ह ॥ २६ ॥ गुप्तये सर्वदेवानां तेभ्यो

---

१ मन्त्रियोगान्नियोजय इति पा० । २ वर्त्तते इति पा० । ३ तथोक्तः स श्रियं देवीमब्रवीत् इति पा० । ४ शान्तान्धार्म्मिकान् वेदपारगान् इति पा० । ५ दूरात्प्रयत्नेन विवर्ज्जय इति पा० । ६ अथर्वशिरसोऽध्येतॄन् इति. शास्त्रेष्वभिरतान्धीरान् इति शास्त्रवृत्तिरतान्धीरान् इति च पा० । ७ ब्रह्मणा इति, ब्रह्मणा तपसा ब्राह्मणोत्तमा इत्यर्थः । " वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः ।

यज्ञो हि निर्बभौ ॥ ऋचो यजूंषि सामानि तथैवाथर्वणानि च ॥ २७ ॥ ब्रह्मणः सहजं रूपं नित्यैषा शक्तिरव्यया ॥ अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा ॥ २८ ॥ आदौ वेदमयी भूता यतः सर्वाः प्रवृत्तयः ॥ अतोन्यानि हि शास्त्राणि पृथिव्यां यानि कानि चित् ॥ २९ ॥ न तेषु रमते धीरः पाषण्डी रमते बुधः ॥ वेदार्थवित्तमैः कार्यं यत्स्मृतं मुनिभिः पुरा ॥ ३० ॥ स ज्ञेयः परमो धर्मो नान्यशास्त्रेषु संस्थितः ॥ या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ॥ ३१ ॥ सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ पूर्वकल्पे प्रजा जाताः सर्वबाधाविवर्जिताः ॥ ३२ ॥ शुद्धान्तःकरणाः सर्वाः स्वधर्मपरिपालकाः ॥ ततः कालवशात्तासां रागद्वेषादिकोऽभवत् ॥ ३३ ॥ अधर्मो मुनिशार्दूलाः स्वधर्मप्रतिबन्धकः ॥ ततः सा सहजा सिद्धिस्तासां नातीव जायते ॥ ३४ ॥ रजोमात्रात्मिकास्तासां सिद्धयोऽन्यास्तदाभवन् ॥ तासु क्षीणास्वशेषासु कालयोगेन ताः पुनः ॥ ३५ ॥ वार्त्तोपायं पुनश्चक्रुर्हस्तसिद्धिं च कर्मजाम् ॥ ततस्तासां विभुर्ब्रह्मा कर्माजीवमकल्पयत् ॥ ३६ ॥ स्वायम्भुवो मनुः पूर्वं धर्मान्प्रोवाच सर्वदृक् ॥ साक्षात्प्रजापतेर्मूर्त्तिर्निसृष्टा ब्रह्मणो द्विजाः ॥ ३७ ॥ भृग्वादयस्तद्वदनाच्छ्रुत्वा धर्मानथोचिरे ॥ यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः ॥ ३८ ॥ अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमाः ॥ दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः ॥ ३९ ॥ दण्डो युद्धं क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ॥ शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम् ॥ ४० ॥ कारुकर्म तथाजीवः पाकयज्ञादिधर्मतः ॥ ततः स्थितेषु वर्णेषु स्थापयामास [illegible]श्रमान् ॥ ४१ ॥ गृहस्थञ्च वनस्थं च भिक्षुकं ब्रह्मचारिणम् ॥ अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम् ॥ ४२ ॥ गृहस्थस्य समासेन धर्मोऽयं मुनिपुंगवाः ॥ होमो मूलफलाशित्वं स्वाध्यायस्तप एव च ॥४३॥ संविभागो यथान्यायं धर्मोऽयं वनवासिनाम् ॥ भैक्षाशनञ्च मौनित्वं

१ मात्रा एताः पूर्वाः प्रवृत्तयः इति पा० । २ अथान्यानि तु शास्त्राणि इति; अन्यान्यानि हि शास्त्राणि इति, अन्यान्यपि हि शास्त्राणि इति पा० । ३ पाषण्डी तेन जायते इति, पाषण्डो जायते पुनः इति, पाषण्डो रमते पुनः इति पा० । ४ स्वधर्मनिरताः सदा इति च पा० । ५ रिता इति पा० । ६ ब्रह्मणा द्विजाः इति, ब्रह्मणः पुरा इति पा० । ७ शुश्रूषा वै इति पा० । ८ वाणिज्यादि क्रयविक्रयणं तथा इति पा० ।

तपो ध्यानं विशेषतः ॥ ४४ ॥ सम्यग्ज्ञानञ्च वैराग्यं धर्मोऽयं भिक्षुके मतः ॥ भिक्षाचर्या च शुश्रूषा गुरोः स्वाध्याय एव च ॥ ४५ ॥ सन्ध्या कर्म्माग्निकार्यञ्च धर्मोऽयं ब्रह्मचारिणाम् ॥ ब्रह्मचारिवनस्थानां भिक्षुकाणां द्विजोत्तमाः ॥ ४६ ॥ साधारणं ब्रह्मचर्यं प्रोवाच कमलोद्भवः ॥ ऋतुकालाभिगामित्वं स्वदारेषु न चान्यतः ॥ ४७ ॥ पर्ववर्ज्जं गृहस्थस्य ब्रह्मचर्यमुदाहृतम् ॥ आगर्भधारणादाज्ञा कार्या तेनाप्रमादतः ॥ ४८ ॥ अकुर्वाणस्तु विप्रेन्द्रा भ्रूणहा तूपजायते ॥ वेदाभ्यासोऽन्वहं शक्त्या श्राद्धञ्चातिथिपूजनम् ॥ ४९ ॥ गृहस्थस्य परो धर्म्मो देवताभ्यर्चनं तथा ॥ वैवाह्यमग्निमिन्धीत साय प्रातर्यथाविधि ॥ ५० ॥ देशान्तरगतो वाथ मृतपत्नीक एव च ॥ त्रयाणामाश्रमाणान्तु गृहस्थो योनिरुच्यते ॥ ५१ ॥ अन्ये तमुपजीवन्ति तस्माच्छ्रेयान् गृहाश्रमी ॥ ऐकाश्रम्यं गृहस्थस्य चतुर्णां श्रुतिदर्शनात् ॥ ५२ ॥ तस्माद्गार्हस्थ्यमेवैकं विज्ञेयं धर्मसाधनम् ॥ परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ ॥ ५३ ॥ सर्वलोकविरुद्धञ्च धर्ममप्याचरेन्न तु ॥ धर्मात्संजायते ह्यर्थो धर्मात्कामोऽभिजायते ॥ ५४ ॥ धर्म्म एवापवर्गाय तस्माद्धर्मं समाश्रयेत् ॥ धर्मश्चार्थश्च कामश्च त्रिवर्गस्त्रिगुणो मतः ॥ ५५ ॥ सत्त्वं रजस्तमश्चेति तस्माद्धर्मं समाश्रयेत् ॥ ऊर्द्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ॥ ५६ ॥ जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ यस्मिन्धर्मसमायुक्तौ ह्यर्थकामौ व्यवस्थितौ ॥ ५७ ॥ इह लोके सुखी भूत्वा प्रेत्यानन्त्याय कल्पते ॥ धर्मात्संजायते मोक्षो ह्यर्थात्कामोऽभिजायते ॥ ५८ ॥ एवं साधनसाध्यत्वं चातुर्विध्ये प्रदर्शितम् ॥ य एवं वेद धर्मार्थकाममोक्षस्य मानवः ॥ ५९ ॥ माहात्म्यं चानुतिष्ठेत स चानन्त्याय कल्पते ॥ तस्मादर्थञ्च कामञ्च त्यक्त्वा धर्मं समाश्रयेत् ॥ ६० ॥ धर्म्मात्संजायते सर्वमित्याहुर्ब्रह्मवादिनः ॥ धर्मेण धार्यते सर्वं जगत्स्थावरजंगमम् ॥ ६१ ॥ अनादिनिधना शक्तिः सैषा ब्राह्मी द्विजोत्तमाः ॥ कर्मणा प्राप्यते धर्मो ज्ञानेन च न संशयः ॥ ६२ ॥ तस्माज्ज्ञानेन सहितं कर्मयोगं समाश्रयेत् ॥ प्रवृत्तञ्च

१ भिक्षाशनम् इति पा० । २ भ्रूणहा तु प्रजायते इति पा० भ्रूणहा चोपजायते इति पा० । ३ मन्वीत इति पा० , मासीत इति पा० । ४ चातुर्विध्ये इति पा०—चतस्रः विद्याः—आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतयः एव चातुर्विध्यं तस्मिन् इत्यर्थः । ५ समाचरेत् इति पा० ।

निवृत्तश्च द्विविधं कर्म वैदिकम् ॥ ६३ ॥ ज्ञानपूर्वं निवृत्तं स्यात्प्रवृत्तं यदतोऽन्यथा ॥ निवृत्तं सेवमानस्तु याति तत्परमं पदम् ॥ ६४ ॥
तस्मान्निवृत्तं संसेव्यमन्यथा संसरेत्पुनः[1] ॥ क्षमा दमो दया दानमलोभस्त्याग एव च ॥ ६५ ॥ आर्जवं चानसूया च तीर्थानुसरणं
तथा ॥ सत्यं सन्तोषमास्तिक्यं[2] श्रद्धा चेन्द्रियनिग्रहः ॥६६॥ देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः ॥ अहिंसा प्रियवादित्वमैपशुन्यम
कल्कता[3] ॥ ६७ ॥ सामासिकमिमं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥ प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ॥ ६८ ॥ स्थानमैन्द्रं
क्षत्रियाणां संग्रामेष्वपलायिनाम् ॥ वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तताम् ॥ ६९ ॥ गान्धर्वं शूद्रजातीनां परिचारेण वर्त्तताम् ॥
अष्टाशीतिसहस्राणामृषीणामूर्द्ध्वरेतसाम् ॥ ७० ॥ स्मृतं तेषान्तु यत्स्थानं तदेव गुरुवासिनाम् ॥ सप्तर्षीणान्तु यत्स्थानं स्मृतं तद्वै
वनौकसाम् ॥ ७१ ॥ प्राजापत्यं गृहस्थानां स्थानमुक्तं स्वयंभुवा ॥ यतीनां जितचित्तानां न्यासिनामूर्द्ध्वरेतसाम्[4] ॥ ७२ ॥ हैरण्यगर्भं
तत्स्थानं यस्मान्नावर्त्तते पुनः ॥ योगिनाममृतं स्थानं व्योमाख्यं परमक्षरम्[5] ॥ ७३ ॥ आनन्दमैश्वरं धाम सा काष्ठा
सा परा गतिः ॥ ऋषय ऊचुः ॥ भगवन्देवतारिघ्न हिरण्याक्षनिषूदन ॥ ७४ ॥ चत्वारो ह्याश्रमाः प्रोक्ता योगिनामेक उच्यते ॥
कूर्म उवाच ॥ सर्वकर्माणि संन्यस्य समाधिमचलं श्रितः ॥ ७५ ॥ य आस्ते निश्चलो योगी स संन्यासी च[6] पञ्चमः ॥ सर्वेषामाश्रमा
णान्तु द्वैविध्यं[7] श्रुतिदर्शितम् ॥ ७६ ॥ ब्रह्मचार्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः ॥ योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ॥७७॥
उपकुर्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥ उदासीनः साधकश्च गृहस्थो द्विविधो भवेत् ॥ ७८ ॥ कुटुम्बभरणायत्तः साधकोऽसौ
गृही भवेत् ॥ ऋणानि त्रीण्यपाकृत्य[8] त्यक्त्वा भार्याधनादिकम् ॥ ७९ ॥ एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः ॥ तपस्तप्यति
योऽरण्ये यजेद्देवान् जुहोति च ॥ ८० ॥ स्वाध्याये चैव निरतो वनस्थस्तापसो मतः ॥ तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो

१ सञ्चरेत्पुनः इति पा० । २ सन्तोषमिति क्लीबत्वमार्षम् । ३ मकलरता इति, मत्रकता इति, मजलरना इति पा० । ४ न्यासिनां संन्यासवतामित्यर्थः । ५ परमाक्षरमिति, यत् स्थान परमक्षरमिति । यत् स्थानं पारमैश्वरमिति पा० । ६ न इति पा० । ७ द्वैविध्यं श्रुतिदर्शनमिति पा० । ८ त्रीण्युपाहृत्य इति, त्रीण्युपाकृत्य इति च पा० ।

भवेत् ॥ ८१ ॥ सांन्यासिकः स विज्ञेयो वानप्रस्थाश्रमे स्थितः ॥ योगाभ्यासरतो[1] नित्यमारुरुक्षुर्जितेन्द्रियः ॥ ८२ ॥ ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥ यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ॥ ८३ ॥ सम्यग्दर्शनसम्पन्नः स योगी भिक्षुरुच्यते ॥ ज्ञान संन्यासिनः केचिद्वेदसंन्यासिनोऽपरे ॥ ८४ ॥ कर्म्मसंन्यासिनः केचित्त्रिविधाः पारमेष्ठिकाः ॥ योगी च त्रिविधो ज्ञेयो भौतिकः[2] सांख्य एव च ॥ ८५ ॥ तृतीयो ह्याश्रमी प्रोक्तो योगमुत्तममाश्रितः ॥ प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना ॥ ८६ ॥ तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ॥ तस्मादेतद्विजानीध्वमाश्रमाणां[3] चतुष्टयम् ॥ ८७ ॥ सर्वेषु वेदशास्त्रेषु पञ्चमो नोपपद्यते ॥ एवं वर्णाश्रमान् सृष्ट्वा देवदेवो निरञ्जनः ॥ ८८ ॥ दक्षादीन्प्राह विश्वात्मा सृजध्वं[4] विविधाः प्रजाः ॥ ब्रह्मणो वचनात्पुत्रा दक्षाद्या मुनि सत्तमाः ॥ ८९ ॥असृजन्त प्रजाःसर्वे देवमानुषपूर्वकाः॥इत्येवं भगवान् ब्रह्मा स्रष्टृत्वे[5] संव्यवस्थितः॥९०॥अहं वै पालयामीदं संहरिष्यति शूलभृत्॥तिस्रस्तु मूर्त्तयःप्रोक्ता ब्रह्मविष्णुमहेश्वराः॥९१॥रजःसत्त्वतमोयोगात्परस्य परमात्मनः ॥ अन्योन्यमनुरक्तास्ते ह्यन्योन्यमुपजी विनः ॥ ९२ ॥ अन्योन्यप्रणताश्चैव लीलया परमेश्वराः ॥ ब्राह्मी माहेश्वरी चैव तथैवाक्षरभावना ॥ ९३ ॥ तिस्रस्तु भावना रुद्रे वर्त्तन्ते सततं द्विजाः ॥ प्रवर्तते मय्यजस्रमाद्या त्वक्षरभावना[6] ॥ ९४ ॥ द्वितीया ब्रह्मणः प्रोक्ता देवस्याक्षरभावना ॥ अहं चैव महादेवो न भिन्नः परमार्थतः ॥ ९५ ॥ विभज्य स्वेच्छयात्मानं सोऽन्तर्यामीश्वरः स्थितः ॥ त्रैलोक्यमखिलं स्रष्टुं सदेवासुरमानुषम् ॥ ९६ ॥ पुरुषः परतोऽव्यक्तो ब्रह्मत्वं समुपागमत् ॥ तस्माद्ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः परः ॥ ९७ ॥ एकस्यैव स्मृतास्तिस्रस्तद्गत्कार्यवशा त्प्रभोः ॥ तस्मात्सर्वप्रयत्नेन वन्द्याः पूज्या विशेषतः ॥ ९८ ॥ यदीच्छेदचिरात्स्थानं यत्तन्मोक्षाख्यमव्ययम् ॥ वर्णाश्रमप्रयुक्तेन धर्मेण प्रीतिसंयुतः ॥ ९९ ॥ पूजयेद्भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥ चतुर्णामाश्रमाणान्तु प्रोक्तोऽयं विधिवद्द्विजाः ॥ १०० ॥ आश्रमो

---

१ योगमभ्यसते इति पा० । २ वैदिक इति पा० । ३ विजानीयादिति पा० । ४ आत्मनेपदमार्षम् । ५ सृष्टेरमिति पा० । ६ प्रवर्त्तन्ते मय्यजस्रमन्याश्चाक्षरभावनाः इति पा० ।

वैष्णवो ब्राह्मो हराश्रम इति त्रयः ॥ तल्लिंगधारी नियतं तद्भक्तजनवत्सलः ॥ १०१ ॥ ध्यायेदथार्चयेदेतान् ब्रह्मविद्यापरायणः॥ सर्वेषामेव भक्तानां शम्भोर्लिंगमनुत्तमम् ॥ १०२ ॥ सितेन भस्मना कार्यं ललाटे तु त्रिपुंड्रकम् ॥ यस्तु नारायणं देवं प्रपन्नः परमं पदम्॥ १०३॥ धारयेत्सर्वदा शूलं ललाटे गन्धवारिभिः ॥ प्रपन्ना ये जगद्बीजं ब्रह्माणं परमेष्ठिनम् ॥ १०४ ॥ तेषां ललाटे तिलकं धारणीयन्तु सर्वदा ॥ योऽसावनादिर्भूतादिः कालात्मासौ धृतो भवेत् ॥ १०५ ॥ उपर्यधोभावयोगात्त्रिपुंड्रस्य तु धारणात् ॥ यत्तत्प्रधानं त्रिगुणं ब्रह्मविष्णुशिवात्मकम् ॥ १०६ ॥ धृतन्तु शूलधरणाद्भवत्येव न संशयः ॥ ब्रह्मतेजोमयं शुक्लं यदेतन्मण्डलं रवेः ॥ १०७ ॥ भवत्येव धृतं स्थानमैश्वरं तिलके कृते ॥ तस्मात्कार्यं त्रिशूलांकं तथा च तिलकं शुभम् ॥ १०८ ॥ आयुष्यश्चापि भक्तानां त्रयाणां विधिपूर्वकम् ॥ यजेत जुहुयादग्नौ जपेद्दद्याज्जितेन्द्रियः ॥ १०९ ॥ शान्तो दान्तो जितक्रोधो वर्णाश्रमविधानवित् ॥ एव परिचरेद्देवान् यावज्जीवं समाहितः॥ ११० ॥ तेषां स्वस्थानमचलं सोऽचिरादधिगच्छति॥ १११ ॥ इति श्रीकूर्मपुराणे वर्णाश्रमवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

अथ वर्णाश्रमक्रमवर्णनम् ॥ ऋषय ऊचुः ॥ वर्णा भगवतोद्दिष्टाश्चत्वारोऽप्याश्रमास्तथा ॥ इदानीं क्रममस्माकमाश्रमाणां वद प्रभो ॥ १ ॥ कूर्म उवाच ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥ क्रमेणैवाश्रमाः प्रोक्ताः कारणादन्यथा भवेत् ॥ २॥ उत्पन्नज्ञानविज्ञानी वैराग्यं परमं गतः ॥ प्रव्रजेद्ब्रह्मचर्यात्तु यदीच्छेत्परमां गतिम् ॥ ३ ॥ दारानाहृत्य विधिवदन्यथा विविधैर्मखैः ॥ यजेदुत्पादयेत्पुत्रान् विरक्तो यदि संन्यसेत् ॥ ४ ॥ अनिष्ट्वा विधिवद्यज्ञैरनुत्पाद्य तथात्मजान् ॥ न गार्हस्थ्यं गृही त्यक्त्वा संन्यसेद्बुद्धिमान् द्विजः ॥ ५ ॥ अथ वैराग्यवेगेन स्थातुं नोत्सहते गृहे ॥ तत्रैव संन्यसेद्विद्वाननिष्ट्वापि द्विजोत्तमः ॥ ६॥ तथापि विविधैर्यज्ञैरिष्ट्वा वनमथाश्रयेत् ॥ तपस्तप्त्वा तपोयोगाद्विरक्तः संन्यसेद्बहिः ॥ ७ ॥ वानप्रस्थाश्रमं गत्वा न गृहं प्रविशेत्पुनः ॥ न संन्यासी वनञ्चाथ ब्रह्म

१ सततमिति पा० । २ भगवान् इति पा० । ३ धृतं त्रिशूल इति पा० । ४ ततस्तत्स्थानमचलमिति पा० । ५ कारणादन्यथाभवन् इति पा० । ६ ब्रह्मचर्याद्वा इति पा० । ७ गृहीत्वा तु इति, गृहीत्वैव इति पा० । ८ अन्यथा इति, अथापि इति पा० । ९ वनमथाश्रयेत् इतिं, वनमथाव्रजेत् इति पा० । १० संन्यसेद्यदि इति, संन्यसेद्यतिः इति पा० ।

चर्येश्च साधकः ॥ ८ ॥ प्राजापत्यान्निरूप्येष्टिमाग्नेयीमथवा द्विजः ॥ प्रव्रजेत्तु गृही विद्वान् वनाद्वा श्रुतिचोदनात् ॥९॥ प्रकर्त्तुमसमर्थोऽपि जुहोति यजति क्रियाः ॥ अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः ॥ १० ॥ सर्वेषामेव वैराग्यं संन्यासे तु विधीयते ॥ पतत्येवा विरक्तो यः संन्यासं कर्तुमिच्छति ॥ ११ ॥ एकस्मिन्नथवा सम्यग्वर्तेतामरणान्तिकम् ॥ श्रद्धावानाश्रमे युक्तः सोऽमृतत्वाय कल्पते ॥१२॥ न्यायागतधनः शान्तो ब्रह्मविद्यापरायणः ॥ स्वधर्मपालको नित्यं ब्रह्मभूयाय कल्पते ॥ १३ ॥ ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ॥ प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम्॥ १४ ॥ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते ॥ ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् ॥ १५॥नाहं कर्त्ता सर्वमेतद्ब्रह्मैव कुरुते तथा॥एतद्ब्रह्मार्पणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः॥१६॥ प्रीणातु भगवानीशःकर्मणानेन शाश्वतः ॥ करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम्॥१७॥ यद्वा फलानां संन्यासं प्रकुर्यात्परमेश्वरे ॥ कर्मणामेतदप्याहुर्ब्रह्मार्पणमनुत्तमम् ॥ १८॥ कार्यमित्येव यत्कर्म नियतं सङ्गवर्जितम्॥ क्रियते विदुषा कर्म तद्भवेदपि मोक्षदम्॥१९॥ अथवा यदि कर्माणि कुर्यान्नित्यान्यपि द्विजः ॥ अकृत्वा फलसंन्यासं बध्यते तत्फलेन तु ॥ २० ॥ तस्मात्सर्वप्रयत्नेन त्यक्त्वा कर्माश्रितं फलम् ॥ अविद्वानपि कुर्वीत कर्माप्नोति चिरात्पदम् ॥ २१ ॥ कर्मणा क्षीयते पापमैहिकं पौर्विकं तथा ॥ मनःप्रसादमन्वेति ब्रह्मविज्जायते नरः ॥ २२ ॥ कर्मणा सहिताज्ज्ञानात् सम्यग्योगोऽभिजायते ॥ ज्ञानं च कर्मसहितं जायते दोषवर्जितम् ॥ २३ ॥ तस्मात्सर्वप्रयत्नेन यत्र तत्राश्रमे रतः ॥ कर्माणीश्वरतुष्ट्यर्थं कुर्यान्नैष्कर्म्यमाप्नुयात् ॥२४॥ संप्राप्य परमं ज्ञानं नैष्कर्म्यं तत्प्रसादतः॥एकाकी निर्ममः शान्तो जीवन्नेव विमुच्यते ॥ २५ ॥ वीक्षते परमात्मानं परं ब्रह्म महेश्वरम्॥नित्यानन्दी निराभासस्तस्मिन्नेव लयं व्रजेत्॥२६॥ तस्मात्सेवेत सततं कर्मयोगं प्रसन्नधीः ॥

१ असंन्यासो वनश्चाथ ब्रह्मचर्यानुसाधकः इति, न संन्यासी वनं चाथ ब्रह्मचर्येन साधकः इति, न संन्यासी वने वासं ब्रह्मचर्यं न साधकः इति, ब्रह्मचर्यं न साधकमिति पा० । २ प्रव्रजेत इति पा० । ३ जपति इति पा० । ४ संन्यासाय इति, संन्यासे तु विभाव्यते इति पा० । ५ एतत्सेवी विरक्तो वा इति पा० । ६ मरणाद्द्विजाः इति पा० । ७ न्यायाधनगतः इति, पा० । न्यायेन अधनं धनाभावं गतः प्राप्तः, न्यायेन दत्तसर्वस्व इत्यर्थः । ८ फलार्थं इति पा० । ९ अन्यथा इति पा० । १० मनः प्रसादमन्वेति ब्रह्म विज्ञायते ततः इति पा० । ११ जीवन्नपि इति पा० । १२ नित्यानन्दं निराभासं इति पा० । १३ प्रशस्तधीः इति पा० ।

तृतये परमेशस्य तत्पदं याति शाश्वतम् ॥ २७ ॥ एतद्वः कथितं सर्वं चातुराश्रम्यमुत्तमम् ॥ न ह्येतत्समतिक्रम्य सिद्धिं विन्दति मानवः ॥ २८ ॥ इति श्रीकूर्मपुराणे चातुराश्रम्यकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ अथ प्राकृतसर्गः ॥ ॥ सूत उवाच ॥ श्रुत्वाश्रमविधिं कृत्स्नमृषयो हृष्टचेतसः ॥ नमस्कृत्य हृषीकेशं पुनर्वचनमब्रुवन् ॥ १ ॥ मुनय ऊचुः ॥ भाषितं भवता सर्वं चातुराश्रम्यमुत्तमम् ॥ इदानीं श्रोतुमिच्छामो यथा सम्भवते जगत् ॥ २ ॥ कुतः सर्वमिदं जातं कस्मिंश्च लयमेष्यति ॥ नियन्ता कश्च सर्वेषां वदस्व पुरुषोत्तम ॥ ३ ॥ श्रुत्वा नारायणो वाक्यमृषीणां कूर्मरूपधृक् ॥ प्राह गम्भीरया वाचा भूतानां प्रभवोऽव्ययः ॥ ४ ॥ कूर्म उवाच ॥ महेश्वरः परोऽव्यक्तः चतुर्व्यूहः सनातनः ॥ अनन्तश्चाप्रमेयश्च नियन्ता सर्वतोमुखः ॥ ५ ॥ अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् ॥ प्रधानं प्रकृतिश्चेति यमाहुस्तत्त्वचिन्तकाः ॥ ६ ॥ गन्धवर्णरसैर्हीनं शब्दस्पर्शविवर्जितम् ॥ अजरं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम् ॥ ७ ॥ जगद्योनिर्महाभूतं परब्रह्म सनातनम् ॥ विग्रहः सर्वभूतानामात्मनाधिष्ठितं महत् ॥ ८ ॥ अनाद्यन्तमजं सूक्ष्मं त्रिगुणं प्रभवाव्ययम् ॥ असाम्प्रतमविज्ञेयं ब्रह्माग्रे समवर्त्तत ॥ ९ ॥ गुणसाम्ये तदा तस्मिन् पुरुषे वात्मनि स्थिते ॥ प्राकृतः प्रलयो ज्ञेयो यावद्विश्वसमुद्भवः ॥ १० ॥ ब्राह्मी रात्रिरियं प्रोक्ता ह्यहः सृष्टिरुदाहृता ॥ अहर्न विद्यते तस्य न रात्रिर्ह्युपचारतः ॥ ११ ॥ निशान्ते प्रतिबुद्धोऽसौ जगदादिरनादिमान् ॥ सर्वभूतमयोऽव्यक्तादन्तर्यामीश्वरः परः ॥ १२ ॥ प्रकृतिं पुरुषं चैव प्रविश्याशु महेश्वरः ॥

---

१ सम्यग्वर्णाश्रममनुत्तमम् इति पा० । २ विन्दन्ति मानवाः इति पा० । ३ हृष्टमानसाः इति पा० । ४ आर्षमात्मनेपदम् । प्राप्त्यर्थकत्वे तु वैकल्पिकमात्मनेपदं भवति । ५ वदस्व इति आत्मनेपदमार्षम् । ६ परोऽव्यक्तात् इति पा० । ७ चत्वारः व्यूहा अधस्थानभेदा यस्य तथोक्तः । चातुर्विध्यञ्च दण्डभोगमण्डलासंहतभेदात् । तथाच- " तिर्यग्वृत्तिश्च दण्डः स्याद् भोगोऽन्वावृत्तिरेव च । मण्डलं सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः ". । यद्यपि व्यूहपदं सैन्यरचनायां रूढं तथाप्यत्र महेश्वरस्य सर्वव्यापित्वात् सर्वावस्थामयत्वने स चतुर्व्यूह इत्युच्यते । ८ वर्णः रूपमित्यर्थः । ९ अध्रुवम् इति, अक्षरम् इति पा० । १० परमिति पा० । ११ असाम्प्रतं सम्प्राति न भवम् त्रिकालव्यापि शाश्वतमित्यर्थः । १२ चात्मनि इति पा० । १३ अहः सृष्टिरिति पा० । १४ रात्रिरुपचारतः इति पा० । १५ जगद्दादिरनामयः इति पा० ।

क्षोभयामास योगेन परेण परमेश्वरः ॥ १३ ॥ यथा मदो नरस्त्रीणां यथा वा माधवोऽनिलः ॥ अनुप्रविष्टः क्षोभाय तथासौ योगमूर्त्ति मान् ॥ १४ ॥ स एव क्षोभको विप्राः क्षोभ्यश्च परमेश्वरः ॥ स संकोचविकासाभ्यां प्रधानत्वे व्यवस्थितः ॥ १५ ॥ प्रधानात्क्षोभ्यमानाच्च तथा पुंसः पुरातनात् ॥ प्रादुरासीन्महद्बीजं प्रधानपुरुषात्मकम् ॥ १६ ॥ महानात्मा मतिर्ब्रह्मा प्रबुद्धिः ख्यातिरीश्वरः ॥ प्रज्ञा धृतिः स्मृतिः संविदेतस्मादिति तत्स्मृतम् ॥ १७ ॥ वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥ त्रिविधोऽयमहंकारो महतः संबभूव ह ॥ १८ ॥ अहंकारोऽभिमानश्च कर्त्ता मन्ता च स स्मृतः ॥ आत्मा च मत्परो जीवो यतः सर्वाः प्रवृत्तयः ॥ १९ ॥ पञ्चभूतान्यहंकारात्तन्मात्राणि च जज्ञिरे ॥ इन्द्रियाणि च सर्वाणि सर्वं तस्यात्मजं जगत् ॥ २० ॥ मनस्त्वव्यक्तजं प्रोक्तं विकारः प्रथमः स्मृतः ॥ येनासौ जायते कर्त्ता भूतादींश्चानुपश्यति ॥ २१ ॥ वैकारिकादहंकारात्सर्गो वैकारिकोऽभवत् ॥ तैजसानीन्द्रियाणि स्युर्देवा वैकारिका दश ॥ २२ ॥ एकादशं मनस्तत्र स्वगुणेनोभयात्मकम् ॥ भूततन्मात्रसर्गोऽयं भूतादेरभवद्द्विजाः ॥ २३ ॥ भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह ॥ आकाशो जायते तस्मात्तस्य शब्दो गुणो मतः ॥ २४ ॥ आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह ॥ वायुरुत्पद्यते तस्मात्तस्य स्पर्शं गुणं विदुः ॥२५॥ वायुश्चापि विकुर्वाणो रूपमात्रं ससर्ज ह ॥ ज्योतिरुत्पद्यते वायोस्तद्रूपगुणमुच्यते ॥ २६ ॥ ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्ज ह ॥ सम्भवन्ति ततोऽम्भांसि रसाधाराणि तानि च ॥ २७ ॥ आपश्चापि विकुर्वाणा गन्धमात्रं ससर्जिरे ॥ सङ्घातो जायते तस्मात्तस्य गन्धो गुणो मतः ॥ २८ ॥ आकाशं शब्दमात्रं तु स्पर्शमात्रं समावृणोत् ॥ द्विगुणस्तु ततो वायुः शब्दस्पर्शात्मकोऽभवत् ॥२९॥ रूपं तथैवाविशतः शब्दस्पर्शौ गुणावुभौ ॥ त्रिगुणः स्यात्ततो

१ पुरुषोत्तमः इति पा० । २ गतिर्ब्रह्मा इति पा० । ३ संविदैश्वरश्चेति पा० । ४ हर्त्ता इति पा० । ५ संस्कृत इति, संस्मृत इति पा० । ६ पुष्कल इति, प्रबल इति, पुद्गल इति, ( पुद्गलः परमाणुरूपः ) । पुरुष इति पा० । ७ इन्द्रियाणि तथा देवाः इति पा० । ८ तस्यात्मकम् इति पा० । ९ एतस्मादिति पा० । १० आकाशं सुषिरं तस्मादुत्पन्नं शब्दलक्षणम् इति पा० । ११ विकुर्वत्य इति पा० । १२ आत्मनेपदमार्षम् ।

वह्निः स शब्दस्पर्शरूपवान् ॥३०॥ शब्दः स्पर्शश्च रूपञ्च रसमात्रं समाविशत ॥ तस्माच्चतुर्गुणा आपो विज्ञेयास्तु रसात्मिकाः॥३१॥ शब्दः स्पर्शश्च रूपञ्च रसो गन्धं समाविशत् ॥ तस्मात्पञ्चगुणा भूमिः स्थूला भूतेषु शब्द्यते ॥ ३२ ॥ शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः ॥ परस्परानुप्रवेशाद्धारयन्ति परस्परम् ॥ ३३ ॥ एते सप्त महात्मानो ह्यन्योन्यस्य समाश्रयात् ॥ नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः॥३४॥पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च॥महदादयो विशेषान्ता ह्यण्डमुत्पादयन्ति ते॥३५॥एककालसमुत्पन्नंजलबुद्बुदवच्च तत्। विशेषेभ्योऽण्डमभवद्बृहत्तदुदकेशयम्॥३६॥तस्मिन् कार्यस्य करणं संसिद्धं परमेष्ठिनः। प्रकृतेऽण्डे विवृद्धे तु क्षेत्रज्ञो ब्रह्मसंज्ञितः॥३७॥ स वै शरीरी प्रथमः स वै पुरुष उच्यते॥आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत॥३८॥यमाहुः पुरुषं हंसं प्रधानात्परतः स्थितम्॥हिरण्यगर्भं कपिलं छन्दोमूर्त्तिं सनातनम्।३९।मेरुरुल्बमभूत्तस्य जरायुश्चापि पर्वताः ॥ गर्भोदकं समुद्राश्च तस्यासन्परमात्मनः ॥४०॥तस्मिन्नण्डेऽभवद्विश्वं सदेवासुरमानुषम् ॥ चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना॥४१॥अद्भिर्दशगुणाभिश्च बाह्यतोऽण्डं समावृतम् ॥ आपो दशगुणेनैव तेजसा बाह्यतो वृताः॥४२॥ तेजोदशगुणेनैव बाह्यतो वायुना वृतम् ॥ आकाशेनावृतो वायुः खं तु भूतादिना वृतम् ॥ ४३ ॥ भूतादिर्महता तद्वदव्यक्तेनावृतो महान् ॥ एते लोका महात्मानः सर्वे तत्त्वाभिमानिनः ॥ ४४ ॥ वसन्ति तत्र पुरुषास्तदात्मनो व्यवस्थिताः ॥ ईश्वरा योगधर्माणो ये चान्ये तत्त्वचिन्तकाः ॥ ४५ ॥ सर्वज्ञाः शान्तरजसो नित्यं मुदितमानसाः ॥ एतैरावरणैरण्डं प्राकृतैः सप्तभिर्वृतम् ॥ ४६ ॥ एतावच्छक्यते वक्तुं मायैषा गहना द्विजाः ॥ एतत्प्राधानिकं कार्यं यन्मया बीजमीरितम् ॥४७॥ प्रजापतेः परां मूर्त्तिरितीयं वैदिकी श्रुतिः ॥ ब्रह्माण्डमेतत्सकलं सप्तलोकबलान्वितम् ॥ ४८ ॥ द्वितीयं तस्य देवस्य शरीरं परमेष्ठिनः ॥ हिरण्यगर्भो भगवान् ब्रह्मा वै कनकाण्डजः ॥ ४९ ॥ तृतीयं भगवद्रूपं प्राहुर्वेदार्थवेदिनः ॥ रजोगुणमयं चान्यद्रूपं

---

१ शस्यते इति, पच्यते इति पा०। २ कार्यस्य कारणं तस्मिन् इति पा०।३ उल्बं गर्भवेष्टनचर्म। ४ जरायुश्च महीधराः इति पा०। ५ सर्वतत्त्वाभिमानिनः इति पा०।६ नभ स्थिताः इति पा०। ७ योगचिन्तका इति पा०। ८ पूर्वमीरितम् इति पा। ९ पुरा इति पा०। १० सप्तलोकतलान्वितम् इति, सप्तलोककुलान्वितम् इति पा०

तस्यैव धीमतः ॥५०॥चतुर्मुखस्तु भगवान् जगत्सृष्टौ प्रवर्त्तते॥सृष्टं च पाति सकलं विश्वात्मा विश्वतोमुखः ॥५१॥ सत्त्वं गुणमुपाश्रित्य विष्णुर्विश्वेश्वरःस्वयम्॥अन्तकाले स्वयं देवः सर्वात्मा परमेश्वरः॥५२॥तमोगुणं समाश्रित्य रुद्रः संहरते जगत् ॥ एकोऽपि सन्महादेव स्त्रिधासौ समवस्थितः॥५३॥सर्गरक्षालयगुणैर्निर्गुणोऽपि निरञ्जनः॥ एकधा स द्विधा चैव त्रिधा च बहुधा गुणैः ॥५४ ॥ योगेश्वरः शरीराणि करोति विकरोति च ॥ नानाकृतिक्रियारूपनामवन्ति स्वलीलया॥५५॥ हिताय चैव भक्तानां स एव ग्रसते पुनः ॥त्रिधा विभज्य चात्मानं त्रैलोक्ये संप्रवर्तते॥५६॥ सृजते ग्रसते चैव वीक्षते च विशेषतः ॥ यस्मात्सृष्ट्वानुगृह्णाति ग्रसते च पुनः प्रजाः ॥ ५७ ॥ गुणात्मकत्वात्त्रैकाल्ये तस्मादेकः स उच्यते॥अग्रे हिरण्यगर्भः स प्रादुर्भूतः सनातनः ॥५८॥ आदित्वादादिदेवोऽसावजातत्वादजः स्मृतः ॥ पाति यस्मात्प्रजाः सर्वाः प्रजापतिरिति स्मृतः ॥५९ ॥ देवेषु च महादेवो महादेव इति स्मृतः॥बृहत्त्वाच्च स्मृतो ब्रह्मा परत्वात्परमेश्वरः ॥ ६० ॥ वशित्वादप्यवश्यत्वादीश्वरः परिभाषितः ॥ ऋषिः सर्वत्रगत्वेन हरिः सर्वहरो यतः ॥ ६१ ॥ अनुत्पादाच्च पूर्वत्वात्स्वयंभूरिति स स्मृतः ॥ नराणामयनं यस्मात्तेन नारायणः स्मृतः ॥ ६२ ॥ हरः संसारहरणाद्विभुत्वाद्विष्णुरुच्यते ॥ भगवान्सर्वविज्ञानादवनादोमिति स्मृतः ॥ ६३ ॥ सर्वज्ञः सर्वविज्ञानात्सर्वः सर्वमयो यतः ॥ शिवः स्यान्निर्मलो यस्माद्विभुः सर्वगतो यतः ॥ ६४ ॥ तारणात्सर्वदुःखानां तारकः परिगीयते ॥ बहुनाऽत्र किमुक्तेन सर्वं ब्रह्ममयं जगत् ॥ ६५ ॥ अनेकभेदभिन्नस्तु क्रीडते परमेश्वरः ॥ इत्येष प्राकृतः सर्गः संक्षेपात्कथितो मया॥अबुद्धिपूर्वकः विप्रा ब्राह्मीं सृष्टिं निबोधत॥६६॥इतिश्रीकूर्मपुराणे प्राकृतसर्गवर्णनं नाम चतुर्थोऽध्यायः॥४॥अथ कालसंख्याविवरणम् ॥ कूर्म उवाच ॥ ( अनुत्पादाच्च पूर्वस्मात् स्वयंभूरिति स स्मृतः ॥ १ ॥ नराणामयनं यस्मात्तेन नारायणः स्मृतः ॥

१ चतुर्मुखश्च, स, इति च पा० । २ संसृज्य इति पा० । ३ गुण इति पा० । ४ गुणात्मकत्वात्त्रैलोक्ये इति पा० । ५ ज्ञातत्वादज इति पा० । ६ सर्वगुरुरिति पा० । ७ देवनाद्देवता स्मृत इति पा० । ८ विष्णुमयमिति पा० । ९ आत्मनेपदमार्षम् । १० अबुद्धिपूर्विका–नास्ति बुद्धिः महत्तत्त्वं पूर्वा प्रथमा यत्र तथोक्ताम् । प्राकृतसर्गे तु प्रथमं प्रकृतेर्महान्, ततो महतोऽहंकारः, इत्येवम्प्रकारेण क्रमेण सर्गो भवति । ब्राह्मे तु सर्गे न तथा इति विशेषः ।

हरः संसारहरणाद्विभुत्वाद्विष्णुरुच्यते ॥ भगवान् सर्वविज्ञानादवनादोमिति स्मृतः ॥ २०॥ सर्वज्ञः सर्वविज्ञानात्सर्वः सर्वमयो यतः ॥ )

स्वयम्भुवो[1] निवृत्तस्य कालसंख्या द्विजोत्तमाः[2]॥३॥ न शक्यते समाख्यातुं[3] बहुवर्षैरपि स्वयम् ॥ कालसंख्या समासेन परार्द्धद्वयकल्पिता ॥ ४ ॥ स एव स्यात्परः कालस्तदन्ते[4] सृज्यते पुनः ॥ निजेन तस्य मानेन चातुर्वर्षशतं स्मृतम् ॥५॥ तत्परार्द्धं[5] तदर्द्धं वा परार्द्धमभिधीयते ॥ काष्ठा पञ्चदश[6] ख्याता निमेषा द्विजसत्तमाः ॥६॥ काष्ठा त्रिंशत्कला त्रिंशत्कला मौहूर्त्तिकी गतिः ॥ तावत्संख्यैरहोरात्रं मुहूर्त्तैर्मानुषं स्मृतम् ॥७॥ अहोरात्राणि तावंति मासः पक्षद्वयात्मकः ॥ तैः षड्भिरयनं वर्षं द्वेऽयने दक्षिणोत्तरे ॥ ८ ॥ अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम् ॥ दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ॥९॥ चतुर्युगं द्वादशभिस्तद्विभागं निबोधत ॥ चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ॥ १० ॥ तस्य तावच्छतीसन्ध्या सन्ध्यांशश्च कृतस्य तु ॥ त्रिशती द्विशती सन्ध्या तथा चैकशती क्रमात् ॥ ११ ॥ अंशकं षट्शतं तस्मात्कृतसन्ध्यांशकैर्विना ॥ त्रिद्व्येकशा[7] च साहस्रं विना सन्ध्यांशकेन तु ॥ १२ ॥ त्रेताद्वापरतिष्यायाणां[8] कालज्ञाने[9] प्रकीर्त्तितम्[10] ॥ एतद्द्वादशसाहस्रं साधिकं परिकल्पितम् ॥ १३ ॥ तदेकसप्ततिगुणं[11] मनोरन्तरमुच्यते ॥ ब्रह्मणो दिवसे विप्रा मनवश्च[12] चतुर्दश ॥१४॥ स्वायम्भुवादयः सर्वे ततः सावर्णिकादयः॥ तैरियं पृथिवी सर्वा सप्तद्वीपा सपर्वता ॥ १५ ॥ पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः ॥ मन्वन्तरेण चैकेन सर्वाण्येवान्तराणि वै ॥१६ ॥ व्याख्यातानि न सन्देहः कल्पे कल्पे न चैव हि ॥ ब्राह्ममेकमहः कल्पस्तावती रात्रिरिष्यते ॥ १७ ॥ चतुर्युगसहस्रं तु कल्पमाहुर्मनीषिणः ॥ त्रीणि कल्पशतानि स्युस्तथा षष्टिर्द्विजोत्तमाः ॥ १८ ॥ ब्रह्मणो वत्सरस्तज्ज्ञैः कथितो वै द्विजोत्तमाः ॥ स च कालः शतगुणः परार्द्धं चैव तद्विदुः[13] ॥१९ ॥ तस्यांते सर्वसत्त्वानां सहेतौ प्रकृतौ लयः ॥ तेनायं

१ स्वयम्भुवोऽपि वृत्तस्य इति पा० । २ इतः परम् इति पा० । ३ मयाख्यातुं इति पा० । ४ तदन्ते प्रतिगृह्यते इति, तदन्ते परिगृह्यते इति, तदन्ते प्रतिसृज्यते इति च पा० । ५ तत्पराख्यं तद्गुर्द्धश्च इति, तत्पराख्यं तदर्द्धश्च इति, तदर्द्धश्चा इति, पा० । ६ पञ्चदशाख्यास्तु इति पा० । ७ त्रिद्व्येकसाहस्रमितो इति, त्रिभिर्द्व्येकसहस्राणामिति पा० । ८ निष्पाद्यामिति पा० । ९ लोकज्ञाने इति पा० । १० परिकीर्तितमिति पा० । ११ तदेकसप्ततियुगामिति पा० । १२ मनवः स्युरिति, मनवस्तु इति पा० । १३ ब्रह्मणः कथितं वर्षं पराख्यं तच्च तत्परम् इति, ब्रह्मणः कथितं सर्वं परार्द्धं तच्छतं विदुः इति पा० ।

प्रोच्यते सद्भिः प्राकृतः प्रतिसंचरः ॥ २० ॥ ब्रह्मनारायणेशानां त्रयाणां प्रकृतौ लयः ॥ प्रोच्यते कालयोगेन पुनरेव च सम्भवः ॥२१ ॥ एवं ब्रह्मा च भूतानि वासुदेवोऽपि शङ्करः ॥ कालेनैव तु सृज्यन्ते स एव ग्रसते पुनः ॥ २२ ॥ अनादिरेष भगवान् कालोऽनन्तोऽजरोऽमरः ॥ सर्वगत्वात्स्वतन्त्रत्वात्सर्वात्मत्वान्महेश्वरः ॥ २३ ॥ ब्रह्माणो बहवो रुद्रा ह्यन्ये नारायणादयः ॥ एको हि भगवानीशः कालः कविरिति श्रुतिः ॥ २४ ॥ एक[2]मत्र व्यतीतं तु परार्द्धं ब्रह्मणो द्विजाः ॥ साम्प्रतं वर्त्तते त्वर्द्धं तस्य कल[3]पोऽयमग्रजः ॥ २५ ॥ योऽतीतः सोऽन्तिमः कल्पः पाद्म इत्युच्यते बुधैः ॥ वाराहो वर्त्तते कल्पस्तस्य वक्ष्यामि विस्तरम् ॥२६॥ इति श्रीकूर्मपुराणे कालसंख्याकथनं नाम पञ्चमोऽध्यायः ॥ ५ ॥ अथ पृथिव्युद्धारः ॥ कूर्म उवाच ॥ आसीदेकार्णवं घोरमविभागं तमोमयम् ॥ शान्तवातादिकं सर्वं न प्राज्ञायत किञ्चन ॥ १ ॥ एकार्णवे तदा तस्मिन्नष्टे स्थावरजङ्गमे ॥ तदा समभवद्ब्रह्मा सहस्राक्षः सहस्रपात् ॥ २ ॥ सहस्रशीर्षा पुरुषो रुक्मवर्णो ह्यतीन्द्रियः ॥ ब्रह्मा नारायणाख्यस्तु सुष्वाप सलिले तदा ॥ ३ ॥ इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ॥ ब्रह्मस्वरूपिणं देवं जगतः प्रभवाव्ययम् ॥ ४ ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः ॥ अयनं तस्य ता यस्मात्तेन नारायणः स्मृतः ॥ ५ ॥ तुल्यं युगसहस्रस्य नैशं कालमुपास्य सः ॥ शर्वर्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात् ॥ ६ ॥ ततस्तु सलिले तस्मिन्विज्ञायांतर्गतां महीम् ॥ अनुमानात्तदुद्धारं कर्तुकामः प्रजापतिः ॥ ७ ॥ जलक्रीडासु रुचिरं वाराहं रूपमास्थितः ॥ अधृष्यं मनसाप्यन्यैर्वाङ्मयं ब्रह्मसंज्ञितम् ॥८॥ पृथिव्युद्धरणार्थाय प्रविश्य च रसातलम् ॥ दंष्ट्रयाभ्युज्जहारैनामात्माधारो धराधरः ॥ ९ ॥ दृष्ट्वा दंष्ट्राग्रविन्यस्तां पृथ्वीं प्रथितपौरुषम् ॥ अस्तुवञ्जनलोकस्थाः सिद्धा ब्रह्मर्षयो हरिम् ॥ १० ॥ ऋषय ऊचुः ॥ नमस्ते देवदेवाय ब्रह्मणे परमेष्ठिने ॥ पुरुषाय पुराणाय शाश्वताय जयाय च ॥ ११ ॥ नमः स्वयम्भुवे तुभ्यं स्रष्ट्रे सर्वार्थवेदिने ॥ नमो हिरण्यगर्भाय वेधसे परमात्मने ॥ १२ ॥ नमस्ते वासुदेवाय विष्णवे विश्वयोनये ॥ नारायणाय देवाय देवानां हितकारिणे ॥ १३ ॥ नमोऽस्तु ते चतुर्वक्त्र शार्ङ्गचक्रासिधारिणे ॥ सर्वभूतात्म

---

१ तत, इति, येन्ये इति पा० । २ एवमत्र व्यतीतं तत् इति पा० । ३ कल्पोयमग्रतः इति पा० । ४ पद्म इति पा० । ५ नाम्ना पूर्वं इति श्रुतः इति, नाम्ना पूर्वमिति श्रुतिः इति पा० । ६ अपास्य इति पा० । ७ सर्वयत्नेन कुरुते इति पा० । ८ ब्रह्माद्यैः इति पा० । ९ जनलोकस्थाः जननामकभुवनवर्त्तिनः इत्यर्थः ।

भूताय कूटस्थाय नमोनमः ॥ १४ ॥ नमो वेदरहस्याय नमस्ते वेदयोनये ॥ नमो बुद्धाय शुद्धाय नमस्ते ज्ञानरूपिणे ॥ १५ ॥ नमोऽस्त्वानन्द रूपाय साक्षिणे जगतां नमः ॥ अनन्तायाप्रमेयाय कार्याय कारणाय च ॥ १६ ॥ नमस्ते पञ्चभूताय पञ्चभूतात्मने नमः ॥ नमो मूलप्रकृतये मायारूपाय ते नमः ॥ १७ ॥ नमोऽस्तु ते वराहाय नमस्ते मत्स्यरूपिणे ॥ नमो योगाधिगम्याय नमः संकर्षणाय ते ॥ १८ ॥ नमस्त्रिमूर्त्तये तुभ्यं त्रिधाम्ने दिव्यतेजसे ॥ नमः सिद्धाय पूज्याय गुणत्रयविभागिने ॥ १९ ॥ नमोस्त्वादित्यरूपाय नमस्ते पद्मयोनये ॥ नमोऽमूर्त्ताय मूर्त्ताय माधवाय नमोनमः ॥ २० ॥ त्वयैव सृष्टमखिलं त्वय्येव सकलं स्थितम् ॥ पालयैतज्जगत्सर्वं त्राता त्वं शरणं गतिः ॥ २१ ॥ इत्थं स भगवान् विष्णुः सनकाद्यैरभिष्टुतः ॥ प्रसादमकरोत्तेषां वराहवपुरीश्वरः ॥ २२ ॥ ततः स्वस्थानमानीय पृथिवीं पृथिवीधरः ॥ मुमोच रूपं मनसा धारयित्वा धराधरः ॥ २३ ॥ तस्योपरि जलौघस्य महतो नौरिव स्थिता ॥ विततत्वाच्च देहस्य न मही याति संप्लवम् ॥ २४ ॥ पृथिवीं स समीकृत्य पृथिव्यां सोऽचिनोद्गिरीन् ॥ प्राक् सर्गदग्धानखिलान् ततः सर्गेऽदधन्मनः ॥ २५ ॥ इति श्रीकूर्मपुराणे पृथिव्युद्धारे षष्ठोऽध्यायः ॥ ६ ॥ अथ सृष्टिवर्णनम् ॥ कूर्म उवाच ॥ सृष्टिं चिन्तयतस्तस्य कल्पादिषु यथा पुरा ॥ अबुद्धिपूर्वकः सर्गः प्रादुर्भूतस्तमोमयः ॥ १ ॥ तमोमोहो महामोहस्तामिस्रश्चान्धसंज्ञितः ॥ अविद्या पञ्चमी तेषां प्रादुर्भूता महात्मनः ॥ २ ॥ पञ्चधावस्थितः सर्गो ध्यायतः सोऽभिमानिनः ॥ संवृतस्तमसा चैव बीजकुम्भवदावृतः ॥ ३ ॥ बहिरन्तश्चाप्रकाशस्तब्धो निःसंग एव च ॥ मुख्या नगा इति प्रोक्ता मुख्यसर्गस्तु स स्मृतः ॥ ४ ॥ तं दृष्ट्वाऽसाधकं सर्गममन्यदपरं प्रभुः ॥ तस्याभिध्यायतः सर्गं तिर्यक्स्रोतोऽभ्यवर्त्तत ॥ ५ ॥ यस्मात्तिर्यक् प्रवृत्तः स तिर्यक्स्रोतः ततः स्मृतः ॥ पश्वादयस्ते विख्याता उत्पथग्राहिणो द्विजाः ॥ ६ ॥ तम

१ कूटस्थाय–"एकरूपतया तु यः कालव्यापी स कूटस्थः" तस्मै इत्यर्थः । २ नमोऽस्त्वनन्तरूपाय साक्षिणे जगतो नमः इति पा० । ३ आदित्यवर्णाय इति पा० । ४ विश्वयोनये इति पा० । ५ शान्ताय इति पा० । ६ लयमेष्यति इति पा० । ७ शरणं गतः इति, शरणङ्गतान् इति पा० । ८ संस्थानामिति पा० । ९ प्रजापतिः इति पा० । १० पीनत्वाच्चैव इति पा० । ११ तु इति पा० । १२ तामिस्रो ह्यन्धसंज्ञितः इति पा० । १३ पञ्चपर्वैषा इति, पंच सर्वेषां इति पा० । १४ असाधकं न सर्वार्थप्रतिपादकम् असम्पूर्णमित्यर्थः । १५ अमन्यदित्यार्षम् ममन्यत परं इति, पा० । १६ तत्पथग्राहिणः इति पा० ।

ष्यसाधकं ज्ञात्वा सर्गमन्यं ससर्ज्ज ह ॥ ऊर्द्धस्रोत इति प्रोक्तो देवसर्गस्तु सात्त्विकः ॥ ७ ॥ ते सुखप्रीतिबहुला बहिरन्तस्त्वनावृताः ॥ प्रकाशा बहिरन्तश्च स्वभावाद्देवसंज्ञिताः ॥ ८ ॥ ततोऽभिध्यायतस्तस्य सत्याभिध्यायिनस्तदा[1] ॥ प्रादुरासीत्तदा व्यक्तादर्वाक्स्रोतस्तु साधकः[2] ॥ ९ ॥ तत्र प्रकाशबहुलास्तमोद्रिक्ता[3] रजोऽधिकाः ॥ दुःखोत्कटाः[4] सत्त्वयुता मनुष्याः परिकीर्त्तिताः ॥ १० ॥ तं दृष्ट्वा चापरं सर्गममन्यद्भगवानजः ॥ तस्याभिध्यायतः सर्गं सर्गो भूतादिकोऽभवत् ॥ ११ ॥ ते परिग्रहिणः सर्वे संविभागरताः पुनः ॥ खादिनश्चाप्यशीलाश्च[5] भूताद्याः परिकीर्त्तिताः ॥ १२ ॥ इत्येते पञ्च कथिताः सर्गा वै द्विजपुंगवाः ॥ प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः ॥ १३ ॥ तन्मात्राणां द्वितीयस्तु भूतसर्गो हि संस्मृतः[6] ॥ वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः ॥ १४ ॥ इत्येष प्राकृतः सर्गः संभूतो बुद्धिपूर्वकः ॥ मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥ १५ ॥ तिर्यक्स्रोतस्तु यः प्रोक्तस्तिर्यग्योन्यः स पञ्चमः ॥ तथोर्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ॥ १६ ॥ ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः ॥ अष्टमो भौतिकः सर्गो भूतादीनां प्रकीर्तितः ॥ १७ ॥ नवमश्चैव कौमारः प्राकृता वैकृतास्त्विमे ॥ प्राकृतास्तु त्रयः पूर्वे सर्गास्ते बुद्धिपूर्वकाः ॥ १८ ॥ बुद्धिपूर्वं प्रवर्त्तन्ते मुख्याद्या मुनिपुंगवाः ॥ अग्रे ससर्ज्ज वै ब्रह्मा मानसानात्मनः समान् ॥ १९ ॥ सनकं सनातनं चैव तथैव च सनन्दनम् ॥ ऋभुं[7] सनत्कुमारं च पूर्वमेव प्रजापतिः ॥ २० ॥ पञ्चैते योगिनो विप्राः परं वैराग्यमाश्रिताः[8] ॥ ईश्वरासक्तमनसो न सृष्टौ दधिरे मतिम् ॥ २१ ॥ तेष्वेवं निरपेक्षेषु लोकसृष्टौ प्रजापतिः ॥ मुमोह मायया सद्यो मायिनः परमेष्ठिनः ॥ २२ ॥ संबोधयामास[9] च तं जगन्मायो महामुनिः ॥ नारायणो महायोगी योगिचित्तानुरञ्जनः ॥ २३ ॥ बोधितस्तेन विश्वात्मा ततापं परमं तपः ॥ स तप्यमानो[10] भगवान्न किञ्चित्प्रत्यपद्यत ॥ २४ ॥ ततो दीर्घेण कालेन दुःखात्क्रोधोऽभ्यजायत ॥ क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ॥ २५ ॥ भ्रुकुटीकुटिला

---

१ सर्वाभिध्यायिनस्तथा इति पा । २ स्रोतः स साधक इति, स सर्गः साधकः सर्वार्थप्रतिपादक इत्यर्थः । ३ तमःपृक्ता इति पा० । ४ दुःखोत्कयः सत्ययुता इति पा० । ५ शीलाश्च इति पा० । ६ स स्मृतः इति । तथा स्मृतः इति पा० । ७ विभुं इति, ऋभुं इति पा० । ८ आस्थिता इति पा० । ९ तं बोधयामास सुतं इति पा० । १० संतप्यमान इति पा० ।

त्तस्य ललाटात्परमेष्ठिनः ॥ समुत्पन्नो महादेवः शरण्यो नीललोहितः ॥ २६ ॥ स एव भगवानीशस्तेजोराशिः सनातनः ॥ यं प्रपश्यन्ति विद्वांसः स्वात्मस्थं परमेश्वरम् ॥ २७ ॥ ॐकारं समनुस्मृत्य प्रणम्य च कृताञ्जलिः ॥ तमाह भगवान् ब्रह्मा सृजेमा विविधाः प्रजाः ॥ २८ ॥ निशम्य भगवद्वाक्यं शंकरो धर्मवाहनः ॥ आत्मना सदृशान् रुद्रान् ससर्ज मनसा शिवः ॥ कपर्दिनो निरातङ्कांस्त्रिनेत्रान्नीललोहितान् ॥२९॥ तं प्राह भगवान् ब्रह्मा जन्ममृत्युयुताः प्रजाः ॥ सृजेति सोऽब्रवीदीशो नाहं मृत्युजरान्विताः॥ ३०॥ प्रजाः स्रक्ष्ये जगन्नाथ सृजत्वमशुभाः प्रजाः ॥ निवार्य स तदा रुद्रं ससर्ज कमलोद्भवः ॥३१॥ स्थानाभिमानिनः सर्वान् गदतस्तान्निबोधत ॥ आपोऽग्निरन्तरिक्षं च द्यौर्वायुः पृथिवी तथा ॥ ३२ ॥ नद्यः समुद्राः शैलाश्च वृक्षा वीरुध एव च ॥ लवाः काष्ठाः कलाश्चैव मुहूर्ता दिवसाः क्षपाः ॥ ३३ ॥ अर्द्धमासाश्च मासाश्च अयनाब्दयुगादयः ॥ स्थानाभिमानिनः सृष्ट्वा साधकानसृजत्पुनः ॥ ३४ ॥ मरीचिभृग्वङ्गिरसः पुलस्त्यं पुलहं क्रतुम् ॥ दक्षमत्रिं वसिष्ठं च धर्मं संकल्पमेव च ॥ ३५ ॥ प्राणाद्ब्रह्मासृजद्दक्षं चक्षुर्भ्यां च मरीचिनम् ॥ शिरसोऽङ्गिरसं देवो हृदयाद्भृगुमेव च ॥ ३६ ॥ नेत्राभ्यामत्रिनामानं धर्मं च व्यवसायतः ॥ संकल्पं चैव संकल्पात्सर्वलोकपितामहः ॥३७ ॥ पुलस्त्यं च तथोदानाद्व्यानाच्च पुलहं मुनिम् ॥ अपानात् क्रतुमव्यग्रं समानाच्च वसिष्ठकम् ॥ ३८ ॥ इत्येते ब्रह्मणा सृष्टाः साधका गृहमेधिनः ॥ आस्थाय मानवं रूपं धर्मस्तैः संप्रवर्त्तितः ॥ ३९ ॥ ततो देवासुरपितॄन् मनुष्यांश्च चतुष्टयम् ॥ सिसृक्षुर्भगवानीशः स्वमात्मानमयोजयत् ॥ ४० ॥ युक्तात्मनस्तमोमात्रा ह्युद्रिक्ताभूत्प्रजापतेः ॥ ततोऽस्य जघनात्पूर्वमसुरा जज्ञिरे सुताः ॥ ४१ ॥ उत्ससर्जासुरान् सृष्ट्वा तां तनुं पुरुषोत्तमः ॥ सा चोत्सृष्टा तनुस्तेन सद्यो रात्रिरजायत ॥ ४२ ॥ सा तमोबहुला यस्मात्प्रजास्तस्यां स्वपन्त्यतः ॥ सत्त्वमात्रात्मिकां देवस्तनुमन्यां गृहीतवान् ॥ ४३ ॥ ततोऽस्य मुखतो देवा दीप्यंतः संप्रजज्ञिरे ॥ त्यक्ता सापि तनुस्तेन सत्त्वप्राय

१ परमेष्ठिनम् इति पा० । २ भगवान् वाक्यम् इति पा० । ३ स्वात्मना इति पा० । ४ पुत्रान् इति पा० । ५ ज्ञानाभिमानिनः इति पा० । ६ तेषामिति पा० । ७ निबोध मे इति पा० । ८ अयनश्च युगादयः इति पा० । ९ प्रभुः इति पा० । १० चैव इति पा० । ११ तथापानाद्व्यानाच्च इति पा० । १२ प्रभुः इति पा० । १३ उदानात् इति पा० । १४ देवान् ततोऽसुरपितॄन् इति पा० । १५ सिसृक्षुर्भगवानेतान् स्वमात्मानमयूयुजत् इति पा० । १६ अगृह्णत इति पा० । १७ दीप्तिमन्तः प्रजज्ञिरे इति पा० ।

मभूद्दिनम् ॥ ४४ ॥ तस्मादहो धर्मयुक्ता[1] देवताः समुपासते ॥ सत्त्वमात्रात्मिकामेव ततोऽन्यां जगृहे तनुम् ॥ ४५ ॥ पितृवन्मन्यमानस्य पितरः[2] संप्रजज्ञिरे ॥ उत्ससर्ज पितॄन् सृष्ट्वा ततस्तामपि विश्वदृक्[3] ॥ ४६ ॥ सापविद्धा तनुस्तेन सद्यः सन्ध्या व्यजायत[4] ॥ तस्मादहर्दैवतानां रात्रिः स्याद्देवविद्विषाम् ॥ ४७ ॥ तयोर्मध्ये पितॄणां तु मूर्त्तिः सन्ध्या गरीयसी[5] ॥ तस्माद्देवासुराः सर्वे मुनयो मानवा[6]स्तदा[7] ॥ ४८ ॥ उपासते सदा युक्ता[8] रात्र्यह्नोर्मध्यमां तनुम् ॥ रजोमात्रात्मिकां ब्रह्मा तनुमन्यां[9] ततोऽसृजत् ॥ ४९ ॥ ततोऽस्य जज्ञिरे पुत्रा मनुष्या रजसावृताः ॥ तामथांशु[10] स तत्याज तनुं सद्यः प्रजापतिः ॥ ५० ॥ ज्योत्स्ना सा चाभवद्विप्राः प्राक्सन्ध्या याभिधीयते ॥ ततः स भगवान्ब्रह्मा संप्राप्य द्विजपुंगवाः ॥ ५१ ॥ मूर्तिं तमोरजःप्रायां पुनरेवाभ्यपूजयत्[11] ॥ अन्धकारे क्षुधाविष्टा राक्षसास्तस्य जज्ञिरे ॥ ५२ ॥ पुत्रास्तमोरजःप्राया बलिनस्ते निशाचराः ॥ सर्पा यथास्तथा[12][13] भूता गन्धर्वाः संप्रजज्ञिरे ॥ ५३ ॥ रजस्तमोभ्यामाविष्टांस्ततोऽन्यानसृजत्प्रभुः[14] ॥ वयांसि वयसः सृष्ट्वा अवीन्वै वक्षसोऽसृजत् ॥ ५४ ॥ मुखतोऽजान् ससर्जान्यान्[15] उदराद्गाश्च निर्ममे ॥ पद्भ्यां[16] चाश्वान्समातंगान्रासभान् गवयान्मृगान् ॥ ५५ ॥ उष्ट्रानश्वतरांश्चैव[17] अरन्तेश्च प्रजापतिः ॥ ओषध्यः फलमूलानि[18] रोमभ्यस्तस्य जज्ञिरे ॥ ५६ ॥ गायत्रं च ऋचंश्चैव[19] त्रिवृत्स्तोमं रथन्तरम्[20] ॥ अग्निष्टोमं च यज्ञानां निर्ममे प्रथमान्मुखात् ॥ ५७ ॥ यजूंषि त्रैष्टुभं छन्दस्तोमं पञ्चदशं तथा ॥ बृहत्साम तथोक्थश्च दक्षिणादसृजन्मुखात् ॥ ५८ ॥ सामानि जागतं[21] छन्दस्तोमं सप्तदशं तथा ॥ वैरूपमतिरात्रं च पश्चिमादसृजन्मुखात् ॥ ५९ ॥ एकविंशमथर्वाणमाप्तोर्याम[22]माणमेव च ॥ अनु

---

१ धर्मयुक्ता धार्मिका देवताः सूर्यादीन् समुपासते इत्यर्थः । २ पितरस्तस्य जज्ञिरे इति पा० । ३ विश्वधृक् इति पा० । ४ सन्ध्याप्यजायत इति पा० । ५ महीयसी इति पा० । ६ मनवो मानवास्तथा इति, मनवो मानवाः सदा इति पा० । ७ तदा इति पा० । ८ युक्ता अवहिता इत्यर्थः । ९ तनुमन्यामगृह्णत इति, रजोमात्रात्मिकामन्यां ब्रह्मा तनुमगृह्णत इति पा० । १० तामप्याशु इति पा० । ११ न्यपूजयत् इति, पुनरेव ह्ययूयुजत् इति, पा० । १२ तत इति पा० । १३ सर्पा भूतास्तथा यक्षाः इति पा० । १४ पुनः इति पा० । १५ ससर्जाथ इति पा० । १६ रक्षसः इति, पद्भ्याश्चैवाश्वमातङ्गान् रक्षस इति पा० । १७ न्यंकूनन्यांश्च जातय इति पा० । १८ मूलिन्य इति पा० । १९ ऋतश्चैव इति पा० । २० औद्गात्रञ्च ऋतश्चैव त्रिष्टुप्साम रथन्तरम् इति पा० । २१ जगतीच्छन्दस्तोमम् इति पा० । २२ मासोर्यामानमेव च इति पा० ।

ष्टुभं सवैराजमुत्तरादसृजन्मुखात् ॥ ६० ॥ उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे ॥ ब्रह्मणो हि प्रजासर्गं सृजतस्तु प्रजापतेः॥६१॥
यक्षान् पिशाचान् गन्धर्वांस्तथैवाप्सरसः शुभाः॥ सृष्ट्वा चतुष्टयं सर्गं देवर्षिपितृमानुषम् ॥६२॥ ततोऽसृजंच्च भूतानि स्थावराणिचराणि
च ॥ नरकिन्नररक्षांसि वयःपशुमृगोरगान् ॥ ६३ ॥ अव्ययं च व्ययं चैव द्वयं स्थावरजङ्गमम् ॥ तेषां ये यानि कर्माणि प्राक् सृष्टेः
प्रतिपेदिरे॥६४॥तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनःपुनः ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ॥६५॥ तद्भाविताः प्रपद्यन्ते तस्मा
त्तत्तस्य रोचते ॥ महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्तिषु ॥ ६६ ॥ विनियोगं च भूतानां धातैव व्यदधात्स्वयम् ॥ नामरूपं च
भूतानां प्राकृतानां प्रपञ्चनम् ॥ ६७ ॥ वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥ आर्षाणि चैव नामानि याश्च वेदेषु सृष्टयः ॥ ६८ ॥
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ यावन्ति प्रतिलिङ्गानि नानारूपाणि पर्यये ॥ ६९ ॥ दृश्यन्ते तानि तान्येव तथा भावा
युगादिषु ॥ ७० ॥ इति श्रीकूर्मपुराणे सप्तमोऽध्यायः ॥ ७ ॥ अथ मुख्यादिसर्गकथनम् ॥ कूर्म उवाच ॥ एवं भूतानि सृष्टानि स्थाव
राणि चराणि च ॥ यदास्य ताः प्रजाः सृष्टा न व्यवर्द्धन्त धीमतः ॥ १ ॥ तमोमात्रावृतो ब्रह्मा तदाशोचत दुःखितः ॥ ततः स विदधे
बुद्धिमर्थनिश्चयगामिनीम् ॥ २ ॥ अथात्मनि समद्राक्षीत्तमोमात्रां नियामिकाम् ॥ रजः सत्त्वं च संवृत्तं वर्त्तमानं स्वधर्मतः ॥ ३ ॥
तमस्तु व्यनुदत्पश्चाद्रजःसत्त्वेन संयुतः ॥ तत्तमः प्रतिनुन्नं वै मिथुनं समजायत ॥ ४ ॥ अधर्माचरणो विप्रा हिंसा चाशुभलक्षणा ॥
स्वां तनुं स ततो ब्रह्मा तामपोहत भास्वराम् ॥ ५ ॥ द्विधाकरोत्पुनर्देहमर्द्धेन पुरुषोऽभवत् ॥ अर्द्धेन नारी पुरुषो विराजमसृजत्

१ देवर्षिपितृमानवम् इति, सदेवासुरमानवम् इति, देवर्षिपितृमानवान् इति पा०। २ ततोऽसृजत इति, ततोऽसृजत्स इति पा०। ३ उद्भाविता इति पा०। ४ तथैव इति पा०। ५ दृष्टानाञ्च प्रपञ्चनम् इति, कृतानाञ्च प्रपञ्चनम् इति, नृणां ये पञ्चभूतानां प्राकृतानां प्रपञ्चनम् इति च पा०। ६ वेदशब्दापशब्दौ च इति पा०। ७ दृष्टय इति पा०। ८ शर्वर्यन्ते च भूतानाम् इति पा०। ९ यथर्त्तावृतुलिङ्गानि इति। यथा ऋतौ नानारूपाणि ऋतुलिङ्गानि सन्ति तानि तानि पर्यये पुनर्वत्सरान्तरे दृश्यन्ते च इत्यर्थः। १० यदा तस्य इति। यदा चास्य इति पा०। ११ तमोमयोवृतः इति पा०। १२ संविदधे इति पा०। १३ तथात्मनि इति पा०। १४ संवृतः इति पा०। १५ प्रतिलभं इति. प्रतिभानुश्चमिति पा०। १६ अधर्माचरणमेव इति अधर्माचरकः। स्वार्थे षण्। “ क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते” राक्षसवत् इति मृग्यम्। १७ सततं इति पा०। १८ भाद्धरामिति पा०। १९ पुरुषात् इति पा०।

प्रभुः ॥ ६ ॥ नारीं[1] च शतरूपाख्यां योगिनीं ससृजे शुभाम् ॥ सा दिवं पृथिवीं चैव महिम्ना व्याप्य संस्थिता[2] ॥ ७ ॥ योगैश्वर्यबलोपेता ज्ञानविज्ञानसंयुता ॥ योऽभवत्पुरुषात्पुत्रो विराडव्यक्तजन्मनः ॥ ८ ॥ स्वायंभुवो मनुर्देवः सोऽभवत्पुरुषो मुनिः ॥ सा देवी शतरूपाख्या तपः कृत्वा सुदुश्चरम्[3] ॥ ९ ॥ भर्त्तारं दीप्तयशसं[4] मनुमेवान्वपद्यत ॥ तस्माच्च शतरूपा सा पुत्रद्वयमसूयत ॥ १० ॥ प्रियव्रतोत्तानपादौ कन्याद्वयमनुत्तमम् ॥ तयोः प्रसूतिं दक्षाय मनुः कन्यां ददे[5] पुनः ॥११॥ प्रजापतिरथाकूतिं मानसो[6] जगृहे रुचिः ॥ आकूत्या मिथुनं जज्ञे मानसस्य रुचेः शुभम्[7] ॥ १२ ॥ यज्ञस्य दक्षिणा चैव याभ्यां संवर्द्धितं जगत् ॥ यज्ञस्य दक्षिणायां च पुत्रा द्वादश जज्ञिरे ॥ १३ ॥ यामा इति समाख्याता देवाः स्वायंभुवेऽन्तरे ॥ प्रसूत्यां च तथा दक्षश्चतस्रो विंशतिं तथा ॥ १४ ॥ ससर्ज कन्या नामानि तासां सम्यक् निबोधत ॥ श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा[8] ॥ १५ ॥ बुद्धिर्लज्जा वपुः शान्तिः[9] सिद्धिः कीर्तिस्त्रयोदशी ॥ पत्न्यर्थं प्रतिजग्राह धर्मो[10] दाक्षायणीः शुभाः ॥ १६ ॥ ताभ्यः शिष्टा यवीयस्य एकादश सुलोचनाः ॥ ख्यातिः सत्यथ संभूतिः स्मृतिः प्रीतिः क्षमा तथा ॥ १७ ॥ सन्ततिश्चानसूया[11] च ऊर्ज्जा स्वाहा स्वधा तथा ॥ भृगुर्भवो[12] मरीचिश्च तथा चैवाङ्गिरा मुनिः ॥ १८ ॥ पुलस्त्यः पुलहश्चैव क्रतुः परमधर्मवित् ॥ अत्रिर्वसिष्ठो वह्निश्च पितरश्च[13] यथाक्रमम् ॥ १९ ॥ ख्यात्याद्या जगृहुः कन्या मुनयो ज्ञानसत्तमाः ॥ श्रद्धाया आत्मजः कामो दर्पो लक्ष्मीसुतः स्मृतः ॥ २० ॥ धृत्यास्तु नियमः पुत्रस्तुष्ट्याः सन्तोष उच्यते ॥ पुष्ट्या लाभः[14] सुतश्चापि मेधापुत्रः शमस्तथा ॥ २१ ॥ क्रियायाश्चाभवत्पुत्रो दण्डश्च नय एव च[15] ॥ बुद्ध्या बोधः सुतस्तद्वत्प्रमादोऽप्यजायत[16] ॥ २२ ॥ लज्जाया विनयः पुत्रो वपुषो व्यवसायकः ॥ क्षेमः शान्तिसुतश्चापि सिद्धेः[17] सिद्धेरजायत ॥ २३ ॥ यशः कीर्त्तिसुतस्तद्वादित्येते धर्मसूनवः ॥ कामस्य हर्षः पुत्रोऽभूद्देवानन्दोऽप्यजायत[18] ॥२४॥ इत्येष वै सुखोदर्कः सर्गो धर्मस्य कीर्त्तितः ॥

---

१ तां नारीमिति पा० । २ तिष्ठति इति पा० । ३ सुदुस्तरम् इति पा० । ४ ब्रह्मणः पुत्रम् इति पा० । ५ ददौ इति पा० । ६ मनसा इति पा० । ७ सुतः इति पा० । ८ तथा क्रिया इति पा० । ९ कान्तिः इति पा० । १० प्रभुरिति पा० । ११ सन्नतिश्चानसूया इति पा० । १२ भग इति पा० । १३ पतयश्च इति पा० । १४ लोभ इति पा० । १५ क्रियायामभवत् पुत्रो दण्डः समय उच्यते इति पा० । १६ व्यजायते इति पा० । १७ सुखमिति पा० । १८ पुत्रो वै वेदानन्दो व्यजायत इति पा० ।

जज्ञे हिंसा त्वधर्माद्वै निकृतिं चानृतं सुतम् ॥२५॥ निकृतेस्तनयो जज्ञे भयं नरकमेव च ॥ माया च वेदना चैव मिथुनं त्विदमेतयोः ॥२६॥ भयाज्जज्ञेऽथ वै माया मृत्युं भूतापहारिणम् ॥ वेदना च सुतं चापि दुःखं जज्ञेऽथ रौरवात् ॥२७॥ मृत्योर्व्याधिजराशोकौ तृष्णा क्रोधश्च जज्ञिरे ॥ दुःखोत्तराः स्मृता ह्येते सर्वे चाधर्मलक्षणाः ॥ २८ ॥ नैषां भार्यास्ति पुत्रो वा सर्वे ते ह्यूर्द्ध्वरेतसः ॥ इत्येष तामसः सर्गो जज्ञे धर्मनियामकः ॥ २९ ॥ संक्षेपेण मया प्रोक्ता विसृष्टिर्मुनिपुङ्गवाः ॥ ३० ॥ इति श्रीकूर्मपुराणे मुख्यादिसर्गकथनेऽष्टमोऽध्यायः ॥ ८ ॥

अथ पद्मोद्भवप्रादुर्भावः ॥ सूत उवाच ॥ एतच्छ्रुत्वा तु वचनं नारदाद्या महर्षयः ॥ प्रणम्य वरदं विष्णुं पप्रच्छुः संशयान्विताः ॥ १ ॥ मुनय ऊचुः ॥ कथितो भवता सर्गो मुख्यादीनां जनार्दन ॥ इदानीं संशयं चेममस्माकं छेत्तुमर्हसि ॥ २ ॥ कथं स भगवानीशः पूर्वजोऽपि पिनाकधृक् ॥ पुत्रत्वमगमच्छंभुर्ब्रह्मणोऽव्यक्तजन्मनः ॥ ३ ॥ कथं च भगवाञ्जज्ञे ब्रह्मा लोकपितामहः ॥ अण्डतो जगतामीशस्तन्नो वक्तुमिहार्हसि ॥ ४ ॥ कूर्म उवाच ॥ शृणुध्वमृषयः सर्वे शंकरस्यामितौजसः ॥ पुत्रत्वं ब्रह्मणस्तस्य पद्मयोनित्वमेव च ॥ ५ ॥ अतीतकल्पावसाने तमोभूतं जगत्त्रयम् ॥ आसीदेकार्णवं घोरं न देवाद्या न चर्षयः ॥६॥ तत्र नारायणो देवो निर्जने निरुपप्लवे ॥ आश्रित्य शेषशयनं सुष्वाप पुरुषोत्तमः ॥ ७ ॥ सहस्रशीर्षा भूत्वा स सहस्राक्षः सहस्रपात् ॥ सहस्रबाहुः सर्वज्ञश्चिन्त्यमानो मनीषिभिः ॥ ८ ॥ पीतवासा विशालाक्षो नीलजीमूतसन्निभः ॥ ततो विभूतियोगात्मा योगिनां तु दयापरः ॥ ९ ॥ कदाचित्तस्य सुप्तस्य लीलार्थं दिव्यमद्भुतम् ॥ त्रैलोक्यसारं विमलं नाभ्यां पंकजमुद्बभौ ॥ १० ॥ शतयोजनविस्तीर्णं तरुणादित्यसन्निभम् ॥ दिव्यगन्धमयं पुण्यं कर्णिकाकेसरान्वितम् ॥ ११ ॥ तस्यैवं सुचिरं कालं वर्त्तमानस्य शार्ङ्गिणः ॥ हिरण्यगर्भो भगवांस्तं देशमुपचक्रमे ॥ १२ ॥ स तं करेण

१ निकृत्यास्तु सुत इति पा० । २ निकृत्यनृतयोः इति । ३ जज्ञे जनयामास इत्यर्थः । अत्रान्तर्भूतः प्रेरणार्थः यथा कुमारसम्भवे " अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्द्धितुमाज्ञया ते " इति । ४ व्याधिजराशोकतृष्णाः क्रोधश्च इति पा० । ५ कमलसम्भवः इति पा० । ६ अण्डजः इति पा० । ७ कल्पापसरे इति पा० । ८ सर्वं इति पा० । ९ नारदाद्या महर्षयः इति पा० । १० निर्जनो निरुपप्लवः इति पा० । ११ महा इति पा० । १२ योगिनां हृदयालयः इति पा० । १३ दिव्यमुत्तमम् इति पा० ।

विश्वात्मा समुत्थाप्य सनातनम् ॥ प्रोवाच मधुरं वाक्यं मायया तस्य मोहितः ॥ १३ ॥ अस्मिन्नेकार्णवे घोरे निर्जने तमसावृते ॥ एकाकी को भवांश्चेति ब्रूहि मे पुरुषर्षभ ॥ १४ ॥ तस्य तद्वचनं श्रुत्वा विहस्य गरुडध्वजः ॥ उवाच देवं ब्रह्माणं मेघगम्भीरनिःस्वनः ॥ १५ ॥ भो भो नारायणं देवलोकानां प्रभवाव्ययम् ॥ महायोगीश्वरं मां वै जानीहि पुरुषोत्तमम् ॥ १६ ॥ मयि पश्य जगत्कृत्स्नं त्वं च लोकपितामहः ॥ सपर्वतमहाद्वीपं समुद्रैः सप्तभिर्वृतम् ॥ १७ ॥ एवमाभाष्य विश्वात्मा प्रोवाच पुरुषं हरिः॥ जानन्नपि महायोगी को भवानिति वेधसम् ॥ १८ ॥ ततः प्रहस्य भगवान् ब्रह्मा वेदनिधिः प्रभुः ॥ प्रत्युवाचाम्बुजाभाक्षं सस्मितं श्लक्ष्णया गिरा ॥ १९॥ अहं धाता विधाता च स्वयम्भूः प्रपितामहः ॥ मय्येव संस्थितं विश्वं ब्रह्माहं विश्वतोमुखः ॥ २० ॥ श्रुत्वा वाचं स भगवान्विष्णुः सत्यपराक्रमः ॥ अनुज्ञाप्याथ योगेन प्रविष्टो ब्रह्मणस्तनुम् ॥ २१ ॥ त्रैलोक्यमेतत्सकलं सदेवासुरमानुषम् ॥ उदरे तस्य देवस्य दृष्ट्वा विस्मयमागतः ॥ २२ ॥ तदास्य वक्त्रान्निष्क्रम्य पन्नगेन्द्रनिकेतनः ॥ अथापि भगवान्विष्णुः पितामहमथाब्रवीत् ॥ २३ ॥ भवानप्येवमेवाद्य शाश्वतं हि ममोदरम् ॥ प्रविश्य लोकान्पश्यैतान्विचित्रान्पुरुषर्षभ ॥ २४ ॥ ततः प्रह्लादिनीं वाणीं श्रुत्वा तस्याभिनन्द्य च ॥ श्रीपतेरुदरं भूयः प्रविवेश कुशध्वजः ॥ २५ ॥ तानेव लोकान्गर्भस्थानपश्यत्सत्यविक्रमः ॥ पर्यटित्वाथ देवस्य ददृशेऽन्तं न वै हरेः ॥ २६ ॥ ततो द्वाराणि सर्वाणि पिहितानि महात्मना ॥ जनार्दनेन ब्रह्मासौ नाभ्यां द्वारमविन्दत ॥ २७ ॥ तत्र योगबलेनासौ प्रविश्य कनकाण्डजः ॥ उज्जहारात्मनो रूपं पुष्कराच्चतुराननः ॥ २८ ॥ विरराजारविन्दस्थः पद्मगर्भसमद्युतिः ॥ ब्रह्मा स्वयंभूर्भगवाञ्जगद्योनिः पितामहः ॥ २९ ॥ समन्यमानो विश्वेशमात्मानं परमं पदम् ॥ प्रोवाच विष्णुं पुरुषं मेघगम्भीरया गिरा ॥ ३० ॥ कृतं किं भवतेदानी

---

१ देवं लोकानां इति पा० । २ त्वं इति पा० । ३ त्वां च लोकपितामहम् इति पा० । ४ श्रुत्वेत्थं भगवान् विष्णुः सत्यः सत्यपराक्रमः इति पा० । ५ अनुज्ञयाथ इति पा० । ६ विस्मयमागमत् इति पा० । ७ अजातश्मश्रुर्भगवान् इति पा० । ८ पर्यटित्वा पर्यट्य इति साधु । आर्षः ल्यप्प्रत्ययाभावः । ९ ददृशे तत्र वै हरे इति पा०।१० विरराजारविन्देऽस्मिन् इति पा० । ११ भवतैवाद्य मन्मनोजयकांक्षया इति पा० ।

मात्मनो जयकांक्षया ॥ एकोऽहं प्रबलो नान्यो मां वै कोभिभविष्यति ॥ ३१ ॥ श्रुत्वा नारायणो वाक्यं ब्रह्मणो[2]क्तमत न्द्रितः ॥ सान्त्वपूर्वमिदं वाक्यं बभाषे मधुरं हरिः ॥ ३२ ॥ भवान्धाता विधाता च स्वयंभूः प्रपितामहः ॥ न[3] मात्सर्याभि योगेन द्वाराणि पिहितानि मे ॥ ३३ ॥ किन्तु लीलार्थमेवैतन्न त्वां बाधितुमिच्छया ॥ को हि बाधितुमन्विच्छेद्देवदेवं पितामहम् ॥ ३४ ॥ न[4] हि त्वं बाध्यसे ब्रह्मन् मान्यो हि सर्वथा भवान् ॥ मम[5] क्षमस्व कल्याणं यन्मयापकृतं तव ॥ ३५ ॥ अस्माच्च कारणाद्ब्रह्मन्पुत्रो भवतु मे भवान् ॥ पद्मयोनिरिति ख्यातो मत्प्रियार्थं जगन्मय ॥ ३६ ॥ ततः स भगवान्देवो वरं दत्त्वा किरीटिने ॥ प्रहर्षमतुलं गत्वा पुनर्विष्णुमभाषत ॥ ३७ ॥ भवान्सर्वात्मकोऽनन्तः सर्वेषां परमेश्वरः ॥ सर्वभूतान्तरात्मा वै परं ब्रह्म सनातनम् ॥ ३८ ॥ अहं वै सर्वलोकानामात्मा[6]लोको महेश्वरः ॥ मन्मयं सर्वमेवेदं ब्रह्मणः पुरुषः परः ॥ ३९ ॥ नावाभ्यां विद्यते ह्यन्यो लोकानां परमेश्वरः ॥ एका मूर्तिर्द्विधा भिन्ना नारायणपितामहौ ॥ ४० ॥ तेनैवमुक्तो ब्रह्माणं वासुदेवोऽब्रवीदिदम् ॥ इयं प्रतिज्ञा भवतो विनाशाय भविष्यति ॥ ४१ ॥ किं न पश्यसि योगेनं ब्रह्माधिपतिमव्ययम् ॥ प्रधानपुरुषेशानं वेदाहं परमेश्वरम् ॥४२॥ यं न पश्यन्ति योगीन्द्राः सांख्या अपि महेश्वरम् ॥ अनादिनिधनं ब्रह्म तमेव शरणं व्रज ॥ ४३ ॥ ततः क्रुद्धोऽम्बुजाभाक्षं ब्रह्मा प्रोवाच केशवम् ॥ भगवन्नूनमात्मानं वेद्मि तत्परमाक्षरम् ॥ ४४ ॥ ब्रह्माणं जगतामेकमात्मानं परमं पदम् ॥ नावाभ्यां विद्यते त्वन्यो लोकानां परमेश्वरः ॥ ४५ ॥ संत्यज्य निद्रां विपुलां स्वमात्मानं विलोकय ॥ तस्य तत्क्रोधजं वाक्यं श्रुत्वापि स तदा प्रभुः ॥ ४६ ॥ मामेवं वद कल्याण

१ मां हि कोऽभिभविष्यति इति, समानोऽपि च विद्यते इति पा० । २ ब्रह्मणो लोकमन्त्रिणः इति, ब्रह्मणः परमेष्ठिन इति, । मंत्रिणः परमेष्ठिनः इति पा० । ३ त्वन्मात्सर्य्याभियोगेन इति पा० । ४ न तेऽन्यथावमन्तव्यमिति पा० । ५ मम मर्षय कल्याणं यन्मयापहृतं तव इति, सर्वमन्वयकल्याणमिति, सर्वधर्म्मैककल्याण इति पा० । ६ मात्मा लोकपितामहः इति पा० । ७ ब्रह्माहं पुरुषः परः इति, ब्रह्माण्डं पुरुषर्षभ इति पा० । ८ एकोऽस्तीति द्विधा भिन्नौ इति पा० । ९ योगेशमिति, देवेशमिति पा० । १० भवान्न नूनमात्मानं विन्देत परमेश्वर इति पा० । ११ श्रुत्वा विष्णुरभाषत इति पा० ।

परिवादं महात्मनः ॥ न मे ह्यविदितं ब्रह्मन् नान्यथाहं वदामि ते ॥ ४७ ॥ किन्तु मोहयति ब्रह्मन्नेनन्ता पारमेश्वरी ॥ मायाशेषविशेषाणां हेतुरात्मसमुद्भवा ॥ ४८ ॥ एतावदुक्त्वा भगवान्विष्णुस्तूष्णीं बभूव ह ॥ ज्ञात्वा तत्परमं तत्त्वं स्वमात्मानं सुरेश्वरः ॥ ४९ ॥ कुतो ह्यपरिमेयात्मा भूतानां परमेश्वरः ॥ प्रसादं ब्रह्मणे कर्तुं प्रादुरासीत्ततो हरः ॥ ५० ॥ ललाटनयनो देवो जटामण्डलमण्डितः ॥ त्रिशूलपाणिर्भगवांस्तेजसां परमो निधिः ॥ ५१ ॥ विद्यांविलासग्रथिता ग्रहैः सार्केन्दुतारकैः ॥ मालामत्यद्भुताकारां धारयन्पादलम्बिनीम् ॥ ५२ ॥ तं दृष्ट्वा देवमीशानं ब्रह्मा लोकपितामहः॥मोहितो माययात्यर्थं पीतवाससमब्रवीत् ॥ ५३ ॥ क एष पुरुषो नीलः शूलपाणिस्त्रिलोचनः ॥ तेजोराशिरमेयात्मा समायाति जनार्दन ॥ ५४ ॥ तस्य तद्वचनं श्रुत्वा विष्णुर्दानवमर्दनः ॥ अपश्यदीश्वरं देवं ज्वलन्तं विमलेऽम्भसि ॥ ५५ ॥ ज्ञात्वा तं परमं भावमैश्वरं ब्रह्मभावनः ॥ प्रोवाचोत्थाय भगवान्देवदेवं पितामहम् ॥ ५६ ॥ अयं देवो महादेवः स्वयंज्योतिः सनातनः ॥ अनादिनिधनोऽचिन्त्यो लोकानामीश्वरो महान् ॥ ५७ ॥ शंकरः शम्भुरीशानः सर्वात्मा परमेश्वरः ॥ भूतानामधिपो योगी महेशो विमलः शिवः ॥ ५८ ॥ एष धाता विधाता च प्रधानः प्रभुरव्ययः ॥ यं प्रपश्यन्ति यतयो ब्रह्मभावेन भावितां ॥ ५९ ॥ सृजत्येष जगत्कृत्स्नं पाति संहरते तथा ॥ कालो भूत्वा महादेवः केवलो निष्कलः शिवः ॥ ६० ॥ ब्रह्माणं विदधे पूर्वं भवन्तं यः सनातनः ॥ वेदांश्च प्रददौ तुभ्यं सोऽयमायाति शंकरः ॥ ६१ ॥ अस्यैव चापरां मूर्तिं विश्वयोनिं सनातनीम् ॥ वासुदेवाभिधानं मामवेहि प्रपितामह ॥ ६२ ॥ किं न पश्यसि योगेशं ब्रह्माधिपतिमव्ययम् ॥ दिव्यं भवतु ते चक्षुर्येन द्रक्ष्यसि तत्परम् ॥ ६३ ॥ लब्ध्वा चैवं तदा चक्षुर्विष्णोर्लोकपितामहः ॥ बुबुधे परमं ज्ञानं पुरतः समवस्थितम् ॥ ६४ ॥ स लब्ध्वा परमं ज्ञान

१ भवन्तमिति पा० । २ महेश्वरमिति पा० । ३ ऽनन्त इति पा० । ४ दिव्यां विशालां ग्रथितामिति पा० । ५ पुरुषोऽनन्त इति पा० । ६ समायातः इति पा० । ७ जटिलं तमथाम्भसि इति पा० । ८ ब्रह्मभावितः इति पा० । ९ पुरुषेश्वरः इति पा० । १० भावितुमिति पा० । ११ तत्पदम् इति पा० । १२ परमीशानमिति, परमेशानमिति पा० ।



सरस्वती शोध संस्थान
8, शांति विहार, सुरेन्द्र नगर
P.O. बिजनौर, लखनऊ

मैश्वरं प्रपितामहः ॥ प्रपेदे शरणं देवं तमेव पितरं शिवम् ॥ ६५ ॥ ओंकारं समनुस्मृत्य संस्तभ्यात्मानमात्मना ॥ अथर्वशिरसा देवं तुष्टाव च कृताञ्जलिः ॥ ६६ ॥ संस्तुतस्तेन भगवान् ब्रह्मणा परमेश्वरः ॥ अवाप परमां प्रीतिं व्याजहार स्मयन्निव[2] ॥ ६७ ॥ मत्समस्त्वं न सन्देहो वत्स[3] भक्तश्च मे भवान् ॥ मयैवोत्पादितः पूर्वं लोकसृष्ट्यर्थमव्ययः ॥ ६८ ॥ त्वमात्मा ह्यादिपुरुषो मम देहसमुद्भवः ॥ वरं वरय विश्वात्मन्वरदोऽहं तवानघ ॥ ६९ ॥ स देवदेववचनं निशम्य कमलोद्भवः ॥ निरीक्ष्य विष्णुं पुरुषं प्रणम्[4]योवाच शंकरम् ॥ ७० ॥ भगवन्भूतभव्येश महादेवाम्बिकापते ॥ त्वामेव पुत्रमिच्छामि त्वया वा सदृशं सुतम् ॥ ७१ ॥ मोहितोऽस्मि महादेव मायया सूक्ष्मया त्वया ॥ न जाने परमं भावं याथातथ्येन ते[5] शिव ॥ ७२ ॥ त्वमेव देव भक्तानां माता भ्राता पिता सुहृत् ॥ प्रसीद तव पादाब्जं नमामि शरणागतः ॥ ७३ ॥ स तस्य वचनं श्रुत्वा जगन्नाथो वृषध्वजः ॥ व्याजहार तदा पुत्रं समालोक्य जनार्दनम् ॥ ७४ ॥ यदर्थितं भगवता तत्करिष्यामि पुत्रक ॥ विज्ञानमैश्वरं दिव्यमुत्पत्स्यति[6] तवानघ ॥ ७५ ॥ त्वमेव सर्वभूतानामादिकर्त्ता नियोजितः ॥ कुरुष्व[7] तेषु देवेश मायां लोकपितामह ॥ ७६ ॥ एष नारायणो[8] मत्तो ममैव परमा तनुः ॥ भविष्यति तवेशान योगक्षेमवहो[9] हरिः ॥ ७७ ॥ एवं व्याहृत्य हस्ताभ्यां प्रीतः[10] स परमेश्वरः ॥ संस्पृश्य देवं ब्रह्माणं हरिं वचनमब्रवीत् ॥ ७८ ॥ तुष्टोऽस्मि सर्वथाहं ते भक्त्या[11]स्त्वं च जगन्मय ॥ वरं वृणीष्व नावाभ्यामन्यो[12]ऽस्ति परमार्थतः ॥ ७९ ॥ श्रुत्वाथ देववचनं विष्णुर्विश्वमयं[13] जगत् ॥ प्राह प्रसन्नया वाचा समालोक्य[14] च तन्मुखम् ॥ ८० ॥ एष एव वरः श्लाघ्यो यदहं परमेश्वरम् ॥ पश्यामि परमात्मानं भक्तिर्भवतु मे त्वयि ॥ ८१ ॥ तथेत्युक्त्वा महादेवः पुनर्विष्णुमभाषत ॥ भवान् सर्वस्य

---

१ देवेन इति पा० । २ स्मयन्निव स्मितं कुर्वन्निव इत्यर्थः । स्मयन्निति आर्षं स्मयमानः । ३ मद्भक्तश्च यतो भवान् इति पा० । ४ प्रणम्याह वृषध्वजमिति पा० । ५ तेऽनघ इति पा० । ६ उत्पत्स्यतीत्यत्र परस्मैपदमार्षम् । तवानघ इति पा० । ७ तथा कुरुष्व देवेश इति पा० । ८ नारायणोऽनन्त इति पा० । ९ योगक्षेमवहः—अलब्धस्य लाभो योगः । लब्धस्य परिरक्षणं क्षेमं तयोर्निर्वाहक इत्यर्थः । १० प्रीतात्मा इति पा० । ११ भक्त्या तव इति पा० । १२ न ह्यावां विभिन्नौ परमार्थतः इति पा० । १३ विश्वजगन्मयः इति पा० । १४ समालोक्य चतुर्मुखमिति पा० ।

कार्यस्य कर्त्ताहमधिदेवतम्[1] ॥ ८२ ॥ त्वन्मयं मन्मयं चैव सर्वमेतन्न संशयः ॥ भवान् सोमस्त्वहं सूर्यो भवान्रात्रिरहं दिनम् ॥ ८३ ॥ भवान् प्रकृतिरव्यक्तमहं पुरुष एव च ॥ भवान् ज्ञानमहं ज्ञाता भवान्मायाहमीश्वरः ॥ ८४ ॥ भवान्विद्यात्मिका[2] शक्तिः शक्तिमानहमीश्वरः ॥ योऽहं स निष्कलो देवः सोऽसि नारायणः प्रभुः ॥ ८५ ॥ एकीभावेन पश्यन्ति योगिनो ब्रह्मवादिनः ॥ त्वामनाश्रित्य[3] विश्वात्मन्न योगी मामुपैष्यति ॥ पालयैतज्जगत्कृत्स्नं सदेवासुरमानुषम् ॥ ८६ ॥ इतीदमुक्त्वा भगवाननादिः स्वमायया मोहितभूतभेदः ॥ जगाम जन्मर्द्धिविनाशहीनं[4] धामैकमव्यक्तमनन्तशक्तिः ॥ ८७ ॥ इति श्रीकूर्मपुराणे पद्मोद्भवप्रादुर्भाववर्णनं नाम नवमोऽध्यायः ॥ ९ ॥ अथ रुद्रसृष्टिः ॥ कूर्म उवाच ॥ गते महेश्वरे देवे भूय एव पितामहः ॥ तदेव सुमहत्पद्मं भेजे नाभिसमुत्थितम् ॥ १ ॥ अथ दीर्घेण कालेन तत्राप्रतिमपौरुषौ ॥ महासुरौ समायातौ भ्रातरौ मधुकैटभौ ॥ २ ॥ क्रोधेन महताविष्टौ महापर्वतविग्रहौ ॥ कर्णान्तरसमुद्भूतौ देवदेवस्य शार्ङ्गिणः ॥ ३ ॥ तावागतौ समीक्ष्याह नारायणमजो[6] विभुः ॥ त्रैलोक्यकण्टकावेतावसुरौ हन्तुमर्हसि ॥ ४ ॥ तदस्य वचनं श्रुत्वा हरिर्नारायणः प्रभुः ॥ आज्ञापयामास तयोर्वधार्थं पुरुषावुभौ॥५॥तदाज्ञया महद्युद्धं तयोस्ताभ्यामभूद्द्विजाः॥[7]व्यजयत्कैटभं जिष्णुः विष्णुश्च व्यजयन्मधुम् ॥६॥ ततःपद्मासनासीनं जगन्नाथःपितामहम् ॥ बभाषे मधुरं वाक्यं स्नेहाविष्टमना हरिः ॥७॥ अस्मान्मयोह्यमानस्त्वं पद्मादवतर प्रभो ॥ नाहं भवन्तं शक्नोमि वोढुं तेजोमयं गुरुम्[8] ॥ ८ ॥ ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ॥ अवाप वैष्णवीं निद्रामेकीभूतोऽथ[9] विष्णुना ॥ ९ ॥ सहं तेन तथाविश्य शङ्खचक्रगदाधरः ॥ ब्रह्मा नारायणाख्योऽसौ सुष्वाप सलिले तदा ॥ १० ॥ सोऽनुभूय चिरं कालमानन्दं परमात्मनः ॥ अनाद्यनन्तमद्वैतं स्वात्मानं ब्रह्मसंज्ञितम् ॥ ११ ॥ ततः प्रभाते योगात्मा भूत्वा देवश्चतुर्मुखः ॥ ससर्ज सृष्टिं तद्रूपां वैष्णवं भावमाश्रितः ॥ १२ ॥ पुरस्तादसृजद्देवः सनन्दं सनकं तथा ॥ ऋभुं सनत्कुमारं च पूर्वजं

---

१ कर्त्ता हर्त्ताधिदैवतमिति पा० । २ चिदात्मिका इति पा० । ३ त्वामनादृत्य इति पा० । ४ जन्मस्थितिनाशहीनमिति पा० । ५ सोऽधिवासमिति, स विशालमिति पा० । ६ नारायणमथो विभुः इति पा० । ७ तयोरासीत् समाः शतम् इति पा० । ८ सोढुमिति पा० । ९ मेकीभूयाय इति पा० । १० सहस्रशीर्षनयन इति, सहस्रशीर्षस्तनय इति पा० ।

तं सनातनम् ॥ १३॥ ते द्वन्द्वमोहनिर्मुक्ताः परं वैराग्यमास्थिताः ॥ विदित्वा परमं भावं ज्ञाने[2] विदधिरे मतिम् ॥ १४ ॥ तेष्वेवं निरपेक्षेषु लोकसृष्टौ पितामहः ॥ बभूव नष्टचेता वै मायया परमेष्ठिनः[3] ॥ १५ ॥ ततः पुराणपुरुषो जगन्मूर्त्तिः सनातनः ॥ व्याजहारात्मनः पुत्रं मोहनाशाय पद्मजम् ॥ १६ ॥ विष्णुरुवाच ॥ कच्चिन्नु[4] विस्मृतो देवः शूलपाणिः सनातनः ॥ यदुक्तो[5] वै पुरा शम्भुः पुत्रस्ते भव शङ्कर ॥ १७ ॥ प्रयुक्तवान् मनो योऽसौ पुत्रत्वेन तु शङ्करः ॥ अवाप[6] संज्ञां गोविन्दात्पद्मयोनिः पितामहः ॥ १८ ॥ प्रजाः[7] स्रष्टुं मनश्चक्रे तपः परमदुस्तरम् ॥ तस्यैवं तप्यमानस्य न किञ्चित्समवर्त्तत ॥ १९ ॥ ततो दीर्घेण कालेन दुःखात्क्रोधोऽभ्यजायत ॥ क्रोधाविष्टस्य नेत्राभ्यां प्रापतन्नश्रुबिन्दवः ॥ २० ॥ ततस्तेभ्यः[8] समुद्भूताः भूताः प्रेतास्तदाभवन् ॥ सर्वांस्तानग्रतो दृष्ट्वा ब्रह्मात्मानमविन्दत[9] ॥ २१ ॥ जहौ प्राणांश्च भगवान् क्रोधाविष्टः प्रजापतिः ॥ तदा प्राणमयो रुद्रः प्रादुरासीत्प्रभोर्मुखात् ॥ २२ ॥ सहस्रादित्यसङ्काशो युगान्तदहनोपमः ॥ रुरोद सुस्वरं घोरं देवदेवः स्वयं शिवः ॥ २३ ॥ रोदमानं[10] ततो ब्रह्मा मारोदीरित्यभाषत ॥ रोदनाद्रुद्र इत्येवं लोके ख्यातिं गमिष्यसि ॥ २४ ॥ अन्यानि सप्त नामानि पत्नीः पुत्रांश्च शाश्वतान् ॥ स्थानानि तेषामष्टानां ददौ लोकपितामहः ॥ २५ ॥ भवः शर्वस्तथेशानः पशूनां पतिरेव च ॥ भीमश्चोग्रो महादेवस्तानि नामानि सप्त वै ॥ २६ ॥ सूर्यो जलं मही वह्निर्वायुराकाशमेव च ॥ दीक्षितो ब्राह्मणश्चन्द्र इत्येता अष्टमूर्त्तयः ॥ २७ ॥ स्थानेष्वेतेषु ये रुद्रान्ध्यायन्ति प्रणमन्ति च ॥ तेषामष्टतनुर्[11]देवो ददाति परमं पदम् ॥२८ ॥ सुवर्चला तथैवोमा[12] विकेशी च शिवा तथा ॥ स्वाहा दिशश्च दीक्षा च रोहिणी चेति पत्नयः[13] ॥२९॥ शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः ॥ स्कन्दः सर्गोऽथ सन्तानो बुधश्चैषां सुताः स्मृताः ॥३०॥ एवम्प्रकारो भगवान्देवदेवो महेश्वरः ॥ प्रजा धर्मश्च

---

१ तु इति पा० । २ न सृष्टौ दधिरे मतिमिति पा० । ३ परिवेष्टित इति पा० । ४ कच्चिन्न इति पा० । ५ यदुक्तवानात्मनोऽसौ पुत्रत्वे तव शङ्करः इति पा० । ६ अवाप्तसंज्ञः इति पा० । ७ प्रजाः स्रष्टुमनास्तेपे तपः परमदुश्चरम् इति पा० । ८ ततस्तेभ्योऽश्रुबिन्दुभ्य इति पा० । ९ मनिन्दत इति पा० । १० आर्षमात्मनेपदित्वं भौवादिकत्वञ्च । ११ माद्या तनुरिति पा० । १२ वोषा इति पा० । १३ पत्नयः इत्यार्षम् ।

कामं च त्यक्त्वा वैराग्यमाश्रितः ॥ ३१ ॥ आत्मन्याधाय चात्मानमैश्वरं भावमास्थितः ॥ पीत्वा तदक्षरं ब्रह्म शाश्वतं परमामृतम् ॥ ३२ ॥प्रजाः सृजति चादिष्टो ब्रह्मणा नीललोहितः ॥ स्वात्मना सदृशान्रुद्रान्[1] ससर्ज मनसा शिवः ॥३३॥ कपर्दिनो निरातङ्कान्नीलकण्ठान् पिनाकिनः ॥ त्रिशूलहस्तानुद्रिक्तान् सदानन्दांस्त्रिलोचनान् ॥ ३४ ॥ जरामरणनिर्मुक्तान् महावृषभवाहनान् ॥ वीतरागांश्च सर्वज्ञान् कोटिकोटिशतान्प्रभुः ॥ ३५ ॥ तान्दृष्ट्वा विविधान्रुद्रान्निर्मलान्नीललोहितान् ॥ जरामरणनिर्मुक्तान् व्याजहार हरं गुरुः ॥ ३६ ॥ मास्राक्षीरीदृशीर्देव[2] प्रजा मृत्युविवर्जिताः ॥ अन्याः सृजस्व भूतेश जन्ममृत्युसमन्विताः ॥ ३७ ॥ ततस्तमाह भगवान् कपर्दी कामशासनः ॥ नास्ति मे तादृशः[3] सर्गः सृज त्वं[4] विविधाः प्रजाः ॥ ३८ ॥ ततःप्रभृति देवोऽसौ न प्रसूते शुभाः प्रजाः ॥ स्वात्मजैरेव[5] तै रुद्रैर्निवृत्तात्मा ह्यतिष्ठत[6] ॥ ३९ ॥ स्थाणुत्वं तेन तस्यासीद्देवदेवस्य शूलिनः ॥ ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः ॥ ४० ॥ द्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शंकरे ॥ ४१ ॥ एवं स शंकरः साक्षात्पिनाकी परमेश्वरः ॥ ततः स भगवान् ब्रह्मा वीक्ष्य देवं त्रिलोचनम् ॥ ४२ ॥ सहैव मानसै रुद्रैः प्रीतिविस्फारलोचनः ॥ ज्ञात्वा परतरं भावमैश्वरं ज्ञानचक्षुषा ॥ ४३ ॥ तुष्टाव जगतामीशं कृत्वा शिरसि चाञ्जलिम् ॥ ब्रह्मोवाच ॥ नमस्तेऽस्तु महादेव नमस्ते परमेश्वर ॥ ४४ ॥ नमः शिवाय देवाय नमस्ते ब्रह्मरूपिणे ॥ नमोऽस्तु ते महेशाय नमः शान्ताय हेतवे ॥ ४५ ॥ प्रधानपुरुषेशाय योगाधिपतये[7] नमः ॥ नमः कालाय रुद्राय महाग्रासाय शूलिने ॥ ४६ ॥ नमः पिनाकहस्ताय त्रिनेत्राय नमोनमः ॥ नमस्त्रिमूर्तये तुभ्यं ब्रह्मणे[8] जनकाय ते ॥४७॥ ब्रह्मविद्याधिपतये ब्रह्मविद्याप्रदायिने ॥ नमो वेदरहस्याय कालकालाय ते नमः ॥४८॥ वेदान्तसारसाराय नमोवेदात्ममूर्तये[9] ॥ नमो बुद्धाय[10] रुद्राय योगिनां गुरवे नमः ॥ ४९ ॥ प्रहीणशोकैर्विविधैर्भूतैः परिवृताय ते ॥ नमो ब्रह्मण्यदेवाय ब्रह्माधि

---

१ सदृशान् पुत्रानिति पा० । २ आत्मनेपदमार्षम् सृजस्व देवेश इति पा० । ३ तादृशी शक्तिरिति पा० । ४ सृज त्वमशुभा इति पा० । ५ आत्मजैरपि इति पा० । ६ व्यतिष्ठत इति पा० । ७ यज्ञाधिपतये इति पा० । ८ ब्रह्मणो जनकाय इति पा० । ९ वेदान्तमूर्तये इति पा० । १० शुद्धाय इति पा० ।

पतये नमः ॥ ५० ॥ त्र्यम्बकायादिदेवाय नमस्ते परमेष्ठिने ॥ नमो दिग्वाससे तुभ्यं नमो मुण्डाय दण्डिने ॥ ५१ ॥ अनादिमलहीनाय ज्ञानगम्याय ते नमः ॥ नमस्ताराय तीर्थाय नमो योगर्द्धिहेतवे ॥ ५२ ॥ नमो धर्मादिगम्याय योगगम्याय ते नमः ॥ नमस्ते निष्प्रपञ्चाय निराभासाय ते नमः ॥ ५३ ॥ ब्रह्मणे विश्वरूपाय नमस्ते परमात्मने ॥ त्वयैव सृष्टमखिलं त्वय्येव सकलं स्थितम् ॥५४॥ त्वया संह्रियते विश्वं प्रधानाद्यं जगन्मय ॥ त्वमीश्वरो महादेवः परं ब्रह्म महेश्वरः ॥ ५५ ॥ परमेष्ठी शिवः शान्तः पुरुषो निष्कलो हरः ॥ त्वमक्षरं परं ज्योतिस्त्वं कालः परमेश्वरः ॥ ५६ ॥ त्वमेव पुरुषोऽनन्तः प्रधानं प्रकृतिस्तथा ॥ भूमिरापोऽनलो वायुर्व्योमाहङ्कार एव च ॥ ५७ ॥ यस्य रूपं नमस्यामि भवन्तं ब्रह्मसंज्ञितम् ॥ यस्य द्यौरभवन्मूर्द्धा पादौ पृथ्वी दिशो भुजाः ॥ ५८ ॥ आकाशमुदरं तस्मै विराजे प्रणमाम्यहम् ॥ सन्तापयति यो नित्यं स्वभाभिर्भासयन् दिशः ॥५९॥ ब्रह्म तेजोमयं विश्वं तस्मै सूर्यात्मने नमः ॥ हव्यं वहति यो नित्यं रौद्री तेजोमयी तनुः ॥ ६० ॥ कव्यं पितृगणानां च तस्मै वह्न्यात्मने नमः ॥ आप्याययति यो नित्यं स्वधाम्ना सकलं जगत् ॥ ६१ ॥ पीयते देवतासंघैस्तस्मै चन्द्रात्मने[1] नमः ॥ बिभर्त्यशेषभूतानि यान्तश्चरति सर्वदा ॥ ६२ ॥ शक्तिर्माहेश्वरी तुभ्यं तस्मै वाय्वात्मने नमः ॥ सृजत्यशेषमेवेदं यः स्वकर्मानुरूपतः ॥ ६३ ॥ आत्मन्यवस्थितस्तस्मै चतुर्वक्त्रात्मने[2] नमः ॥ यः शेते शेषशयने विश्वमावृत्य मायया ॥ ६४ ॥ स्वात्मानुभूतियोगेन तस्मै विष्ण्वात्मने[3] नमः ॥ बिभर्त्ति शिरसा नित्यं द्विसप्तभुवनात्मकम् ॥ ६५ ॥ ब्रह्माण्डं योऽखिलाधारस्तस्मै शेषात्मने नमः ॥ यः परान्ते[4] परानन्दं पीत्वा देव्यैकसाक्षिकम्[5] ॥ ६६ ॥ नृत्यत्यनन्तमहिमा तस्मै रुद्रात्मने नमः ॥ योऽन्तरा सर्वभूतानां नियन्ता तिष्ठतीश्वरः ॥ ६७ ॥ यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ॥ कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥ ६८ ॥ तं सर्वसाक्षिणं देवं नमस्ये[6] विश्वतस्तनुम्[7] ॥ यं विनिद्रा जितश्वासाः सन्तुष्टाः समदर्शिनः[8] ॥ ६९ ॥

---

१ सोमात्मन इति पा० । २ चतुर्वक्त्राय ते नम इति पा० । ३ विश्वात्मने नम इति पा० । ४ परान्ते जगतां चरमे प्रलये इत्यर्थः । ५ देहैकसाक्षिक इति पा० । ६ नमस्ये नमः करोमि । आर्षमात्मनेपदम् । ७ विश्वतस्तनवो यस्य अष्टमूर्त्तिभित्यर्थः । ८ समवर्त्तिन इति पा० ।

ज्योतिः पश्यन्ति युञ्जाना[1]स्तस्मै योगात्मने नमः ॥ यया सन्तरते मायां योगी संक्षीणकल्मषः ॥ ७० ॥ अपार[2]तरपर्यन्तां तस्मै विद्यात्मने नमः ॥ यस्य भासा विभा[3]त्यर्को महो यत्तमसः परम् ॥ ७१ ॥ प्रपद्ये तत्परं तत्त्वं तद्रूपं पारमेश्वरम् ॥ नित्यानन्दं निराधारं निष्कलं परमं शिवम् ॥ ७२ ॥ प्रपद्ये परमात्मानं भवन्तं परमेश्वरम् ॥ एवं स्तुत्वा महादेवं ब्रह्मा तद्भावभावितः ॥७३॥ प्राञ्जलिः प्रणतस्तस्थौ गृणन् ब्रह्म सनातनम् ॥ ततस्तस्य महादेवो दिव्यं योगमनुत्तमम् ॥ ७४ ॥ ऐश्वरं ब्रह्मसद्भावं वैरा[4]ग्यं च ददौ हरः ॥ कराभ्यां कोमलाभ्यां च संस्पृश्य प्रणतार्त्तिहा ॥ ७५ ॥ व्याजहार स्म[5]यन्नेव सोऽनुगृह्य पितामहम् ॥ यत्त्वयाभ्यर्थितं ब्रह्मन् पुत्रत्वे भवता मम ॥ ७६ ॥ कृतं मया तत्सकलं सृजस्व विविधं जगत् ॥ त्रिधा भिन्नोऽस्म्यहं ब्रह्मन् ब्रह्मविष्णुहराख्यया ॥ ७७ ॥ सर्गरक्षालयगुणैर्निष्कलः परमेश्वरः ॥ स त्वं ममाग्रजः पुत्रः सृष्टिहेतोर्विनिर्मितः ॥ ७८ ॥ ममैव दक्षिणादंगाद्वामांगात्पुरुषोत्तमः ॥ तस्य देवाधिदेवस्य शम्भोर्हृदयदेशतः ॥ ७९ ॥ सम्बभूवाथ रुद्रो वा सोऽहं तस्य परा तनुः ॥ ब्रह्मविष्णुशिवा ब्रह्मन् सर्गस्थित्यन्तहेतवः[6]॥८०॥ विभज्यात्मानमेकोऽपि स्वेच्छया शंकरः स्थितः ॥ तथान्यानि च रूपाणि मम मायाकृतानि च ॥ ८१ ॥ अरूपः[7] केवलः स्वस्थो महादेवः स्वभावतः॥य एभ्यः[8] परतो देवस्त्रिमूर्त्तिः परमा[9] तनुः॥८२॥ माहेश्वरी त्रिनयना योगिनां शान्तिदा सदा॥तस्या एवं परां मूर्त्ति[10] मामवेहि पितामह॥८३॥शाश्वतैश्वर्यविज्ञानं तेजो[11]योगसमन्वितम् ॥ सोऽहं ग्रसामि सकलमधिष्ठाय तमोगुणम् ॥८४ ॥ कालो भूत्वा[12] न मनसा मामन्योऽभिभविष्यति॥यदा यदा हि मां नित्यं विचिन्तयसि पद्मज॥८५॥तदा तदा मे सान्निध्यं भविष्यति तवानघ॥एतावदुक्त्वा ब्रह्माणं सोऽभिवन्द्य गुरुं हरः ॥ ८६ ॥ सहैव मानसैः पुत्रैः[13] क्षणादन्तरधीयत ॥ सोऽपि योगं समास्थाय ससर्ज विविधं जगत् ॥ ८७ ॥

---

१ युञ्जाना योगं कुर्वाणा इत्यर्थः । २ अतिशयेन अपारः अपारतरः पर्यन्तः यस्यास्ताम् । ३ विभातीदमद्वयं तमसः परमिति पा० । ४ वैराग्यं प्रददौ इति पा० । ५ स्वयं देव इति पा० । ६ ह्येते इति, ब्रह्मविष्णुशिवास्तस्मिन् इति पा० । ७ नीरूप इति पा० । ८ एभ्यः परतरः इति पा० । ९ परमात्मनः इति पा० । १० एवापरा मूर्त्तिर्ममैव हि इति पा० । ११ तपोयोगेति पा० । १२ भूत्वा न तमसा सामान्योहि भविष्यतीति पा० । १३ रुद्रैरिति पा० ।

नारायणाख्यो भगवान्यथापूर्वं प्रजापतिः ॥ मरीचिभृग्वङ्गिरसः पुलस्त्यं पुलहं क्रतुम् ॥ ८८ ॥ दक्षमत्रिं वसिष्ठञ्च सोऽसृजद्योगविद्यया[1] ॥ नव ब्रह्माण इत्येते पुराणे निश्चयो[2] मतः ॥ सर्वे ते ब्रह्मणा तुल्याः साधका ब्रह्मवादिनः ॥ ८९ ॥ सङ्कल्पश्चैव धर्मश्च युगधर्मांश्च शाश्वतान् ॥ स्थानाभिमानिनः सर्वान्यथा ते कथितं पुरा ॥ ९० ॥ इति श्रीकूर्मपुराणे रुद्रसृष्टिर्नाम दशमोऽध्यायः ॥ १० ॥ अथ देव्यवतारः ॥ कूर्म उवाच ॥ एवं सृष्ट्वा मरीच्यादीन्देवदेवः पितामहः ॥ सहैव मानसैः पुत्रैस्तताप परमं तपः ॥ १ ॥ तस्यैव तपतो वक्त्राद्रुद्रः कालाग्निसम्भवः[3] ॥ त्रिशूलपाणिरीशानः प्रादुरासीत्त्रिलोचनः ॥२॥ अर्द्धनारीनरवपुः[4] दुष्प्रेक्ष्योऽतिभयंकरः ॥ विभजात्मानमित्युक्त्वा ब्रह्मा चान्तर्दधे भयात् ॥ ३ ॥ तथोक्तोऽसौ द्विधा स्त्रीत्वं पुरुषत्वं तथाकरोत् ॥ बिभेद पुरुषत्वञ्च दशधा चैकधा पुनः ॥ ४ ॥ एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ॥ कपालीशादयो[5] विप्रा देवकार्ये नियोजिताः ॥ ५ ॥ सौम्यासौम्यैस्तथा शान्ताशान्तैः स्त्रीत्वञ्च स प्रभुः ॥ बिभेद बहुधा देवः स्वरूपैरसितैः सितैः ॥ ६ ॥ तां[6] वै विभूतयो विप्रा विश्रुताः शक्तयो भुवि ॥ लक्ष्म्यादयो यद्वपुंषा[7] विश्वं व्याप्नोति शांकरी ॥ ७ ॥ विभज्य पुनरीशानी स्वात्मांशमकरोद्द्विजाः[8] ॥ महादेवनियोगेन पितामहमुपस्थिता ॥ ८ ॥ तामाह भगवान् ब्रह्मा दक्षस्य दुहिता भव ॥ सापि तस्य नियोगेन प्रादुरासीत्प्रजापतेः[9] ॥ ९ ॥ नियोगाद्ब्रह्मणो देवीं ददौ रुद्राय तां सतीम् ॥ दाक्षीं रुद्रोऽपि जग्राह स्वकीयामेव शूलभृत् ॥ १० ॥ प्रजापतिविनिर्देशात्कालेन[10] परमेश्वरी ॥ विभज्य पुनरीशानी आत्मानं शंकराद्विभोः ॥ ११ ॥ मेनायामभवत्पुत्री तदा हिमवतः सती ॥ स चापि पर्वतवरो ददौ रुद्राय[11] पार्वतीम् ॥ १२ ॥ हिताय सर्वदेवानां[12] त्रैलोक्यस्यात्मनो[13] द्विजाः ॥ सैषा माहेश्वरी देवी शंकरार्द्धशरीरिणी ॥ १३ ॥ शिवा सती हैमवती सुरासुरनमस्कृता ॥ तस्याः प्रभाव

१ मायया इति पा० । २ निश्चयज्ञताः इति पा० । ३ फालाग्निसन्निभ इति पा० । ४ अर्द्धनारीश्वरवपुरिति पा० । ५ कापालिकादय इति पा० । ६ ते वै चिन्तयतः इति पा० । ७ याभिरीशा इति पा० । ८ आत्मानं शङ्कराद्विभोः इति, स्वात्मांशमकरोद्विभोः इति पा० । ९ दक्षात् इति पा० । १० कोपेन इति पा० । ११ शर्वाय इति पा० । १२ सर्वलोकानामिति पा० । १३ त्रैलोक्यस्यात्मनोऽपि च इति पा० ।

मतुलं सर्वे देवाः सवासवाः ॥ १४ ॥ वेदन्ति[1] मुनयो वेत्ति शंकरो वा स्वयं हरिः[2] ॥ एतद्वः कथितं विप्राः पुत्रत्वं परमेष्ठिनः ॥ १५ ॥ ब्रह्मणः पद्मयोनित्वं शङ्करस्यामितौजसः ॥ १६ ॥ इति श्रीकूर्मपुराणे देव्यवतारे एकादशोऽध्यायः ॥ ११ ॥ अथ देवीमाहात्म्यम् ॥ सूत उवाच ॥ इत्याकर्ण्याथ मुनयः कूर्मरूपेण भाषितम् ॥ विष्णुना पुनरेवेमं[3] पप्रच्छुः प्रणता हरिम् ॥ १ ॥ ऋषय ऊचुः ॥ कैषा भगवती देवी शङ्करार्द्धशरीरिणी ॥ शिवा सती हैमवती यथावद्ब्रूहि पृच्छताम् ॥ २ ॥ तेषां तद्वचनं श्रुत्वा मुनीनां पुरुषोत्तमः ॥ प्रत्युवाच महायोगी ध्यात्वा[4] स्वं परमं पदम्[5] ॥ ३ ॥ कूर्म उवाच ॥ पुरा पितामहेनोक्तं मेरुपृष्ठे सुशोभने ॥ रहस्यमेतद्विज्ञानं गोपनीयं विशेषतः ॥ ४ ॥ साङ्ख्यानां परमं साङ्ख्यं ब्रह्मविज्ञानमुत्तमम् ॥ संसारार्णवमग्नानां जन्तूनामेकमोचनम् ॥ ५ ॥ या सा माहेश्वरी शक्तिर्ज्ञानरूपातिलालसा ॥ व्योमसंज्ञा[6] परा काष्ठा सेयं हैमवती मता ॥ ६ ॥ शिवा सर्वगतानन्ता गुणातीतातिनिष्कला[7] ॥ एकानेकविभागस्था[8] ज्ञानरूपातिलालसा ॥ ७ ॥ अनन्या निष्कले तत्त्वे संस्थिता तस्य तेजसा ॥ स्वाभाविकी च तन्मूला प्रभा भानोरिवामला ॥ ८ ॥ एका माहेश्वरी शक्तिरनेकोपाधियोगतः ॥ परावरेण[9] रूपेण क्रीडते तस्य सन्निधौ ॥ ९ ॥ सेयं करोति सकलं[10] तस्याः कार्यमिदं जगत् ॥ न कार्यं नापि करणमीश्वरस्येति सूरयः ॥ १० ॥ चतस्रः शक्तयो देव्याः स्वरूपत्वेन संस्थिताः ॥ अधिष्ठानवशात्तस्याः शृणुध्वं मुनिपुङ्गवाः ॥ ११ ॥ शान्तिर्विद्या प्रतिष्ठा च निर्वृत्तिश्चेति[11] ताः स्मृताः ॥ चतुर्व्यूहस्ततो[12] देवः प्रोच्यते परमेश्वरः ॥ १२ ॥ अनया परया देवः स्वात्मानन्दं समश्नुते ॥ चतुर्ष्वपि च वेदेषु[13] चतुर्मूर्तिर्महेश्वरः ॥ १३ ॥ अस्यास्त्वनादिसंसिद्धमैश्वर्यमतुलं[14] महत् ॥ तत्सम्बन्धादनन्तैषा[15] रुद्रेण परमात्मना ॥ १४ ॥ सैषा सर्वेश्वरी देवी सर्वभूतप्रवर्तिका ॥ प्रोच्यते भगवान् कालो हरिः[16] प्राणो महे

१ सुदन्ति मुनयोवेतीति, विन्दन्ति मुनयोवेतीति पा० । २ हरिः स्वयमिति पा० । ३ पुनरेवैनं इति, पुनरेवेत्थमिति पा० । ४ ध्यात्वेदमिति पा० । ५ स परमास्पदमिति पा० । ६ व्योमरूपा इति पा० । ७ गुणातीता तु निष्कला इति पा० । ८ एवं नानाविभागस्था इति पा० । ९ परापरेण इति पा० । १० सङ्कल्पं इति पा० । ११ निवृत्तिरितीति पा० । १२ चतुर्व्यूहः शुभो देवः इति पा० । १३ देवेषु इति, भेदेषु इति पा० । १४ ममलमिति पा० । १५ तत्सम्बन्धादनन्ता या इति पा० । १६ हरः इति पा० ।

श्वरः ॥ १५ ॥ तत्र सर्वमिदं प्रोतमोतञ्चैवाखिलं जगत् ॥ स कालाग्निर्हरो देवो गीयते वेदवादिभिः ॥ १६ ॥ कालः सृजति भूतानि कालः संहरति प्रजाः ॥ सर्वे कालस्य वशगा न कालः कस्यचिद्वशः ॥ १७ ॥ प्रधानं पुरुषस्तत्त्वं महानात्मा त्वहंकृतिः ॥ कालेनान्यानि तत्त्वानि समाविष्टानि योगिना ॥ १८ ॥ तस्य सर्वजगन्मूर्त्तिः शक्तिर्मायेति विश्रुता ॥ तदेयं भ्रामयेदीशो मायावी पुरुषोत्तमः ॥ १९ ॥ सैषा मायात्मिका शक्तिः सर्वाकारा सनातनी ॥ विश्वरूपं महेशस्य सर्वदा सम्प्रकाशयेत् ॥ २० ॥ अन्याश्च शक्तयो मुख्यास्तस्य देवस्य निर्मिताः ॥ ज्ञानशक्तिः क्रियाशक्तिः प्राणशक्तिरिति त्रयम् ॥ २१ ॥ सर्वासामेव शक्तीनां शक्तिमन्तो विनिर्मिताः ॥ माययैवाथ विप्रेन्द्राः सा चानादिरनश्वराः ॥ २२ ॥ सर्वशक्त्यात्मिका माया दुर्निवारा दुरत्यया ॥ मायावी सर्वशक्तीशः कालः कालकरः प्रभुः ॥ २३ ॥ करोति कालः सकलं संहरेत्काल एव हि ॥ कालः स्थापयते विश्वं कालाधीनमिदं जगत् ॥ २४ ॥ लब्ध्वा देवाधिदेवस्य सान्निधिं परमेष्ठिनः ॥ अनन्तस्याखिलेशस्य शम्भोः कालात्मनः प्रभोः ॥ २५ ॥ प्रधानं पुरुषो माया मांया सैव प्रपद्यते ॥ एका सर्वगतानन्ता केवला निष्कला शिवा ॥ २६ ॥ एका शक्तिः शिवैकोऽपि शक्तिमानुच्यते शिवः ॥ शक्तयः शक्तिमन्तोऽन्ये सर्वशक्तिसमुद्भवाः ॥ २७ ॥ शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः ॥ अभेदञ्चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥ २८ ॥ शक्तयो गिरिजा देवी शक्तिमानथ शङ्करः ॥ विशेषः कथ्यते चायं पुराणे ब्रह्मवादिभिः ॥ २९ ॥ भोग्या विश्वेश्वरी देवी महेश्वरपतिव्रता ॥ प्रोच्यते भगवान्भोक्ता कपर्दी नीललोहितः ॥ ३० ॥ मन्ता विश्वेश्वरो देवः शङ्करो मन्मथान्तकः ॥ प्रोच्यते मतिरीशानी मन्तव्या च विचारतः ॥ ३१ ॥ इत्येतदाखिलं विप्राः शक्तिशक्तिमदुद्भवम् ॥ प्रोच्यते सर्ववेदेषु मुनिभिस्तत्त्व

---

१ रुद्रो इति पा० । २ संहरते इति पा० । ३ वशे इति पा० । ४ प्रधानपुरुषत्वञ्च इति पा० । ५ भूतानि इति पा० । ६ समाधिस्थानि इति, समावेश्यानि इति पा० । ७ जगत्सक्तिरिति पा० । ८ शक्तीनामीश्वरो मत इति पा० । ९ माययैवात्र विप्रेन्द्राः स्थानादिकमनन्तया इति पा० । १० माययैवं प्रभिद्यते इति, माया चैवं इति पा० । ११ सर्वे इति पा० । १२ शक्तिसमुद्भवमिति पा० ।

दर्शिभिः ॥ ३२ ॥ एतत्प्रदर्शितं दिव्यं देव्या माहात्म्यमुत्तमम् ॥ सर्ववेदान्तवादेषु निश्चितं ब्रह्मवादिभिः ॥ ३३ ॥ एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् ॥ योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ॥ ३४ ॥ आनन्दमक्षरं ब्रह्म केवलं निष्कलं परम् ॥ योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ॥ ३५ ॥ परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम् ॥ अनन्तप्रकृतौ लीनं देव्यास्तत्परमं पदम् ॥३६ ॥ शुभं निरञ्जनं शुद्धं निर्गुणं द्वैतवर्जितम् ॥ आत्मोपलब्धिविषयं देव्यास्तत्परमं पदम् ॥ ३७ ॥ सैषा धात्री विधात्री च परमानन्दमिच्छताम् ॥ संसारतापानखिलान्निहन्तीश्वरसंश्रयात् ॥ ३८ ॥ तस्माद्विमुक्तिमन्विच्छन् पार्वतीं परमेश्वरीम् ॥ आश्रयेत्सर्वभूतानामात्मभूतां शिवात्मिकाम्॥३९॥लब्ध्वा च पुत्रीं शर्वाणीं तपस्तप्त्वा सुदुश्चरम् ॥ सभार्यः शरणं यातः पार्वतीं परमेश्वरीम्॥४० ॥ तां दृष्ट्वा जायमानाञ्च स्वेच्छयैव वराननाम् ॥ मेना हिमवतः पत्नी प्राहेदं पर्वतेश्वरम् ॥ ४१ ॥ मेनोवाच ॥ पश्य बालामिमां राजन्राजीवसदृशाननाम् ॥ हिताय सर्वभूतानां जाता च तपसावयोः ॥ ४२ ॥ सोऽपि दृष्ट्वा ततो देवीं तरुणादित्यसन्निभाम् ॥ कपर्दिनीं चतुर्वक्त्रां त्रिनेत्रामतिलालसाम् ॥ ४३ ॥ अष्टहस्तां विशालाक्षीं चन्द्रावयवभूषणाम् ॥निर्गुणां सगुणां साक्षात्सदसद्व्यक्तिवर्जिताम् ॥४४ ॥ प्रणम्य शिरसा भूमौ तेजसा चातिविह्वलः ॥ भीतः कृताञ्जलिस्तस्याः प्रोवाच परमेश्वरीम् ॥ ४५ ॥ हिमवानुवाच ॥ का त्वं देवि विशालाक्षि शशाङ्कावयवाङ्किते ॥ न जाने त्वामहं वत्से यथावद्ब्रूहि पृच्छते ॥ ४६॥ गिरीन्द्रवचनं श्रुत्वा ततः सा परमेश्वरी ॥ व्याजहार महाशैलं योगिनामभयप्रदा ॥ ४७ ॥ श्रीदेव्युवाच ॥ मां विद्धि परमां शक्तिं महेश्वरसमाश्रयाम् ॥ ४८ ॥ अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ॥ अहं हि सर्वभावानामात्मा सर्वान्तरा शिवा ॥ ४९ ॥ शाश्वतैश्वर्यविज्ञानमूर्त्तिः सर्वप्रवर्त्तिका ॥ अनन्तानन्तमहिमा संसारार्णवतारिणी ॥ ५० ॥ दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ॥ एतावदुक्त्वा विज्ञानं दत्त्वा हिमवते स्वयम् ॥ ५१ ॥ स्वं रूपं दर्शयामास दिव्यं तत्परमेश्वरम् ॥ कोटिसूर्यप्रतीकाशं तेजोबिम्बं निराकुलम् ॥५२॥ ज्वालामालासहस्राढ्यं कालानलशतोपमम् ॥ दंष्ट्राकरालं दुर्द्धर्षं जटामण्डलमण्डितम् ॥ ५३॥ किरीटिनं गदाहस्तं शङ्खचक्रधरं तथा ॥त्रिशूलवरहस्तञ्च घोर

१ अनन्तं प्रकृतौ इति पा० । २ परमेश्वरमिति पा० परमेश्वरं पतिमित्यर्थः । ३ शशाङ्कावयवान्विता इति पा० । ४ सर्वान्तरा इति पा० । ५ शाश्वती सर्वविज्ञानमूर्त्तिरिति पा० ।

रूपं भयानकम् ॥ ५४ ॥ प्रशान्तं सौम्यवदनमनन्ताश्चर्यसंयुतम् ॥ चन्द्रावयवलक्ष्माणं चन्द्रकोटिसमप्रभम् ॥ ५५ ॥ किरीटिनं गदाहस्तं नूपुरैरुपशोभितम् ॥ दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥ ५६ ॥ शङ्खचक्रधरं काम्यं त्रिनेत्रं कृत्तिवाससम् ॥ अण्डस्थं चाण्डबाह्यस्थं बाह्यमाभ्यन्तरं परम्[3] ॥ ५७ ॥ सर्वशक्तिमयं शुभ्रं सर्वाकारं सनातनम् ॥ ब्रह्मेन्द्रोपेन्द्रयोगीन्द्रैर्वन्द्यमानपदाम्बुजम् ॥ ५८ ॥ सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ॥ सर्वमावृत्य तिष्ठन्तीं ददर्श परमेश्वरीम् ॥ ५९ ॥ दृष्ट्वा तदीदृशं रूपं देव्या माहेश्वरं परम् ॥ भयेन च समाविष्टः स राजा हृष्टमानसः ॥ ६० ॥ आत्मन्याधाय चात्मानमोङ्कारं समनुस्मरन् ॥ नाम्नामष्टसहस्रेण तुष्टाव परमेश्वरीम् ॥ ६१ ॥ हिमवानुवाच ॥ शिवोमा परमा शक्तिरनन्ता निष्कलामला ॥ शान्ता माहेश्वरी नित्या शाश्वती परमाक्षरा ॥ ६२ ॥ अचिन्त्या केवलानन्त्या शिवात्मा परमात्मिका ॥ अनादिरव्यया शुद्धा देवात्मा सर्वगाचला ॥ ६३ ॥ एकानेकविभागस्था मायातीता सुनिर्मला ॥ महामाहेश्वरी सत्या महादेवी निरञ्जना ॥ ६४ ॥ काष्ठा सर्वान्तरस्था च चिच्छक्तिरतिलालसा ॥ नन्दा सर्वात्मिका विद्या ज्योतीरूपामृताक्षरा ॥ ६५ ॥ शान्तिः प्रतिष्ठा सर्वेषां निवृत्तिरमृतप्रदा ॥ व्योममूर्त्तिर्व्योमलया व्योमाधाराच्युतामरा ॥ ६६ ॥ अनादिनिधनामोघा कारणात्माकुलाकुला ॥ स्वतः प्रथमजा नाभिरमृतस्यात्मसंश्रया ॥ ६७ ॥ प्राणेश्वरप्रिया माता महामहिषवासिनी ॥ प्राणेश्वरी प्राणरूपा प्रधानपुरुषेश्वरी ॥ ६८ ॥ महामाया सुदुष्पूरा मूलप्रकृतिरीश्वरी ॥ सर्वशक्तिकलाकारा ज्योत्स्ना द्यौर्महिमास्पदा ॥ ६९ ॥ सर्वकायनियन्त्री च सर्वभूतेश्वरेश्वरी ॥ संसारयोनिः सकला सर्वशक्तिसमुद्भवा ॥ ७० ॥ संसारपोता दुर्वारा दुर्निरीक्ष्या दुरासदा ॥ प्राणशक्तिः प्राणविद्या योगिनी परमा कला ॥ ७१ ॥ महाविभूतिर्दुर्द्धर्षा मूलप्रकृतिसम्भवा ॥ अनाद्यनन्तविभवा परमाद्यापकर्षिणी ॥ ७२ ॥ सर्गस्थित्यन्तकरणी

१ अनन्तैश्वर्यसंयुतम् इति पा० । २ सौम्याभीति पा० । ३ पुरमिति, पुरं शरीरमित्यर्थः । ४ सर्वाधारमनामयमिति पा० । ५ तिष्ठन्तं सर्वतः श्रुतिमत्परमिति पा० । ६ तारा इति पा० । ७ ऋतुरिति पा० । ८ महामहिषघातिनी इति, वाहिनीति पा० । ९ संसारपारा इति पा० ।

सुदुर्वाच्यादुरत्यया ॥ शब्दयोनिः शब्दमयी नादाख्या नादविग्रहा ॥ ७३ ॥ अनादिरव्यक्तगुणा महानन्दा सनातनी ॥ आकाश योनिर्योगस्था महायोगेश्वरेश्वरी ॥ ७४ ॥ महामाया सुदुष्पारा मूलप्रकृतिरीश्वरी ॥ प्रधानपुरुषातीता प्रधानपुरुषात्मिका ॥ ७५ ॥ पुराणा चिन्मयी पुंसामादिपूरुषरूपिणी ॥ भूतान्तरस्था कूटस्था महापुरुषसंज्ञिता ॥ ७६ ॥ जन्ममृत्युजरातीता सर्वशक्तिसमन्विता ॥ व्यापिनी चानवच्छिन्ना प्रधानानुप्रवेशिनी ॥ ७७ ॥ क्षेत्रज्ञशक्तिरव्यक्तलक्षणा मलवर्जिता ॥ अनादिमायासम्भिन्ना त्रितत्त्वा प्रकृति ग्रहा ॥ ७८ ॥ महामायासमुत्पन्ना तामसी पौरुषी ध्रुवा ॥ व्यक्ताव्यक्तात्मिका कृष्णा रक्ता शुक्ला प्रसूतिका ॥ ७९ ॥ अकार्या कार्य जननी नित्यं प्रसवधर्मिणी ॥ सर्गप्रलयनिर्मुक्ता सृष्टिस्थित्यन्तधर्मिणी ॥ ८० ॥ ब्रह्मगर्भा चतुर्विंशा पद्मनाभाच्युतात्मिका ॥ वैद्युती शाश्वती योनिर्जगन्मातेश्वरप्रिया ॥ ८१ ॥ सर्वाधारा महारूपा सर्वैश्वर्यसमन्विता ॥ विश्वरूपा महागर्भा विश्वेशेच्छानुवर्तिनी ॥ ८२ ॥ महीयसी ब्रह्मयोनिः महालक्ष्मीसमुद्भवा ॥ महाविमानमध्यस्था महानिद्रात्महेतुका ॥ ८३ ॥ सर्वसाधारणी सूक्ष्मा ह्यविद्या पारमा र्थिका ॥ अनन्तरूपानन्तस्था देवी पुरुषमोहिनी ॥ ८४ ॥ अनेकाकारसंस्थाना कालत्रयविवर्जिता ॥ ब्रह्मजन्मा हरेर्मूर्त्तिर्ब्रह्माविष्णुशिवा त्मिका ॥ ८५ ॥ ब्रह्मेशविष्णुजननी ब्रह्माख्या ब्रह्मसंश्रया ॥ व्यक्ता प्रथमजा ब्राह्मी महती ब्रह्मरूपिणी ॥ ८६ ॥ वैराग्यैश्वर्यधर्मात्मा ब्रह्ममूर्तिर्हृदि स्थिता ॥ अपां योनिः स्वयम्भूतिर्मानसी तत्त्वसम्भवा ॥ ८७ ॥ ईश्वराणी च शर्वाणी शंकरार्द्धशरीरिणी ॥ भवानी चैव रुद्राणी महालक्ष्मीरथाम्बिका ॥ ८८ ॥ महेश्वरसमुत्पन्ना भुक्तिमुक्तिफलप्रदा ॥ सर्वेश्वरी सर्ववन्द्या नित्यं मुदितमानसा ॥ ८९ ॥ ब्रह्मेन्द्रोपेन्द्रनमिता शंकरेच्छानुवर्तिनी ॥ ईश्वरार्द्धासनगता महेश्वरपतिव्रता ॥ ९० ॥ सकृद्विभाता सर्वार्त्तिसमुद्रपरिशोषिणी ॥

---

१ दुराराध्या इति पा० । २ पुराणी इति पा० । ३ भूतान्तरात्मा इति पा० । ४ समुद्भवा इति पा० । ५ सत्त्ववर्जिता इति पा० । ६ चतुर्विंशा चतुर्विंशतितत्त्वरूपा इति भावः । चतुर्भेदा इति, चतुर्वेदा इति पा० । ७ भास्वती इति पा० । ८ महामाया महायोनिः इति पा० ९ महानिद्रार्थहेतुका इति पा० । १० ज्ञानरूपिणीति पा० । ११ तत्त्वसंश्रया इति पा० । १२ अजा दुस्तरसंसारसमुद्रपरिशोषिणी इति पा० ।

पार्वती हिमवत्पुत्री परमानन्ददायिनी ॥९१ ॥ गुणाढ्या योगजा[1] योग्या ज्ञानमूर्तिर्विकासिनी ॥ सावित्री कमला लक्ष्मीः श्रीरनन्तोरसि स्थिता॥९२॥सरोजनिलया गंगा[2] योगनिद्रा सुरार्दिनी[3]॥सरस्वती सर्वविद्या जगज्ज्येष्ठा सुमंगला ॥ ९३ ॥ वाग्देवी वरदा[4] वाच्या कीर्त्तिः सर्वार्थसाधिका[5]॥योगीश्वरी[6] ब्रह्मविद्या महाविद्या सुशोभना ॥९४॥ गुह्यविद्यात्मविद्या च धर्मविद्या त्मभाविता॥स्वाहा विश्वम्भरा सिद्धिःस्वधा मेधा धृतिःश्रुतिः॥९५॥नीतिः सुनीतिः सुकृतिर्माधवी नरवाहिनी॥पूज्या विभावती[7] सौम्या भोगिनी भोगशायिनी।९६।शोभा च शंकरी[8] लोला मालिनी परमेष्ठिनी॥त्रैलोक्यसुन्दरी नम्या[9] सुन्दरी कामचारिणी ॥९७॥ महानुभावा सत्त्वस्था[10] महामहिषमर्दिनी॥ पद्म नाभा[11] पापहरा विचित्रमुकुटांगदा[12] ॥९८॥ कान्ता चित्राम्बरधरा दिव्याभरणभूषिता॥हंसाख्या व्योमनिलया जगत्सृष्टिविवर्द्धिनी ॥९९॥ नियन्त्री यन्त्रमध्यस्था[13] नंदिनी भद्रकालिका ॥ आदित्यवर्णा कौबेरी[14] मयूरवरवाहना ॥ १०० ॥ वृषासनगता गौरी महाकाली सुरा[15] र्चिता ॥ अदितिर्नियता रौद्रा पद्मगर्भा विवाहना ॥ १०१ ॥ विरूपाक्षी लेलिहाना महासुर[16]विनाशिनी ॥ महाफलानवद्यांगी काम रूपा विभावरी ॥ १०२ ॥ विचित्ररत्नमुकुटा प्रणतार्त्तिप्रभञ्जनी ॥ कौशिकी कर्षणी रात्रिस्त्रिदशार्त्तिविनाशिनी ॥ १०३॥ बहुरूपा[17] स्वरूपा च विरूपा रूपवर्जिता ॥ भक्तार्त्तिशमनी भव्या भवतापविनाशिनी[18] ॥ १०४ ॥ निर्गुणा नित्यविभवा निःसारा निरप त्रपा ॥ तपस्विनी[19] सामगीतिर्भवांकानिलयालया ॥ १०५ ॥ दीक्षा विद्याधरी दीप्ता महेन्द्रविनिपातिनी ॥ सर्वातिशायिनी[20] विश्वा सर्व सिद्धिप्रदायिनी ॥ १०६ ॥ सर्वेश्वरप्रियाभार्या समुद्रान्तरवासिनी ॥ अकलंका निराधारा नित्यसिद्धा निरामया ॥ १०७ ॥

---

१ योगदा इति पा० । २ मुद्रा इति पा० । ३ सुगन्धिनी इति, शुचिव्रता इति पा० । ४ वरदा अवाच्या अनवद्या इत्यर्थः । वरदा वाणी इति पा० । ५ सर्वातिशायिका इति पा० । ६ वागीश्वरीति पा० । ७ विभावरीति, विभाविनीति पा०। ८ वंशकरीति पा० । ९ रम्या इति पा०। १० मध्यस्था इति पा०। ११ पद्ममाला इति पा० । १२ विचित्रमुकुटानना इति पा० । १३ यन्त्रबाह्यस्था इति पा० । १४ कौमारीति पा० । १५ सुगर्विता इति पा० । १६ महापुरनिवासिनीति पा० । १७ ब्रह्मरूपा सुरूपा चेति, बहुरूपा सुरूपा च इति पा० । १८ भवभारविनाशिनीति, भवभावविनाशिनीति पा० । १९ यशस्विनी सामगीतिर्भवाङ्कनिलयालया इति पा० । २० तरङ्गिणी समाधिस्था इति पा० ।

कामधेनुर्बृहद्गर्भा धीमती मोहनाशिनी ॥ निःसंकल्पा निरातङ्का विनया विनयप्रिया ॥ १०८ ॥ ज्वालामालासहस्राढ्या देवदेवी मनोमयी[1] ॥ महाभगवती भर्गा वासुदेवसमुद्भवा ॥ १०९ ॥ महेन्द्रोपेन्द्रभगिनी[2] भक्तिगम्या परावरा[3] ॥ ज्ञानज्ञेया जरातीता[4] वेदान्तविषया गतिः ॥ ११० ॥ दक्षिणा दहती[5] दीर्घा सर्वभूतनमस्कृता ॥ योगमाया विभागज्ञा महामोहा गरीयसी[6] ॥ १११ ॥ सन्ध्या सर्वसमुद्भूतिर्ब्रह्मविद्याश्रयादिभिः[7] ॥ बीजाङ्कुरसमुद्भूतिर्महाशक्तिर्महामतिः ॥ ११२ ॥ क्षान्तिः[8] प्रज्ञा चितिः सचिन्महाभोगीन्द्रशायिनी ॥ विकृतिः शाङ्करी शास्तिर्गणगन्धर्वसेविता[9] ॥ ११३॥ वैश्वानरी महाशाला महासेना[10] गुहप्रिया ॥ महारात्रिः शिवनान्दा[11] शची दुःस्वप्नाशिनी ॥ ११४ ॥ इज्या पूज्या जगद्धात्री दुर्विनेया[12] सुरूपिणी ॥ तपस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ॥ ११५ ॥ गुहाम्बिका[13] गुणोत्पत्तिर्महापीठा[14] मरुत्सुता ॥ हव्यवाहान्तरागादिः[15] हव्यवाहसमुद्भवा ॥ ११६ ॥ जगद्योनि जगन्माता जन्ममृत्युजरातिगा ॥ बुद्धिर्महाबुद्धिमती[16] पुरुषान्तरवासिनी ॥ ११७ ॥ तरस्विनी समाधिस्था त्रिनेत्रा दिवि संस्थिता ॥ सर्वेन्द्रियमनोमाता[17] सर्वभूतहृदि स्थिता ॥ ११८ ॥ संसारतारिणी विद्या[18] ब्रह्मवादिमनोलया ॥ ब्रह्माणी बृहती ब्राह्मी ब्रह्मभूता भवारणी ॥ ११९ ॥ हिरण्मयी महारात्रिः संसारपरिवर्त्तिका ॥ सुमालिनी सुरूपा च भाविनी हारिणी[19] प्रभा ॥ १२० ॥ उन्मीलनी सर्वसहा सर्वप्रत्ययसाक्षिणी ॥ सुसौम्या चन्द्रवदना ताण्डवासक्तमानसा ॥ १२१ ॥ सत्त्वशुद्धिकरी[20] शुद्धिर्मलत्रयविनाशिनी ॥ जगत्प्रिया जगन्मूर्त्तिस्त्रिमूर्तिरमृताश्रया ॥ १२२ ॥ निराश्रया निराहारा निरंकुशपदोद्भवा[21] ॥ चन्द्रहस्ता[22] विचित्राङ्गी स्रग्विणी पद्मधारिणी ॥ १२३ ॥

---

१ मनोन्मनी इति, मनसामुन्मादनीत्यर्थः । प्रयोगोऽयमार्षः । २ महेन्द्रभगिनी भव्या इति पा० । ३ परायणा इति पा० । ४ जनातीता इति पा० । ५ दहना दक्षा इति, दहना दार्ढ्या इति. दहना माया इति, दहनारूढा इति पा० । ६ महीयसी इति, पा० । ७ ब्रह्मवृक्षाश्रया नतिरिति, ब्रह्मवृक्षाश्रयादितिरिति पा० । ८ ख्यातिरिति, ज्योतिः प्रज्ञा धृतिः सर्पी इति पा० । ९ शान्तिर्गन्धर्वगणसेविता इति पा० । १० देवसेना इति पा० । ११ शिवामन्दा इति पा० । १२ दुर्विज्ञेया इति, दुर्विज्ञेयस्वरूपिणी इति पा० । १३ गुणात्मिका इति पा० । १४ महाप्रौढा निरुत्सुका इति पा० । १५ हव्यवाहातुरा गाङ्गीति पा० । १६ बुद्धिमतो बुद्धिमतीति, बुद्धिमाता बुद्धिमतीति पा० । १७ भावा इति पा० । १८ नित्या इति पा० । १९ तारिणीति पा० । २० तत्त्वशुद्धिकरीति पा० । २१ निरंकुशवनोद्भवा इति, निःशङ्का पद्मजोद्भवा इति पा० । २२ चक्रहस्ता इति पा० ।

परावरविधानज्ञा महापुरुषपूर्वजा ॥ विश्वेश्वरप्रिया विद्युद्दिद्युज्जिह्वा[1] जितश्रमा ॥ १२४ ॥ विद्यामयी सहस्राक्षी सहस्रवदनात्मजा ॥ सहस्ररश्मिः सत्त्वस्था[2] महेश्वरपदाश्रया ॥ १२५ ॥ क्षालिनी[3] मृण्मयी व्याप्ता तैजसी पद्मबोधिका ॥ महामायाश्रया मान्या महादेवमनोरमा ॥ १२६ ॥ व्योमलक्ष्मीः सिंहरथा[4] चेकितानामितप्रभा ॥ वीरेश्वरी[5] विमानस्था विशोका शोकनाशिनी ॥ १२७ ॥ अनाहता कुण्डलिनी नलिनी पद्मभासिनी[6] ॥ सदानन्दा सदाकीर्तिः सर्वभूताश्रयस्थिता[7] ॥ १२८ ॥ वाग्देवता ब्रह्मकला कलातीता कलारणी ॥ ब्रह्मश्रीर्ब्रह्महृदया ब्रह्मविष्णुशिवप्रिया ॥ १२९ ॥ व्योमशक्तिः[8] क्रियाशक्तिर्ज्ञानशक्तिः परा गतिः ॥ क्षोभिका बन्धिका भेद्या भेदाभेदविवर्जिता ॥ १३० ॥ अभिन्ना भिन्नसंस्थाना वशिनी[9] वंशहारिणी ॥ गुह्यशक्तिर्गुणातीता सर्वदा सर्वतोमुखी ॥ १३१ ॥ भगिनी भगवत्पत्नी सकला कालहारिणी[10] ॥ सर्ववित् सर्वतोभद्रा गुह्यातीता गुहावलिः ॥ १३२ ॥ प्रक्रिया योगमाता च गङ्गा विश्वेश्वरेश्वरी ॥ कलिला[11] कपिला कान्ता कमलाभा[12] कलान्तरा ॥ १३३ ॥ पुण्या पुष्करिणी भोक्री पुरन्दरपुरस्सरा ॥ पोषिणी परमैश्वर्यभूतिदा भूतिभूषणा ॥ १३४ ॥ पञ्चब्रह्मसमुत्पत्तिः[13] परमार्थार्थविग्रहा[14] ॥ धर्मोदया[15] भानुमती योगिज्ञेया मनोजवा ॥ १३५ ॥ मनोरमा[16] मनोरस्का[17] तापसी वेदरूपिणी ॥ वेदशक्तिर्वेदमाता वेदविद्याप्रकाशिनी ॥ १३६ ॥ योगेश्वरेश्वरी[18] माता महाशक्तिर्मनोमयी ॥ विश्वावस्था वियन्मूर्त्तिर्विद्युन्माला विहायसी ॥ १३७ ॥ किन्नरी सुरभी[19] विद्या नन्दिनी नन्दिवल्लभा[20] ॥ भारती परमानन्दा परापरविभेदिका ॥ १३८ ॥ सर्वप्रहरणोपेता काम्या[21] कामेश्वरेश्वरी ॥ अचिन्त्यानन्तविभवा[22] भूलेखा कनकप्रभा ॥ १३९ ॥ कूष्माण्डी धनरत्नाढ्या सुगन्धा

---

१ विद्या विद्युज्जिह्वा इति पा० । २ तत्त्वस्था इति पा० । ३ ज्वालिनी सन्मना इति, सन्मयी इति पा० । ४ सिंहवाहा इति पा० । ५ विश्वेश्वरीति पा० । ६ पद्मजा पद्मवासिनी इति पा० । ७ शतानन्दा सतां कीर्तिः सर्वभूताशयस्थिता इति पा० । ८ कामशक्तिरिति पा० । ९ वंशिनीति पा० । १० कालवारिणीति पा० । ११ कपिला कापिला इति पा० । १२ कनकाभा इति पा० । १३ गणेशभास्करशिवविष्णुशक्तय इति पञ्चविधं ब्रह्म । १४ परमात्मार्थविग्रहा इति पा० । १५ धर्ममुखी इति पा० । १६ मनोहरीति पा० । १७ महोरःस्था इति पा० । १८ वागीश्वरेश्वरीति पा० । १९ सुरभिर्वन्द्या इति पा० । २० नन्दवल्लभा इति पा० । २१ कामा कामेश्वरेश्वरी इति पा० । २२ अचिन्त्याचिन्त्यविभवा इति, अचिन्त्यानन्दविभवा हल्लेखा इति पा० ।

गन्धदा[1]यिनी ॥ त्रिविक्रमपदोद्भूता धनुष्पाणिः शिवोदया ॥ १४० ॥ सुदुर्लभा धनाध्यक्षा धन्या पिंगललोचना ॥ शा[2]न्तिः प्रभावती
दीप्तिः पङ्कजायतलोचना ॥ १४१ ॥ आद्या भूः[3] कमलोद्भूता गवां माता रणप्रिया ॥ सत्क्रिया गि[4]रिशा शुद्धिर्नित्यपुष्टा निरन्तरा ॥ १४२ ॥
दुर्गा कात्यायनी चंडी चौ[5]च्चितांगा सुविग्रहा ॥ हिरण्यवर्णा जग[6]ती जगद्यंत्रप्रवर्तिका ॥ १४३ ॥ मन्दरा[8]द्रिनिवासा च गरद्दा स्वर्णमालिनी ॥ रत्न
माला रत्नगर्भा पुष्टि[9]र्विश्वप्रमाथिनी ॥ १४४ ॥ पद्मनाभा[10] पद्मनिभा नित्य[11]रुष्टामृतोद्भवा ॥ धुन्वती दुष्प्रकम्पा च सूर्यमाता दृषद्वती ॥ १४५ ॥
महेंद्रभगिनी सौम्या[12] वरेण्या वरदायिका ॥ कल्याणी कमलावासा पञ्चचूडा वरप्रदा ॥ १४६ ॥ वा[13]च्यामरेश्वरी विद्या दुर्ज्जया दुरतिक्रमा ॥ काल
रात्रिर्महावेगा वीरभद्रप्रिया हिता ॥ १४७ ॥ भद्रकाली जगन्माता भक्तानां भद्रदा[14]यिनी ॥ कराला पिंगलाकारा कामभेदा महास्व[15]ना ॥ १४८ ॥
य[16]शस्विनी यशोदा च षडध्व[17]परिवर्त्तिका ॥ शङ्खिनी पद्मिनी सांख्या[18] सांख्ययोगप्रवर्त्तिका ॥ १४९ ॥ चैत्रा[19] संवत्सरारूढा जगत्सम्पूरणी ध्वजा ॥
शुंभा[20]रिः खेचरी स्वस्था कंबुग्रीवा कलिप्रिया ॥ १५० ॥ खगध्वजा खगारूढा वा[21]राही पूगमालिनी ॥ ऐश्वर्यपद्मनिलया विरक्ता गरुडासना ॥ १५१ ॥
जयन्ती हृद्गुहागम्या गह्वरेष्ठा गणाग्रणीः ॥ सङ्कल्पसिद्धा साम्यस्था सर्वविज्ञान[22]दायिनी ॥ १५२ ॥ क[23]लिः कल्कविहन्त्री च गुह्योप
निषदुत्तमा ॥ निष्ठा[24] दृष्टिः स्मृतिर्व्याप्तिः पुष्टि[25]स्तुष्टिः क्रियावती ॥ १५३ ॥ विश्वामरेश्वरेशाना भुक्तिर्मुक्तिः शिवामृता ॥ लोहिता
सर्पमाला[26] च भीषणी वनमालिनी ॥ १५४ ॥ अनन्तशयना[27]नन्ता नरनारायणोद्भवा ॥ नृसिंही दैत्यमथनी शङ्खचक्रगदाधरा ॥ १५५ ॥

---

१ वाहिनी पा० । २ भ्रान्तिरिति पा० । ३ हृत्कमलोद्भूताइति, हृल्लेखा इति पा० । ४ शुक्ला नित्यशुद्धा इति पा० गिरिजा शुद्धा नित्यतुष्टा निरञ्जना इति पा० । ५ चर्चिता शान्तविग्रहा इति पा० । ६ रजनीति पा० । ७ महारात्रीति पा० । ८ शारदा इति पा० । ९ पृथ्वीविश्वप्रमाथिनीति, प्रसाधनीति पा० । १० पद्मानना इति पा० । ११ नित्यतुष्टा इति पा० । १२ मान्या इति पा० । १३ वाच्या वरेश्वरी वन्द्या इति, वाच्या वरेश्वरीति पा० । १४ भक्तिदायिनीति पा० । १५ महामदा इति पा० । १६ तपस्विनीति पा० । १७ षडर्त्तुपरिवर्त्तिनीति, पद्मस्थपरिवार्त्तिनीति पा० । १८ संख्यासांख्ययोगप्रवार्त्तिका इति पा० । १९ चैत्रा संवत्सरी रुद्रा जगत्संपूरणीन्द्रजा इति पा० । २० शुभा विश्वचरीति पा० । २१ परार्या पद्ममालिनीति, वराहा भगमालिनीति पा० । २२ दायिका इति पा० । २३ कलिकल्मषहन्त्री चेति पा० । २४ नित्या इति पा० । २५ सृष्टिरिति पा० । २६ सर्वमाता इति पा० । २७ शयनानन्या इति पा० ।

सङ्क्षर्षणी[1] समुत्पत्तिरम्बिका पादसंश्रया ॥ महाज्वाला महाभूर्तिः[2] सुमूर्त्तिः सर्वकामधुक् ॥ १६६ ॥ शुभ्रा[3] च सुस्तना सौरी धर्मकामार्थ मोक्षदा ॥ भ्रूमध्यनिलया पूर्वा[4] पुराणपुरुषारणिः ॥ १६७ ॥ महाविभूतिदा मध्या सरोजनयना समा ॥ अष्टादशभुजानाद्या नीलोत्पल दलप्रभा ॥ १६८ ॥ सर्वशक्त्यासनारूढा[5] धर्माधर्मविवर्जिता[6] ॥ वैराग्यज्ञाननिरता निरालोका निरिन्द्रिया ॥ १६९ ॥ विचित्रगह नाधारा[7] शाश्वतस्थानवासिनी ॥ स्थानेश्वरी निरानन्दा त्रिशूलवरधारिणी ॥ १६० ॥ अशेषदेवतामूर्त्तिर्देवता वरदेवता ॥ गणाम्बिका गिरेः पुत्री निशुम्भविनिपातिनी ॥ १६१ ॥ अवर्णा[8] वर्णरहिता त्रिवर्णा जीवसम्भवा ॥ अनन्तवर्णानन्यस्था शङ्करी शान्तमानसा ॥ १६२ ॥ अगोत्रा[9] गोमती गोप्त्री[10] गुह्यरूपा गुणोत्तरा ॥ गौर्गीर्गव्यप्रिया[11] गौणी गणेश्वरनमस्कृता ॥ १६३ ॥ सत्यभामा[12] सत्यसन्धा त्रिसन्ध्या सन्धिवर्जिता ॥ सर्ववादाश्रया[13] साङ्ख्या साङ्ख्ययोगसमुद्भवा ॥ १६४ ॥ असंख्येयाप्रमेयाख्या शून्या शुद्धकुलोद्भवा ॥ बिन्दुनाद समुत्पत्तिः शम्भुवामा शशिप्रभा ॥ १६५ ॥ पिशङ्गा[14] भेदरहिता मनोज्ञा मधुसूदनी ॥ महाश्रीः श्रीसमुत्पत्तिस्तमःपारे प्रतिष्ठिता ॥ १६६ ॥ त्रितत्त्वमाता[15] त्रिविधा सुसूक्ष्मपदसंश्रया ॥ शन्ता भीता मलातीता[16] निर्विकारा शिवाश्रया[17] ॥ १६७ ॥ शिवाख्या चित्त निलया शिवज्ञानस्वरूपिणी ॥ दैत्यदानवनिर्मा[18]थी काश्यपी कालकर्णिका ॥ १६८ ॥ शास्त्रयोनिः क्रियामूर्त्तिश्चतुर्वर्गप्रदर्शिका ॥ नारायणी नरोत्पत्तिः[19] कौमुदी लिङ्गधारिणी ॥ १६९ ॥ कामुकी ललिताभावा[20] परावरविभूतिदा[21] ॥ पराङ्गजातमहिमा[22] बडवा वामलो चना ॥ १७० ॥ सुभद्रा देवकी सीता वेदवेदाङ्गपारगा ॥ मनस्विनी मन्युमाता महामन्युसमुद्भवा ॥ १७१ ॥ अमन्युरमृतास्वादा पुरु

---

१ सङ्कर्षण इति पा० । २ महामूर्त्तिरिति,महासूतिरि इति पा० । ३ सुप्रभा इति, सुश्रोणिरिति पा० । ४ रतिरिति पा० । ५ सर्वशक्त्या समारूढा इति पा० । ६ सर्वधर्मार्थवर्जिता इति पा० । ७ धीरा इति पा० । ८ स्ववर्णा इति पा० । ९ अगाधा इति पा० । १० योक्त्रीति पा० । ११ दुर्गा शिवप्रिया गौरीति पा० । १२ सत्यमाता इति पा० । १३ अर्थवाचाश्रया इति पा० । १४ बिसर्गा इति पा० । १५ धामा इति पा० । १६ शान्त्यतीता मनोऽतीता इति पा० । १७ नराश्रया इति पा० । १८ निर्मात्रीति पा० । १९ नरोद्भूतिरिति पा० । २० ललिताभावा इति पा० । २१ परापरेति पा० । २२ परात्मज्ञानमहिमा इति पा० ।

हूता पुरु[1]ष्टुता ॥ अशोच्या[2] भिन्नविषया[3] हिरण्यरजतप्रिया ॥ १७२ ॥ हिरण्य[4]रजनी हैमा हेमाभरणभूषिता ॥ विभ्राजमाना दुर्ज्ञेया ज्योतिष्टोमफलप्रदा ॥ १७३ ॥ महानिद्रासमुद्भूतिरनिद्रा सत्यदेवता ॥ दीर्घा ककुद्मिनी हृद्या शांतिदा शांतिवर्द्धिनी ॥ १७४ ॥ लक्ष्म्यादिशक्तिजननी शक्तिचक्रप्रवर्तिका ॥ त्रिशक्तिजननी जन्या षडूर्मिपरिव[5]र्जिता ॥ १७५ ॥ सुधौता[6] कर्मकरणी युगांतदहनात्मिका ॥ संकर्षणी जगद्धात्री कामयोनिः किरीटिनी ॥ १७६ ॥ ऐंद्री त्रैलोक्यनमिता वैष्णवी परमेश्वरी ॥ प्रद्युम्नदयिता दांत्री[7] युग्मदृष्टिस्त्रिलोचना ॥ १७७ ॥ मदोत्कटा हंसगतिः प्रचण्डा चण्डविक्रमा ॥ वृषावेशा[8] वियन्माता विन्ध्यपर्वतवासिनी ॥ १७८ ॥ हिमवन्मेरुनिलया कैलासगिरिवासिनी ॥ चाणूरहंतृतनया नीतिज्ञा कामरूपिणी ॥ १७९ ॥ वेदविद्या व्रतस्नाता ब्रह्मशैलनिवासिनी[9] ॥ वीरभद्र[10]प्रजा वीरा महाकामसमुद्भवा ॥ १८० ॥ विद्याधरप्रिया सिद्धा विद्याधरनिराकृतिः ॥ आप्यायनी हरंती च पावनी पोषणी कला ॥ १८१ ॥ मातृका मन्मथोद्भूता वारिजा वाहनप्रिया ॥ करीषिणी सुधावाणी[11] वीणावादनतत्परा ॥ १८२ ॥ सेविता सेविका सेव्या[12] सिनीवाली गरुत्मती ॥ अरुंधती हिरण्याक्षी मृगांका मानदायिनी ॥ १८३ ॥ वसुप्रदा वसुमती वसोर्द्धारा वसुंधरा ॥ धाराधरा वरारोहा[13] परावाससहस्रदा[14] ॥ १८४ ॥ श्रीफला श्रीमती श्रीशा श्रीनिवासा शिवप्रिया ॥ श्रीधरा श्रीकरी[15] कल्या श्रीधरार्द्धशरीरिणी ॥ १८५ ॥ अनंतदृष्टिरक्षुद्रा धात्रीशा धनदप्रिया ॥ निहंत्री दैत्यसङ्घानां सिंहिका सिंहवाहना ॥ १८६ ॥ सुवर्चला[16] च सुश्रोणी सुकीर्त्तिश्छिन्नसंशया ॥ रसज्ञा रसदा रामा लेलिहानामृतस्रवा[17] ॥ १८७ ॥ नित्योदिता स्वयंज्योतिरुत्सुका मृत[18]जीवना ॥ वज्रदण्डा[19] वज्रजिह्वा वैदेही वज्रविग्रहा ॥ १८८ ॥ मङ्गल्या मङ्गला माला निर्मला[20] मलहारिणी ॥ गान्धर्वी करुका[21]

१ पुरस्कृता इति पा० । २ अमोघा इति पा० । ३ भिन्नहृदया इति पा० । ४ हिरण्यराजती हैमा इति, हिरण्यानी हैमवती इति पा० । ५ षड्वर्गपरिवर्त्तिका इति पा० । षड्वर्गः–कामादिगणः षडूर्मिपदमपि तदर्थकमिति संभावयामः । ६ सुधामा इति, सुधातेति पा० । ७ दान्ता इति पा० । ८ वृषे धर्मे आवेशो यस्याः इत्यर्थः । वृषवेगा इति पा० । ९ धर्मशीलानिलाशनेति, ब्रह्मशैलनिवासिनीति पा० । १० वीरभद्रा प्रजा इति, वीरभद्रप्रिया इति पा० । ११ सधाधारा इति, स्वधावाणी, सुधावीणा इति पा० । १२ सेवा इति पा० । १३ वरानना इति पा० । १४ परावरसहस्रदा इति पा० । १५ श्रीकरा इति पा० । १६ सुषेणा चन्द्रनिलया इति पा० । १७ स्वरा इति पा० । १८ मृगजीवनीति पा० । १९ वज्रचण्डा इति पा० । २० मलिना इति, मालिनीति पा० । २१ गारुडीति पा० ।

चान्द्री कम्बलाश्वतराप्रिया ॥ १८९ ॥ सौदामिनी जनानन्दा[1] भ्रुकुटीकुटिलानना ॥ कार्णिकारकरा कक्षा[2] कंसप्राणापहारिणी ॥ १९० ॥ युगन्धरा युगावर्त्ता त्रिसन्ध्या[3] हर्षवर्द्धनी ॥ प्रत्यक्षदेवता दिव्या दिव्यगन्धा दिवः[4] परा ॥ १९१ ॥ शक्रासनगता शाक्री सांध्या[5] चारुशरासना ॥ इष्टा विशिष्टा शिष्टेष्टा शिष्टाशिष्टप्रपूजिता ॥ १९२ ॥ शतरूपा शतावर्त्ता विनता सुरभिः सुरा[6] ॥ सुरेन्द्रमाता सुद्युम्ना सुषुम्ना सूर्यसंस्थिता ॥ १९३ ॥ समीक्ष्या सत्प्रतिष्ठा च निवृत्तिर्ज्ञानपारगा[7] ॥ धर्मशास्त्रार्थकुशला धर्मज्ञा धर्मवाहना ॥ १९४ ॥ धर्माधर्मविनिर्मात्री धार्मिकाणां शिवप्रदा ॥ धर्मशक्तिर्धर्ममयी विधर्मा विश्वधर्मिणी ॥ १९५ ॥ धर्मान्तरा[8] धर्ममयी धर्मपूर्वा धनावहा ॥ धर्मोपदेष्ट्री धर्मात्मा धर्मगम्या[9] धराधरा ॥ १९६ ॥ कापाली[10] शकला मूर्त्तिः कलाकलितविग्रहा ॥ सर्वशक्तिविनिर्मुक्ता सर्वशक्त्याश्रयाश्रया[11] ॥ १९७ ॥ सर्वा सर्वेश्वरी सूक्ष्मा सूक्ष्मज्ञानस्वरूपिणी ॥ प्रधानपुरुषेशेषा[12] महादेवैकसाक्षिणी[13] ॥ १९८ ॥ सदाशिवा वियन्मूर्त्तिर्वेदमूर्त्तिरमूर्त्तिका[14] ॥ एवं नाम्नां सहस्रेण स्तुत्वासौ हिमवान्गिरिः ॥ १९९ ॥ भूयः प्रणम्य भीतात्मा प्रोवाचेदं कृताञ्जलिः ॥ यदेतदैश्वरं रूपं घोरं[15] ते परमेश्वरि ॥ २०० ॥ भीतोऽस्मि साम्प्रतं दृष्ट्वा रूपमन्यत्प्रदर्शय ॥ एवमुक्ताथ सा देवी तेन शैलेन पार्वती ॥ २०१ ॥ संहृत्य दर्शयामास स्वरूपमपरं पुनः ॥ नीलोत्पलदलप्रख्यं नीलोत्पलसुगन्धि[16] च ॥ २०२ ॥ द्विनेत्रं[17] द्विभुजं सौम्यं नीलालकविभूषितम् ॥ रक्तपादाम्बुजतलं सुरक्तकरपल्लवम् ॥ २०३ ॥ श्रीमद्विशालसद्वृत्तं[18] ललाटतिलकोज्ज्वलम् ॥ भूषितं चारुसर्वाङ्गभूषणैरतिकोमलम् ॥ २०४ ॥ दधानमुरसा मालां विशालां हेमनिर्मिताम् ॥ ईषत्स्मितं सुबिम्बोष्ठं नूपुरारावसंयुतम् ॥ २०५ ॥ प्रसन्नवदनं दिव्यमनन्तमहिमास्पदम् ॥ तदीदृशं समालोक्य स्वरूपं शैलसत्तमः ॥ २०६ ॥ भीतिं सन्त्यज्य हृष्टात्मा बभाषे परमेश्वरीम् ॥

---

१ निजानन्दा इति पा० । २ त्र्यक्षा इति पा । त्र्यक्षी इत्यर्थः । ३ त्रिवर्त्मा इति, त्रिविधा इति पा० । ४ दिवा परा इति, दिवाकरा इति पा० दिवाकरी इत्यर्थः । ५ सान्ध्या वीराशरासना इति पा० । ६ सुता इति पा० । ७ वेदपारगा इति पा० । ८ धर्मोत्तरा धर्मवेद्या इति पा० । ९ धर्मस्था इति पा० । १० कापालीशकरा इति पा० । ११ सर्वशक्तिसमाश्रया इति पा० । १२ प्रधानपुरुषेशी च इति पा० । १३ महादैवतसाक्षिणीति पा० । १४ अमूर्त्तिगा इति पा० । १५ घोरं तदिति पा० । १६ नीलोत्पलसुगन्धिकामिति पा० । १७ त्रिनेत्रं सुभुजं इति पा० । १८ श्रीमद्विशालसंवृत्तामिति, श्रीमद्विशालसंवृद्धमिति पा० ।

हिमवानुवाच ॥ अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ २०७ ॥ यन्मे साक्षात्त्वमव्यक्ता प्रपन्ना[1] दृष्टिगोचरम् ॥ त्वया सृष्टं जगत् सर्वं प्रधानाद्यं त्वयि स्थितम् ॥ २०८ ॥ त्वय्येव लीयते देवि त्वमेवं परमा गतिः[2]॥वदन्ति केचित्त्वामेव प्रकृतिं प्रकृतेः पराम्॥२०९॥ अपरे परमार्थज्ञाः शिवेति शिवसंश्रयात् ॥ त्वयि प्रधानं[3] पुरुषो महान्ब्रह्मा तथेश्वरः ॥ २१० ॥ अविद्या नियतिर्माया कलाद्याः शतंशोऽभवन्[4] ॥ त्वं हि सा परमा शक्तिरनन्ता परमेष्ठिनी[5] ॥ २११ ॥ सर्वभेदविनिर्मुक्ता सर्वभेदाश्रयाश्रया ॥ त्वामधिष्ठाय योगेशि महादेवो महेश्वरः ॥ २१२ ॥ प्रधानाद्यं जगत्सर्वं[6] करोति विकरोति च ॥ त्वयैव सङ्गतो देवः स्वात्मानन्दं[7] समश्नुते ॥ २१३ ॥ त्वमेव परमानन्दस्त्वमेवानन्ददायिनी ॥ त्वमक्षरं परं व्योम महज्ज्योतिर्निरञ्जनम् ॥ २१४॥ शिवं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम् ॥ त्वं शक्रः[8] सर्वदेवानां ब्रह्मा ब्रह्मविदामसि ॥ २१५॥ वायुर्बलवतां देवि योगिनां त्वं कुमारकः ॥ ऋषीणाञ्च वसिष्ठस्त्वं व्यासो वेदविदामसि ॥ २१६ ॥ सांख्यानां कपिलो देवो रुद्राणाञ्चापि[9] शङ्करः ॥ आदित्यानामुपेन्द्रस्त्वं वसूनाञ्चैव पावकः ॥ २१७ ॥ वेदानां सामवेदस्त्वं गायत्री[10]च्छन्दसामसि ॥ अध्यात्मविद्या विद्यानां गतीनां परमा गतिः ॥ २१८ ॥ माया त्वं सर्वशक्तीनां कालः कलयतामसि ॥ ओङ्कारः सर्वगुह्यानां वर्णानाञ्च द्विजोत्तमः ॥ २१९ ॥ आश्रमाणां गृहस्थस्त्वमीश्वराणां महेश्वरः ॥ पुंसां त्वमेकः[11] पुरुषः सर्वभूतहृदि स्थितः ॥२२०॥ सर्वोपनिषदां देवि[12] गुह्योपनिषदुच्यसे[13]॥ईशानश्चापि[14] कल्पानां युगानां कृतमेव च॥२२१॥आदित्यः सर्वमार्गाणां[15] वाचां देवी सरस्वती ॥ त्वं लक्ष्मीश्चारुरूपाणां विष्णुर्मायाविनामसि ॥ २२२ ॥ अरुन्धती सतीनां त्वं सुपर्णः पततामसि ॥ सूक्तानां पौरुषं सूक्तं साम ज्येष्ठं च सामसु ॥ २२३ ॥ सावित्री चापि[16] जाप्यानां यजुषां शतरुद्रियम् ॥ पर्वतानां महामेरुरनन्तो भोगिनां[17]

१ प्रसन्ना दृष्टिगोचरा इति पा० । २ त्वमेव च परा गतिरिति पा० । ३ प्रधानपुरुषो इति पा० । ४ शक्तयोऽभवन्निति पा० । ५ परमेश्वरीति पा० । ६ जगत्कृत्स्नमिति पा० । ७ स्वमानन्दामिति पा० । ८ शक्तिरिति पा० । ९ रुद्राणामपि इति पा० । १० सावित्रीति पा० । ११ त्वमेकपुरुष इति । १२ मध्ये ब्रह्मोपनिषदुच्यते इति पा० । १३ ईश्वरश्चापि इति पा० । १४ सर्गेति पा० । १५ सूक्ष्माणां पौरुषं सूक्ष्मं ज्येष्ठसाम इति पा० । १६ चासि जप्यानामिति पा० । १७ भोगिनामसि इति पा० ।

मपि॥२२४॥सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि ॥२२५॥ रूपं तवाशेषविकारहीनमगोचरं निर्मलमेकरूपम् ॥ अनादिमध्यान्तमनन्त माद्यं नमामि सत्यं तमसः परस्तात् ॥ २२६॥यदेव पश्यन्ति जगत्प्रसूतिं वेदान्तविज्ञानविनिश्चितार्थाः ॥ आनन्दमात्रं प्रणवाभिधानं तदेव रूपं शरणं प्रपद्ये॥२२७॥अशेषभूतान्तरसंन्निविष्टं प्रधानपुंयोगवियोगहेतुम् ॥तेजोमयं जन्मविनाशहीनं प्राणाभिधानं प्रणतोऽस्मि रूपम्॥२२८॥आद्यन्तहीनं जगदात्मरूपं विभिन्नसंस्थं प्रकृतेः परस्तात्॥कूटस्थमव्यक्तवपुस्तथैव नमामि रूपं पुरुषाभिधानम्॥२२९ ॥ सर्वाश्रयं सर्वजगद्विधानं सर्वत्रगं जन्मविनाशहीनम्॥सूक्ष्मं विचित्रं त्रिगुणं प्रधानं नतोऽस्मि ते रूपमरूपभेदम्॥२३० ॥आद्यं महान्तं पुरु षाभिधानं प्रकृत्यवस्थं त्रिगुणात्मबीजम् ॥ ऐश्वर्यविज्ञानविराधधर्मैः समन्वितं देवि नतोऽस्मि रूपम् ॥ २३१॥द्विसप्तलोकात्मकमम्बुसंस्थं विचित्रभेदं पुरुषैकनाथम्॥अनेकभेदैरधिवासितं ते नतोऽस्मि रूपं जगदण्डसंज्ञम्॥२३२ ॥अशेषवेदात्मकमेकमाद्यं त्वत्तेजसा पूरितलोक भेदम् ॥ त्रिकालहेतुं परमेष्ठिसंज्ञं नमामि रूपं रविमंडलस्थम् ॥ २३३ ॥ सहस्रमूर्द्धानमनन्तशक्तिं सहस्रबाहुं पुरुषं पुराणम् ॥ शयान मन्तः सलिले तवैवं नारायणाख्यं प्रणतोऽस्मि रूपम् ॥ २३४ ॥ दंष्ट्राकरालं त्रिदशाभिवन्द्यं युगान्तकालानलकर्तृरूपम् ॥ अशेष भूताण्डविनाशहेतुं नमामि रूपं तव कालसंज्ञम् ॥ २३५॥ फणासहस्रेण विराजमानं भोगीन्द्रमुख्यैरपि पूज्यमानम् ॥ जनार्दनारूढतनुं प्रसुप्तं नतोऽस्मि रूपं तव शेषसंज्ञम् ॥२३६॥ अव्याहतैश्वर्यमयुग्मनेत्रं ब्रह्मामृतानन्दरसज्ञमेकम् ॥ युगान्तशेषं दिवि नृत्यमानं नतोस्मि रूपं तव रुद्रसंज्ञम् ॥ २३७॥ प्रहीणशोकं प्रविहीनरूपं सुरासुरैरर्चितपादपद्मम् ॥ सुकोमलं देवि विभासि शुभ्रं नमामि ते रूप मिदं भवानि ॥ २३८ ॥ ॐ नमस्तेऽस्तु महादेवि नमस्ते परमेश्वरि ॥ नमो भगवतीशानि शिवायै ते नमो नमः ॥ २३९ ॥ त्वन्मयोऽहं

१ तवाशेषकलाविहीन इति पा० । २ निर्मलरूपमेकामिति पा० । ३ सन्निधिस्थामिति पा० । ४ जगदात्मभूतामिति पा० । ५ करस्थमव्यक्तवपुस्तथैव इति पा० । ६ पुरुषात्मरूपमिति पा० । ७ विरागधर्मैरिति पा० । ८ अनन्तोति, अनन्तभूतोरिति, अनन्तरूपैरिति पा० । ९ स्वतेजसा इति पा० । १० तथैव इति, तदेव इति पा० । ११ कल्परूपामिति पा० । १२ रतिपूज्यमानमिति, रभिपूज्यमानमिति, रसि पूज्यमानमिति पा० । १३ विसंज्ञमेकमिति, मसंज्ञमेकमिति पा० । १४ विमलं पवित्रमिति पा० ।

त्वदाधारस्त्वमेव च गतिर्मम ॥ त्वामेव शरणं यास्ये प्रसीद परमेश्वरि ॥ २४० ॥ मया नास्ति समो लोके देवो वा दानवोऽपि वा ॥ जगन्मातैव मत्पुत्री सम्भूता तपसा यतः ॥२४१॥ एषा तवाम्बिके देवि किलाभूत्पितृकन्यका ॥ मेनाशेषजगन्मातुरहो मे पुण्यगौरवम् ॥ २४२ ॥ पाहि मामसरेशानि मेनया सह सर्वदा ॥ नमामि तव पादाब्जं व्रजामि शरणं शिवम् ॥ २४३ ॥ अहो मे सुमहद्भाग्यं महादेवीसमागमात् ॥ आज्ञापय महादेवि किं करिष्यामि शंकरि ॥ २४४ ॥ एतावदुक्त्वा वचनं तदा हिमगिरीश्वरः ॥ संप्रेक्षमाणो गिरिजां प्राञ्जलिः पार्श्वगोऽभवत् ॥ २४५ ॥ अथ सा तस्य वचनं निशम्य जगतोऽरणिः ॥ सस्मितं प्राह पितरं स्मृत्वा पशुपतिं पतिम् ॥ २४६ ॥ श्रीदेव्युवाच ॥ शृणुष्व चैतत्प्रथमं गुह्यमीश्वरगोचरम् ॥ उपदेशं गिरिश्रेष्ठ सेवितं ब्रह्मवादिभिः ॥ २४७ ॥ यन्मे साक्षात्परं रूपमैश्वरं दृष्टमद्भुतम् ॥ सर्वशक्तिसमायुक्तमनन्तं प्रेरकं परम् ॥ २४८ ॥ शान्तः समाहितमना मानाहंकारवर्जितः ॥ तन्निष्ठस्तत्परो भूत्वा तदेव शरणं व्रज ॥ २४९ ॥ भक्त्या त्वनन्यया तात मद्भावं परमाश्रितः ॥ सर्वयज्ञतपोदानैस्तदेवार्चय सर्वदा ॥ २५० ॥ तदेव मनसा पश्य तद्ध्यायस्व यजस्व तत् ॥ ममोपदेशात्संसारं नाशयामि तवानघ ॥ २५१ ॥ अहं त्वां परया भक्त्या ऐश्वरं योगमास्थितम् ॥ संसारसागरादस्मादुद्धराम्यचिरेण तु ॥ २५२ ॥ ध्यानेन कर्मयोगेन भक्त्या ज्ञानेन चैव हि ॥ प्राप्याहं ते गिरिश्रेष्ठ नान्यथा कर्मकोटिभिः ॥ २५३ ॥ श्रुतिस्मृत्युदितं सम्यक्कर्म वर्णाश्रमात्मकम् ॥ अध्यात्मज्ञानसहितं मुक्तये सततं कुरु ॥ २५४ ॥ धर्मात्संजायते भक्तिर्भक्त्या संप्राप्यते परम् ॥ श्रुतिस्मृतिभ्यामुदितो धर्मो यज्ञादिको मतः ॥ २५५ ॥ नान्यतो जायते धर्मो वेदाद्धर्मो हि निर्बभौ ॥ तस्मान्मुमुक्षुर्धर्मार्थी मद्रूपं वेदमाश्रयेत् ॥ २५६ ॥ ममैवैषा परा शक्तिर्वेदसंज्ञा पुरातनी ॥ ऋग्यजुःसामरूपेण सर्गादौ

---

१ भूतात्मा चैव इति पा० । २ सा स्वयं यतः इति पा० । ३ अहो पुण्यस्य गौरवमिति पा० । ४ शिवामिति पा० । ५ संप्रेष्यमाणः इति पा० । ६ पार्श्वतोऽभवदिति पा० । ७ चैतत्परममिति पा० । ८ दम्भाहङ्कारवर्जित इति पा० । ९ अहं वै मत्परान् भक्तानैश्वरं योगमास्थितानिति पा० । १० वेदाद्धर्मोऽपि इति, वेदार्थात्सहि निर्बभौ इति पा० । ११ धर्मार्थि श्रद्धया वेदमाश्रयेदिति पा० । १२ मूर्त्तिरिति पा० ।

संप्रवर्त्तते ॥ २५७ ॥ तेषामेव च गुप्त्यर्थं वेदानां भगवानजः ॥ ब्राह्मणादीन्ससर्जाथ स्वेस्वे कर्मण्ययोजयत् ॥ २५८ ॥ येन कुर्वन्ति मद्धर्मं[1] तदर्थं ब्रह्मनिर्मिताः ॥ तेषामधस्तान्नरकांस्तामिस्रादीनकल्पयत् ॥ २५९ ॥ न च वेदादृते किञ्चिच्छास्त्रं धर्माभिधायकम् ॥ योऽन्यत्र रमते सोऽसौ न सम्भाष्यो द्विजातिभिः ॥ २६० ॥ यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन्[2]विविधानि तु ॥ श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥ २६१ ॥ कापालं भैरवञ्चैव[3] यामलं वाममार्हतम् ॥ एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥ २६२ ॥ ये कुशास्त्राभियोगेन मोहयन्तीह मानवान् ॥ मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे[4] ॥ २६३ ॥ वेदार्थवित्तमैः[5] कार्यं यत्स्मृतं कर्म वैदिकम् ॥ तत्प्रयत्नेन कुर्वन्ति मत्प्रियास्ते हि ये नराः ॥ २६४ ॥ वर्णानामनुकम्पार्थं मन्नियोगाद्विराट् स्वयम् ॥ स्वायम्भुवो मनुर्धर्मान्मुनीनां पूर्वमुक्तवान् ॥ २६५ ॥ श्रुत्वा चान्येऽपि मुनयस्तन्मुखाद्धर्ममुत्तमम् ॥ चक्रुर्धर्मप्रतिष्ठार्थं धर्मशास्त्राणि चैव हि ॥ २६६ ॥ तेषु चान्तर्हितेष्वेवं युगान्तेषु महर्षयः ॥ ब्रह्मणो वचनात्तानि करिष्यन्ति युगेयुगे ॥ २६७ ॥ अष्टादश पुराणानि व्यासाद्यैः[6] कथितानि तु ॥ नियोगाद्ब्रह्मणो राजंस्तेषु धर्मः प्रतिष्ठितः ॥ २६८ ॥ अन्यान्युपपुराणानि तच्छिष्यैः कथितानि तु ॥ युगे युगेऽत्र सर्वेषां कर्त्ता वै धर्मशास्त्रवित् ॥ २६९ ॥ शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ॥ ज्योतिःशास्त्रं[7] न्यायविद्या सर्वेषामुपबृंहणम्[8] ॥ २७० ॥ एवं चतुर्दशैतानि तथा[9] हि द्विजसत्तमाः ॥ चतुर्वेदैः सहोक्तानि धर्मो नान्यत्र विद्यते ॥ २७१ ॥ एवं[10] पैतामहं धर्मं मनुव्यासादयः परम् ॥ स्थापयन्ति ममादेशाद्यावदाभूतसंप्लवम् ॥ २७२ ॥ ब्रह्मणा[11] सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ॥ परं[12]स्यान्ते कृतात्मानः प्रविशन्ति परम्पदम्[13] ॥ २७३ ॥ तस्मात्सर्वप्रयत्नेन धर्मार्थं वेदमाश्रयेत् ॥ धर्मेण सहितं ज्ञानं परं ब्रह्म प्रकाशयेत् ॥ २७४ ॥

१ तद्धर्ममिति, तं धर्ममिति पा० । २ लोकेऽस्मिंस्त्रिविधानि इति पा० । ३ पञ्चरात्रञ्च इति पा० । ४ भवार्णवे इति पा० । ५ वेदान्तोति पा० । ६ व्यासेन इति पा० । ७ ज्योतिःशास्त्राध्यात्मविद्या इति पा० । ८ मीमांसा चोपबृंहणमिति पा० । ९ विद्यास्थानानि सत्तम इति पा० । १० अत्र यावत्पदं निरर्थकम् आ इति उपसर्गेण गतार्थत्वात् । ११ ब्राह्मणैरिति पा० । १२ परस्यान्तःकृतात्मानः इति पा० । १३ परस्परमिति, प्रवेक्ष्यन्ति परं पदमिति पा० ।

ये तु संगान्[1] परित्यज्य मामेव शरणं गताः॥उपासते सदा भक्त्या योगमैश्वरमास्थिताः ॥२७५॥सर्वभूतदयावन्तः शांता दांता विमत्सराः॥ अमानिनो बुद्धिमन्तस्तापसाः शंसितव्रताः॥२७६॥ मच्चित्ता मद्गतप्राणा मज्ज्ञान[2]कथने रताः॥ संन्यासिनो गृहस्थाश्च वनस्था ब्रह्मचारिणः ॥ २७७ ॥ तेषां नित्याभियुक्तानां मायां[3]तत्त्वं समुत्थितम् ॥ नाशयामि तमः कृत्स्नं ज्ञानदीपेन नो[4] चिरात्॥ २७८ ॥ ते[5] सुनिर्धूततमसो ज्ञानेनैकेन मन्मयाः ॥ सदानन्दास्तु संसारे न जायन्ते पुनःपुनः ॥२७९ ॥ तस्मात्सर्वप्रकारेण मद्भक्तो मत्परायणः ॥ मामेवार्चय सर्वत्र मनसा शरणं गतः ॥ २८० ॥ अशक्तो यदि मे ध्यातुमैश्वरं रूपमव्ययम् ॥ ततो मे परमं[6] रूपं कालाद्यं[7] शरणं व्रज ॥ २८१ ॥ तद्यत्स्व[8]रूपं मे तात मनसो गोचरं तव ॥ तन्निष्ठस्तत्परो भूत्वा तदर्चनपरो भव ॥२८२ ॥ यत्तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम् ॥ सर्वोपाधिविनिर्मुक्तमनन्तममृतं परम्॥ २८३ ॥ ज्ञानेनैकेन तल्लभ्यं क्लेशेन परमं पदम् ॥ ज्ञानमेव प्रपश्यन्तो मामेव प्रविशन्ति ते ॥ २८४ ॥ तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥ गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ २८५ ॥ मामनाश्रित्य परमं निर्वाणमम[9]लं पदम् ॥ प्राप्यते न हि राजेन्द्र ततो मां शरणं व्रज ॥ २८६ ॥ एकत्वेन पृथक्त्वेन तथा चोभयथापि वा ॥ मामुपास्य महीपाल[10] ततो यास्यसि तत्पदम्[11] ॥ २८७ ॥ मामनाश्रित्य तत्तत्त्वं स्वभावविमलं शिवम् ॥ ज्ञायते न हि राजेन्द्र ततो मां शरणं व्रज ॥ २८८ ॥ तस्मात्त्वमक्षरं रूपं नित्यं वा रूपमैश्वरम् ॥ आराधय प्रयत्नेन ततोऽन्धं[12]त्वं प्रहास्यसि॥२८९ ॥कर्मणा मनसा वाचा शिवं सर्वत्र सर्वदा ॥ समाराधय भावेन ततो यास्यसि तत्पदम्[13] ॥ २९० ॥ न[14] वै यास्यन्ति तं देवं मोहिता मम मायया ॥ अनाद्यनन्तं परमं महेश्वरमजं शिवम् ॥ २९१ ॥ सर्वभूतात्मभूतस्थं सर्वाधारं निरञ्जनम् ॥ नित्यानन्दं निराभासं निर्गुणं तमसः

---

१ स्वर्गमिति, येऽन्यसङ्गानिति पा० । २ मद्भावकथने इति पा० ।३ मायातनुसमुत्थितमिति पा० । ४ मा चिरादिति पा० । ५ ते तु निर्धूतमनस इति, तेषु निर्धूतमनस इति पा० । ६ सकलमिति, ततः सर्वकलमिति पा० । ७ कलाढ्यमिति, कालाढ्यं पूर्णम् इति पा० । ८ यद्यदिति पा० । ९ नफलप्रदमिति पा० । १० महाराज इति पा० । ११ मत्पदमिति पा० । १२ बन्धमिति पा० । १३ मत्पदमिति पा० । १४ न वै पश्यन्ति तत्तत्त्वमिति, न वै पश्यन्ति तं देवमिति पा० ।

परम् ॥ २९२ ॥ अद्वैतमचलं ब्रह्म निष्कलं निष्प्रपञ्चकम् ॥ स्वसंवेद्यमवेद्यं तत्परे व्योम्नि व्यवस्थितम् ॥२९३॥ सूक्ष्मेण तमसा नित्यं वेष्टिता मम मायया ॥ संसारसागरे घोरे जायन्ते च पुनःपुनः ॥ २९४ ॥ भक्त्या त्वनन्यया राजन् सम्यग्ज्ञानेन चैव हि ॥ अन्वेष्टव्यं हि तद्ब्रह्म जन्मबन्धनिवृत्तये॥२९५॥अहंकारञ्च मात्सर्यं कामं क्रोधपरिग्रहम् ॥ अधर्माभिनिवेशञ्च त्यक्त्वा वैराग्यमास्थितः॥२९६ ॥ सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ॥ अवेक्ष्य चात्मनात्मानं ब्रह्मभूयाय कल्पते ॥ २९७ ॥ ब्रह्मभूतः प्रसन्नात्मा सर्वभूताभयप्रदः ॥ ऐश्वर्यं परमां भक्तिं विन्देतानन्यभाविनीम् ॥ २९८ ॥ वीक्ष्यते तत्परं तत्त्वमैश्वरं ब्रह्म निष्कलम् ॥ सर्वसंसारनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥ २९९ ॥ ब्रह्मणोऽयं प्रतिष्ठानं परस्य परमः शिवः ॥ अनन्यश्चाव्ययश्चैकश्चात्माधारो महेश्वरः ॥ ३०० ॥ ज्ञानेन कर्मयोगेन भक्त्या योगेन वा नृप ॥ सर्वसंसारमुक्त्यर्थमीश्वरं शरणं व्रज ॥ ३०१ ॥ एष गुह्योपदेशस्ते मया दत्तो गिरीश्वर ॥ अन्वीक्ष्य चैतदखिलं यथेष्टं कर्तुमर्हसि ॥ ३०२ ॥ अहं वै याचिता देवैः सञ्जाता परमेश्वरात् ॥ विनिन्द्य दक्षं पितरं महेश्वरविनिन्दकम् ॥ ३०३ ॥ धर्मसंस्थापनार्थाय तवाराधनकारणात् ॥ मेनादेहसमुत्पन्ना त्वामेव पितरं श्रिता ॥ ३०४ ॥ स त्वं नियोगाद्देवस्य ब्रह्मणः परमात्मनः ॥ प्रदास्यसे मां रुद्राय स्वयंवरसमागमे ॥ ३०५ ॥ तत्सम्बन्धान्तरे राजन् सर्वे देवाः सवासवाः ॥ त्वां नमस्यन्ति वै तात प्रसीदति च शंकरः ॥ ३०६ ॥ तस्मात्सर्वप्रयत्नेन मां विद्धीश्वरगोचराम् ॥ संपूज्य देवमीशानं शरण्यं शरणं व्रज ॥ ३०७ ॥ स एवमुक्तो हिमवान् देवदेव्या गिरीश्वरः ॥ प्रणम्य शिरसा देवीं प्रांजलिः पुनरब्रवीत् ॥ ३०८ ॥ विस्तरेण महेशानि योगं माहेश्वरं परम् ॥ ज्ञानं वै चात्मनो योगं साधनानि प्रचक्ष्व मे ॥ ३०९ ॥ तस्यैतत्परमं ज्ञानमात्मना योगमुत्तमम् ॥ यथा वव्याजहारेशा साधनानि च विस्तरात् ॥ ३१० ॥ निशम्य वदनाम्भोजाद्गिरीन्द्रो लोकपूजितः ॥ लोकमातुः परं ज्ञानं योगासक्तोऽभवत्पुनः ॥३११ ॥ प्रददौ च महेशाय पार्वतीं भाग्य

१ स्वसर्गाद्यमरेभ्यरतत्परामिति पा० । २ अन्वीक्ष्य इति पा० । ३ ऐश्वरीमिति पा० । ४ विन्देतानन्यगामिनीमिति पा० । ५ ब्राह्मणी हि प्रतिष्ठेयमिति, प्रतिष्ठायामिति पा० । ६ पुनरिति पा० । ७ तत्सम्बन्धाच्च ते इति पा० । ८ सन्तोष्य इति पा० । ९ भगवानिति पा० । १० मात्मयोगमनुत्तममिति पा० । ११ व्याजहारैषा इति पा० ।

गौरवात् ॥ नियोगाद्ब्रह्मणः साध्वी देवानाञ्चैव सन्निधौ ॥ ३१२ ॥ य इमं पठतेऽध्यायं देव्या माहात्म्यकीर्त्तनम् ॥ शिवस्य सन्निधौ भक्त्या शुचिस्तद्भावभावितः॥३१३॥सर्वपापविनिर्मुक्तो दिव्ययोगसमन्वितः ॥ उल्लंघ्य ब्रह्मणो लोकं देव्याः स्थानमवाप्नुयात् ॥३१४॥ यश्चैतत्पठति स्तोत्रं ब्राह्मणानां समीपतः ॥ समाहितमनाः सोऽपि सर्वपापैः प्रमुच्यते ॥ ३१५ ॥ नाम्नामष्टसहस्रन्तु देव्या यत्समुदीरितम् ॥ ज्ञात्वार्कमण्डलगतामावाह्य परमेश्वरीम् ॥ ३१६ ॥ अभ्यर्च्य गन्धपुष्पाद्यैर्भक्तियोगसमन्वितः ॥ संस्मरन्परमं भावं देव्या माहेश्वरं परम् ॥ ३१७ ॥ अनन्यमानसो नित्यं जपेदामरणाद्द्विजः ॥ सोऽन्तकाले स्मृतिं लब्ध्वा परं ब्रह्माधिगच्छति ॥ ३१८ ॥ अथवा जायते विप्रो ब्राह्मणस्य शुचौ कुले ॥ पूर्वसंस्कारमाहात्म्याद्ब्रह्मविद्यामवाप्नुयात् ॥ ३१९ ॥ सम्प्राप्य योगं परमं दिव्यं तत्पारमेश्वरम् ॥ शान्तः सुसंयतो भूत्वा शिवसायुज्यमाप्नुयात्।३२०।प्रत्येकञ्चाथ नामानि जुहुयात्सवनत्रयम्॥महामारिकृतैर्दोषैर्ग्रहदोषैश्च मुच्यते॥३२१॥ जपेद्वाहरहर्नित्यं संवत्सरमतन्द्रितः ॥ श्रीकामः पार्वतीं देवीं पूजयित्वा विधानतः ॥ ३२२ ॥ सम्पूज्य पार्श्वतः शम्भुं त्रिनेत्रं भक्तिसंयुतः ॥ लभते महतीं लक्ष्मीं महादेवप्रसादतः ॥ ३२३ ॥ तस्मात्सर्वप्रयत्नेन जप्तव्यं हि द्विजातिभिः ॥ सर्वपापपनोदार्थं देव्या नामसहस्रकम् ॥ ३२४ ॥ सूत उवाच ॥ प्रसङ्गात्कथितं विप्रा देव्या माहात्म्यमुत्तमम् ॥ अतःपरं प्रजासर्गं भृग्वादीनां निबोधत॥३२५॥ इति श्रीकूर्मपुराणे देव्या माहात्म्ये द्वादशोऽध्यायः ॥ १२ ॥ अथ दक्षकन्याख्यातिवंशः ॥ सूत उवाच ॥ भृगोः ख्यात्यां समुत्पन्ना लक्ष्मीर्नारायणप्रिया ॥ देवौ धाताविधातारौ मेरोर्जामातरौ शुभौ ॥ १ ॥आयतिर्नियतिश्चैव मेरोः कन्ये महात्मनः ॥ तयोर्धातृविधातृभ्यां यौ च जातौ सुतावुभौ ॥ २ ॥ प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः ॥ तथा वेदशिरा नाम प्राणस्य द्युतिमान्सुतः ॥ ३ ॥

१ देव्या इति पा० । २ देव्याः समाहितमना इति पा० । ३ सम्भाव्य इति पा० । ४ कुले शुचौ इति पा० । ५ सर्व्वसंस्कारमाहात्म्यादिति पा० । ६ सर्वगत इति पा० । ७ कुसुमत्रयमिति पा० । ८ पूतनादीति पा० । ९ सार्द्धत इति पा० । अर्द्धयुक्तं गौरीसहितं हरिसहितं वा इत्यर्थः । १० महादेवप्रभावत इति पा० । ११ धाताविधात्रोस्ते भार्ये तयोर्जातौ सुतावुभौ इति पा० । १२ मृकण्डुज इति पा० ।

मरीचेरपि सम्भूतिः पूर्णमासमसूयत ॥ कन्याचतुष्टयञ्चैव सर्वलक्षणसंयुतम् ॥ ४ ॥ तुष्टिर्ज्येष्ठा तथा वृष्टिः कृष्टिश्चापचितिस्तथा ॥ विरजाः पर्वतश्चैव पूर्णमासस्य तौ सुतौ ॥ ५ ॥ क्षमा तु सुषुवे पुत्रान्पुलहस्य प्रजापतेः ॥ कर्दमञ्च वरीयांसं सहिष्णुं मुनिसत्तमम् ॥ ६ ॥ तथैव च कनीयांसं तपोनिर्द्धूतकल्मषम् ॥ अनसूया तथैवात्रेर्जज्ञे पुत्रानकल्मषान् ॥ ७ ॥ सोमं दुर्वाससञ्चैव दत्तात्रेयञ्च योगिनम् ॥ स्मृतिश्चाङ्गिरसः पुत्री जज्ञे लक्षणसंयुता ॥ ८ ॥ सिनीवालीं कुहूञ्चैव राकामनुमतीमपि ॥ प्रीत्यां पुलस्त्यो भगवान्दम्भोलिमसृजत्प्रभुः ॥ ९ ॥ पूर्वजन्मनि सोगस्त्यः स्मृतः स्वायम्भुवेऽन्तरे ॥ देवबाहुस्तथा कन्या द्वितीयां नाम नामतः ॥ १० ॥ पुत्राणां षष्टिसाहस्रं सन्ततिः सुषुवे क्रतोः ॥ ते चोर्द्ध्वरेतसः सर्वे वालखिल्या इति स्मृताः ॥ ११ ॥ वसिष्ठश्च तथोर्जायां सप्त पुत्रानजीजनत् ॥ कन्याञ्च पुण्डरीकाक्षां सर्वशोभासमन्विताम् ॥ १२ ॥ रजोर्मात्रोर्द्ध्वबाहुश्च सवनश्चानघस्तथा ॥ सुतपाः शुक्र इत्येते सप्त पुत्रा महौजसः ॥ १३ ॥ योऽसौ रुद्रात्मको वह्निर्ब्रह्मणस्तनयो द्विजाः ॥ स्वाहा तस्मात्सुतान् लेभे त्रीनुदारान्महौजसः ॥ १४ ॥ पावकः पवमानश्च शुचिरग्निश्च रूपतः ॥ निर्मथ्यः पवमानः स्याद्वैद्युतः पावकः स्मृतः ॥ १५ ॥ यश्चासौ तपते सूर्ये शुचिरग्निस्त्वसौ स्मृतः ॥ तेषान्तु सन्ततावन्ये चत्वारिंशच्च पञ्च च ॥ १६ ॥ पवमानः पावकश्च शुचिस्तेषां पिता च यः ॥ एते चैकोनपञ्चाशद्वह्नयः परिकीर्तिताः ॥ १७ ॥ सर्वे तपस्विनः प्रोक्ताः सर्वे यज्ञेषु भागिनः ॥ रुद्रात्मकाः स्मृताः सर्वे त्रिपुण्ड्राङ्कितमस्तकाः ॥ १८ ॥ अयज्वानश्च यज्वानः पितरो ब्रह्मणः सुताः ॥ अग्निष्वात्ता बर्हिषदो द्विधा तेषां व्यवस्थितिः ॥ १९ ॥ तेभ्यः स्वधा सुतां जज्ञे मेनां वै धारिणीं तथा ॥ ते उभे ब्रह्मवादिन्यौ योगिन्यौ मुनिसत्तमाः ॥ २० ॥ असूत मेना मैनाकं क्रौञ्चन्तस्यानुजन्तथा ॥ गङ्गा हिमवतो यज्ञे सर्वलोकैकपावनी ॥ २१ ॥

---

१ पौर्णमासमिति पा० । २ कृषिरिति पा० । ३ हृष्टिरिति, पुष्टिश्चितिरिति पा० । ४ पौर्णमासस्य इति पा० । ५ जनयामास इत्यर्थः, क्वचिदन्तर्भूतण्यर्थः सम्भवति । ६ दत्तामिति, दत्तीनिमिति, दम्भोलीमिति, दम्भोलिमिति पा० । ७ सन्नतीति पा० । ८ राजोहश्चोर्ध्वबाहुश्चेति पा० । ९ सत्रनोऽनशनस्तथा इति पा० । १० त्रीनग्नीनामितौजस इति पा० । ११ ते त्रय इति पा० । १२ महाबल इति, पितामह इति पा० । १३ भोगिन इति पा० । १४ अयज्वानोऽपीति पा० । १५ इतरे इति पा० । १६ जनयामास इयर्थः । १७ वैतरणीमिति पा० ।

स्वयोगाग्निबलाद्देवीं[1] पुत्रीं लेभे महेश्वरीम् ॥ यथावत्कथितं पूर्वं देव्या माहात्म्यमुत्तमम् ॥ २२ ॥ धारिणी मेरुराजस्य पत्नी पद्मसमानना ॥ देवौ धाताविधातारौ मेरोर्जामातरावुभौ ॥ २३ ॥ एषा दक्षस्य कन्यानां मयापत्यानुसन्ततिः ॥ ॥ व्याख्याता भवतां[2] सद्यो मनोः सृष्टिं निबोधत ॥ २४ ॥ इति श्रीकूर्मपुराणे द० त्रयोदशोऽध्यायः ॥ १३ ॥ अथ स्वायंभुवमनुवंशः ॥ सूत उवाच ॥ प्रियव्रतोत्तानपादौ मनोः स्वायम्भुवस्य तु ॥ धर्मज्ञौ तौ महावीर्यौ शतरूपा व्यजीजनत् ॥ १ ॥ ततस्तूत्तानपादस्य[3] ध्रुवो नाम सुतोऽभवत् ॥ भक्त्या[4] नारायणे देवे प्राप्तवान् स्थानमुत्तमम् ॥ २ ॥ ध्रुवाच्छिष्टिश्च[5] भाव्यश्च भाव्याच्छम्भुर्व्यजायत ॥ शिष्टेराधत्त सुच्छाया पञ्च पुत्रानकल्मषान् ॥ ३ ॥ वसिष्ठवचनाद्देवी तपस्तप्त्वा सुदुश्चरम् ॥ आराध्य पुरुषं विष्णुं शालग्रामे जनार्दनम् ॥ ४ ॥ रिपुं रिपुञ्जयं विप्रं कपिलं[6] वृषतेजसम्[7] ॥ नारायणपरान्शुद्धान्स्वधर्मपरिपालकान् ॥ ५ ॥ रिपोराधत्त महिषी चाक्षुषं सर्वतेजसम् ॥ सोऽजीजनत्पुष्करिण्यां सुरूपं[8] चाक्षुषं मनुम् ॥ ६ ॥ प्रजापतेरात्मजायां वीरणस्य[9] महात्मनः ॥ मनोरजायन्त दश सुतांस्ते सुमहौजसः[10] ॥ ७ ॥ कन्यायां सुमहावीर्यो वैराजस्य प्रजापतेः ॥ ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाँक्[11] शुचिः ॥८॥ अग्निष्टुदतिरात्रश्च सुद्युम्नश्चाभिमन्युकः ॥ ऊरोरजनयत्पुत्रान्षडाग्नेयी महाबलान् ॥९॥ अङ्गं सुमनसं ख्यातिं[12] क्रतुमाङ्गिरसं शिवम् ॥ अङ्गाद्वेनोऽभवत्पश्चाद्वैन्यो वेनादजायत ॥ १० ॥ योऽसौ पृथुरिति ख्यातः प्रजापालो महाबलः ॥ येन दुग्धा मही पूर्वं प्रजानां हितकाम्यया[13] ॥ ११ ॥ नियोगाद्ब्रह्मणः सार्द्धं देवेन्द्रेण महौजसा ॥ वेनपुत्रस्य वितते पुरा पैतामहे मखे ॥ १२ ॥ सूतः पौराणिको जज्ञे मायारूपः स्वयं हरिः ॥ प्रवक्ता सर्वशास्त्राणां धर्मज्ञो गुरुवत्सलः[14] ॥ १३ ॥ तं मां वित्त मुनिश्रेष्ठाः पूर्वोद्भूतं सनातनम् ॥ अस्मिन्मन्वन्तरे व्यासः कृष्णद्वैपायनः स्वयम् ॥ १४ ॥ श्रावयामास मां

---

१ स्वयोगात्मबलाद्देवी पातिं लेभे महेश्वरमिति पा० । २ भवतामद्य इति पा० ३ तयोरुत्तानपादस्येति पा० । ४ भक्तो नारायणाद्देवादिति पा० ।५ ध्रुवात्सृष्टिश्च धान्यश्च भार्या शम्भुर्व्यजायत इति पा० । ६ विकलमिति, वृकलमिति, वृकुलमिति पा० । ७ वृकतेजसमिति पा० । ८ वेरण्यमिति, वीरिण्यामिति पा० । ९ मरण्यस्य इति पा० । १० नकुलायां महौजस इति, त इलाया मिति पा० । ११ सत्यवानिति पा० । १२ स्वातिमिति पा० । १३ हितकारणादिति पा० । १४ गुणवत्सलः इति पा० ।

प्रीत्या पुराणंः पुरुषो हरिः ॥ मदन्वये तु ये सूताः सम्भूता वेदवर्जिताः ॥ १५ ॥ तेषां पुराणवक्तृत्वं वृत्तिरासीदजाज्ञया ॥ स च वैन्यः पृथुर्धीमान्सत्यसन्धो जितेन्द्रियः ॥ १६ ॥ सार्वभौमो महातेजाः स्वधर्मपरिपालकः ॥ तस्य बाल्यात्प्रभृत्येव भक्तिर्नारायणेऽभवत् ॥ १७ ॥ गोवर्द्धनंगिरिं प्राप्तस्तपस्तेपे जितेन्द्रियः ॥ तपसा भगवान्प्रीतः शंखचक्रगदाधरः ॥ १८ ॥ आगत्य देवो राजानं प्राह दामोदरः स्वयम् ॥ धार्मिकौ रूपसम्पन्नौ सर्वशस्त्रभृतांवरौ ॥ १९ ॥ मत्प्रसादादसन्दिग्धौ पुत्रौ तव भविष्यतः ॥ एवमुक्त्वा हृषीकेशः स्वकीयां प्रकृतिं गतः ॥ २० ॥ वैन्योऽपि वेदविधिना निश्चलां भक्तिमुद्वहन् ॥ सोऽपालयत्स्वकं राज्यं चिन्तयन्मधुसूदनम् ॥ २१ ॥ अचिरादेव तन्वङ्गी भार्या तस्य शुचिस्मिता ॥ शिखण्डिनं हविर्द्धानमन्तर्द्धानाद्व्यजायत ॥ २२ ॥ शिखण्डिनोऽभवत्पुत्रः सुशील इति विश्रुतः ॥ धार्मिको रूपसम्पन्नो वेदवेदाङ्गपारगः ॥ २३ ॥ सोऽधीत्य विधिवद्वेदान्धर्मेण तपसि स्थितः ॥ मतिञ्चक्रे भाग्ययोगात्संन्यासम्प्रति धर्मवित् ॥ २४ ॥ स कृत्वा तीर्थसंसेवां स्वाध्याये तपसि स्थितः ॥ जगाम हिमवंत्पृष्ठं[३] कदाचित्सिद्धसेवितम् ॥ २५ ॥ तत्र धर्मवंनं[४] नाम धर्मसिद्धिप्रदं वनम् ॥ अपश्यद्योगिनां गम्यमगम्यं ब्रह्मविद्विषाम् ॥ २६ ॥ तत्र मन्दाकिनीनाम सुपुण्या विमला नदी ॥ पद्मोत्पलवनोपेता सिद्धाश्रमविभूषिता ॥ २७ ॥ स तस्या दक्षिणे तीरे मुनीन्द्रैर्योगिभिर्युतम्[५] ॥ सुपुण्यमाश्रमं रम्यमपश्यत्प्रीतिसंयुतः ॥ २८ ॥ मन्दाकिनीजले स्नात्वा सन्तर्प्य पितृदेवताः ॥ अर्चयित्वा महादेवं पुष्पैः पद्मोत्पलादिभिः ॥ २९ ॥ ध्यात्वार्कसंस्थमीशानं शिरस्याधाय चाञ्जलिम् ॥ सम्प्रेक्षमाणो भास्वन्तं तुष्टाव परमेश्वरम् ॥ ३० ॥ रुद्राध्यायेन गिरिशं रुद्रस्य चरितेन च ॥ अन्यैश्च विविधैः स्तोत्रैः शाम्भवैर्वेदसम्भवैः ॥ ३१ ॥ अथास्मिन्नन्तरेऽपश्यत्समायान्तं महामुनिम् ॥ श्वेताश्वतरनामानं महापाशुपतोत्तमम् ॥ ३२ ॥ भस्मसन्दिग्धसर्वाङ्गं कौपीनाच्छादनान्वितम् ॥ तपसा कर्षितात्मानं[६] शुक्लयज्ञोपवीतिनम् ॥ ३३ ॥ समाप्य संस्तवं[७]

१ पुराणमिति पा० । २ सम्बन्धनगिरिमिति पा० । ३ शृङ्गमिति पा० । ४ धर्मपदमिति पा० । ५ योगिभिर्युते इति पा० । ६ हर्षितात्मानमिति पा० । ७ संस्तवपदं परिचर्यार्थे रूढमपि अत्र सम्यक्स्तवरूपे वर्त्तते इति मृग्यम् ।

शम्भोरानन्दास्त्राविलेक्षणः ॥ ववन्दे शिरसा पादौ प्राञ्जलिर्वाक्यमब्रवीत् ॥ ३४ ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे साक्षान्मुनीश्वर ॥ योगीश्वरोऽद्य भगवान्दृष्टो योगविदां वरः ॥ ३५ ॥ अहो मे सुमहद्भाग्यं तपांसि सफलानि मे ॥ किं करिष्यामि शिष्योऽहं तव मां पालयानघ ॥ ३६ ॥ सोऽनुगृह्याथ राजानं सुशीलं शीलसंयुतम् ॥ शिष्यत्वे प्रतिजग्राह तपसा क्षीणकल्मषम् ॥ ३७ ॥ सान्न्यासिकं विधिं कृत्स्नं कारयित्वा विचक्षणः ॥ ददौ तदैश्वरं ज्ञानं स्वशाखाविहितव्रतम् ॥ ३८ ॥ अशेषं वेदसारं तत्पशुपाशविमोचनम् ॥ अन्त्याश्रममिति ख्यातं ब्रह्मादिभिरनुष्ठितम् ॥ ३९ ॥ उवाच शिष्यान्संप्रेक्ष्य ये तदाश्रमवासिनः ॥ ब्राह्मणाः क्षत्रिया वैश्या ब्रह्मचर्यपरायणाः ॥ ४० ॥ मया प्रवर्त्तितां शाखामधीत्यैवेह योगिनः ॥ समासते महादेवं ध्यायन्तो विश्वमैश्वरम् ॥ ४१ ॥ इह देवो महादेवो रममाणः सहोमया ॥ अध्यास्ते भगवानीशो भक्तानामनुकम्पया ॥ ४२ ॥ इहाशेषजगद्धाता पुरा नारायणः स्वयम् ॥ आराधयन्महादेवं लोकानां हितकाम्यया ॥ ४३ ॥ इहैनं देवमीशानं देवानामपि दैवतम् ॥ आराध्य महतीं सिद्धिं लेभिरे देवदानवाः ॥ ४४ ॥ इहैव मुनयः सर्वे मरीच्याद्या महेश्वरम् ॥ दृष्ट्वा तपोबलाज्ज्ञानं लेभिरे सार्वकालिकम् ॥ ४५ ॥ तस्मात्त्वमपि राजेन्द्र तपोयोगसमन्वितः ॥ तिष्ठ नित्यं मया सार्द्धं ततः सिद्धिमवाप्स्यसि ॥ ४६ ॥ एवमाभाष्य विप्रेन्द्रो देवं ध्यात्वा पिनाकिनम् ॥ आचचक्षे महामन्त्रं यथावत्सर्वसिद्धये ॥ ४७ ॥ सर्वपापोपशमनं वेदसारं विमुक्तिदम् ॥ अग्निरित्यादिकं पुण्यमृषिभिः सम्प्रवर्त्तितम् ॥ ४८ ॥ सोऽपि तद्वचनाद्राजा सुशीलः श्रद्धयान्वितः ॥ साक्षात्पाशुपतो भूत्वा वेदाभ्यासरतोऽभवत् ॥ ४९ ॥ भस्मोद्धूलितसर्वाङ्गः कन्दमूलफलाशनः ॥ शान्तो दान्तो जितक्रोधः संन्यासविधिमाश्रितः ॥ ५० ॥ हविर्धानस्तथाग्नेय्या जनयामास वै सुतम् ॥ प्राचीनबर्हिषं नाम्ना धनुर्वेदस्य पारगम् ॥ ५१ ॥ प्राचीनबर्हिर्भगवान्सर्वशस्त्रभृतां वरः ॥

---

१ अशेषवेदसारामिति पा० । २ निष्कलं शिवमिति पा० । ३ पूर्वमिति पा० । ४ सार्वकामिकामिति पा० । ५ आस्स्व इति पा० । ६ स्वार्थसिद्धये इति, तथा तत्कार्यसिद्धय इति पा० । ७ अस्तिरिति पा० । ८ वेदात्मा सततोऽभवदिति पा० । ९ हविर्धातुस्तथाग्नेयामिति पा० । १० सत्सुतमिति, सुव्रतमिति पा० ।

समुद्रतनयायां वै दश पुत्रानजीजनत् ॥ ५२ ॥ प्रचेतसस्ते विख्याता राजानः प्रथितौजसः ॥ अधीतवन्तः स्वं वेदं नारायणपरायणाः ॥ ५३ ॥ दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ॥ दक्षो जज्ञे महाभागो यः पूर्वं ब्रह्मणः सुतः ॥ ५४ ॥ स तु दक्षो महेशेन रुद्रेण सह धीमता ॥ कृत्वा विवादं रुद्रेण शप्तः प्राचेतसोऽभवत् ॥ ५५ ॥ समायान्तं महादेवो दक्षं देव्या गृहं हरः ॥ दृष्ट्वा यथोचितां पूजां दक्षाय प्रददौ स्वयम् ॥ ५६ ॥ तदा वै तमसाविष्टः सोऽधिकां ब्रह्मणः सुतः ॥ पूजामनर्हामान्विच्छञ्जगाम कुपितो गृहम् ॥ ५७ ॥ कदाचित्स्वगृहं प्राप्तां सतीं दक्षः सुदुर्मनाः ॥ भर्त्रा सह विनिन्द्यैनां भर्त्सयामास वै रुषा ॥ ५८ ॥ अन्ये जामातरः श्रेष्ठा भर्तुस्तव पिनाकिनः ॥ त्वमप्यसत्सुताऽस्माकं गृहाद्गच्छ यथागतम् ॥ ५९ ॥ तस्य तद्वाक्यमाकर्ण्य सा देवी शङ्करप्रिया ॥ विनिन्द्य पितरं दक्ष ददाहात्मानमात्मना ॥ ६० ॥ प्रणम्य पशुभर्त्तारं भर्तारं कृत्तिवाससम् ॥ हिमवद्दुहिता साभूत्तपसा तस्य तोषिता ॥ ६१ ॥ ज्ञात्वा तां भगवान्रुद्रः प्रपन्नार्त्तिहरो हरः ॥ शशाप दक्षं कुपितः समागत्याथ तद्गृहम् ॥ ६२ ॥ त्यक्त्वा देहमिमं ब्राह्मं क्षत्रियाणां कुले भव ॥ स्वस्यां सुतायां मूढात्मा पुत्रमुत्पादयिष्यसि ॥ ६३ ॥ एवमुक्त्वा महादेवो ययौ कैलासपर्वतम् ॥ स्वायम्भुवोऽपि कालेन दक्षः प्राचेतसोऽभवत् ॥ ६४ ॥ एतद्वः कथितं सर्वं मनोः स्वायम्भुवस्य तु ॥ निसर्गं दक्षपर्यन्तं शृण्वतां पापनाशनम् ॥ ६५ ॥ × इति श्रीकूर्मपुराणे राजवंशानुकीर्त्तने चतुर्दशोऽध्यायः ॥ १४ ॥ अथ दक्षयज्ञविध्वंसनम् ॥ नैमिषेया ऊचुः ॥ देवानां दानवानाञ्च गन्धर्वोरगरक्षसाम् ॥ उत्पत्तिं विस्तराद्ब्रूहि सूत वैवस्वतेऽन्तरे ॥ १ ॥ स शप्तः शम्भुना पूर्वं दक्षः प्राचेतसो नृपः ॥ किमकार्षीन्महाबुद्धे श्रोतुमिच्छाम साम्प्रतम् ॥ २ ॥ सूत उवाच ॥ वक्ष्ये नारायणेनोक्तं पूर्वकल्पानुषङ्गिकम् ॥ त्रिकालबद्धं पापघ्नं प्रजासर्गस्य विस्तरम् ॥ ३ ॥ स शप्तः शम्भुना पूर्वं दक्षः प्राचेतसो नृपः ॥ विनिन्द्य पूर्ववैरेण गंगाद्वारेऽयज

१ स्ते वेदमिति पा० । २ त्वमप्यस्मद्गृहाद्गच्छ सुतास्माकमिति पा० । ३ पशुभर्त्तारं-पशूनां जीवानां भर्त्तारं पशुपतिमित्यर्थः । ४ तु इति पा० । ५ एवं शप्त्वा इति पा० । ६ निसर्गमिति पा० । ७ विस्तरात्सूत ब्रूहीति पा० । ८ त्रिकालवन्तमिति पा० । ९ विचिन्त्येति । १० × अत्र अध्यायसमाप्तिर्नदृश्यते लिखितपुस्तके ।

द्रवम् ॥ ४ ॥ देवाश्च सर्वे भागार्थमाहता विष्णुना सह ॥ सहैव मुनिभिः सर्वैरागता मुनिपुंगवाः ॥ ५ ॥ दृष्ट्वा देवकुलं कृत्स्नं शंकरेण विना गतम् ॥ दधीचो[3] नाम विप्रर्षिः प्राचेतसमथाब्रवीत् ॥ ६ ॥ दधीच उवाच ॥ ब्रह्माद्यास्तु पिशाचान्ता यस्याज्ञानुविधायिनः ॥ स देवः साम्प्रतं रुद्रो विधिना किन्न[5] पूज्यते ॥ ७ ॥ दक्ष उवाच ॥ सर्वेष्वेव हि यज्ञेषु न भागः परिकल्पितः ॥ न मन्त्रा[6] भार्यया सार्द्धं शंकरस्येति नेज्यते[7] ॥ ८ ॥ विहस्य दक्षं कुपितो वचः प्राह महामुनिः ॥ शृण्वतां सर्वदेवानां सर्वज्ञानमयः[8] स्वयम् ॥ ९ ॥ दधीच उवाच ॥ यतः प्रवृत्तिर्विश्वात्मा यश्चांसौ[9] परमेश्वरः ॥ सम्पूज्यते सर्वयज्ञैर्विदित्वा किन्न शङ्करः ॥ १० ॥ दक्ष उवाच ॥ न ह्ययं शङ्करो रुद्रः[10] संहर्त्ता तामसो हरः ॥ नग्नः कपाली विदितो विश्वात्मा नोपपद्यते ॥ ११ ॥ ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो हरिः ॥ सत्त्वात्मकोऽसौ भगवानिज्यते सर्वकर्मसु ॥ १२ ॥ दधीच उवाच ॥ किं त्वया भगवानेष सहस्रांशुर्न दृश्यते ॥ सर्वलोकैकसंहर्त्ता कालात्मा परमेश्वरः ॥ १३ ॥ यं गृह्णन्तीह विद्वांसो धार्मिका ब्रह्मवादिनः ॥ सोऽ[12]यं साक्षी तीव्ररुचिः कालात्मा शाङ्करी तनुः ॥ १४ ॥ एष रुद्रो महादेवः कपाली[13] च घृणी हरः ॥ आदित्यो भगवान्सूर्यो नीलग्रीवो विलोहितः ॥ १५ ॥ संस्तूयते सहस्रांशुः सामगाध्वर्युहोतृभिः ॥ पश्यै[14]नं विश्वकर्माणं रुद्रमूर्तिं त्रयीमयम् ॥ १६ ॥ दक्ष उवाच ॥ य एते द्वादशादित्या आगता यज्ञभागिनः ॥ सर्वे सूर्या इति ज्ञेया न ह्यन्यो विद्यते रविः ॥ १७ ॥ एवमुक्ते तु मुनयः समायाता दिदृक्षवः ॥ बाढमित्यब्रुवन्दक्षं तस्य साहाय्यकारिणः ॥ १८ ॥ तमसाविष्टमनसो न पश्यन्तो[15] वृषध्वजम् ॥ सहस्रशोऽथ शतशो बहुशो भूय[16] एव हि ॥ १९ ॥ निन्दन्तो वैदिकान्मन्त्रान् सर्वभूतपतिं हरम् ॥ अपूजयन्दक्ष[17]वाक्यं मोहिता विष्णुमायया ॥ २० ॥ देवाश्च सर्वे भागार्थमागता वासवादयः ॥ नापश्यन्देवमीशानमृते नारायणं हरिम् ॥ २१ ॥ हिरण्यगर्भो भगवान्ब्रह्मा ब्रह्मविदां वरः ॥ पश्यतामेव सर्वेषां क्षणादन्तरधीयत ॥ २२ ॥ अन्तर्हिते भगवति दक्षो नारायणं हरिम् ॥

---

१ भागार्थमाहूताइति पा० । २ देवगणंसर्वं । ३ दधीचिर्नामेति पा० । ४ दधीचिरिति पा० । ५ किंस । ६ नमस्ते । ७ नेष्यते इति पा० । ८ सर्वज्ञानमयो हि स इति पा० । ९ यश्चास्य इति पा० । १० भद्रः । ११ स्वराडिति पा० । १२ सोऽर्थसाक्षीति पा० । १३ कपर्दीति पा० । १४ पश्यान्ति । १५ मन्यंते इति पा० । १६ भूय एव विनिन्द्यते इति पा० । १७ विष्णवाक्यमिति[illegible]

रक्षकं जगतां देवं जगाम शरणं स्वयम् ॥ २३ ॥ प्रवर्त्तयामास च तं यज्ञं दक्षोऽथ निर्भयः ॥ रक्षको भगवान्विष्णुः शरणागत रक्षकः ॥ २४ ॥ पुनः प्राह च तं दक्षं दधीचो भगवानृषिः ॥ संप्रेक्ष्यर्षिगणान्देवान्सर्वान्वै रुद्रविद्विषः ॥ २५ ॥ अपूज्य पूजने चैव पूज्यानां चाप्यपूजने ॥ नरः पापमवाप्नोति महद्वै नात्र संशयः ॥ २६ ॥ असतां प्रग्रहो यत्र सताञ्चैव विमानना ॥ दण्डो दैवकृतस्तत्र सद्यः पतति दारुणः ॥ २७ ॥ एवमुक्त्वाथ विप्रर्षिः शशापेश्वरविद्विषः ॥ समागतान्ब्राह्मणांस्तान्दक्षसाहाय्यकारिणः ॥ २८ ॥ यस्माद्बहिःकृतो वेदाद्भवद्भिः परमेश्वरः ॥ विनिन्दितो महादेवः शंकरो लोकवन्दितः ॥ २९ ॥ भविष्यन्ति त्रयीबाह्याः सर्वेऽपीश्वरविद्विषः ॥ निन्दन्तीह्यैश्वरं मार्गं कुशास्त्रासक्तचेतसः ॥ ३० ॥ मिथ्याधीतसमाचारा मिथ्याज्ञानप्रलापिनः ॥ प्राप्य घोरं कलियुगं कलिजैः परिपीडिताः ॥ ३१ ॥ त्यक्त्वा तपोबलं कृत्स्नं गच्छध्वं नरकान्पुनः ॥ भविष्यति हृषीकेशः स्वाश्रितोऽपि पराङ्मुखः ॥ ३२ ॥ एवमुक्त्वाथ विप्रर्षिर्विरराम तपोनिधिः ॥ जगाम मनसा रुद्रमशेषाघविनाशनम् ॥ ३३ ॥ एतस्मिन्नन्तरे देवी महादेवं महेश्वरम् ॥ ॥ पतिं पशुपतिं देवं ज्ञात्वैतत्प्राह सर्वदृक् ॥ ३४ ॥ श्रीदेव्युवाच ॥ दक्षो यज्ञेन यजते पिता मे पूर्वजन्मनि ॥ विनिन्द्य भवतो भावमात्मानं चापि शंकर ॥ ३५ ॥ देवां महर्षयश्चासंस्तत्र साहाय्यकारिणः ॥ विनाशयाशु तं यज्ञं वरमेतं वृणोम्यहम् ॥ ३६ ॥ एवं विज्ञापितो देव्या देवदेवः परः प्रभुः ॥ ससर्ज सहसा रुद्रं दक्षयज्ञजिघांसया ॥ ३७ ॥ सहस्रशिरसं क्रुद्धं सहस्राक्षं महाभुजम् ॥ सहस्रपाणिं दुर्द्धर्षं युगान्तानलसन्निभम् ॥ ३८ ॥ दंष्ट्राकरालं दुष्प्रेक्ष्यं शङ्खचक्रधरं प्रभुम् ॥ दण्डहस्तं महानादं शार्ङ्गिणं भूतिभूषणम् ॥ ३९ ॥ वीरभद्र इति ख्यातं देवदेवसमन्वितम् ॥ स जातमात्रो देवेशमुपतस्थे कृताञ्जलिः ॥ ॥ ४० ॥ तमाह दक्षस्य मखं विनाशय शिवोऽस्तु ते ॥ विनिन्द्य मां स यजते गङ्गाद्वारे

१ जगतोविष्णुं । २ रक्षते । ३ दण्डादिकृतत । ४ एवमुक्त्वा स इति पा० । ५ देवो भवद्भिरिति पा० । ६ लोकपूजित इति पा० । ७ भविष्यध्वमिति पा० । ८ निन्दन्तो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसा इति पा० । ९ परिवर्द्धिता इति पा० । १० विश्वार्वित् । ११ देवाः सप्तर्षिभिस्तत्र येन इति पा० । १२ सहस्रशीर्षपादश्चेति पा० । १३ शंखचक्रगदाधरमिति पा० । १४ महाप्रभं दण्डहस्तं महानादं सुशार्ङ्गिणम् । भूतिभूषणसंबन्धं महादेवमिवापरम् । १५ देवदेवसमन्विषमिति, देवं देवसमन्वितमिति पा० । १६ तमाह दक्षस्य मुखं विनाशय शिवन्त्विति इति पा० । १७ विनीय इति, विनीय लघूकृत्य इत्यर्थः ।

गणेश्वर ॥ ४१ ॥ ततो बन्धप्रमुक्तेन सिंहेनैकेन लीलया ॥ वीरभद्रेण दक्षस्य विनाशमगमत्क्रतुः ॥ ४२ ॥ मन्युना चोमया सृष्टा भद्रकाली महेश्वरी ॥ तया च सार्द्धं वृषभं समारुह्य ययौ गणः ॥ ४३ ॥ अन्ये सहस्रशो रुद्रा निसृष्टास्तेन धीमता ॥ रोमजा इति विख्यातास्तस्य साहाय्यकारिणः ॥ ४४ ॥ शूलशक्तिगदाहस्ता दण्डोपलकरास्तथा ॥ कालाग्निरुद्र सङ्काशा नादयन्तो दिशो दश ॥ ४५ ॥ सर्वे वृषभमारूढा सभार्याश्चातिभीषणाः ॥ समावृत्य गणश्रेष्ठं ययुर्दक्षमखंप्रति ॥ ४६ ॥ सर्वे सम्प्राप्य तन्देशं गङ्गाद्वारमिति श्रुतम् ॥ ददृशुर्यज्ञदेशं वै दक्षस्यामिततेजसः ॥ ४७ ॥ देवाङ्गनासहस्राढ्यमप्सरोगीतनादितम् ॥ वेणुवीणानिनादाढ्यं वेदवादाभिनादितम् ॥ ४८ ॥ दृष्ट्वा सहर्षिभिर्देवैः समासीनम्प्रजापतिम् ॥ ४९ ॥ उवाच सं प्रियो रुद्रैर्वीर भद्रः स्मयन्निव ॥ ५० ॥ वयं ह्यनुचराः सर्वे शर्वस्यामिततेजसः ॥ भागार्थं लिप्सया भागान् प्राप्ता यच्छत्वभीप्सितान् ॥ ५१ ॥ अथ चेत्कस्यचिदियं माया मुनिवरोत्तमाः ॥ भागो भवद्भ्यो देयस्तु नास्मभ्यमिति कथ्यताम् ॥ ५२ ॥ तम्ब्रूताज्ञापयति यो वेत्स्यामो हि वयं ततः ॥ एवमुक्ता गणेशेन प्रजापतिपुरःसराः ॥ ५३ ॥ देवा ऊचुः ॥ प्रमाणं वो न जानीमो भागे मन्त्रा इति प्रभुम् ॥ मन्त्रा ऊचुः सुरा यूयं तमोपहतचेतसः ॥ ५४ ॥ येनाध्वरस्य राजानं पूजयेयुर्महेश्वरम् ॥ ईश्वरः सर्वभूतानां सर्वदेवतनुर्हरः ॥ ५५ ॥ पूज्यते सर्वयज्ञेषु सर्वाभ्युदयसिद्धिदः ॥ एवमुक्त्वा महेशानंमायया नष्टचेतनाः ॥ ५६ ॥ न मेनिरे ययुर्मन्त्रा देवान्मुक्त्वा स्वमा लयम् ॥ ततः सभद्रो भगवान् सभार्यः सगणेश्वरः ॥ ५७ ॥ स्पृशन् कराभ्यां विप्रर्षिं दधीचं प्राह देवहा ॥ मन्त्राः प्रमाणं न कृता युष्माभिर्बलदर्पितैः ॥ ५८ ॥ यस्मात्प्रसह्य तस्माद्वो नाशयाम्यद्य गर्वितान् ॥ इत्युक्त्वा यज्ञशालां तां ददाह गणपुङ्गवः ॥ ५९ ॥

---

१ सिंहेनैवेत्य इति पा० एकेन सिंहेन इव इति शेषः । २ हस्ताष्टकोपल । ३ वृषसमारूढा इति पा० । ४ गणश्रेष्ठाययुर्दक्षगृहं । ५ समासीनं प्रजापतिमिति पा० । ६ भद्रया । ७ धनुर्धराः । ८ भागाभिलिप्सया प्राप्ता भागान्यच्छध्वमीप्सितानिति पा० । ९ कस्यचिदियमाज्ञा मुनिसुरोत्तमा इति पा० । १० भगवतोदेयमस्मभ्यमिति । ११ विनंक्ष्यामो वयं तत इति पा० । १२ नेज्यते यज्ञभागेन न च मन्त्रा इति प्रभुरिति पा० । १३ मंत्रा ऊचुः॥ सुरायूयं महाभागास्तमोपहतचेतसः । १४ पूजयध्वं महेश्वरम् । १५ सर्वभूततनुर्हरिरिति पा० । १६ महेशानमिति पा० । १७ ततः स रुद्रो भगवानिति पा० । १८ ब्रह्मर्षिं दधीचमिति पा० ।

गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः ॥ प्रस्तोत्रा सह होत्रा च अश्वश्चैव गणेश्वराः ॥ ६० ॥ गृहीत्वा भीषणाः सर्वे गङ्गास्रोतसि चिक्षिपुः ॥ वीरभद्रोऽपि दीप्तात्मा शक्रस्यैवोद्यतं करम्[1] ॥ ६१ ॥ व्यष्टम्भयददीनात्मा तथान्येषां दिवौकसाम् ॥ भगनेत्रे तथोत्पाट्य कराग्रेणैव लीलया[2] ॥ ६२ ॥ निहत्य मुष्टिना दन्तान् पूष्णश्चैवमपातयत्[3] ॥ तथा चन्द्रमसं देवं पादाङ्गुष्ठेन लीलया ॥ ६३॥ धर्षयामास बलवान् स्मयमानो गणेश्वरः ॥ वह्नेर्हस्तद्वयं छित्त्वा जिह्वामुत्पाट्य लीलया ॥ ६४ ॥ जघान मूर्ध्नि पादेन मुनीनपि मुनीश्वराः[4] ॥ तथा विष्णुं सगरुडं समायान्तं महाबलः ॥ ६५ ॥ विव्याध निशितैर्बाणैः स्तम्भयित्वा सुदर्शनम् ॥ समालोक्य महाबाहुरागत्य गरुडो गणम् ॥ ६६ ॥ जघान पक्षैः सहसा ननादाम्बुनिधिर्यथा ॥ ततः सहस्रशो रुद्रः[5] ससर्ज गरुडान् स्वयम् ॥ ६७ ॥ वैनतेयादभ्यधिकान् गरुडं[6] ते प्रदुद्रुवुः ॥ तान्दृष्ट्वा गरुडो धीमान् पलायत[7] महाजवः ॥ ६८ ॥ विसृज्य माधवं वेगात्तदद्भुतमिवाभवत्[8] ॥ अन्तर्हिते वैनतेये भगवान् पद्मसम्भवः ॥ ६९ ॥ आगत्य वारयामास वीरभद्रञ्च केशवम् ॥ प्रसादयामास च तं गौरवात्परमेष्ठिनः ॥ ७० ॥ संस्तूय[9] भगवानीशं शम्भुस्तत्रागमत्स्वयम् ॥ वीक्ष्य देवाधिदेवं तमुमां सर्वगुणैर्वृताम् ॥ ७१ ॥ तुष्टाव भगवान् ब्रह्मा दक्षः सर्वे दिवौकसः ॥ विशेषात्पार्वतीं देवीमीश्वरार्द्धशरीरिणीम् ॥ ७२ ॥ स्तोत्रैर्नानाविधैर्दक्षः प्रणम्य च कृताञ्जलिः ॥ ततो भगवती देवी प्रहसन्ती महेश्वरम् ॥ ७३ ॥ प्रसन्नमनसा रुद्रं वचः प्राह घृणांनिधिः[10] ॥ त्वमेव जगतः स्रष्टा शासिता चैव रक्षिता[11] ॥७४॥ अनुग्राह्यो भगवता दक्षश्चापि दिवौकसः[12]॥ ततः प्रहस्य भगवान् कपर्दी नीललोहितः ॥ ७५ ॥ उवाच प्रणतान्देवान् प्राचेतसमथो हरः ॥ गच्छध्वं[13] देवताः सर्वाः प्रसन्नो भवतामहम् ॥ ७६ ॥

१ शक्रस्योद्यच्छतः करमिति पा० । २ भगस्य नेत्रे चोत्पाट्य करजाग्रेण इति पा० । ३ भित्वा । ४ मुनीश्वरान् । ५ भद्र इति पा० । ६ गरुडन्तमिति पा० । ७ धीमानपायत इति, अपायत पलायत अप-अय-त । ८ भवत् । विहन्तुं वीरभद्रस्तु केशवं हीनविक्रमम् । शूलमुद्यम्य वेगेन यावद्धन्तुं मनोदधे । ब्रह्मणा विश्रुतं तच्च दधाव पद्मसंभवः । ९ संश्रुत्य भगवानीशः साम्बस्तत्रागमत्स्वयम् । संवीक्ष्य देवं तं साम्बं तदा सर्वगणैर्वृतम् । १० घृणानिधिः करुणालयः । “ कारुण्यं करुणा घृणा ” इत्यमरः । ११ रक्षक इति पा० । १२ दिवौकसाम् । १३ गच्छध्वमित्यार्षं, गच्छत इति साधु ।

संपूज्यः सर्वयज्ञेषु न निन्द्योऽहं विशेषतः ॥ त्वञ्चापि शृणु मे दक्ष वचनं सर्वरक्षणम्[1] ॥ ७७ ॥ त्यक्त्वा लोकैषणामेतां[2] मद्भक्तो
भव यत्नतः ॥ भविष्यसि गणेशानः कल्पान्तेऽनुग्रहान्मम ॥ ७८ ॥ तावत्तिष्ठ ममादेशात्स्वाधिकारेषु निर्वृतः ॥ एवमुक्त्वा तु[3]
भगवान् सपत्नीकः सहानुगः ॥ ७९ ॥ अदर्शनमनुप्राप्तो दक्षस्यामिततेजसः ॥ अन्तर्हिते महादेवे शंकरे पद्मसम्भवः ॥ ८० ॥
व्याजहार स्वयं दक्षमशेषजगतो हितम् ॥ ब्रह्मोवाच ॥ किञ्चायं[4] भवतो मोहः प्रसन्ने वृषभध्वजे ॥ ८१ ॥ यदा[5] च स स्वयं देवः पालये[6]
त्त्वामतन्द्रितः ॥ सर्वेषामेव भूतानां हृद्येष परमेश्वरः[7] ॥ ८२ ॥ पश्यन्ति[8] यं ब्रह्मभूता विद्वांसो वेदवादिनः ॥ स चात्मा[9] सर्वभूतानां
स बीजं परमा गतिः ॥ ८३ ॥ स्तूयते वैदिकैर्मन्त्रैर्देवदेवो महेश्वरः ॥ तमर्चयन्ति[10] ये रुद्रं स्वात्मना च सनातनम् ॥ ८४ ॥ चेतसा
भावयुक्तेन ते यान्ति[11] परमं[12] पदम् ॥ तस्मादनादिमध्यान्तं विज्ञाय परमेश्वरम् ॥ ८५ ॥ कर्मणा मनसा वाचा समाराधय यत्नतः ॥
यत्नात्[13]परिहरेशस्य निन्दां स्वात्मविनाशनीम् ॥ ८६ ॥ भवन्ति[14] सर्वदोषाय निन्दकस्य क्रिया[15] हि ताः ॥ यस्तु चैष महायोगी रक्षको
विष्णुरव्ययः ॥ ८७ ॥ स[16] देवो भगवान्रुद्रो महादेवो न संशयः ॥ मन्यन्ते ये जगद्योनिं विभिन्नं विष्णुमीश्वरात् ॥ ८८ ॥ मोहादवेद[17]
निष्ठत्वात्ते यान्ति नरकं नराः ॥ वेदानुवर्त्तिनो रुद्रं देवं नारायणं तथा ॥ ८९ ॥ एकीभावेन पश्यन्ति मुक्तिभाजो भवन्ति ते ॥ यो
विष्णुः स स्वयं रुद्रो यो रुद्रः स जनार्दनः ॥ ९० ॥ इति मत्वा भजेद्देवं स याति परमां गतिम् ॥ सृजत्येष[18] जगत्सर्वं विष्णु
स्तत्पश्यतीश्वरः ॥ ९१ ॥ इत्थं जगत्सर्वमिदं रुद्रनारायणोद्भवम् ॥ तस्मात्त्यक्त्वा हरेर्निन्दां हरे[19] चापि समाहितः ॥९२॥ समाश्रय
महादेवं शरण्यं ब्रह्मवादिनाम् ॥ उपश्रुत्याथ वचनं विरिञ्चस्य प्रजापतिः ॥ ९३ ॥ जगाम शरणं देवं गोपतिं कृत्तिवाससम् ॥

---

१ सर्वलक्षणमिति पा० । २ लोकैषणां लोकानामेषणां प्रेषणां दुष्प्रवर्त्तनामित्यर्थः । ३ स इति पा० । ४ किं तवापगतो मोह इति पा० । ५ यदाचष्टे । ६ पालयैतदतन्द्रितः । ७ वसतीश्वर इति पा० ८ पश्यन्त्येनामिति । ९ सआत्मा । १० तमर्चयति यो रुद्रं स्वात्मन्येकमिति पा० । ११ स याति इति पा० । १२ परमां गतिम् । १३ यः करोतिहरेस्तस्य निन्दामात्मविनाशिनीमिति पा० । १४ तरन्तीति पा० । १५ क्रिया यत इति पा० १६ स देवदेवो भगवानिति पा० । १७ तेभेदवादनिष्ठत्वात् । १८ सृजत्येव जगत्सर्वं विष्णुस्तस्यार्द्धमीश्वरः इति, विष्णुस्तस्य महेश्वर इति पा० । १९ विष्णावपि इति पा० ।

येऽन्ये शापाग्निनिर्दग्धाः दधीचस्य महर्षयः ॥ ९४ ॥ द्विषन्तो मोहिता देवं सम्बभूवुः कलिष्वथ ॥ त्यक्त्वा तपोबलं कृत्स्नं विप्राणां कुलसम्भवाः ॥ ९५ ॥ पूर्वसंस्कारमाहात्म्याद्ब्रह्मणो वचनादिह ॥ मुक्तशापास्ततः सर्वे कल्पान्ते रौरवादिषु ॥ ९६ ॥ निपात्यमानाः कालेन सम्प्राप्यादित्यवर्चसम् ॥ ब्रह्माणं जगतामीशमनुज्ञाताः स्वयम्भुवा ॥ ९७ ॥ समाराध्य तपोयोगादीशानं त्रिदशाधिपम् ॥ भविष्यन्ति यथापूर्वं शंकरस्य प्रसादतः ॥ ९८ ॥ एतद्वः कथितं सर्वं दक्षयज्ञनिषूदनम् ॥ शृणुध्वं दक्षपुत्रीणां सर्वासां चैव सन्ततिम् ॥ १९९ ॥ इति श्रीकूर्मपुराणे दक्षयज्ञविध्वंसो नाम पञ्चदशोऽध्यायः ॥ १५ ॥ अथ दक्षकन्यावंशकथनम् ॥ सूत उवाच ॥ प्रजाः सृजेति सन्दिष्टः पूर्वं दक्षः स्वयंभुवा ॥ ससर्ज देवान् गन्धर्वानृषींश्चैवासुरोरगान् ॥ १ ॥ यदास्य सृजतः पूर्वं न व्यवर्द्धन्त ताः प्रजाः ॥ तदा ससर्ज भूतानि मैथुनेनैव सर्वतः ॥ २ ॥ असिक्न्यां जनयामास वीरणस्य प्रजापतेः ॥ सुतायां धर्मयुक्तायां पुत्राणान्तु सहस्रकम् ॥ ३ ॥ तेषु पुत्रेषु नष्टेषु मायया नारदस्य तु ॥ षष्टिं दक्षोऽसृजत्कन्या वैरिण्यां वै प्रजापतिः ॥ ४ ॥ ददौ स दश धर्माय कश्यपाय त्रयोदश ॥ विंशत्सप्त च सोमाय चतस्रोऽरिष्टनेमये ॥ ५ ॥ द्वे चैव बहुपुत्राय द्वे कृशाश्वाय धीमते ॥ द्वे चैवांगिरसे तद्वत्तासां वक्ष्येऽथ विस्तरम् ॥ ६ ॥ मरुत्वती वसुर्यामी लम्बा भानुररुन्धती ॥ संकल्पा च मुहूर्त्ता च साध्या विश्वा च भामिनी ॥ ७ ॥ धर्मपत्न्यो दश त्वेतास्तासां पुत्रान्निबोधत ॥ विश्वेदेवास्तु विश्वायां साध्या साध्यानजीजनत् ॥ ८ ॥ मरुत्वत्यां मरुत्वन्तो वस्वास्तु वसवस्तथा॥भानोस्तु भानवाश्चैव मुहूर्त्तास्तु मुहूर्त्तजाः॥९॥लम्बायाश्चाथ घोषो वै नागवीथी तु यामिजा॥पृथिवीविषयं सर्वमरुन्धत्यामजायत ॥ १० ॥ संकल्पायास्तु संकल्पो धर्मपुत्रा दश स्मृताः ॥ ये त्वनेकवसुप्राणा देवा ज्योतिःपुरोगमाः ॥ ११ ॥ वसवोऽष्टौ समाख्यातास्तेषां वक्ष्यामि विस्तरम् ॥ आपो ध्रुवश्च सोमश्च धरश्चैवानलोऽनिलः ॥ १२ ॥ प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकी

१ द्विषन्तोमोहिता देवं शरण्यं ब्रह्मवादिनाम् । उपश्रुत्वाथवचनं संबभूवुः कलिष्वथ । २ दीशानममराधिपम् । ३ दक्षपुत्राणां सर्वेषां । ४ चतुर्दशोध्यायः लि० पु० । ५ कूर्मउवाच ६ व्यादिष्ट इति पा० । ७ सृज्यमानस्येति पा० । ८ धर्मत इति पा० । ९ अशक्त्यामिति पा० । १० वैरण्यामिति पा० । ११ चेति पा० । १२ सप्तविंशतिरिति पा० । १३ नेमिने । १४ भृगुपुत्राय । १५ अरुन्धती । १६ मरुत्वती । १७ मरुत्वन्तो मरुत्वत्यां वसवोऽष्टौ वसोः सुता इति, अरुन्धत्यामरुन्धत्यान् इति, पा० । १८ मुहूर्तास्समुहूर्तकाः । १९ नागवीथी तु याभिजा इति पा० । २० धवश्चैवानिलो नल इति पा० । २१ प्रभावश्च इति पा० ।

र्त्तिताः ॥ आपस्य पुत्रो वैतण्डयः श्रमः शान्तो ध्वनिस्तथा ॥ १३ ॥ ध्रुवस्य[1] पुत्रो भगवान् कालो लोकप्रकाशनः ॥ सोमस्य भगवान्वर्चा धरस्य द्रविणः सुतः ॥ १४ ॥ मनोजवो[2]ऽनिलस्यासीदविज्ञातगतिस्तथा ॥ कुमारो ह्यनलस्यासीत्सेनापतिरिति स्मृतः ॥ १५ ॥ देवलो भगवान्योगी प्रत्यूषस्याभवत्सुतः ॥ विश्वकर्मा प्रभासस्य शिल्पकर्त्ता[3] प्रजापतिः ॥ १६ ॥ अदितिर्दितिर्दनुस्तद्वदरिष्टा सुरसा तथा ॥ सुरभिर्विनता चैव ताम्रा क्रोधवशा[4] त्विरा ॥ १७ ॥ कद्रुर्मुनिश्च धर्मज्ञा तत्पुत्रान्वै निबोधत ॥ अंशो धाता भगस्त्वष्टा मित्रोऽथ वरुणोऽर्यमा ॥ १८ ॥ विवस्वान् सविता पूषा ह्यंशुमान्विष्णुरेव च ॥ तुषिता नाम ते पूर्वं चाक्षुषस्यान्तरे मनोः ॥ १९ ॥ वैवस्वतेऽन्तरे प्रोक्ता आदित्याश्चादितेः[5] सुताः ॥ दितिः पुत्रद्वयं लेभे कश्यपाद्बलगर्वितम्[6] ॥ २० ॥ हिरण्यकशिपुं ज्येष्ठं हिरण्याक्षं तथानुजम्[7] ॥ हिरण्यकशिपुर्दैत्यो महाबलपराक्रमः ॥ २१ ॥ आराध्य तपसा देवं ब्रह्माणं परमेश्वरम्[8] ॥ दृष्ट्वा लेभे वरान्दिव्यांस्तुत्वासौ विविधैः स्तवैः ॥ २२ ॥ अथ तस्य बलाद्देवाः सर्वे एव महर्षयः[9] ॥ बाधितास्ताडिता जग्मुर्देवदेवं पितामहम् ॥ २३ ॥ शरण्यं शरणं देवं शम्भुं सर्वजगन्मयम् ॥ ब्रह्माणं लोककर्त्तारं त्रातारं पुरुषं परम् ॥ २४ ॥ कूटस्थं जगतामेकं पुराणं पुरुषोत्तमम् ॥ स याचितो देववरैर्मुनिभिश्च[10] मुनीश्वराः ॥ २५ ॥ सर्वदेवहितार्थाय जगाम कमलासनः ॥ संस्तूयमानः प्रणतैर्मुनीन्द्रैरमरैरपि ॥ २६ ॥ क्षीरोदस्योत्तरं कूलं[11] यत्रास्ते हरिरीश्वरः ॥ दृष्ट्वा देवं जगद्योनिं विष्णुं विश्वगुरुं शिवम्[12] ॥ २७ ॥ ववन्दे चरणौ[13] मूर्ध्ना कृताञ्जलिरभाषत ॥ ब्रह्मोवाच ॥ त्वं गतिः सर्वभूतानामनन्तोऽस्यखिलात्मकः ॥ २८ ॥ व्यापी सर्वामरवपुर्महायोगी सनातनः ॥ त्वमात्मा सर्वभूतानां प्रधानप्रकृतिः[14] परा ॥ २९ ॥ वैराग्यैश्वर्यनिरतो वागतीतो निरञ्जनः ॥ त्वं कर्त्ता चैव भर्त्ता[15] च निहन्ता च सुरद्विषाम् ॥ ३० ॥ त्रातुमर्हस्यनन्तेश त्रातासि परमेश्वर ॥ इत्थं स विष्णु

---

१ धवस्य इति पा० । २ पुरोजव इति पा० । ३ शिल्पकर्मा । ४ क्रोधवशाद्विरा इति पा० । ५ ह्यादित्या अदितेः सुता इति पा० । ६ बलसंयुतमिति पा० । ७ तथापरमिति, चतुर्जयमिति, च पा० । ८ परमेष्ठिनमिति पा० । ९ सुरर्षय इति, सर्वेवै परमर्षयः इति च पा० । १० देवदेवैरिति, मुनिवरैः इति च पा० । ११ तीरं । १२ हरिम् । १३ वरदं । १४ प्रधानपुरुषं परम् प्रधानं प्रकृतिरिति, प्रधानपुरुषं परम् इति च पा० । १५ हर्ता ।

भगवान् ब्रह्मणा सम्प्रबोधितः ॥३१॥ प्रोवाचोन्निद्रपद्माक्षः पीतवासाः सुरान्द्विजां[1]॥किमर्थं सुमहावीर्याः सप्रजापतिकाः सुराः ॥३२॥
इमं देशमनुप्राप्ताः किं वा कार्यं करोमि वः ॥ देवा ऊचुः ॥ हिरण्यकशिपुर्नाम ब्रह्मणो वरदर्पितः ॥ ३३ ॥ बाधते भगवन्दैत्यो देवान्
सर्वान् सहर्षिभिः ॥ अवध्यः सर्वभूतानां त्वामृते पुरुषोत्तमम् ॥ ३४ ॥ हन्तुमर्हसि सर्वेषां त्राता[2]सि त्वं जगन्मय ॥ श्रुत्वा तद्देवतैरुक्तं
स विष्णुर्लोकभा[3]वनः ॥३५॥ वधाय दैत्यमुख्यस्य सोऽसृजत्पुरुषं स्वयम् ॥ मेरु[4]पर्वतवर्ष्माणं घोररूपं भयानकम् ॥ ३६॥ शंखचक्रगदा
पाणिं तं प्राह गरुडध्वजः ॥ हत्वा तं दैत्य[5]राजानं हिरण्यकशिपुं पुनः ॥३७॥ इमं देशं समागन्तुं क्षिप्रमर्हसि पौरुषात् ॥ निशम्य वैष्णवं
वाक्यं प्रणम्य पुरुषोत्तमम् ॥ ३८ ॥ महापुरुषमव्यक्तं ययौ दैत्यमहापुरम् ॥ विमुञ्चन् भैरवं नादं शङ्खचक्रगदाधरः ॥ ३९ ॥ आरुह्य
गरुडं देवो महामेरुरिवापरः ॥ आकर्ण्य दैत्यप्रवरा महामेघरवोपमम् ॥ ४० ॥ स[6]मं च चक्रिरे नादं तथा दैत्यपतेर्भयात् ॥ असुरा
ऊचुः ॥ कश्चिदागच्छति महान् पुरुषो देव[7]नोदितः ॥ ४१ ॥ विमुञ्चन् भैरवं नादं तं जानीमो जनार्दनम् ॥ ततः सहासुरवरैर्हिरण्य
कशिपुः स्वयम् ॥ ४२ ॥ सन्नद्धैः सायुधैः पुत्रैः सप्रह्ला[8]दैस्तदा ययौ ॥ दृष्ट्वा तं गरुडारूढं सूर्यकोटिसमप्रभम् ॥ ४३ ॥ पुरुषं पर्वता
कारं नारायणमिवापरम् ॥ दुद्रुवुः केचिदन्योन्यमूचुः सम्भ्रान्तलोचनाः ॥ ४४ ॥ अ[10]यं स देवो देवानां गोप्ता नारायणो रिपुः ॥
अस्माकमव्ययो नूनं तत्सुतो वा समागतः ॥ ४५ ॥ इत्युक्त्वा शस्त्रा[11]णि ससृजुः पुरुषाय ते ॥ स तानि चाक्षतो देवो
नाशयामास लीलया ॥ ४६ ॥ हिरण्य[12]कशिपोः पुत्राश्चत्वारः प्रथितौजसः ॥ पु[13]त्रं नारायणोद्भूतं युयुधुर्मेघनिःस्वनाः ॥ ४७ ॥
प्रह्लादश्चानुह्लादश्च संह्लादो ह्लाद एव च ॥ प्रह्लादः प्राहिणोद्ब्राह्ममनुह्लादोऽथ वैष्णवम् ॥ ४८ ॥ संह्लादश्चापि कौमारमाग्नेयं
ह्लाद एव च ॥ तानि तं पुरुषं प्राप्य चत्वार्यस्त्राणि वैष्णवम् ॥ ४९ ॥ न शेकुश्चा[14]लितुं विष्णुं वासुदेवं यथातथ[15]म् ॥ अथासौ

१ सुरार्चित इति पा० । २ त्वं त्रातासीति । ३ पावनः । ४ मेरुपर्वतसंकाशं । ५ दैत्यराजमिति साधु । ६ समाचचक्षिरे इति पा० । ७ देवचोदितः । ८ प्रह्लादाद्यैरिति पा० । ९ तु गरुडासीनमिति पा० । १० देवोत्रभगवान् । ११ तानि चाशेषतो देव इति, तांस्तु सचाक्षतो देव इति पा० । १२ तदा हिरण्यकशिपोरिति पा० । १३ पुत्रा नारायणसुतं इति पा० । १४ बाधितुमिति पा० । १५ यथाबलात् इति पा० ।

चतुरः पुत्रान्महाबाहुर्महाबलः ॥ ५० ॥ प्रगृह्य पादेषु करैश्चिक्षेप च ननाद च ॥ विमुक्तेष्वथ पुत्रेषु हिरण्यकशिपुः स्वयम् ॥ ५१ ॥ पादेन ताडयामास वेगेनोरसि तं बली ॥ स तेन पीडितोऽत्यर्थं गरुडेन सहानुगः ॥ ५२ ॥ अदृश्यः प्रययौ तूर्णं यत्र नारायणः प्रभुः ॥ गत्वा विज्ञापयामास प्रवृत्तमखिलं तदा ॥ ५३ ॥ सञ्चिन्त्य मनसा देवः सर्वज्ञानमयोऽमलः ॥ नरस्यार्द्धतनुं कृत्वा सिंहस्यार्द्धतनुं तथा ॥ ५४ ॥ नृसिंहवपुर[3]व्यक्तो हिरण्यकशिपोः पुरे ॥ आविर्बभूव सहसा मोहयन्दैत्यदानवान् ॥ ५५ ॥ दंष्ट्राकरालो योगात्मा युगान्तदहनोपमः ॥ समारुह्यात्मनः शक्तिं सर्वसंहारकारिकाम् ॥ ५६ ॥ भाति नारायणोऽनन्तो यथा मध्यन्दिने रविः ॥ दृष्ट्वा नृसिंहं पुरुषं प्रह्लादं ज्येष्ठपुत्रकम् ॥ ५७ ॥ वधाय प्रेरयामास नरसिंहस्य सोऽसुरः ॥ इमं नृसिंहं पुरुषं पूर्वस्मादूनशक्तिकम् ॥ ५८ ॥ सहैव तेऽनुजैः सर्वैर्नाशयाशु मयेरितः ॥ स तन्नियोगादसुरः प्रह्लादो विष्णुमव्ययम् ॥ ५९ ॥ युयुधे सर्वयत्नेन नरसिंहेन निर्जितः ॥ ततः संमोहितो दैत्यो हिरण्याक्षस्तदानुजः ॥ ६० ॥ ध्यात्वा पशुपतेरस्त्रं ससर्ज च ननाद च ॥ तस्य देवाधिदेवस्य विष्णोरमिततेजसः ॥ ६१ ॥ न हानिमकरोदस्त्रं तथा देवस्य शूलिनः ॥ दृष्ट्वा पराहतं त्वस्त्रं प्रह्लादो भाग्यगौरवात् ॥ ६२ ॥ मेने सर्वात्मकं देवं वासुदेवं सनातनम् ॥ सन्त्यज्य सर्वशस्त्राणि सत्त्वयुक्तेन चेतसा ॥ ६३ ॥ ननाम शिरसा देवं योगिनां हृदयेशयम् ॥ स्तुत्वा नारायणं स्तोत्रैः ऋग्यजुःसामसम्भवैः ॥ ६४ ॥ निवार्य पितरं भ्रातॄन् हिरण्याक्षं तदाब्रवीत् ॥ अयं नारायणोऽनन्तः शाश्वतो भगवानजः ॥ ६५ ॥ पुराणः[12] पुरुषो देवो महायोगी जगन्मयः ॥ अयं धाता विधाता च स्वयंज्योतिर्निरञ्जनः ॥ ६६ ॥ प्रधानं पुरुषं तत्त्वं मूलप्रकृति[13]रव्ययां[14] ॥ ईश्वरः सर्वभूतानामन्तर्यामी गुणातिगः ॥ ६७ ॥ गच्छध्वमेनं शरणं विष्णुमव्यक्तमव्ययम्[15] ॥ एवमुक्त[16] सुदुर्बुद्धिर्हिरण्यकशिपुः स्वयम् ॥ ६८ ॥ प्रोवाच पुत्रमत्यर्थं मोहितो विष्णुमायया ॥ अयं सर्वात्मना वध्यो नृसिंहोऽल्पपराक्रमः ॥ ६९ ॥

---

१ यथाशुगः, सहाच्युतः इति च पा० । २ तदा । ३ तनु । ४ दैत्यपुङ्गवानिति पा० । ५ कारणम् । ६ देवो । ७ पूर्वस्मादुरशक्तिकामिति, दुग्रशक्तिकम् इति च पा० । ८ तनुजैः । ९ यत्नतः । १० संचोदितः इति पा० । ११ तेजसा । १२ प्रधानपुरुष इति पा० । १३ अव्यय इति पा० । १४ मात्रानामिति पा० । १५ मच्युतम् । १६ एवमुक्तः इति पा० ।

समागतोऽस्मद्भवनमिदानीं कालचोदितः ॥ विहस्य पितरं पुत्रो वचः प्राह महामतिः ॥ ७० ॥ मा निंन्दस्वैनमीशानं भूतानामेकमव्ययम् ॥ कथं देवो महादेवः शाश्वतः कालवर्जितः ॥ ७१ ॥ कालेन हन्यते विष्णुः कालात्मा कालरूपधृक् ॥ ततः सुवर्णकशिपुर्दुरात्मा कालचोदितः ॥ ७२ ॥ निवारितोऽपि पुत्रेण युयुधे हरिमव्ययम् ॥ संरक्तनयनोऽनन्तो हिरण्यनयनाग्रजम् ॥ ७३ ॥ नखैर्विदारयामास प्रह्लादस्यैव पश्यतः ॥ हते हिरण्यकशिपौ हिरण्याक्षो महाबलः ॥ ७४ ॥ विसृज्य पुत्रं प्रह्लादं दुद्रुवे भयविह्वलः ॥ अनुह्लादादयः पुत्रा अन्ये च शतशोऽसुराः ॥ ७५ ॥ नृसिंहदेहसम्भूतैः सिंहैर्नीता यमक्षयम् ॥ ततः संहृत्य तद्रूपं हरिर्नारायणः प्रभुः ॥ ७६ ॥ स्वमेव परमं रूपं ययौ नारायणाह्वयम् ॥ गते नारायणे दैत्यः प्रह्लादोऽसुरसत्तमः ॥ ७७ ॥ अभिषेकेण युक्तेन हिरण्याक्षमयोजयत् ॥ स बाधयामास सुरान्रणे जित्वा मुनीनपि ॥ ७८ ॥ लब्ध्वान्धकं महापुत्रं तपसाराध्य शंकरम् ॥ देवाञ्जित्वा सदेवेन्द्रान् क्षुब्ध्वा च धरणीमिमाम् ॥ ७९ ॥ नीत्वा रसातलं चक्रे वेदान्वै निष्प्रभांस्तथा ॥ ततः सब्रह्मका देवाः परिम्लानमुखश्रियः ॥ ८० ॥ गत्वा विज्ञापयामासुर्विष्णवे हरिमन्दिरम् ॥ स चिन्तयित्वा विश्वात्मा तद्वधोपायमव्ययः ॥ ८१ ॥ सर्वदेवमयं शुभ्रं वाराहञ्च पुरा दधे ॥ गत्वा हिरण्यनयनं हत्वा तं पुरुषोत्तमः ॥ ८२ ॥ दंष्ट्रयोद्धारयामास कल्पादौ धरणीमिमाम् ॥ त्यक्त्वा वाराहसंस्थानं संस्थाप्यैवं सुरद्विषः ॥ ८३ ॥ स्वामेव प्रकृतिं दिव्यां ययौ विष्णुः परं पदम् ॥ तस्मिन् हतेऽमरारिपौ प्रह्लादो विष्णुतत्परः ॥ ८४ ॥ अपालयत्स्वकं राज्यं भावं त्यक्त्वा तदासुरम् ॥ यंजते विधिवद्देवान्विष्णोराराधने रतः ॥८५॥ निःसपत्नं सदा राज्यं तस्यासीद्विष्णुवैभवात् ॥ ततः कदाचिदसुरो ब्राह्मणं गृहमागतम् ॥ ८६ ॥ नं च सम्भाषयामास देवानाञ्चैव मायया ॥ स तेन तापसोऽत्यर्थं मोहितेना

---

१ निन्दस्व इति, आर्षमात्मनेपदम् । २ ततो हिरण्य । ३ प्रोवाच विधिनोदित इति पा० । ४ निराकृतो । ५ युयोध । ६ भूत्वा । ७ महासुरः । ८ यमालयम् इति पा० । यमक्षयं यमस्य क्षयमालयम्, क्षिधातोर्वा सार्थकादधिकरणे अच् । ९ देवः । १० दैत्यसत्तमः । ११ सेन्द्रादीन् बद्धा इति पा० । १२ वन्दीमिन्दीवरप्रभामिति पा० । १३ परिभ्रष्ट । १४ सर्वात्मा । १५ वेदमयं । १६ वाराहं वपुरादधे इति पा० । १७ दंष्ट्रयोर्धारयामास इति, दंष्ट्रया धारयामास इति च पा० । १८ संस्थाप्य च सुरद्विष इति पा० । १९ इयाज विधिना देवान् इति पा० । २० तापसं नार्चयामासेति पा० ।

वमानितः ॥ ८७ ॥ शशापासुरराजानं क्रोधसंरक्तलोचनः ॥ यत्तद्वलं समाश्रित्य ब्राह्मणानवमन्यसे ॥ ८८ ॥ सा शक्तिर्वैष्णवी दिव्या विनाशन्ते गमिष्यति ॥ इत्युक्त्वा प्रययौ तूर्णं प्रह्लादस्य गृहाद्द्विजः ॥ ८९ ॥ मुमोह राज्यसंसक्तः सोऽपि शापबलात्ततः ॥ बाधयामास विप्रेन्द्रान्न विवेद जनार्दनम् ॥ ९० ॥ पितुर्वधमनुस्मृत्य क्रोधं चक्रे हरिं प्रति ॥ तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् ॥ ९१ ॥ नारायणस्य देवस्य प्रह्लादस्यामरद्विषः ॥ कृत्वा स सुमहद्युद्धं विष्णुना तेन निर्जितः ॥ ९२ ॥ पूर्वसंस्कारमाहात्म्यात्परस्मिन् पुरुषे हरौ ॥ सञ्जातं तस्य विज्ञानं शरण्यं शरणं ययौ ॥ ९३ ॥ ततःप्रभृति दैत्येन्द्रो ह्यनन्यां भक्तिमुद्वहन् ॥ नारायणे महायोगमवाप पुरुषोत्तमे ॥ ९४ ॥ हिरण्यकशिपोः पुत्रे योगसंसक्तचेतसि ॥ अवाप तन्महद्राज्यमन्धकोऽसुरपुंगवः ॥ ९५ ॥ हिरण्यनेत्रतनयः शम्भोर्देहसमुद्भवः ॥ मन्दरस्थामुमां देवीं चकमे पर्वतात्मजाम् ॥ ९६ ॥ पुरा दारुवने पुण्ये मुनयो गृहमेधिनः ॥ ईश्वराराधनार्थाय तपश्चेरुः सहस्रशः ॥ ९७ ॥ ततः कदाचिन्महती कालयोगेन दुस्तरा ॥ अनावृष्टिरतीवोग्रा ह्यासीद्भूतविनाशिनी ॥ ९८ ॥ समेत्य सर्वे मुनयो गौतमं तपसां निधिम् ॥ अयाचन्त क्षुधाविष्टा आहारं प्राणधारणम् ॥ ॥ ९९ ॥ स तेभ्यः प्रददावन्नं मृष्टं बहुतरं बुधः ॥ सर्वे बुभुजिरे विप्रा निर्विशंकेन चेतसा ॥ १०० ॥ गते च द्वादशे वर्षे कल्पान्त इव शांकरी ॥ बभूव वृष्टिर्महती यथापूर्वमभूज्जगत् ॥ १ ॥ ततः सर्वे मुनिवराः समामन्त्र्य परस्परम् ॥ महर्षिं गौतमं प्रोचुर्गच्छाम इति वेगतः ॥ २ ॥ निवारयामास च तान् कञ्चित्कालं यथासुखम् ॥ उषित्वा मद्गृहेऽवश्यं गच्छध्वमिति पण्डिताः ॥ ३ ॥ ततो मायामयीं सृष्ट्वा कृष्णां गां सर्व एव ते ॥ समीपं प्रापयामासुर्गौतमस्य महात्मनः ॥ ४ ॥ सोऽनुवीक्ष्य कृपाविष्टस्तस्याः संरक्षणोत्सुकः ॥ गोष्ठे तां बन्धयामास स्पृष्टमात्रा ममार सा ॥ ५ ॥ स शोकेनाभिसन्ततः कार्याकार्यं महामुनिः ॥ न पश्यति स्म सहसा तमृषिं मुनयोऽब्रुवन् ॥ ६ ॥ गोवंध्येयं द्विजश्रेष्ठ यावत्तव शरीरगा ॥ तावत्तेऽन्नं

---

१ असुरराजं तमिति पा० । २ यद्वलञ्च इति पा० । ३ भक्तिरिति पा० । ४ यज्यबलाकृतः इति पा० । ५ ययौ स शरणं हरेः । ६ महता इति पा० । ७ ह्याहारमिति पा । ८ यथापूर्णमभूदिति पा० । ९ कृशाङ्गीमिति, कृशांगामिति पा० । १० गोवधोयं इति पा० । गोवध्येयं-गोः वध्या हत्या, क्यपि भावे हनो वधादेश आर्षः ।

न भोक्तव्यं गच्छामो वयमेव हि ॥ ७ ॥ तेनां[1]तोऽनुमताः सन्तो देवदारुवनं शुभम् ॥ जग्मुः पापवशन्नीत्वा[2] तपश्चर्तुं यथा पुरा ॥ ८ ॥ स तेषां मायया जातां[3] गोवध्यां गौतमो मुनिः ॥ केनापि हेतुना ज्ञात्वा शशापातीवकोपँतः[4] ॥ ९ ॥ भविष्यन्ति[5] त्रयीबाह्या महापातकिभिः समाः ॥ बहुँशस्ते[6] तथा शापाज्जायमानाः पुनः पुनः ॥ १० ॥ सर्वे संप्राप्य देवेशं शङ्करं विष्णुमव्ययम् ॥ अस्तुवन् लौकिकैः स्तोत्रैरुच्छिँष्टा[7] इव सर्वगौ ॥ ११ ॥ देवँदेवौ[8] महादेवौ भक्तानामार्त्तिनाशनौ ॥ कामवृत्त्या[9] महायोगौ पापान्नस्त्रातुमर्हतः ॥ १२ ॥ तदा पार्श्वस्थितं विष्णुं संप्रेक्ष्य वृषभध्वजः ॥ किमेतेषां भवेत्कार्यं प्राह पुण्यैषिणांमिति[10] ॥ १३ ॥ ततः स भगवान्विष्णुः शरण्यो भक्तवत्सलः ॥ गोपतिं प्राह विप्रेन्द्रानालोक्य प्रणँतान्[11] हरिः ॥ १४ ॥ न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शङ्कर ॥ सङ्गच्छते महादेव धर्मो वेदाद्विनिर्गतः ... विभो[12] ॥ १५ ॥ तथापि भक्तँ[13]वात्सल्याद्रक्षितव्या महेश्वर ॥ अस्माभिः सर्व एवैते गन्तारो नरकानपि ॥ १६ ॥ तस्माद्धि[14] वेदबाह्यानां रक्षणार्थाय पापिनाम् ॥ विमोहनाय शास्त्राणि करिष्यामो[15] वृषध्वज ॥ १७ ॥ एवं सम्बोधितो[16] रुद्रो माधवेन[17] मुरारिणा ॥ चकार मोहशास्त्राणि केशवोऽपि शिवेरितः ॥ १८ ॥ कापालं नाकुलं[18] वामं भैरवं पूर्वपश्चिमम् ॥ पञ्चरात्रं पाशुपतं[19] तथान्यानि सहस्रशः ॥ १९ ॥ सृष्ट्वा तानाहं[20] निर्वेदाः कुर्वाणाः शास्त्रचोदितम् ॥ पतन्तो नरके घोरे बहून् कल्पान् पुनः पुनः ॥ २० ॥ जायन्तो[21] मानुषे लोके क्षीणपापचयास्ततः ॥ ईश्वराराधनबलाद्गच्छध्वं सुकृताङ्गतिम् ॥ २१ ॥ वर्त्तध्वं मत्प्रसादेन नान्यथा निष्कृतिर्हि[22] वः ॥ एवमीश्वरविष्णुभ्यां चोदितास्ते महर्षयः ॥ २२ ॥ आदेशं प्रत्यपद्यन्त शिवस्या[23]सुरविद्विषः ॥ चक्रुस्तेऽन्यानि शास्त्राणि तत्र तत्र रताः पुनः ॥ २३ ॥

---

१ तेन तेन युताः इति पा० एवमुक्त्वा मुनिवरं गौतमं तपसां निधिमिति पा० । २ नीता इति पा० । ३ जातं गोवधं इति । ४ कोपन इति पा० । ५ भविष्यथ त्रयी बाह्य इति । ६ बभूवुः इति । ७ रुच्छिष्टैरिव सर्वगैरिति पा० । ८ ऊचुर्देवौ इति ! ९ का नो वृत्तिर्महाभागौ विप्रान्नस्त्रातुमर्हथ इति । १० पुण्यैषिणोमिति इति । ११ प्रणतो हरिरिति पा० । १२ विनिर्ययौ इति पा० । १३ भक्ता इति पा० । १४ तस्माद्वै इति पा० । १५ करिष्यावो इति पा० । १६ संभावितो इति । १७ माधवेनासुरारिणा इति । १८ लाकुलमिति पा० । १९ तथा कालं इति । २० तावूचतुरिति, तान्याह इति पा० । २१ जायन्ते इति, जायन्त इत्यत्रशत्रर्थः । २२ निष्कृतिरिति पा० । २३ शिरसा सुरविद्विषः इति पा० ।

शिष्यानध्यापयामासुर्दर्शयित्वा फलानि च ॥ मोहापसदनं लोकमवतीर्य्यं महीतले ॥ २४ ॥ चकार शंकरो भिक्षां हितायैषां द्विजैः सह ॥ कपालमालाभरणः प्रेतभस्मावगुण्ठितः ॥ २५ ॥ विमोहयँल्लोकमिमं जटामण्डलमण्डितः ॥ निक्षिप्य पार्वतीन्देवीं विष्णावमिततेजसि ॥ २६ ॥ नियोज्य भगवान्रुद्रो भैरवं दुष्टनिग्रहे ॥ दत्त्वा नारायणे देव्या[2]मन्दनं कुलनन्दनम् ॥ २७ ॥ संस्थाप्य तत्र च गणान्देवानिन्द्रपुरोगमान् ॥ प्रस्थिते च महादेवे विष्णुर्विश्वतनुः स्वयम् ॥ २८ ॥ स्त्रीरूपधारी नियतं सेवते स्म महेश्वरीम् ॥ ब्रह्मा हुताशनः शक्रो यमोऽन्ये सुरपुंगवाः ॥ २९ ॥ सिषेविरे महादेवीं स्त्रीरूपं शो[3]भनं गताः ॥ नन्दीश्वरश्च भगवान् शम्भोरत्यन्तवल्लभः ॥ १३० ॥ द्वारदेशे गणाध्यक्षो यथा[4]पूर्वमतिष्ठत ॥ एतस्मिन्नन्तरे दैत्यो ह्यन्धको नाम दुर्मतिः ॥ ३१ ॥ आहर्तुकामो गिरिजामाजगामाथ मन्दरम् ॥ सम्प्राप्तमन्धकं दृष्ट्वा शंकरः काल[5]भैरवः ॥ ३२ ॥ न्यषेधयदमेयात्मा कालरूपधरो हरः ॥ तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् ॥ ३३ ॥ शूलेनोरसि तं दैत्यमाजघान वृषध्वजः ॥ ततः सहस्रशो दैत्या[6]ः सहस्रान्धकसंज्ञिताः ॥ ३४ ॥ नन्दी[7]श्वरादयो दैत्यैरन्धकैरभिनिर्जिताः ॥ घण्टाकर्णो मेघनादश्चण्डेशश्चण्डतापनः ॥ ३५ ॥ विनायको मेघवाहः सोमनन्दी च वैद्युतः ॥ सर्वे[8]ऽन्धकं दैत्यवरं सम्प्राप्यातिबलान्विताः ॥ ३६ ॥ युयुधुः शूलशक्त्यृष्टिगिरिकूटपरश्वधैः ॥ भ्रामयित्वा तु हस्ताभ्यां गृहीत्वा चरणद्वय ॥ ३७ ॥ दैत्येन्द्रेणातिबलिना क्षिप्तास्ते शतयोजनम् ॥ ततोऽन्धकनि[9]सृष्टा ये शतशोऽथ सहस्रशः ॥ ३८ ॥ कालसूर्यप्रतीकाशा भैरवं[10]चाभिदुद्रुवुः ॥ हा[11]हेति शब्दः सुमहान् बभूवातिभयंकरः ॥ ३९ ॥ युयुधे भैरवो देवं[12]ः शूलमादाय भैरवम्[13] ॥ दृष्ट्वान्धकानां सुबलं दुर्जयन्निर्जितो हरः ॥ १४० ॥ जगाम

---

१ मोहयन्त इमं लोकामिति, मोहाय स इमं लोकामिति च पा० । २ देवीं नन्दिनमिति पा० । ३ तत्र संगताः इति पा० । ४ यथावत्समुपस्थितः इति पा० । ५ कालचोदित इति पा० । ६ दैत्यः ससर्जान्धकसंज्ञितानिति पा० । ७ नंदीशानादयश्चाथचंडीशश्चण्डतापनः । विनायकोमेघनादः इति, नन्दिकेशादयो इति च पा० । ८ विशां पतिरिति पा० । ९ निसृष्टास्ते इति पा० । १० भैरवन्त्वाभिदुद्रुवुरितिपा० । ११ जहीति इति पा० । १२ रुद्र इति पा० । १३ भीषणमिति पा० ।

शरणन्देवं वासुदेवमजं विभुम् ॥ सोऽसृजद्भगवान्विष्णुर्देवीनां शतमुत्तमम् ॥ ४१ ॥ देवीपार्श्वेस्थितो देवो विनाशाय सुरद्विषाम् ॥ तदान्धकसहस्रन्तु देवीभिर्यमसादनम् ॥ ४२ ॥ नीतं केशवमाहात्म्याल्लीलयैव रणाजिरे ॥ दृष्ट्वा पराहतं सैन्यमन्धकोऽपि महासुरः ॥ ४३ ॥ पराङ्मुखो रणात्तस्मात्पलायत महाजवः ॥ ततः क्रीडां महादेवः कृत्वा द्वादशवार्षिकीम् ॥ ४४ ॥ हिताय भक्तलोकानामाजगामाथ मन्दरम् ॥ सम्प्राप्तमीश्वरं ज्ञात्वा सर्वे एव गणेश्वराः ॥ ४५ ॥ समागम्योपतिष्ठन्त भानुमन्तमिव द्विजाः ॥ प्रविश्य भवनं पुण्यमयुक्तानां दुरासदम् ॥ ४६ ॥ ददर्श नन्दिनन्देवं भैरवं केशवं शिवः ॥ प्रणामप्रवणं देवं सोऽनुगृह्याथ नान्दिनम् ॥ ४७ ॥ प्रीत्यैनं पूर्वमीशानः केशवं परिषस्वजे ॥ दृष्ट्वां देवो महादेवीं प्रीतिविस्फारितेक्षणाम् ॥ ४८ ॥ प्रणतः शिरसा तस्याः पादयोरीश्वरस्य च ॥ न्यवेदयज्जयन्तस्मै शङ्करायाथ शङ्करः ॥४९॥ भैरवो विष्णुमाहात्म्यम्प्रतीतः पार्श्वगोऽभवत् ॥ श्रुत्वा तं विजयं शम्भुर्विक्रमङ्केशवस्य च ॥ १५० ॥ समास्ते भगवानीशो देव्या सह वरासने ॥ ततो देवगणाः सर्वे मरीचिप्रमुखा द्विजाः ॥५१॥ आजग्मुर्मन्दरन्द्रष्टुं देवदेवं त्रिलोचनम् ॥ येन तद्विजितं पूर्वन्देवीनां शतमुत्तमम् ॥ ५२ ॥ समागतन्दैत्यसैन्यमशिदर्शनकांक्षया ॥ दृष्ट्वा वरासनासीनन्देव्या चंद्रविभूषणम् ॥५३॥ प्रणेमुरादराद्देव्यो गायन्ति स्मातिलालसाः ॥ प्रणेमुर्गिरिजां देवीं वामपार्श्वे पिनाकिनः ॥ ५४ ॥ देवासनगतान्देवीं नारायणंमनोमयीम् ॥ दृष्ट्वा सिंहासनासीनं देव्यो नारायणं तथा ॥ ५५ ॥ प्रणम्य देवमीशानं पृष्टवत्यो वराङ्गनाः ॥ कन्या ऊचुः ॥ कस्त्वं विभ्राजसे कान्त्या केयम्बाला रविप्रभा ॥ ५६ ॥ को न्वयम्भाति वपुषा पङ्कजायतलोचनः ॥ निशम्य तासां वचनं वृषेन्द्रवरवाहनः ॥ ५७ ॥ व्याजहार महायोगी भूताधिपतिरव्ययः ॥ अयन्नारायणो गौरी जगन्माता सनातनः ॥ ५८ ॥ विभज्य संस्तितो देवः

१ सदनमेव सादनं, स्वार्थे अण् । २ लोके भक्तानामाजगमाथ मन्दरामिति पा० । ३ भुवनमिति पा० । ४ आम्नायमूर्द्धमीशान इति पा० । ५ दृष्ट्वा देवी महादेवं प्रीतिविस्फारितेक्षणा इति पा० । ६ नमाम इति पा० । ७ तस्य इति पा० । ८ निवेद्य विजयं तस्मै शंकरायाथ भैरवः इति पा० । ९ प्रणत इति पा० । १० वाञ्छया इति । ११ मनामयम् इति पा० । १२ देव्यानारायणेन च इति पा० । १३ कान्वियम्भाति वपुषा पङ्कजायतलोचना इति, का त्वियं भाति वपुषा इति पा० ।

स्वात्मानं बहुधेश्वरः ॥ न मे विदुः परन्तत्त्वं देव्यांश्च न महर्षयः ॥ ५९ ॥ एकोऽयं वेद विश्वात्मा भवानी विष्णुरेव च ॥ अहं हि निस्पृहः शान्तः केवलो निष्परिग्रहः ॥ १६० ॥ मामेव केशवं प्राहुर्लक्ष्मीं देवीमथाम्बिकाम् ॥ एष धाता विधाता च कारणं कार्यमेव च ॥६१॥ कर्त्ता कारयिता विष्णुर्भुक्तिमुक्तिफलप्रदः॥ भोक्ता पुमानप्रमेयः संहर्त्ता कालरूपधृक् ॥ ६२ ॥ स्रष्टा पाता वासुदेवो विश्वात्मा विश्वतोमुखः ॥ कूटस्थो ह्यक्षरो व्यापी योगी नारायणाऽव्ययः ॥ ६३ ॥ तारकः पुरुषो ह्यात्मा केवलं परमं पदम् ॥ सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना ॥ ६४ ॥ शांता सत्या सदानन्दा परं पदमिति श्रुतिः ॥ अस्यां सर्वमिदञ्जातमत्रैव लयमेष्यति ॥ ६५ ॥ एषैव सर्वभूतानां गतीनामुत्तमा गतिः ॥ तयाहं संगतो देव्या केवलो निष्कलः परः ॥ ६६ ॥ पश्याम्यशेषमेवाहं परमात्मानमव्ययम् ॥ तस्मादनादिमद्वैतं विष्णुमात्मानमीश्वरम् ॥ ६७ ॥ एकमेव विजानीथ ततो यास्यथ निर्वृतिम् ॥ मन्यन्ते विष्णुमव्यक्तमात्मानं श्रद्धयान्विताः ॥ ६८ ॥ ये भिन्नदृष्ट्या चेशानं पूजयन्तो न मे प्रियाः ॥ द्विषन्ति ये जगत्सूतिं मोहिता रौरवादिषु ॥ ६९ ॥ पच्यमाना न मुच्यन्ते कल्पकोटिशतैरपि ॥ तस्मादशेषभूतानां रक्षको विष्णुरव्ययः ॥ १७० ॥ यथावदिह विज्ञाय ध्येयः सर्वापदि प्रभुः ॥ श्रुत्वा भगवतो वाक्यं देवाः सर्वे गणेश्वराः ॥ ७१ ॥ नेमुर्नारायणं देवं देवीं च हिमशैलजाम् ॥ प्रार्थयामासुरीशाने भक्तिं भक्तजनप्रिये ॥ ७२ ॥ भवानीपादयुगले नारायणपदाम्बुजे ॥ ततो नारायणन्देवं गणेशा मातरोऽपि च ॥ ७३ ॥ न पश्यन्ति जगत्सूतिं तदद्भुतमिवाभवत् ॥ तदन्तरे महादैत्यो ह्यन्धको मन्मथान्धकः ॥ ७४ ॥ मोहितो गिरिजां देवीमाहर्तुं गिरिमाययौ ॥ अथानन्तवपुः श्रीमान्योगी नारायणोऽमलः ॥ तत्रैवाविरभूद्दैत्यैर्युद्धाय पुरुषोत्तमः ॥ ७५ ॥ कृत्वाथ पार्श्वे भगवन्तमीशो युद्धाय विष्णुं गणदेवमुख्यैः ॥ शिलादपुत्रेण च मातृकाभिः स कालरुद्रोऽपि जगाम देवः ॥ ७६ ॥ त्रिशूलमादाय कृशानुकल्पं स देवदेवः

---

१ परमेश्वरी । २ देवाख्या इति पा० । ३ देवदेवात्मा इति पा० । ४ निष्क्रियः इति । ५ स्वभक्तानामप्रमेय इति पा० । ६ धाता इति पा० । ७ नारायणः स्वयमिति, नारायणाह्वयः इति च पा० । ८ शान्तानन्दा परासत्या । ९ मेवेदमिति पा० । १० देव्यः सर्वगणेश्वरा इति पा० । ११ कल्पः इति पा० ।

प्रययौ पुरस्तात् ॥ तमन्वयुस्ते गणराजवर्यां जगाम देवोऽपि सहस्रबाहुः ॥ ७७ ॥ रराज मध्ये भगवान् सुराणां विवाहनो वारिजपर्णवर्णः ॥ तदा सुमेरोः शिखराधिरूढस्त्रिलोकदृष्टिर्भगवानिवार्कः ॥ ७८ ॥ जयत्यनादिर्भगवानमेयो हरः सहस्राकृतिराविरासीत् ॥ त्रिशूलपाणिर्गगने सुघोषः पपात देवोपरि पुष्पवृष्टिः ॥ ७९ ॥ समागतं वीक्ष्य गणेशराजं समावृतं दैत्यरिपुं गणेशैः ॥ युयोध शक्रेण समातृकाभिर्गणैरशेषैरमरप्रधानैः ॥ १८० ॥ विजित्य सर्वानपि बाहुवीर्यात्स संयुगे शम्भुरनन्तधामा ॥ समाययौ यत्र स कालरुद्रो विमानमारुह्य विहीनसत्त्वः ॥ ८१ ॥ दृष्ट्वान्धकं समायान्तं भगवान् गरुडध्वजः ॥ व्याजहार महादेवं भैरवं भूतिभूषणम् ॥ ८२ ॥ हन्तुमर्हसि दैत्येशमन्धकं लोककण्टकम् ॥ त्वामृते भगवान् शक्तो हन्ता नान्योऽस्य विद्यते ॥ ८३ ॥ त्वं हर्त्ता सर्वलोकानां कालात्मा ह्यैश्वरी तनुः ॥ स्तूयते विविधैर्मन्त्रैर्वेदविद्भिर्विचक्षणैः ॥ ८४ ॥ स वासुदेवस्य वचो निशम्य भगवान् हरः ॥ निरीक्ष्य विष्णुं हनने दैत्येन्द्रस्य मतिन्दधौ ॥ ८५॥ जगाम देवतानीकं गणानां हर्षवर्द्धनम् ॥ स्तुवन्ति भैरवं देवमन्तरिक्षचरा जनाः ॥ ८६ ॥ जयानन्त महादेव कालमूर्त्ते सनातन ॥ त्वमग्निः सर्वभावानामन्तास्तिष्ठसि सर्वगः ॥ ८७ ॥ त्वमन्तको लोककर्त्ता त्वन्धाता हरिरव्ययः ॥ त्वं ब्रह्मा त्वं महादेवस्त्वन्धाम परमं पदम् ॥ ८८ ॥ ओंकारमूर्तिर्योगात्मा त्रयीनेत्रस्त्रिलोचनः ॥ ॥ महाविभूतिर्विश्वेशो जयानन्तजगत्पते ॥ ८९ ॥ ततः कालाग्निरुद्रोऽसौ गृहीत्वान्धकमीश्वरः ॥ त्रिशूलाग्रेषु विन्यस्य प्रननर्त्त सताङ्गतिः ॥ १९० ॥ दृष्ट्वान्धकं देवगणाः शूलप्रोतं पितामहः ॥ प्रणेमुरीश्वरं देवं भैरवम्भवमोचनम् ॥ ९१ ॥ अस्तुवन्मुनयः सिद्धा जगुर्गन्धर्वकिन्नराः ॥ अन्तरिक्षेऽप्सरःसङ्घा नृत्यन्ति स्म मनोहराः ॥९२॥ संस्थापितोऽथ शूलाग्रे सोऽन्धको दग्धकिल्बिषः ॥ उत्पन्ना

१ वर्गा । २ गोवाहनो । ३ तथा स मेरोः । ४ जयत्यनादिर्भगवानमेय इति, जगत्यनादिरिति पा० । ५ हरिरिति पा० । ६ शम्भुमनन्तधामा । ७ विनाशबुद्धिम् । ८ हन्तुं । ९ स्तुत्वा स विविधैरिति पा० । १० हर्षमुद्वहन्निति पा० । ११ जय देव । १२ सर्वभूतानामन्तश्चरसि नित्यश इति पा० । १३ त्वमेव सर्वलोकानां हर्ता धाता त्वमव्ययः इति, त्वं यज्ञस्त्वंवषट्कार इति च पा० । १४ अकारमूर्तिर्योगात्मा, ओंकारमूर्त्तिरीशात्मा इति च पा० । १५ देवेशजयाशेषजगत्पते इति पा० । १६ अन्तरिक्षेऽप्सरसः सर्वा इति पा० ।

खिलविज्ञानस्तुष्टाव परमेश्वरम् ॥ ९३ ॥ अन्धक उवाच ॥ नमामि मूर्ध्ना भगवंतमेकं समाहिता यं विदुरीशतत्त्वम् ॥ पुरातनं पुण्यमनंतरूपं कालं कविं योगवियोगहेतुम् ॥ ९४ ॥ दंष्ट्राकरालं दिवि नृत्यमानं हुताशवक्त्रं ज्वलनार्करूपम् ॥ सहस्रपादाक्षिशिरोभियुक्तं भवन्तमेकं प्रणमामि रुद्रम् ॥ ९५ ॥ जयादिदेवामरपूजिताङ्घ्रे विभागहीनामलतत्त्वरूप ॥ त्वमग्निरेको बहुधाभिपूज्यो बाह्यादिभेदैरखिलात्मरूपः ॥ ९६ ॥ त्वामेकमाहुः पुरुषं पुराणमादित्यवर्णं तमसः परस्तात् ॥ त्वं पश्यसीदं परिपास्यजस्रं त्वमन्तको योगिगणानुजुष्टः ॥ ९७ ॥ एकोऽन्तरात्मा बहुधा निविष्टो देहेषु देहादिविशेषहीनः ॥ त्वमात्मतत्त्वं परमात्मशब्दं भवन्तमाहुः शिवमेव केचित् ॥ ९८ ॥ त्वमक्षरं ब्रह्म परं पवित्रमानंदरूपं प्रणवाभिधानम् ॥ त्वमीश्वरो वेदविदां प्रसिद्धः स्वायम्भुवोऽशेषविशेषहीनः ॥ ९९ ॥ त्वमिंद्ररूपो वरुणोऽग्निरूपो हंसः प्राणो मृत्युरंतोऽसि यज्ञः ॥ प्रजापतिर्भगवानेकरूपो नीलग्रीवः स्तूयसे वेदविद्भिः ॥२००॥ नारायणस्त्वं जगतामनादिः पितामहस्त्वं प्रपितामहश्च ॥ वेदांतगुह्योपनिषत्सु गीतः सदाशिवस्त्वं परमेश्वरोऽसि ॥ १ ॥ नमः परस्मै तमसः परस्तात्परात्मने पञ्चनवांतराय[12] ॥ त्रिशक्त्यतीताय निरञ्जनाय सहस्रशक्त्यासनसंस्थिताय ॥ २ ॥ त्रिमूर्तयेऽनंतपदात्ममूर्तये जगन्निवासाय जगन्मयाय ॥ नमो[13] जनानां हृदि संस्थिताय फणीन्द्रहाराय नमोऽस्तु तुभ्यम् ॥ ३ ॥ मुनीन्द्रसिद्धार्चितपादपद्म ऐश्वर्यधर्मासनसंस्थिताय ॥ नमः परान्ताय भवोद्भवाय सहस्रचन्द्रार्कसहस्रमूर्ते ॥ ४ ॥ नमोऽस्तु सोमाय सुमध्यमाय नमोऽस्तु देवाय[15] हिरण्यबाहो ॥ नमोऽग्निचंद्रार्कविलोचनाय नमोऽम्बिकायाः पतये मृडाय॥५॥ नमोऽस्तु गुह्याय गुहांतराय वेदान्तविज्ञानविनिश्चिताय ॥

---

१ पुरुषोत्तमामिति पा० । २ दंष्ट्राकरालश्च विनर्त्तमानामिति पा० । नृत्यमानामित्यत्र आर्षमात्मनेपदम् । ३ अनुसृष्टइति पा० । ४ वेदादि । ५ परमात्मभूतामिति पा० । ६ विष्णुम् इति पा० । ७ वेदपदेष्वसिद्ध इति पा० । ८ ऽधियज्ञ इति, मृत्युमन्तासि यज्ञ इति पा० । ९ भगवानेकरुद्र इति पा० । १० जगतामथादिरिति पा० । ११ नमः परस्तात्तमसः परस्मै परात्मने पञ्चपरांतयेश । १२ पञ्चनवान्तराय–पञ्च नव च चतुर्दश इत्यर्थः । अन्तराणि अवकाशाः यस्य तथोक्ताय चतुर्दशलोकव्यापिने इत्यर्थः । पञ्चपदान्तराय इति, पञ्चपरान्तराय इति, नमः परस्मै च परान्तराय इति च पा० । १३ नमो ललाटार्पितलोचनाय नमो जनानां हृदिसंस्थिताय । फणीन्द्रहाराय नमोस्तु तुभ्यं मुनीन्द्रसिद्धार्चितपादपद्म । ऐश्वर्यधर्मासनसंस्थिताय नमः परान्ताय भवोद्भवाय । सहस्रचंद्रार्कसहस्रमूर्तये नमोऽग्निचन्द्रार्कविलोचनाय इति पा० । १४ सहस्रचन्द्रार्कविलोडनाय इति पा० । १५ ते देव इति पा० । १६ बाहवे ।

त्रिकालहीनामलधामधाम्ने नमो महेशाय नमः शिवाय ॥ ६ ॥ एवं स्तुतः स भगवान् शूलाग्रादवताय तम् ॥ तुष्टः प्रोवाच हस्ताभ्यां स्पृष्ट्वा च परमेश्वरः ॥ ७ ॥ प्रीतोऽहं सर्वथा दैत्य स्तवेनानेन साम्प्रतम् ॥ सम्प्राप्य गाणपत्यं मे सन्निधाने सदा वस ॥ ८ ॥ अरोगश्छिन्नसंदेहो देवैरपि सुपूजितः ॥ नंदीश्वरस्यानुचरः सर्वदुःखविवर्जितः ॥ ९ ॥ एवं व्याहृतमात्रे तु देवदेवेन देवताः ॥ गणेश्वरं महादैत्यमंधकं देवसन्निधौ ॥ २१० ॥ सहस्रसूर्यसङ्काशं त्रिनेत्रं चंद्रचिह्नितम् ॥ नीलकण्ठं जटामौलिं शूलासक्तं महाकरम् ॥ ११ ॥ दृष्ट्वा तं तुष्टुवुर्दैत्यमाश्चर्यं परमङ्गताः ॥ उवाच भगवान् विष्णुर्देवदेवं स्मयन्निव ॥ १२ ॥ स्थाने तव महादेव प्रभावः पुरुषो महान् ॥ नेक्षते ज्ञातिजान् दोषान् गृह्णाति च गुणानपि ॥ १३ ॥ इतीरितोऽथ भैरवो गणेशदेवपुङ्गवैः सकेशवः सहांधको जगाम शङ्करांतिकम् ॥ निरीक्ष्य देवमागतं स शङ्करः सहांधकं समाधवं समातृकं जगाम निर्वृतिं हरः ॥ १४ ॥ प्रगृह्य पाणिनेश्वरो हिरण्यलोचनात्मजं जगाम यत्र शैलजा विमानमीशवल्लभा ॥ विलोक्य सा समागतं पतिं भवार्तिहारिणम् उवाच सान्धकं सुखं प्रसादमन्धकम्प्रति ॥ १५ ॥ अथान्धको महेश्वरीं ददर्श देवपार्श्वगां पपात दण्डवत् क्षितौ ननाम पादपद्मयोः ॥ नमामि देववल्लभामनादिमद्रिजामिमां यतः प्रधानपूरुषौ निहन्ति याखिलञ्जगत् ॥ १६ ॥ विभाति या शिवासने शिवेन साकमव्यया हिरण्मयेऽतिनिर्म्मले नमामि तां हिमाद्रिजाम् ॥ यदन्तराखिलञ्जगज्जगन्ति यान्ति संक्षयं नमामि यत्र तामुमामशेषदोषवर्जिताम् ॥ १७ ॥ न जायते न हीयते न वर्द्धते च तामुमां नमामि तां गुणातिगां गिरीशपुत्रिकामिमाम् ॥ क्षमस्व देवि शैलजे कृतं मया विमोहितं सुरासुरैर्नमस्कृतं नमामि ते पदाम्बुजम् ॥ १८ ॥ इत्थं भगवती देवी भक्तिनम्रेण पार्वती ॥ संस्तुता दैत्यपतिना पुत्रत्वे जगृहेऽन्धकम् ॥ १९ ॥ ततः स मातृभिः सार्द्धं भैरवो रुद्रसम्भवः ॥ जगाम त्वाज्ञया शम्भोः पातालं परमेश्वरः ॥ २२० ॥ यत्र सा तामसी विष्णोर्मूर्त्तिः संहारकारिका ॥ समास्ते हरि

१ एवं स्तुवन्तमिति पा० । २ वसामर इति पा० । ३ ऽज्ञानजानिति पा० । ४ गणेशो देवपुङ्गवैरिति, गणेशः इति पा० । ५ दैत्यमागतं । ६ भवम्भवार्त्तिहारिणमिति पा० । ७ अवापेति पा० । ८ सादरं । ९ नमामि तामिमामजामिति, नगात्मजामिति च पा० । १० सुरासुरैर्यदर्च्चितामिति, यत्रशैलजामशेषभेदवर्जिताम् इति च पा० ।

रव्यक्तो नृसिंहाकृतिरीश्वरः ॥२१॥ ततोऽनन्ताकृतिः शम्भुः शेषेणापि सुपूजितः॥कालाग्निरुद्रो भगवान् युयोजात्मानमात्मनि ॥२२॥ युञ्जतस्तस्य देवस्य सर्वा एवाथ मातरः ॥ बुभुक्षिता महादेवं प्रणम्याहुस्त्रिलोचनम् ॥ २३ ॥ मातर ऊचुः ॥ बुभुक्षिता महादेव त्वमनु[1] ज्ञातुमर्हसि ॥ त्रैलोक्यं भक्षयिष्यामो नान्यथा तृप्तिरस्ति नः ॥ २४ ॥ एतावदुक्त्वा वचनं मातरो विष्णुसम्भवाः ॥ भक्षयाञ्चक्रिरे सर्वं त्रैलोक्यं सचराचरम् ॥ २५ ॥ ततः स भैरवो देवो नृसिंहवपुषं[2] हरिम् ॥ दध्यौ नारायणन्देवं प्रणम्य च कृताञ्जलिः ॥ २६ ॥ उमेश चिन्तितं ज्ञात्वा क्षणात्प्रादुरभूद्धरिः ॥ विज्ञापयामास च तं भक्षयन्तीह[3] मातरः ॥ २७ ॥ निवारयाशु त्रैलोक्यं त्वदीया भगवन्निति ॥ संस्मृता[4] विष्णुना देव्यो नृसिंहवपुषा पुनः ॥ उपतस्थुर्महादेवं नरसिंहाकृतिं[5] ततः ॥ २८ ॥ सम्प्राप्य सन्निधिं विष्णोः सर्वसंहारकारिकाः ॥ प्रददुः शम्भवे शक्तिं भैरवायातितेजसे ॥ २९ ॥ अपश्यंस्ता जगन्मूर्तिं[6] नृसिंहमतिभैरवम् ॥ क्षणादेकत्वमापन्नं शेषाँहि[7] चापि मातरः ॥ २३० ॥ व्याजहार हृषीकेशो ये भक्ताः शूलपाणये ॥ ये च[8] मां संस्मरन्तीह पालनीयाः प्रयत्नतः ॥ ३१ ॥ ममैव मूर्त्तिरतुला सर्वसंहारकारिका ॥ महेश्वरांगसंभूता[9] भुक्तिमुक्तिप्रदायिनी ॥ ३२ ॥ अनन्तो भगवान् कालो द्विधावस्था ममैव[10] तु ॥ तामसी राजसी मूर्त्तिर्देवदेवश्चतुर्मुखः ॥ ३३ ॥ सोऽहं[11] देवो दुराधर्षः कालो लोकप्रकालनः ॥ भक्षयिष्यामि[12] कल्पान्ते रौद्रेण निखिलं जगत् ॥ ३४ ॥ या सा[13] विमोहिनी मूर्त्तिर्मम नारायणाह्वया[14] ॥ सत्त्वोद्रिक्ता जगत्सर्वं[15] संस्थापयति नित्यदा ॥ ३५ ॥ स[16] विष्णुः परमं ब्रह्म परमात्मा परा गतिः ॥ मूलप्रकृतिरव्यक्ता सदानन्देति कथ्यते ॥ ३६ ॥ इत्येवं[17] बोधिता देव्यो विष्णुना विष्णुमातरः ॥ प्रपेदिरे महादेवं तमेव शरणं परम्[18] ॥ ३७ ॥ एतद्वः कथितं सर्वं मयान्धकनिषूदनम्[19] ॥ माहात्म्यं देवदेवस्य भैरवस्या[20]मितौजसः ॥ २३८ ॥

---

१ त्वनुज्ञा दीयतां त्वया इति पा० । २ नृसिंहं पुरुषं । ३ विनाशयन्तीति पा० । ४ संस्तुता । ५ नरसिंहाकृतिश्च तमिति पा० । ६ जगन्मूर्तिं । ७ शेषा हिंस्यंति मातरः । ८ ये धर्मानिति पा० । ९ महेश्वरांशसम्भूतेति पा० । १० शिवस्य च इति पा० । ११ सोऽयमिति पा० । १२ भक्षयिष्यति कल्पान्ते रुद्रात्मा इति पा० । १३ या सा विमोहिका मूर्तिरस्य इति पा० । १४ नारायणप्रियाः । १५ जगत्कृत्स्नमिति पा० । १६ स हि विष्णुः परं विप्राः इति पा० । १७ इत्येव मोहिता । १८ हरमिति पा० । १९ निबर्हणमिति पा० । २० भैरवस्यामिततेजस इति पा० ।

इति श्रीकूर्मपुराणे अंन्धकनिबर्हणंनाम षोडशोऽध्यायः ॥ २६ ॥ अथ त्रिविक्रमचरितम् ॥ सूत उवाच ॥ अन्धके निगृहीते वै प्रह्लादस्य महात्मनः ॥ विरोचनो नाम बली बभूव नृपतिः सुतः ॥ १ ॥ देवाञ्जित्वा सदेवेन्द्रान् बहून्वर्षान्महासुरः ॥ पालयामास धर्मेण त्रैलोक्यं सचराचरम् ॥ २ ॥ तस्यैवं वर्त्तमानस्य कदाचिद्विष्णुचोदितः ॥ सनत्कुमारो भगवान् पुरं प्राप महामुनिः ॥ ३ ॥ गत्वा सिंहासनगतो ब्रह्मपुत्रं महासुरः ॥ ननामोत्थाय शिरसा प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४ ॥ धन्योऽस्म्यनुगृहीतोऽस्मि सम्प्राप्तो मे पुरोत्तमम् ॥ योगीश्वरोऽद्य भगवान्यतोऽसौ ब्रह्मवित्स्वयम् ॥ ५ ॥ किमर्थमागतो ब्रह्मन् स्वयन्देवः पितामहः ॥ ब्रूहि मे ब्रह्मणः पुत्र किं कार्यं करवाण्यहम् ॥ सोऽब्रवीद्भगवान्देवो धर्मयुक्तं महासुरम् ॥ द्रष्टुमभ्यागतोऽहं वै भवन्तं भाग्यवानसि ॥ ७ ॥ सुदुर्लभा नीतिरेषा दैत्यानान्दैत्यसत्तम ॥ त्रिलोके धार्मिको नूनं त्वादृशोऽन्यो न विद्यते ॥८॥ इत्युक्तोऽसुरराजोसौ पुनः प्राह महामुनिम् ॥ धर्माणां परमं धर्मं ब्रूहि मे ब्रह्मवित्तम ॥ ९ ॥ सोऽब्रवीद्भगवान्योगी दैत्येन्द्राय महात्मने ॥ सर्वगुह्यतमं धर्ममात्मज्ञानमनुत्तमम् ॥ १० ॥ स लब्ध्वा परमं ज्ञानं दत्त्वा च गुरुदक्षिणाम् ॥ निधाय पुत्रे तद्राज्यं योगाभ्यासरतोऽभवत् ॥११॥ स तस्य पुत्रो मतिमान् बलिर्नाम महासुरः ॥ ब्रह्मण्यो धार्मिकोऽत्यर्थं विजिग्येऽथ पुरन्दरम् ॥ १२॥ कृत्वा तेन महद्युद्धं शक्रः सर्वामरैर्वृतः ॥ जगाम निर्जितो विष्णुन्देवं शरणमच्युतम् ॥ १३ ॥ तदन्तरेऽदितिर्देवी देवमाता सुदुःखिता ॥ दैत्येन्द्राणां वधार्थाय पुत्रो मे स्यादिति स्वयम् ॥ १४ ॥ तताप सुमहाघोरं तपोराशिं ततः परम् ॥ प्रपन्ना विष्णुमव्यक्तं शरण्यं शरणं हरिम् ॥ १५ ॥ कृत्वा हृत्पद्मकिञ्जल्के निष्कलं परमम्पदम् ॥ वासुदेवमनाद्यंतमानन्दं व्योम केवलम् ॥ १६ ॥ प्रसन्नो भगवान्विष्णुः शङ्खचक्रगदाधरः ॥ आविर्बभूव योगात्मा देवमातुः पुरो हरिः ॥ १७ ॥ दृष्ट्वा समागतं विष्णुमदिति

× षोडशः छि॰ पु॰ । १ श्रीकूर्म उवाच । २ पुत्र इति पा॰ । ३ बहून्युद्धे । ४ दृष्ट्वा । ५ पुरातन इति, पुरान्तरमिति पा॰ । पुरोत्तमं-पुरेषु उत्तमं सर्वोत्कृष्टं पुरमित्यर्थः ६ भगवान् यतात्मा इति पा॰ । ७ दुर्लभान्यतरेषाञ्च इति पा॰ । ८ राजस्तु इति पा॰ । ९ महामुनिः । १० नियम्य इति पा॰ । ११ भगवानीति पा॰ । १२ सुमहद्घोरमिति पा॰ । १३ शिवमिति पा॰ । १४ किञ्जल्कमध्ये तु इति पा॰ ।

भक्तिसंयुता ॥ मेने कृतार्थमात्मानं तोषयामास केशवम् ॥ १८ ॥ अदितिरुवाच ॥ जयाशेषदुःखौघनाशैकहेतो जयानन्तमाहात्म्ययोगाभियुक्त ॥ जयानादिमध्यान्तविज्ञानमूर्त्ते जयाकाशकल्पामलानन्दरूप ॥ १९ ॥ नमो विष्णवे कालरूपाय तुभ्यं नमो नारसिंहाय शेषाय तुभ्यम् ॥ नमः कालरुद्राय संहारकर्त्रे नमो वासुदेवाय तुभ्यं नमस्ते ॥ २० ॥ नमो विश्वमायाविधानाय तुभ्यं नमो योगगम्याय सत्याय तुभ्यम् ॥ नमो धर्मविज्ञाननिष्ठाय तुभ्यं नमस्ते वराहाय भूयो नमस्ते ॥ २१ ॥ नमस्ते सहस्रार्कचन्द्राभमूर्त्ते नमो वेदविज्ञानधर्माभिगम्य ॥ नमो[3] भूधरायाप्रमेयाय तुभ्यं प्रभो विश्वयोनेऽथ भूयो नमस्ते ॥ २२ ॥ नमः शम्भवे सत्यनिष्ठाय तुभ्यं नमो हेतवे विश्वरूपाय तुभ्यम् ॥ नमो योगपीठान्तरस्थाय तुभ्यं शिवायैकरूपाय भूयो नमस्ते ॥ २३ ॥ एवं स भगवान् विष्णुर्देवमात्रा जगन्मयः ॥ तोषितश्छंदयामास वरेण प्रहसन्निव ॥ २४ ॥ प्रणम्य शिरसा भूमौ सा वव्रे वरमुत्तमम् ॥ त्वामेव पुत्रं देवानां हिताय वरये वरम् ॥२५॥ तथास्त्वित्याह भगवान् प्रपन्नजनवत्सलः ॥ दत्त्वा वरानप्रमेयस्तत्रैवान्तरधीयत ॥ २६ ॥ ततो बहुतिथे काले भगवन्तं जनार्दनम् ॥ दधार गर्भं देवानां माता नारायणं स्वयम् ॥ २७ ॥ समाविष्टे हृषीकेशे देवमातुस्तथोदरम् ॥ उत्पाता जज्ञिरे घोरा बलेर्वैरोचनेः पुरे ॥ २८ ॥ निरीक्ष्य सर्वानुत्पातान्दैत्येन्द्रो भयविह्वलः ॥ प्रह्लादमसुरं वृद्धं प्रणम्याह पितामहम् ॥ २९ ॥ बलिरुवाच ॥ पितामह महाप्राज्ञ जायतेऽस्मिन्पुरान्तरे ॥ किमुत्पातो भवेत्कार्यमस्माकं किंनिमित्तकः ॥ ३० ॥ निशम्य तस्य वचनञ्चिरं ध्यात्वा महासुरः ॥ नमस्कृत्य हृषीकेशमिदं वचनमब्रवीत् ॥ ३१ ॥ प्रह्लाद उवाच ॥ यो यज्ञैरिज्यते विष्णुर्यस्य सर्वमिदं जगत् ॥ दधारासुरनाशार्थं माता तं त्रिदिवौकसाम् ॥ ३२ ॥ यस्मादभिन्नं सकलं भिद्यते योऽखिलादपि ॥ स वासुदेवो देवानां मातुर्देहं समाविशत् ॥ ३३ ॥ न यस्य देवा जानन्ति स्वरूपं परमार्थतः ॥ स विष्णुरदितेर्देहं स्वेच्छयाद्य समाविशत् ॥ ३४ ॥ यस्माद्भवन्ति भूतानि यत्र

---

१ जयाशेषकल्पामलानन्तरूप । २ वेदविज्ञानाब्ध धर्माभिगम्य इति पा० । ३ नमो देवदेवादिदेवाय तुभ्यमिति पा० । ४ कृष्णो देवमात्रा इति पा० । ५ गर्भे इति । ६ जायन्तेऽस्मत्पुरेऽधुना इति पा० । ७ किमुत्पातैर्भवेत्कार्यमस्माकं किंनिमित्तकैरिति, किमुत्पाता भवेत्कार्यमस्माकं किंनिमित्तका इति पा० ।

संयान्ति संक्षयम् ॥ सोऽवतीर्णो महायोगी पुराणपुरुषो हरिः ॥ ३५ ॥ न यत्र विद्यते नामजात्यादिपरिकल्पना ॥ सत्तामात्रात्मरूपोऽसौ विष्णुरंशेन[1] जायते ॥ ३६ ॥ यस्य सा[2] जगतां माता शक्तिस्तद्धर्मधारिणी[3] ॥ माया भगवती लक्ष्मीः सोऽवतीर्णो जनार्दनः ॥ ३७ ॥ यस्य सा तामसी मूर्त्तिः शंकरो राजसी तनुः ॥ ब्रह्मा सञ्जायते विष्णुरंशेनैकेन सत्त्वधृक्[4] ॥ ३८ ॥ इति सञ्चिन्त्य गोविन्दं भक्तिनम्रेण चेतसा ॥ तमेव गच्छ शरणं ततो यास्यसि निर्वृतिम् ॥ ३९ ॥ ततः प्रह्लादवचनाद्बलिर्वैरोचनिर्हरिम् ॥ जगाम शरणं विश्वं पालयामास धर्मवित्[5] ॥ ४० ॥ काले प्राप्ते महाविष्णुं देवानां हर्षवर्द्धनम् ॥ असूत कश्यपाच्चैनं देवमातादितिः स्वयम् ॥ ४१ ॥ चतुर्भुजं विशालाक्षं श्रीवत्साङ्कितवक्षसम् ॥ नीलमेघप्रतीकाशं भ्राजमानं श्रिया वृतम् ॥ ४२ ॥ उपतस्थुः सुराः सर्वे सिद्धाः साध्याश्च चारणाः ॥ उपेन्द्र इन्द्रप्रमुखा ब्रह्मा चर्षिगणैर्वृतः ॥ ४३ ॥ कृतोपनयनो वेदानध्यैष्ट[6] भगवान् हरिः ॥ सदाचारं[7] भरद्वाजात्त्रिलोकाय[8] प्रदर्शयन् ॥ ४४ ॥ एवञ्च[9] लौकिकं मार्गं प्रदर्शयति स प्रभुः ॥ स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ ४५ ॥ ततः कालेन मतिमान् बलिर्वैरोचनिः स्वयम् ॥ यज्ञैर्यज्ञेश्वरं विष्णुमर्च्चयामास सर्वगम् ॥ ४६ ॥ ब्राह्मणान्पूजयामास दत्त्वा बहुतरं धनम् ॥ ब्रह्मर्षयः समाजग्मुर्यज्ञवाटं महात्मनः ॥ ४७ ॥ विज्ञाय विष्णुर्भगवान् भरद्वाजप्रचोदितः ॥ आस्थाय वामनं रूपं यज्ञदेशमथागमत् ॥ ४८ ॥ कृष्णाजिनोपवीताङ्ग[10] आषाढेन विराजितः ॥ ब्राह्मणो जटिलो वेदानुद्गिरन् सुमहाद्युतिः[11] ॥ ४९ ॥ सम्प्राप्यासुरराजस्य समीपं भिक्षुको हरिः ॥ स्वपद्भ्र्यां[12] क्रमितं देशमयाचत बलिं त्रिभिः ॥ ५० ॥ प्रक्षाल्य चरणौ विष्णोर्बलिर्भावसमन्वितः ॥ आचामयित्वा[13] भृंगारमादाय स्वर्णनिर्मितम् ॥ ५१ ॥ दास्ये[14] तथेदं भवते पदत्रयं प्रीणातु देवो हरिरव्ययाकृतिः ॥ विचिन्त्य देवस्य कराग्रपल्लवे निपातयामास

१ विष्णुरूपेण जायते इति॰ । २ साक्षाज्जगन्माता । ३ धर्मिणीति पा॰ । ४ सत्त्वतः, सत्त्वभृदिति च पा॰ । ५ धर्मतः । ६ वेदानध्यगीष्टाव्ययोहरिः । ७ समाचारामिति पा॰ । ८ त्रैलोक्याय प्रदर्शय । ९ एवं हि इति पा॰ । १० कृष्णाजिनोत्तरीयाङ्ग इति पा॰ । ११ भस्ममण्डित इति पा॰ । १२ स्वपदन्तमितं । १३ आचमय्य इति साधु । १४ ददाम्यथेदम्भवते इति पा॰ ।

सुशीतलञ्जलम् ॥ ५२ ॥ विचक्रमे पृथिवीमेष चैतामथान्तरिक्षं दिवमादिदेवः ॥ व्यपेतरागन्दितिजेश्वरन्तं प्रकर्तुकामः शरणं प्रपन्नम् ॥ ५३ ॥ आक्रम्य लोकत्रयमाशुपादः प्राजापत्याद्ब्रह्मलोकं जगाम ॥ प्रणेमुरादित्यमुखाः सुरेन्द्राः ये तत्र लोके निवसन्ति सिद्धाः ॥ ५४ ॥ अथोपतस्थे भगवाननादिः पितामहस्तोषयामास विष्णुम् ॥ भित्त्वा तदण्डस्य कपालमूर्द्धं जगाम दिव्याभरणोऽथ भूयः ॥ ५५ ॥ अथाण्डभेदान्निपपात शीतलं महाजलं पुण्यकृद्भिश्च जुष्टम् ॥ प्रवर्त्तिता चापि सरिद्वरा सा गंगेत्युक्त्वा ब्रह्मणा व्योमसंस्था ॥ ५६ ॥ गत्वा महान्तं प्रकृतिं ब्रह्मयोनिं ब्रह्माणमेकं पुरुषं विश्वयोनिम् ॥ अतिष्ठदीशस्य पदं तदव्ययं दृष्ट्वा देवा स्तत्र तत्र स्तुवन्ति ॥ ५७॥ आलोक्य तं पुरुषं विश्वकायं महान् बलिर्भक्तियोगेन विष्णुम् ॥ ननाम नारायणमेकमव्ययं स्वचेतसा यं प्रणमन्ति वेदाः ॥ ५८ ॥ तमब्रवीद्भगवानादिकर्त्ता भूत्वा पुनर्वामनो वासुदेवः ॥ ममैव दैत्याधिपतेऽधुनेदं लोकत्रयं भवता भावदत्तम् ॥ ५९ ॥ प्रणम्य मूर्ध्ना पुनरेव दैत्यो निपातयामास जलं कराग्रे ॥ दास्ये तवात्मानमनन्तधाम्ने त्रिविक्रमायामित विक्रमाय ॥ ६० ॥ प्रगृह्य सूनोरपि सम्प्रदत्तं प्रह्लादसूनोरथ शङ्खपाणिः ॥ जगाद दैत्यं जगदन्तरात्मा पातालमूलं प्रविशेति भूयः ॥ ६१ ॥ समास्यतां भवता तत्र नित्यं भुक्त्वा भोगान्देवतानामलभ्यान् ॥ ध्यायस्व मां सततं भक्तियोगात्प्रवेक्ष्यसे कल्पदाहे पुनर्माम् ॥ ६२ ॥ उक्त्वैवं दैत्यसिंहं तं विष्णुः सत्यपराक्रमः ॥ पुरन्दराय त्रैलोक्यं ददौ जिष्णुरुरुक्रमः ॥ ६३ ॥ संस्तुवन्ति महायोगं सिद्धा देवर्षिकिन्नराः ॥ ब्रह्मा शक्रोऽथ भगवान्रुद्रादित्यमरुद्गणाः ॥ ६४ ॥ कृत्वैतदद्भुतं कर्म विष्णुर्वामनरूपधृक् ॥ पश्यतामेव सर्वेषां तत्रवान्तरधीयत ॥ ६५ ॥ सोऽपि दैत्यवरः श्रीमान्पातालं प्राप नोदितः ॥ प्रह्लादेनासुरवरैर्विष्णुभक्तस्तु तत्परः ॥ ६६ ॥ अपृच्छद्विष्णुमाहात्म्यं भक्तियोगमनुत्तमम् ॥ पूजाविधानं प्रह्लादं तदाहासौ चकार सः ॥ ६७ ॥ अथ रथचरणं सशङ्खपाणिं सरसिज

---

१ प्रहर्तुकामः । २ प्रणेमुरादित्यसहस्रकल्पामिति पा० । ३ कपालमूर्ध्ने । ४ देव्याभरणानीति पा० । ५ पुण्यं जलं । ६ प्रवर्त्तते इति पा० । ७ सरिद्वरा तदा-गङ्गेति नाम्ना ननु इति पा० । ८ प्रधानमिति पा० । ९ विश्वबीजमिति ०पा । १० बलिर्महान्तं भक्ति इति पा० । ११ यत्प्रदत्तम् इति पा० । १२ ध्यायस्वेति आर्षमात्मनेपदम् । १३ सिंहन्तु विष्णुरिति, सिंहं तं जिष्णुरिति च पा० । १४ भक्तैकतत्परः इति पा० । १५ सचाहासौ । १६ रथचरणाब्जशंखपाणिमिति पा० ।

लोचनमीशमप्रमेयम् ॥ शरणमुपययौ स भावयोगात्प्रणयगतिं प्रणिधाय कर्मयोगम् ॥ ६८ ॥ एष वः कथितो विप्रा वामनस्य पराक्रमः ॥ स देवकार्याणि सदा करोति पुरुषोत्तमः ॥ ६९ ॥ इति श्रीकूर्म्मपुराणे त्रिविक्रमचरितवर्णनं नाम [×]सप्तदशोऽध्यायः ॥ १७ ॥

अथ वंशानुकीर्तनम् ॥ सूत उवाच ॥ बलेः पुत्रशतं त्वासीन्महाबलपराक्रमम् ॥ तेषां प्रधानो द्युतिमान्बाणो नाम महाबलः ॥ १ ॥ सोऽतीव शङ्करे भक्तो राजा राज्यमपालयत् ॥ त्रैलोक्यं वशमानीय बाधयामास वासवम् ॥ २ ॥ ततः शक्रादयो देवा गत्वोचुः कृत्तिवाससम् ॥ त्वदीयो बाधते ह्यस्मान्बाणो नाम महासुरः ॥ ३ ॥ व्याहृतो दैवतैः सर्वैर्देवदेवो महेश्वरः ॥ ददाह बाणस्य पुरं शरेणैकेन लीलया ॥ ४ ॥ दह्यमाने पुरे तस्मिन्बाणो रुद्रं त्रिशूलिनम् ॥ ययौ शरणमीशानङ्गोपतिं नीललोहितम् ॥ ५ ॥ मूर्द्धन्याधाय तल्लिङ्गं शाम्भवं रागवर्ज्जितः ॥ निर्गत्य तु पुरात्तस्मात्तुष्टाव परमेश्वरम् ॥ ६ ॥ संस्तुतो भगवानीशः शङ्करो नीललोहितः ॥ गाणपत्येन बाणं तं योजयामास भावतः ॥ ७ ॥ अथैवञ्च दनोः पुत्रास्ताराद्याश्चातिभीषणाः ॥ तारस्तथा शम्बरश्च कपिलः शङ्करस्तथा ॥ स्वर्भानुर्वृषपर्वा च प्राधान्येन प्रकीर्तिताः ॥ ८ ॥ सुरसायाः सहस्रन्तु सर्पाणामभवद्द्विजाः ॥ अनेकशिरसां तद्वत्खेचराणां महात्मनाम् ॥ ९ ॥ अरिष्टा जनयामास गन्धर्वाणां सहस्रकम् ॥ अनन्ताद्या महानागाः काद्रवेयाः प्रकीर्त्तिताः ॥ १० ॥ ताम्रा च जनयामास षट् कन्या द्विजपुंगवाः ॥ शुकीं श्येनीञ्च भासीञ्च सुग्रीवां ग्रन्थिकां शुचिम् ॥ ११ ॥ गास्तथा जनयामास सुरभिर्महिषीस्तथा ॥ इरा वृक्षलतावल्लीतृणजातीश्च सर्वशः ॥ १२ ॥ तथा वै यक्षरक्षांसि मुनिरप्सरसस्तथा ॥ रक्षोगणं क्रोधवशाज्जनयामास सत्तमाः ॥ १३ ॥ विनतायाश्च पुत्रौ द्वौ प्रख्यातौ गरुडारुणौ ॥ तयोश्च गरुडो धीमान्तपस्तप्त्वा सुदुश्चरम् ॥ प्रसादाच्छूलिनः प्राप्तो वाहनत्वं हरेः स्वयम् ॥ १४ ॥ आराध्य तपसा देवं महादेवं तथारुणः ॥ सारथ्ये कल्पितः पूर्वं प्रीतेनार्कस्य शम्भुना ॥ १५ ॥ एते कश्यपदायादाः कीर्त्तिताः

× षोडशोध्यायः लिं० पु०। १ श्रीकूर्म उवाच। २ महाबलपराक्रम इति पा०। ३ महासुर इति पा०। ४ वशमानिन्ये। ५नीतिवर्जितम्, भीतिवर्जित इति च पा०। ६ अथाभवन्निति पा०। ७ ताराद्यास्तु विभीषणा इति पा०। ८ सश्वरस्तथा इति पा०। ९ प्रतिष्ठिता इति पा०। १० सुग्रीवीं च वक्रीमिति पा०। ११ तारा इति पा०। १२ निकषा इति पा०। १३ सत्तमम्। १४ तयोस्तु इति पा०। १५ रुद्रमिति पा०।

स्थाणुजंगमाः ॥ वैवस्वतेऽन्तरे ह्यस्मिञ्छृण्वतां पापनाशनम्[1] ॥ १६ ॥ सप्तविंशसुताः प्रोक्ताः सोमपत्न्याश्च सुव्रताः ॥ अरिष्टनेमिपत्नी नामपत्यानां[2] ह्यनेकशः ॥ १७ ॥ बहुपुत्रस्य विदुषश्चतस्रो विद्युतः[3] स्मृताः ॥ तद्वदंगिरसः श्रेष्ठां[4] ऋषेयो वृषसत्कृताः[5] ॥ १८ ॥ कृशाश्वस्य तु देवर्षेर्देवैः[6] प्रहरणः सुतः ॥ एते युगसहस्रान्ते जायन्ते पुनरेव हि ॥ मन्वन्तरेषु नियतन्तुल्यकार्य्यैः स्वनामभिः ॥ १९ ॥ इति श्रीकूर्म्मे पुराणे वंशानुकीर्त्तनं नामाऽष्टादशोऽध्यायः[7] ॥ १८ ॥ अथ ऋषिवंशकथनम् ॥ सूत उवाच[8] ॥ एतानुत्पाद्य पुत्रांस्तु प्रजासन्तानकारणात् ॥ कश्यपः पुत्रकामस्तु[9] चचार सुमहत्तपः ॥ १ ॥ तस्यैवन्तपतोऽत्यर्थं प्रादुर्भूतौ सुताविमौ ॥ वत्सरश्चासितश्चैव[10] तावुभौ ब्रह्मवादिनौ ॥ २ ॥ वत्सरान्नैध्रुवो[11] जज्ञे रैभ्यश्च[12] सुमहायशाः ॥ रैभ्यस्य[13] जज्ञिरे शूद्राः[14] पुत्राः श्रुतिमतां वराः ॥ ३ ॥ च्यवनस्य सुता भार्या[15] नैध्रुवस्य महात्मनः ॥ सुमेधा जनयामास पुत्रान्वै कुण्डपायिनः[16] ॥ ४ ॥ असितस्यैकपर्णायां[17] ब्रह्मिष्ठः समपद्यत ॥ नाम्ना वै देवलः पुत्रो योगाचार्यो महातपाः ॥ ५ ॥ शाण्डिल्यः[18] परमः श्रीमान् सर्वतत्त्वार्थविच्छुचिः[19] ॥ प्रसादात्पार्वतीशस्य योगमुक्तमवतवान्[20] ॥ ६ ॥ शाण्डिल्यो नैध्रुवो रैभ्यः[21] त्रयः पुत्रास्तु काश्यपाः ॥ नरप्रकृतयो[22] विप्राः पुलस्त्यस्य वदामि वः ॥ ७ ॥ तृणबिन्दोः सुता विप्रा नाम्ना ऐलविलाः स्मृताः ॥ पुलस्त्याय तु राजर्षिस्तां कन्यां प्रत्यपादयत् ॥ ८ ॥ ऋषिस्त्वैलविलस्तस्यां विश्रवाः समपद्यत ॥ तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्द्धिकाः ॥ ९ ॥ पुष्पोत्कटा च वाका[23] च कैकसी[24] देववर्णिनी[25] ॥ रूपलावण्यसम्पन्नास्तासाञ्च शृणुत प्रजाः ॥ १० ॥ ज्येष्ठं वैश्रवणं तस्य सुषुवे देववर्णिनी ॥ कैकस्यजनयत्पुत्रं रावणं राक्षसाधिपम् ॥ ११ ॥ कुम्भकर्णं शूर्पणखान्तथैव च विभीषणम् ॥ पुष्पोत्कटाप्यजनयत्पुत्रान्विश्रवसः शुभान्[26] ॥ १२ ॥

---

१ पापनाशनाः । २ मपत्यानीह षोडश इति पा० । ३ सुता इति पा० । ४ पुत्रा इति पा० । ५ विश्रुताऋषिसत्तमाः, ब्रह्मसत्कृता इति च पा० । ६ देवप्रहरणाः सुता इति पा० । ७ सप्तदशोध्यायः । ८ कूर्म उवाच । ९ गोत्रकामस्तु । १० वत्सरस्तामसश्चैव इति पा० । ११ वत्सराद्दै ध्रुव इति पा० । १२ वैद्यश्च इति पा० । १३ वैद्यस्य इति पा० । १४ वैद्या इति पा० । १५ पत्नीति पा० । १६ याजिन इति पा० । १७ वर्णायामिति पा० । १८ शाण्डिल्यानां पर इति पा० । १९ वित्सुधीः इति पा० । २० योगमुत्तममाप्तवानिति पा० । २१ वैद्य इति पा० । २२ नवप्रकृतय इति पा० । २३ वाक्या इति पा० । २४ निकषा इति रामायणेऽभिधीयते । २५ वेद[illegible]

महोदरं प्रहस्तश्च महापार्श्वं खरन्तथा ॥ कुम्भीनसीन्तथा कन्यां वाका याः सृजंते[1] प्रजाः ॥ १३ ॥ त्रिशिरा दूषणश्चैव विद्युज्जिह्वो महाबलः ॥ इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा दश ॥ सर्वे तपोबलोत्कृष्टा रुद्रभक्ताः सुभीषणाः ॥ १४ ॥ पुलहस्य[2] मृगाः पुत्राः सर्वे व्यालाश्च दंष्ट्रिणः ॥ भूताः पिशाचा ऋक्षाश्च[3] शूकरा हस्तिनस्तथा ॥ १५ ॥ अनपत्यः क्रतुस्तस्मिन् स्मृतो[4] वैवस्वतेऽन्तरे ॥ मरीचेः कश्यपः पुत्रः स्वयमेव प्रजापतिः ॥ १६ ॥ भृगोरथाभवच्छुक्रो[5] दैत्याचार्यो महातपाः ॥ स्वाध्याययोगनिरतो[6] हरभक्तो महाद्युतिः ॥ १७ ॥ अत्रेः पुत्रोऽभवद्वह्निः सोदर्यस्तस्य[7] नैध्रुवः ॥ कृशाश्वस्य तु विप्रर्षेः[8] घृताच्यामिति नः श्रुतम् ॥ १८ ॥ स तस्याञ्जनयामास[9] स्वस्त्यात्रेयान्महौजसः ॥ वेदवेदाङ्गनिरतान्तपसा हतकिल्बिषान् ॥ १९ ॥ नारदस्तु वसिष्ठाय ददौ देवीमरुन्धतीम् ॥ ऊर्ध्वरेतास्तु[10] तत्रैव शापाद्दक्षस्य नारदः ॥ २० ॥ हर्यश्वेषु तु नष्टेषु मायया नारदस्य तु[11] ॥ शशाप नारदं दक्षः क्रोधसंरक्तलोचनः ॥ २१ ॥ यस्मान्मम सुताः सर्वे भवता मायया द्विज ॥ क्षयन्नीतास्त्वशेषेण निरपत्यो भविष्यसि ॥ २२ ॥ अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पाद[12]यत्सुतम् ॥ शक्तेः पराशरः श्रीमान् सर्वज्ञस्तपतां वरः ॥ २३ ॥ आराध्य देवदेवेशमीशानन्त्रिपुरान्तकम् ॥ लेभे त्वप्रतिमं[13] पुत्रं कृष्णद्वैपायनं प्रभुम् ॥ २४ ॥ द्वैपायनाच्छुको जज्ञे भगवानेव शंकरः ॥ अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पदम् ॥ २५ ॥ शुकस्यास्याभवन् पुत्राः पञ्चात्यन्ततपस्विनः ॥ भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः ॥ २६ ॥ कन्या कीर्तिमती चैवं योगमाता धृतव्रता ॥ एतेऽत्रिवंशाः कथिता ब्रह्मणा ब्रह्मवादिनाम् ॥ २७ ॥ अत ऊर्ध्वं निबोधध्वं कश्यपाद्राजसन्ततिम् ॥ २८ ॥ इति श्रीकूर्मपुराणे ऋषिवंशवर्णनं नाम एकोनविंशोऽध्यायः ॥ १९ ॥ अथ राजवंशकीर्तनम् ॥ सूत उवाच ॥ आदितिः सुषुवे पुत्रमादित्यं कश्यपात्प्रभुम् ॥ तस्यादित्यस्य चैवासीद्भार्याणां तु चतुष्टयम् ॥ १ ॥ संज्ञा राज्ञी[14] प्रभा छाया पुत्रांस्तासान्निबोधत ॥ संज्ञा त्वाष्ट्री[15] तु सुषुवे सूर्यान्मनुमन्तु

१ शृणुत इति पा० । २ पुलस्त्यस्य इति पा० । ३ सर्पाश्च इति, रक्षाश्च इति पा० । ४ कृते । ५ भृगोरप्यभवच्छुक्र इति पा० । ६ योगसंयुक्तो । ७ सोदर्यस्ताः पतिव्रताः इति । पा० । ८ विप्रेन्द्रा इति पा० । ९ स तासु जनयामास इति पा० । १० ऊर्ध्वरेतास्तत्र मुनिरिति पा० । ११ च इति । १२ शक्तिं ह्यजनयत् इति पा० । १३ सत्प्रतिमिति पा० । १४ रात्रिरिति पा० । १५ त्वष्ट्री–त्वष्टुः विश्वकर्मणः अपत्यं स्त्री ।

त्तमम् ॥ २ ॥ यमञ्च यमुनाञ्चैव राज्ञी रेवंतमेव च ॥ प्रभा प्रभातमादित्या छाया सावर्णिमात्मजम् ॥ ३ ॥ शनिश्चै तपतीश्चैव विष्टिश्चैव यथाक्रमम् ॥ मनोस्तु प्रथमस्यासन्नव पुत्रास्तु तत्समाः ॥ ४ ॥ इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च ॥ नरिष्यंतश्च नाभागो ह्यरिष्टः करुषस्तथा ॥ ५ ॥ पृषध्रश्च महातेजा नवैते शक्रसन्निभाः ॥ इला ज्येष्ठा वरिष्ठा च सोमवंशं व्यवर्द्धयत् ॥ ६ ॥ बुधस्य गत्वा भवनं सोमपुत्रेण सङ्गता ॥ असूत सोमजादेवी पुरूरवसमुत्तमम् ॥ ७ ॥ पितॄणां तृप्तिकर्त्तारं बुधादिति हि नः श्रुतम् ॥ प्राप्य पुत्रं सुविमलं सुद्युम्न इति विश्रुतम् ॥ ८ ॥ इला पुत्रत्रयं लेभे पुनः स्त्रीत्वमविन्दत ॥ उत्कलश्च गयश्चैव विनतश्च तथैव च ॥ ९ ॥ सर्वे तेऽप्रतिमप्रख्याः प्रपन्नाः कमलोद्भवम् ॥ इक्ष्वाकोश्चाभवद्वीरो विकुक्षिर्नाम पार्थिवः ॥ १० ॥ ज्येष्ठपुत्रः स तस्यासीद्दश पञ्च च तत्सुताः ॥ तेषां ज्येष्ठः ककुत्स्थोऽभूत्काकुत्स्थस्तु सुयोधनः ॥ ११ ॥ सुयोधनात्पृथुः श्रीमान्विश्वकश्च पृथोः सुतः ॥ विश्वकादार्द्रको धीमान्युवनाश्वश्च तत्सुतः ॥ १२ ॥ स गोकर्णमनुप्राप्य युवनाश्वः प्रतापवान् ॥ दृष्ट्वासौ गौतमं विप्रं तपन्तमनलप्रभम् ॥ १३ ॥ प्रणम्य दण्डवद्भूमौ पुत्रकामो महीपतिः ॥ अपृच्छत्कर्मणा केन धार्मिकं प्राप्नुयां सुतम् ॥ १४ ॥ गौतम उवाच ॥ आराध्य पुरुषं पूर्वं नारायणमनामयम् ॥ अनादिनिधनं देवन्धार्मिकं प्राप्नुयात्सुतम् ॥ १५ ॥ तस्य पुत्रः स्वयं ब्रह्मा पौत्रः स्यान्नीललोहितः ॥ तमादि कृष्णमीशानमाराध्याप्नोति सत्सुतम् ॥ १६ ॥ न यस्य भगवान् ब्रह्मा प्रभावं वेत्ति तत्त्वतः ॥ तमाराध्य हृषीकेशं प्राप्नुयाद्धार्मिकं सुतम् ॥ १७ ॥ स गौतमवचः श्रुत्वा युवनाश्वो महीपतिः ॥ आराधयन् हृषीकेशं वासुदेवं सनातनम् ॥ १८ ॥ तस्य पुत्रोऽभवद्वीरः सावस्तिरिति विश्रुतः ॥ निर्मिता येन सावस्तिः गौडदेशे महापुरी ॥ १९ ॥ तस्माच्च बृहदश्वोऽभूत्तस्मात्कुवलयाश्वकः ॥ धुन्धुमारः समभवत् धुन्धुं हत्वा महासुरम् ॥ २० ॥ धुन्धुमारस्य तनयास्त्रयः प्रोक्ता द्विजोत्तमाः ॥ दृढाश्वश्चैव दण्डाश्वः कपिलाश्वस्तथैव च ॥ २१ ॥

---

१ राज्ञी इति । २ सावर्णिनामानं मनुमित्यर्थः । ३ शनिश्चैव तपन्तीश्च इति पा० । ४ महाभाग इति पा० । ५ सोमवंशविवृद्धये इति पा० । ६ विनताश्वं । ७ दाहुको । ८ पूर्वपुरुषमिति पा० । ९ यस्य इति पा० । १० लोकानांप्रपितामहः । ११ श्रावस्तिरिति, श्रावन्तिरिति पा० । १२ श्रावस्तिरिति, श्रावन्तीति पा० । १३ धुन्धुमारत्वमगमादिति पा० ।

दृढाश्वस्य प्रमोदस्तु हर्यश्वस्तस्य चात्मजः ॥ हर्यश्वस्य निकुम्भस्तु निकुम्भात्संहताश्वकः ॥ २२ ॥ कृताश्वोऽथ रणाश्वश्च संहिताश्वस्य वै सुतौ ॥ युवनाश्वो रणाश्वस्य शक्रतुल्यबलो युधि ॥ २३ ॥ कृत्वा तु वारुणीमिष्टिमृषीणां वै प्रसादतः ॥ लेभे त्वप्रतिमं पुत्रं विष्णुभक्तमनुत्तमम् ॥ २४ ॥ मान्धातारं महाप्राज्ञं सर्वशस्त्रभृतां वरम् ॥ मान्धातुः पुरुकुत्सोऽभूदम्बरीषश्च वीर्यवान् ॥ २५ ॥ मुचुकुन्दश्च पुण्यात्मा सर्वे शक्रसमा युधि ॥ अम्बरीषस्य दायादो युवनाश्वोऽपरः स्मृतः ॥ २६ ॥ हरितो युवनाश्वस्य हारितस्तत्सुतोऽभवत् ॥ पुरुकुत्सस्य दायादस्त्रसदस्युर्महायशाः ॥ २७ ॥ नर्मदायां समुत्पन्नः सम्भूतिस्तत्सुतः स्मृतः ॥ विष्णुवृद्धः सुतस्तस्य त्वनरण्योऽभवत्ततः ॥ बृहदश्वोऽनरण्यस्य हर्यश्वस्तत्सुतोऽभवत् ॥ २८ ॥ सोऽतीव धार्मिको राजा कर्दमस्य प्रजापतेः ॥ प्रसादाद्धार्मिकं पुत्रं लेभे सूर्यपरायणम् ॥ २९ ॥ स तु सूर्यं समभ्यर्च्य राजा वसुमनाः शुभम् ॥ लेभे त्वप्रतिमं पुत्रं त्रिधन्वानमरिन्दमम् ॥ ३० ॥ अयजच्चाश्वमेधेन शत्रूञ्जित्वा द्विजोत्तमाः ॥ स्वाध्यायवान्दानशीलस्तितीर्षुर्धर्मतत्परः ॥ ३१ ॥ ऋषयस्तु समाजग्मुर्यज्ञवाटं महात्मनः ॥ वसिष्ठकश्यपमुखा देवाश्चेन्द्रपुरोगमाः ॥ ३२ ॥ तान् प्रणम्य महाराजः पप्रच्छ विनयान्वितः ॥ समाप्य विधिवद्यज्ञं वसिष्ठादीन्द्विजोत्तमान् ॥ ३३ ॥ वसुमना उवाच ॥ किं हि श्रेयस्करतरं लोकेऽस्मिन् ब्राह्मणर्षभाः ॥ यज्ञस्तपो वा संन्यासो ब्रूत मे सर्ववेदिनः ॥ ३४ ॥ वसिष्ठ उवाच ॥ अधीत्य वेदान्विधिवत्सुतांश्चोत्पाद्य यत्नतः ॥ इष्ट्वा यज्ञेश्वरं यज्ञैर्गच्छेद्वनमथात्मवान् ॥ ३५ ॥ पुलस्त्य उवाच ॥ आराध्य तपसा देवं योगिनम्परमेश्वरम् ॥ प्रव्रजेद्विधिवद्यज्ञैरिष्ट्वा पूर्वं सुरोत्तमान् ॥ ३६ ॥ पुलह उवाच ॥ यमाहुरेकं पुरुषं पुराणम्परमेश्वरम् ॥ तमाराध्य सहस्रांशुन्[11]तपसो मोक्षमाप्नुयात् ॥ ३७ ॥ जमदग्निरुवाच ॥ [12]अजो विश्वस्य कर्त्ता यो जगद्बीजं सनातनः ॥ अन्तर्यामी च भूतानां

---

१ प्रमेयस्तु इति, प्रमोदिस्तु इति, प्रमेहस्तु इति पा० । २ वारुणीमिष्टिं–वरुणदेवताकं यागमित्यर्थः । ३ धर्मात्मा । ४ विष्णुभक्तः । ५ ऽभवत्परः इति पा० । ६ तितिक्षुर्धर्मतत्परः इति पा० । ७ किञ्चिच्छ्रेयस्करं ह्यस्मिल्लोके ब्राह्मणसत्तमाः । ८ पुत्रांश्चोत्पाद्य धर्मतः । ९ परमेष्ठिनमिति पा० । १० पुराणं शाश्वतं प्रभुम् । ११ तमसो इति पा० । १२ अजस्य नाभिमध्ये कमीश्वरेण समर्पितम् । बीजं भगवतो येन स देवस्तपसेज्यते इति पा० ।

स देवस्तपसेज्यते ॥ ३८ ॥ विश्वामित्र उवाच ॥ योऽग्निः सर्वात्मकोऽनन्तः स्वयम्भूर्विश्वतोमुखः ॥ स रुद्रस्तपसोग्रेण पूज्यते नेतरैर्मखैः ॥ ३९ ॥ भरद्वाज उवाच ॥ यो यज्ञैरिज्यते देवो वासुदेवः सनातनः ॥ सं सर्वदैवततनुः पूज्यते परमेश्वरः ॥ ४० ॥ अत्रिरुवाच॥ यतः सर्वमिदं जातं यस्यापत्यं प्रजापतिः ॥ तपः सुमहदास्थाय पूज्यते सं महेश्वरः ॥ ४१ ॥ गौतम उवाच ॥ यतः प्रधानपुरुषौ यस्य शक्तिरिदं जगत् ॥ स देवदेवस्तपसा पूजनीयः सनातनः ॥ ४२ ॥ कश्यप उवाच ॥ सहस्रनयनो देवः साक्षी शम्भुः प्रजापतिः ॥ प्रसीदति महायोगी पूजितस्तपसा परः ॥ ४३ ॥ क्रतुरुवाच ॥ प्राप्ताध्ययनयज्ञस्य लब्धपुत्रस्य चैव हि ॥ नान्तरेण तपः कश्चिद्धर्मः शास्त्रेषु दृश्यते ॥ ४४ ॥ इत्याकर्ण्य स राजर्षिस्तान् प्रणम्यातिहृष्टधीः ॥ विसर्जयित्वा संपूज्य त्रिधन्वानमथाब्रवीत् ॥ ४५ ॥ आराधयिष्ये तपसा देवमेकाक्षराह्वयम् ॥ प्राणं बृहन्तं पुरुषमादित्यान्तरसंस्थितम् ॥ ४६ ॥ त्वन्तु धर्मरतो नित्यं पालयैतदतन्द्रितः ॥ चातुर्वर्ण्यसमायुक्तमशेषं क्षितिमण्डलम् ॥ ४७ ॥ एवमुक्त्वा स तद्राज्यं निधायात्मभवे नृपः ॥ जगामारण्यमनघस्तपस्तप्तुमनुत्तमम् ॥ ४८ ॥ हिमवच्छिखरे रम्ये देवदारुवनाश्रये ॥ कन्दमूलफलाहारैरुत्पन्नैरयजत्सुरान् ॥ ४९ ॥ संवत्सरशतं साग्रं तपोनिर्धूतकिल्बिषः ॥ जजाप मनसा देवीं सावित्रीं वेदमातरम् ॥ ५० ॥ तस्यैवन्तपतो देवः स्वयम्भूः परमेश्वरः ॥ हिरण्यगर्भो विश्वात्मा तं देशमगमत्स्वयम् ॥ ५१ ॥ दृष्ट्वा देवं समायान्तं ब्रह्माणं विश्वतोमुखम् ॥ ननाम शिरसा तस्य पादयोर्नाम कीर्त्तयन् ॥ ५२ ॥ नमो देवाधिदेवाय ब्रह्मणे परमात्मने ॥ हिरण्यमूर्त्तये तुभ्यं सहस्राक्षाय वेधसे ॥ ५३ ॥ नमो धात्रे विधात्रे च नमो देवात्ममूर्त्तये ॥ सांख्ययोगाधिगम्याय नमस्ते ज्ञानमूर्त्तये ॥ ५४ ॥ नमस्त्रिमूर्त्तये तुभ्यं स्रष्ट्रे सर्वार्थवेदिने ॥ पुरुषाय पुराणाय योगिनां गुरवे नमः ॥ ५५ ॥ ततः प्रसन्नो भगवान्विरिञ्चिर्विश्वभावनः ॥

---

१ जातवेदा इति पा० । २ ससर्वदैवतं शम्भुरिज्यते परमेश्वरः । ३ यस्याद्यं हि । ४ परमेश्वरः । ५ शक्तिमयमिति पा० । ६ विसर्जयित्वा इति आर्षम् । ७ देवदारुवने शुभे । ८ कल्मष इति पा० । ९ तपसा इति । १० देवमातरमिति पा० । ११ जपत इति पा० । १२ भगवानिति पा० । १३ ब्रह्माणमभितोजसम् । १४ परमेष्ठिने । १५ वेदात्ममूर्तये ।

वरं वरय भद्रन्ते वरदोऽस्मीत्यभाषत ॥५६॥ राजोवाच ॥ जपेयन्देवदेवेश गायत्रीं वेदमातरम् ॥ भूयो वर्षशतं साग्रं तावदायुर्भवेन्मम ॥५७॥ बाढमित्याह विश्वात्मा समालोक्य नराधिपम् ॥ स्पृष्ट्वा कराभ्यां सुप्रीतस्तत्रैवान्तरधीयत ॥ ५८ ॥ सोऽपि लब्धवरः श्रीमाञ्जजापाति प्रसन्नधीः ॥ शान्तस्त्रिषवणस्नायी कन्दमूलफलाशनः ॥ ५९ ॥ तस्य पूर्णे वर्षशते भगवानुग्रदीधितिः ॥ प्रादुरासीन्महायोगी भानो र्मण्डलमध्यतः ॥ ६० ॥ तं दृष्ट्वा वेदवपुषं मण्डलस्थं सनातनम् ॥ स्वयम्भुवमनाद्यन्तं ब्रह्माणं विस्मयङ्गतः ॥६१॥ तुष्टाव वैदिकैर्मन्त्रैः सावित्र्या च विशेषतः ॥ क्षणादपश्यत्पुरुषं तमेव परमेश्वरम् ॥ ६२ ॥ चतुर्मुखं जटामौलिमष्टहस्तं त्रिलोचनम् ॥ चन्द्रावयवलक्ष्माणं नरनारीतनुं हरम् ॥ ६३ ॥ भासयन्तं जगत्कृत्स्नं नीलकण्ठं स्वरश्मिभिः ॥ रक्ताम्बरधरं रक्तं रक्तमाल्यानुलेपनम् ॥ ६४ ॥ तद्भावभावितो दृष्ट्वा सद्भावेन परेण हि ॥ ननाम शिरसा रुद्रं सावित्र्या तेन चैव हि ॥ ६५ ॥ नमस्ते नीलकण्ठाय भास्वते परमेष्ठिने ॥ त्रयीमयाय रुद्राय कालरूपाय हेतवे ॥ ६६ ॥ तदा प्राह महादेवो राजानं प्रीतमानसः ॥ इमानि मे रहस्यानि नामानि शृणु चानघ ॥ ६७ ॥ सर्ववेदेषु गीतानि संसारशमनानि तु ॥ नमस्कुरुष्व नृपते एभिर्मां सततं शुचिः ॥ ६८ ॥ अधीष्व शतरुद्रीयं यजुषां सारमुद्धृतम् ॥ जपस्वानन्यचेतस्को मय्यासक्तमना नृप ॥ ६९ ॥ ब्रह्मचारी निराहारो भस्मनिष्ठः समाहितः ॥ जपेदामरणाद्रुद्रं स याति परमं पदम् ॥ ७० ॥ इत्युक्त्वा भगवान्रुद्रो भक्तानुग्रहकाम्यया ॥ पुनः संवत्सरशतं राज्ञे ह्यायुरकल्पयत् ॥ ७१ ॥ दत्त्वास्मै तत्परं ज्ञानं वैराग्यं परमेश्वरः ॥ क्षणादन्तर्दधे रुद्रस्तदद्भुतमिवाभवत् ॥ ७२ ॥ राजापि तपसा रुद्रं जजापानन्यमानसः ॥ भस्मच्छन्नस्त्रिषवणं स्नात्वा शान्तः समाहितः ॥ ७३ ॥ जपतस्तस्य नृपतेः पूर्णे वर्षशते पुनः ॥ योगप्रवृत्तिरभवत्कालात्कालपरं पदम् ॥ ७४ ॥

१ देवदेवेशमिति पा० । २ शरणंगतः । ३ देवं । ४ भावेन परमेणहि । ५ सावित्र्यानेनेति पा० । ६ कालरुद्राय । ७ नमस्कुरुष्व सततमिति पा० । ८ शुभैः । ९ अध्यायं । १० जपस्व इत्यार्षमात्मनेपदम् । ११ भस्मदिग्धः । १२ भस्मच्छन्नं त्रिषवणमिति पा० । १३ कालात्मकमिति, कालान्तकमिति, कालात्कालात्परं पदमिति पा० ।

विवेशैतद्वेदसारं[1] स्थानं वै परमेष्ठिनः ॥ भानोः सुमण्डलं[2] शुभ्रं ततो यातो महेश्वरम् ॥ ७५ ॥ यः पठेच्छृणुयाद्वापि राज्ञश्चरितमुत्तमम्[3] ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ७६ ॥ इति श्रीकूर्मपुराणे राजवंशकीर्त्तने विंशोऽध्यायः[×] ॥ २० ॥ सूत[4] उवाच ॥ त्रिधन्वा राजपुत्रस्तु धर्मेणापालयन्महीम् ॥ तस्य पुत्रोऽभवद्विद्वांस्त्रय्यारुण इति श्रुतः ॥१॥ तस्य सत्यव्रतो[5] नाम कुमारोऽभून्महाबलः ॥ भार्या सत्यधना नाम हरिश्चन्द्रमजीजनत् ॥२॥ हरिश्चन्द्रस्य पुत्रोऽभूद्रोहितो नाम वीर्यवान् ॥ रोहितस्य वृकः पुत्रस्तस्माद्बाहुरजायत ॥ ३ ॥ हरितो रोहितस्याथ धुन्धुस्तस्य सुतोऽभवत् ॥ विजयश्च सुदेवश्च धुन्धुपुत्रौ बभूवतुः ॥ विजयस्याभवत्पुत्रः कारुको[6]नाम वीर्यवान् ॥ सगरस्तस्य पुत्रोऽभूद्राजा परमधार्म्मिकः ॥ द्वे भार्ये सगरस्यापि प्रभा भानुमती तथा ॥ ४ ॥ ताभ्यामाराधितो वह्निः प्रददौ वरमुत्तमम् ॥ एकं भानुमती पुत्रमगृह्णादसमञ्जसम् ॥ ॥ ५ ॥ प्रभा षष्टिसहस्रन्तु पुत्राणां जगृहे शुभा ॥ असमंजसपुत्रोऽभूदंशुमान्नाम पार्थिवः ॥ ६ ॥ तस्य पुत्रो दिलीपस्तु दिलीपात्तु भगीरथः ॥ येन भागीरथी गङ्गा तपः कृत्वावतारिता ॥ ७ ॥ प्रसादाद्देवदेवस्य महादेवस्य धीमतः ॥ भगीरथस्य तपसा देवः प्रीतमना हरः ॥८॥ बभार शिरसा गङ्गां सोमान्ते सोमभूषणः ॥ भगीरथसुतश्चापि श्रुतो नाम बभूव ह ॥ ९ ॥ नाभागस्तस्य दायादः सिंधुद्वीपस्ततोऽभवत्[12] ॥ अयुतायुः सुतस्तस्य ऋतुपर्णो[13] मयाबलः ॥ १० ॥ ऋतुपर्णस्य पुत्रोऽभूत्सुदासो नाम धार्मिकः ॥ सौदासस्तस्य तनयः ख्यातः[14] कल्माषपादकः ॥ ११ ॥ वसिष्ठस्तु महातेजाः क्षेत्रे कल्माषपादके[15] ॥ अश्मकं जनयामास तमिक्ष्वाकुकुलध्वजम् ॥ १२ ॥ अश्मकस्योत्कलायान्तु[16] नकुलो नाम पार्थिवः ॥ स हि रामभयाद्राजा[17] वनं प्राप सुदुःखितः ॥ १३ ॥ दधत्[18] स नारिकवचं तस्माच्छतरथोऽभवत ॥ तस्माद्विलिबिलिः[19] श्रीमान् वृद्धशर्मा च तत्सुतः ॥ १४ ॥

---

१ विवेशवेदसारंच, विवेश तद्वेदसारमिति । २ श्रीमण्डलमिति । ३ राज्ञां चरितमिति । × एकोनविंशः लि० पु० । ४ कूर्म उवाच इति । ५ सत्यव्रतानाम इति । ६ कुरुको नाम इति । ७ कुरुकस्य इति । ८ कुरुकोनामवीर्यवान् । कुरुकस्यवृकः पुत्रस्तस्माद्बाहुरजायत इति । ९ ताभ्यामाराधितः प्रादादौर्वोऽग्निरिति, ताभ्यामाराधितः प्रादात्पुराग्निरिति । १० असमञ्जसस्य तनयो ह्यंशुमान्नाम इति, पुत्रोभूदंशुमान्नाम इति । ११ सोमः सोमविभूषणः इति । १२ सिन्धुद्वीपसमोऽभवदिति । १३ ऋतुपर्णस्तु तत्सुतः इति । १४ ततः इति । १५ कल्माषपादके इति । १६ अश्मकस्योत्तरायान्तु इति । १७ कामभयादिति । १८ सुतं, बिभ्रदिति । १९ दिलिविल इति, तस्माद्दिलिविलिः श्रीमान् वृद्धधर्म्मा च तत्सुत इति पा० ।

तस्माद्विश्वसहस्तस्मात्खट्वाङ्ग[1] इति विश्रुतः ॥ दीर्घबाहुः सुतस्तस्मादद्रघुस्तस्मादजायत[2] ॥ १५ ॥ रघोरजः समुत्पन्नो राजा दशरथ स्ततः ॥ रामो दाशरथिर्वीरो धर्मज्ञो लोकविश्रुतः ॥१६॥ भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ॥ सर्वे शक्रसमा युद्धे विष्णुशक्ति समन्विताः॥१७॥ जज्ञे रावणनाशार्थं विष्णुरंशेन विश्वभुक्[3]॥ रामस्य भार्या सुभगा जनकस्यात्मजा शुभा॥१८॥ सीता[4] त्रिलोकविख्याता शीलौदार्यगुणान्विता ॥ तपसा तोषिता देवी जनकेन गिरीन्द्रजा ॥१९॥ प्रायच्छज्जानकीं सीतां राममेवाश्रितां पतिम् ॥ प्रीतश्च भगवानी शस्त्रिशूली नीललोहितः ॥ २० ॥ प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः ॥ स राजा जनको धीमान्[5] दातुकामः सुतामिमाम् ॥ २१ ॥ अघोषयदमित्रघ्नो लोकेऽस्मिन्द्विजपुङ्गवः ॥ इदं धनुः समादातुं यः शक्नोति जगत्त्रये ॥ २२ ॥ देवो वा दानवो वापि स सीतां लब्धुमर्हति ॥ विज्ञाय रामो बलवाञ्जनकस्य गृहं प्रभुः ॥ २३ ॥ भञ्जयामास चादाय गत्वासौ लीलयैव हि ॥ उद्ववाहाथ[6] तां कन्यां पार्वतीमिव शङ्करः ॥ २४ ॥ रामः परमधर्मात्मा सेनामिव[7] च षण्मुखः ॥ ततो बहुतिथे काले राजा दशरथः स्वयम् ॥ २५ ॥ रामं ज्येष्ठसुतं वीरं राजानं कर्तुमारभत्[8] ॥ तस्याथ पत्नी सुभगा कैकेयी चारुहासिनी[9] ॥ २६ ॥ निवारयामास पतिं प्राह सम्भ्रान्तमानसा ॥ मत्सुतं भरतं वीरं राजानं कर्तुमर्हसि ॥ २७ ॥ पूर्वमेव वरौ यस्माद्दत्तौ मे भवता[10] यतः ॥ स तस्या वचनं श्रुत्वा राजा दुःखित मानसः ॥ २८ ॥ बाढमित्यब्रवीद्वाक्यं तथा रामोऽपि धर्मवित्[11] ॥ प्रणम्याथ पितुः पादौ लक्ष्मणेन सहाच्युतः ॥ २९ ॥ ययौ वनं सपत्नीकः कृत्वा समयमात्मवान् ॥ संवत्सराणां चत्वारि दश चैव महाबलः ॥३०॥ उवास तत्र भगवान् लक्ष्मणेन सह प्रभुः॥ कदाचिद्व सतोऽरण्ये रावणो नाम राक्षसः ॥३१॥ परिव्राजक[12]वेषेण सीतां हृत्वा ययौ पुरीम्॥अदृष्ट्वा लक्ष्मणो रामः सीतामाकुलितेन्द्रियौ॥३२॥

१ वट्वाङ्ग इति, वेटङ्ग इति, वट्वङ्ग इति पा० । २ सुतस्तस्य रघुस्तस्मादिति पा० । ३ विश्वहृदिति पा० । ४ सीतेति लोकविख्याता इति पा० । ५ श्रीमान्, विद्वानिति पा० । ६ उद्ववाह च इति पा० । उदुवाह इति तु वक्तव्ये उद्ववाह इत्यार्षम् । ७ देवसेनामिवाग्निजः इति पा० । ८ कर्तुमारभादित्यत्र परस्मैपदमार्षम् । ९ चारुभाषिणीति पा० । १० भवतानघ, भवता च यदिति पा० । ११ मतिमानिति पा० । १२ परिव्राजकरूपेणेति पा० ।

दुःखशोकाभिसन्तप्तौ बभूवतुररिन्दमौ ॥ ततः कदाचित्कपिना सुग्रीवेण द्विजोत्तमाः ॥ ३३ ॥ वानराणामभूत्सख्यं रामस्याक्लिष्टकर्मणः ॥ सुग्रीवस्यानुगो वीरो हनूमान्नाम वानरः ॥ ३४ ॥ वायुपुत्रो महातेजा रामस्यासीत्प्रियः सदा ॥ स कृत्वा परमं धैर्यं रामाय कृतनिश्चयः ॥ ३५ ॥ आनयिष्यामि तां सीतामित्युक्त्वा विचचार ह ॥ महीं सागरपर्यन्तां सीतादर्शनतत्परः ॥ ३६ ॥ जगाम रावणपुरीं लङ्कां सागरसंस्थिताम् ॥ तत्राथ निर्ज्जने देशे वृक्षमूले शुचिस्मिताम् ॥ ३७ ॥ अपश्यदमलां सीतां राक्षसीभिः समावृताम् ॥ अश्रुपूर्णेक्षणां हृद्यां संस्मरन्तीमनिन्दिताम् ॥३८॥राममिन्दीवरश्यामं लक्ष्मणञ्चात्मसंस्थिताम् ॥ निवेदयित्वा चात्मानं सीतायै रहसि प्रभुः ॥ ३९ ॥ असंशयाय प्रददावस्यै रामाङ्गुलीयकम् ॥ दृष्ट्वांगुलीयकं सीता पत्युः परमशोभनम् ॥ ४० ॥ मेने समागतं रामं प्रीतिविस्फुरितेक्षणा ॥ समाश्वास्य तदा सीतां दृष्ट्वा रामस्य चान्तिकम् ॥ ४१ ॥ नयिष्ये त्वां महाबाहुमुक्त्वा रामं ययौ पुनः ॥ निवेदयित्वा रामाय सीतादर्शनमात्मवान् ॥ ४२ ॥ तस्थौ रामेण पुरतो लक्ष्मणेन च पूजितः ॥ ततः स रामो बलवान्सार्द्धं हनुमता स्वयम् ॥ ४३ ॥ लक्ष्मणेन च युद्धाय बुद्धिंश्चक्रे हि रक्षसः ॥ कृत्वाथ वानरशतैर्लङ्कामार्गं महोदधेः ॥ ४४ ॥ सेतुं परमधर्मात्मा रावणं हतवान्प्रभुः ॥ सपत्नीकं हि ससुतं सभ्रातृकमरिन्दमः ॥ ४५ ॥ आनयामास तां सीतां वायुपुत्रसहायवान् ॥ सेतुमध्ये महादेवमीशानं कृत्तिवाससम् ॥ ४६ ॥ स्थापयामास लिङ्गस्थं पूजयामास राघवः ॥ तस्य देवो महादेवः पार्वत्या सह शंकरः ॥ ४७ ॥ प्रत्यक्षमेव भगवान्दत्तवान्वरमुत्तमम् ॥ यत्त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीदं द्विजातयः ॥४८॥ महापातकसंयुक्तास्तेषां पापं विनंक्ष्यति ॥ अन्यानि चैव पापानि स्नातस्यात्र महोदधौ ॥ ४९ ॥ दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥ यावत्स्थास्यन्ति गिरयो यावदेषा च मेदिनी ॥ ५० ॥ यावत्सेतुश्च तावच्च स्थास्यं[11]याम्यत्र तिरोहितः ॥ स्नानं दानं तपः श्राद्धं सर्वं भ[12]वतु चाक्षयम् ॥ ५१ ॥ स्मरणादेव

१ सखा इति पा० । २ विजने । ३ निवेदयित्वा इत्यार्षं, निवेद्य इति साधु । ४ स्वयमिति पा० । ५ विस्तारितेक्षणा । ६ अन्वेष्य । ७ चक्रेतिराक्षसमिति पा० । ८ मार्गे महोदधौ । ९ लिङ्गश्चेति पा० । १० तत्र इति पा० । ११ स्थास्यन्त्यत्र तिरोहिता इति पा० । १२ भविष्यत्यक्षयं महदिति पा० ।

लिङ्गस्य दिनंपापं[1] प्रणश्यति ॥ इत्युक्त्वा भगवाञ्छम्भुः[2] परिष्वज्य तु राघवम् ॥ ५२ ॥ सनन्दी[3] सगणो रुद्रस्तत्रैवान्तरधीयत ॥ रामोऽपि पालयामास राज्यं धर्मपरायणः ॥ ५३ ॥ अभिषिक्तो[4] महातेजा भरतेन महाबलः ॥ विशेषाद्ब्राह्मणान्सर्वान्पूजयमास चेश्वरम् ॥ ५४ ॥ यज्ञेन यज्ञहन्तारम्[5]अश्वमेधेन शङ्करम् ॥ रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः ॥ ५५ ॥ लवश्च सुमहाभागः सर्वतत्त्वार्थवित्सुधीः ॥ अतिथिस्तु कुशाज्जज्ञे निषधस्तत्सुतोऽभवत् ॥ ५६ ॥ नलश्च[6] निषधस्यासीत् नभास्तस्मादजायात ॥ नभसः पुण्डरीकाक्षः क्षेमधन्वा तु तत्सुतः ॥५७॥ तस्य पुत्रोऽभवद्वीरो देवानीकः प्रतापवान् ॥ अहीनगुस्तस्य सुतो महस्वांस्[7]तत्सुतोऽभवत् ॥५८॥ तस्माच्चन्द्रावलोकस्तु ताराधीश[8]श्च तत्सुतः ॥ ताराधीशाच्चन्द्रगिरिर्भानुवित्तस्ततोऽभवत ॥ ५९ ॥ श्रुतायुरभवत्तस्मादेते चेक्ष्वाकुवंशजाः ॥ सर्वे प्राधान्यतः प्रोक्ताः समासेन द्विजोत्तमाः ॥ ६० ॥ य इमं शृणुयान्नित्यमिक्ष्वाकोर्वंशमुत्तमम् ॥ सर्वपापविनिर्मुक्तो देवं[9] लोके महीयते ॥ ६१ ॥ इति श्रीकूर्मपुराणे इक्ष्वाकुवंशवर्णनं नाम ऐकविंशोऽध्यायः[×] ॥ २१ ॥ सूत[10] उवाच ॥ ऐलः पुरूरवाश्चाथ राजा राज्यमपालयत् ॥ तस्य पुत्रा बभूवुर्हि षडिन्द्र[11]समतेजसः ॥ १ ॥ आयुर्मायुरमायुश्च विश्वायुश्चैव वीर्यवान् ॥ शतायुश्च श्रुतायुश्च दिव्याश्चैवोर्वशीसुताः ॥ २ ॥ आयुषस्तनया वीराः पञ्चैवासन्महौजसः ॥ स्वर्भानुतनयायां वै प्रभायामिति नः श्रुतम् ॥ ३ ॥ नहुषः प्रथमस्तेषां धर्मज्ञो लोकविश्रुतः ॥ नहुषस्य तु दायादाः पञ्चेन्द्रो[12]पमतेजसः ॥ ४ ॥ उत्पन्नाः पितृकन्यायां विरजायां महाबलाः ॥ याति[13]र्ययातिः संयातिरायातिः पञ्चमोऽश्वकः ॥ ५ ॥ तेषां ययातिः पञ्चानां महाबलपराक्रमः ॥ देवयानीमुशनसः सुतां भार्यामवाप सः ॥ ६ ॥ शर्मिष्ठामासुरीञ्चैव तनयां वृषपर्वणः ॥ यदुश्च तुर्वसुश्चैव देवयानी व्यजायत[14] ॥ ७ ॥ द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठा चाप्यजी

१ नाशं यान्ति न संशय इति पा० । २ सोमः । ३ सहाम्बः । ४ महाबाहुरयोध्यायां । ५ यज्ञभोक्तारं । ६ नलस्तु निषधस्याभूदिति पा० । ७ सहस्त इति, सहस्वानिति, सहस्रांशुः सुतोभवदिति च पा० । ८ तारापीडस्तु इति पा० । ९ स्वर्गलोके । × विंशोध्यायः लि० पु० । १० रोमहर्षण उवाचेति पा० । ११ षडिन्द्रोपमतेजस इति पा० । १२ पञ्चासन्नमितौजसः इति, षडिन्द्रोपमतेजस इति पा० । १३ यतिरिति पा० । १४ अत्र अन्तर्भूतण्यन्तत्वादजनयादित्येवार्थः ।

जनत् ॥ सोऽभ्यषिञ्चदतिक्रम्य ज्येष्ठं यदुमनिन्दितम् ॥ ८ ॥ पुरुमेव कनीयांसं पितुर्वचनपालकम् ॥ दिशि दक्षिणपूर्वस्यां तुर्वसुं पुत्रमादिशत् ॥ ९ ॥ दक्षिणापरयो[1] राजा यदुं श्रेष्ठं[2] न्ययोजयत् ॥ प्रतीच्यामुत्तरायाञ्च द्रुह्युञ्चानुमकल्पयत् ॥ १० ॥ तैरियं पृथिवी सर्वा धर्मतः परिपालिता ॥ राजापि दारसहितो वनं प्राप महायशाः ॥ ११ ॥ यदोरप्यभवन् पुत्राः पञ्च देवसुतोपमाः ॥ सहस्रजित्तथा श्रेष्ठः[3] क्रोष्टुर्नीलो जिनो रघुः ॥ १२ ॥ सहस्रजित्सुतस्तद्वच्छतजिन्नाम पार्थिवः ॥ सुताः शतजितोऽप्यासंस्त्रयः परमधार्मिकाः ॥ १३ ॥ हैहयश्च हयश्चैव राजा वेणुहयश्च यः ॥ हैहयस्याभवत्पुत्रो धर्म इत्यभिविश्रुतः ॥ १४ ॥ तस्य पुत्रोऽभवद्विप्रा धर्मनेत्रः प्रतापवान् ॥ धर्मनेत्रस्य कीर्त्तिस्तु संज्ञितस्तत्सुतोऽभवत्[4] ॥ १५ ॥ महिष्मः[5] सञ्जितस्याभूद्भद्रश्रेण्यस्तदन्वयः ॥ भद्रश्रेण्यस्य दायादो दुर्दमो नाम पार्थिवः ॥ १६ ॥ दुर्दमस्य सुतो धीमानन्धको[6] नाम वीर्यवान् ॥ अन्धकस्य तु दायादाश्चत्वारो लोकसंमताः ॥ १७ ॥ कृतवीर्यः कृताग्निश्च कृतवर्मा च[7] तत्सुतः ॥ कृतौजाश्च चतुर्थोऽभूत्कार्त्तवीर्यस्तथार्जुनः[8] ॥ १८ ॥ सहस्रबाहुर्द्युतिमान्धनुर्वेदविदां वरः ॥ तस्य रामोऽभवन्मृत्युर्जामदग्न्यो जनार्दनः ॥ १९ ॥ तस्य पुत्रशतान्यासन्पञ्च तत्र महारथाः ॥ कृतास्त्रा बलिनः शूरा धर्मात्मानो मनस्विनः ॥२०॥ शूरश्च शूरसेनश्च कृष्णो[9] धृष्णस्तथैव च ॥ जयध्वजश्च बलवान्नारायणपरो नृपः ॥ २१ ॥ शूरसेनादयः पूर्वे चत्वारः प्रथितौजसः ॥ रुद्रभक्ता महात्मानः पूयजन्ति स्म शङ्करम् ॥ २२ ॥ जयध्वजस्तु मतिमान्देवं नारायणं हरिम्[10] ॥ जगाम शरणं विष्णुं दैवतं धर्मतत्परः ॥ २३ ॥ तमूचुरितरे पुत्रा नायं धर्मस्तवानघ ॥ ईश्वराराधनरतः पितास्माकमिति श्रुतिः ॥ २४ ॥ तानब्रवीन्महातेजा ह्येष धर्मः परो मम ॥ विष्णोरंशेन सम्भूता राजानो ये महीतले ॥ २५ ॥ राज्यं पालयिता[11] वश्यं भगवान्पुरुषोत्तमः ॥ पूजनीयो[12]ऽजितो विष्णुः पालको जगतां हरिः ॥ २६ ॥ सात्त्विकी राजसी चैव तामसी च स्वयं[13] प्रभुः ॥

---

१ दक्षिणापरयोः–दक्षिणस्यामपरस्याञ्च दिशि इत्यर्थः। २ ज्येष्ठमयोजयत्! ३ ज्येष्ठः। ४ संज्ञित इति पा०। ५ महिष्मानिति पा०। ६ धीमान्धेनुको। ७ तथैव च इति पा०। ८ कार्त्तवीर्यार्जुनोऽभवदिति, कार्तवीर्यो यथार्जुनः इति च पा० ९ धृष्टः कृष्ण इति पा०। १० प्रभुम्। ११ पालयितापूर्वं। १२ पूजनीयश्च य इति पा०। १३ स्वयम्भुव इति पा०।

तिस्रस्तु मूर्त्तयः[1] प्रोक्ताः सृष्टिस्थित्यन्तहेतवः ॥ २७॥ सत्त्वात्मा[2] भगवान्विष्णुः संस्थापयति सर्वदा॥सृजेद्ब्रह्मा रजोमूर्त्तिः संहरेत्तामसो हरः ॥ २८ ॥ तस्मान्महीपतीनान्तु राज्यं पालयतामिदम्[3] ॥ आराध्यो भगवान्विष्णुः केशवः केशिमर्दनः ॥ २९ ॥ निशम्य तस्य वचनं भ्रातरोऽन्ये मनस्विनः ॥ प्रोचुः संहारको[4] रुद्रः पूजनीयो मुमुक्षुभिः ॥ ३० ॥ अयं हि भगवान्रुद्रः सर्वं जगदिदं शिवः ॥ तमोगुणं समाश्रित्य कालान्ते[5] संहरेत्प्रभुः ॥ ३१ ॥ या सा घोरतमा मूर्त्तिरस्य तेजोमयी परा[6] ॥ संहरेद्विद्यया पूर्वं[7] संसारं[8] शूलभृत्तया ॥ ३२ ॥ ततस्तानब्रवीद्राजा[9] विचिन्त्यासौ जयध्वजः ॥ सत्त्वेन मुच्यते जन्तुः सत्त्वात्मा भगवान्हरिः ॥ ३३ ॥ तमूचुर्भ्रातरो रुद्रः सेवितः सात्त्विकैर्जनैः ॥ मोचयेत्[10]सत्त्वसंयुक्तः पूजयेत्सततं हरम् ॥ ३४ ॥ अथाब्रवीद्राजपुत्रः प्रहसन्[11]वै जयध्वजः ॥ स्वधर्मो[12] मुक्तये युक्तो नान्यो मुनिभिरिष्यते ॥ ३५ ॥ तथा च वैष्णवीं शक्तिं नृपाणान्दधतां[13] सदा ॥ आराधनं परो धर्मो मुरारेरमितौजसः ॥ ३६ ॥ तमब्रवीद्राजपुत्रः कृष्णो मतिमतां वरः ॥ यदर्जुनोऽस्मज्जनकः स धर्मं कृतवानिति ॥ ३७ ॥ एवं विवादे वितते शूरसेनोऽब्रवीद्वचः ॥ प्रमाणमृषयो ह्यत्र ब्रूयुस्ते तत्तथैव[14] तत् ॥ ३८ ॥ ततस्ते राजशार्दूलाः पप्रच्छुर्ब्रह्मवादिनः ॥ गत्वा सर्वे सुसंरब्धाः सप्तर्षीणां तदाश्रमम्[15] ॥ ३९ ॥ तानब्रुवंस्ते मुनयो वसिष्ठाद्या यथार्थतः ॥ या यस्याभिमता पुंसः सा हि तस्यैव देवता ॥ ४० ॥ किन्तु कार्यविशेषेण[16] पूजिता चेष्टदा[17] नृणाम् ॥ विशेषात्सर्वदा नायं नियमो ह्यन्यथा नृपाः ॥ ४१ ॥ नृपाणां दैवतं विष्णुस्तथेशश्च पुरन्दरः ॥ विप्राणामग्निरादित्यो ब्रह्मा चैव पिनाकधृक्[18] ॥ ४२ ॥ देवानां दैवतं[19] विष्णुर्दानवानां त्रिशूलधृक् ॥ गन्धर्वाणां तथा सोमो यक्षाणामपि कथ्यते ॥ ४३ ॥ विद्याधराणां वाग्देवी सिद्धानां भगवान् हरिः ॥ रक्षसां शंकरो रुद्रः किन्नराणाञ्च पार्वती ॥ ४४ ॥ ऋषीणां भगवान् ब्रह्मा महादेवस्त्रिशूलभृत् ॥ मान्या स्त्रीणां[20]मुमा देवी तथा विष्ण्वीश[21]भास्कराः ॥ ४५ ॥ गृहस्थानाञ्च सर्वे स्युर्ब्रह्म[22] वै ब्रह्मचारिणाम् ॥ वैखानसानामर्कः स्याद्यतीनां

---

१ मूर्तयः । २ सर्वात्मा । ३ मयम् । ४ संहारकृद्रुद्रः इति पा० । ५ कल्पान्ते । ६ शुभा । ७ सर्वमिति । ८ संसारेमूलभूतया । ९ नब्रवीत्सर्वान् प्रयतात्मा । १० मोचयेत्सत्त्वसंयुक्तं पूजितः शंकरो हरः । ११ सह सत्त्वैरिति पा० । १२ पन्था इति, अधर्म्ममुक्तये मुक्त इति पा० । १३ देवसंमतम् । १४ यत्तथैव इति पा० । १५ तदाश्रयामिति पा० । १६ धर्मविशेषेण । १७ तथैव चेति पा० । १८ त्रिशूलभृदिति पा० । १९ देवतं । २० मनूनां स्यादुमा इति पा० । २१ विष्णुः सभास्करः इति पा० । २२ ब्रह्मा इति पा० ।

च महेश्वरः ॥ ४६ ॥ भूतानां भगवान्रुद्रः कूष्माण्डानां विनायकः ॥ सर्वेषां भगवान् ब्रह्मा देवदेवः प्रजापतिः ॥ ४७ ॥ इत्येवं भग
वान् ब्रह्मा स्वयं देवो ह्यभाषत ॥ तस्माज्जयध्वजो नूनं विष्णवाराधनमर्हति ॥ ४८ ॥ किन्तु रुद्रेण तादात्म्यं बुध्वा पूज्यो हरिर्नरैः ॥
अन्यथा नृपतेः शत्रुं न हरिः संहरेद्यतः ॥ ४९ ॥ सम्प्रणम्याथ ते जग्मुः पुरीं परमशोभनाम् ॥ पालयाञ्चक्रिरे पृथ्वीञ्जित्वा सर्वांत्रिपूत्तणे
॥ ५० ॥ ततः कदाचिद्विप्रेन्द्रा विदेहो नाम दानवः ॥ भीषणः सर्वसत्त्वानां पुरीं तेषां समाययौ ॥ ५१ ॥ दंष्ट्राकरालो दीप्तात्मा युगा
न्तदहनोपमः ॥ शूलमादाय सूर्याभं नादयन्वै दिशो दश ॥ ५२ ॥ तन्नादश्रवणान्मर्त्यास्तत्र ये निवसन्ति ते ॥ तत्यजुर्जीवितं त्वन्ये
दुद्रुवुर्भयविह्वलाः ॥ ५३ ॥ ततः सर्वे सुसंयत्ताः कार्त्तवीर्यात्मजास्तदा ॥ शूरसेनादयः पञ्च राजानस्तु महाबलाः ॥ ५४ ॥ युयुधुर्दानवं
शक्तिगिरिकूटासिमुद्गरैः ॥ तान् सर्वान् स हि विप्रेन्द्राः शूलेन प्रहसन्निव ॥ ५५ ॥ युद्धाय कृतसंरम्भा विदेहं त्वभिदुद्रुवुः ॥ शूरोऽस्त्रं
प्राहिणोद्रौद्रं शूरसेनस्तु वारुणम् ॥ ५६ ॥ प्राजापत्यं तथा कृष्णो वायव्यं धृष्ण एव च ॥ जयध्वजश्च कौबेरमैन्द्रमाग्नेयमेव च ॥ ५७ ॥
भञ्जयामास शूलेन तान्यस्त्राणि स दानवः ॥ ततः कृष्णो महावीर्यो गदामादाय भीषणाम् ॥५८॥ स्पृष्टमात्रेण तरसा चिक्षेप च ननाद
च ॥ सम्प्राप्य सा गदास्योरो विदेहस्य शिलोपमम् ॥ ५९ ॥ न दानवश्चालयितुं शशाकान्तकसन्निभम् ॥ दुद्रुवुस्ते भयग्रस्ता दृष्ट्वा
तस्यातिपौरुषम् ॥ ६० ॥ जयध्वजस्तु मतिमान् सस्मार जगतः पतिम् ॥ विष्णुं जयिष्णुं लोकादिमप्रमेयमनामयम् ॥ ६१ ॥ त्रातारं
पुरुषं पूर्वं श्रीपतिं पीतवाससम् ॥ ततः प्रादुरभूच्चक्रं सूर्यायुतसमप्रभम् ॥ ६२ ॥ आदेशाद्वासुदेवस्य भक्तानुग्रहणात्तदा ॥ जग्राह जगतां
योनिं स्मृत्वा नारायणं नृपः॥६३॥प्राहिणोद्वै विदेहाय दानवेभ्यो यथा हरिः॥सम्प्राप्य तस्य घोरस्य स्कंधदेशं सुदर्शनम् ॥६४॥ पृथिव्यां
पातयामास शिरोऽद्रिशिखराकृति॥ तस्मिन् हते देवरिपौ शूराद्या भ्रातरो नृपाः॥६५॥तद्धि चक्रं पुरा विष्णुस्तपसाराध्य शंकरम् ॥ यस्मा

---

१ तान् प्रणम्याथ इति पा० । २ पुरमिति पा० ।३ कार्त्तवीर्यार्जुनात्मजा इति पा० । ४ सर्वान् दानवो विप्राः शूलेन प्रहसन्निव । वारयामास घोरात्मा कल्पान्ते भैरवो यथा । शूरसे
नादयः पञ्च राजानस्तु महाबलाः इति पा० । ५ जंभयामास । ६ स्पृष्ट्वा मन्त्रेण इति पा० । ७ सर्वामिति पा० । ८ भक्तानुग्रहकारणादिति पा० ।

दवाप तत्तस्मादसुराणां विनाशकम् ॥ ६६ ॥ समाययुः पुरीं रम्यां भ्रातरश्चाप्यपूजयन् ॥ श्रुत्वाजगाम भगवाञ्जयध्वजपराक्रमम् ॥६७॥ कार्त्तवीर्यसुतं द्रष्टुं विश्वामित्रो महामुनिः ॥ तमागतमथो दृष्ट्वा राजा सम्भ्रान्तलोचनः ॥६८॥ समावेश्यासने रम्ये पूजयामास भावतः ॥ उवाच भगवन् घोरः प्रसादाद्भवतोऽसुरः ॥ ६९ ॥ निपातितो मया सोऽस्थं विदेहो दानवेश्वरः ॥ त्वद्वाक्याच्छिन्नसन्देहो विष्णुं सत्यपराक्रमम् ॥ ७० ॥ प्रपन्नः शरणं तेन प्रसादो मे कृतः शुभः ॥ यक्ष्यामि परमेशानं विष्णुं पद्मदलेक्षणम् ॥७१॥ कथं केन विधानेन सम्पूज्यो हरिरीश्वरः ॥ कोऽयं नारायणो देवः किंप्रभावश्च सुव्रत ॥७२॥ सर्वमेतन्ममाचक्ष्व परं कौतूहलं हि मे ॥ जयध्वजस्य वचनं श्रुत्वा शान्तो मुनिस्ततः ॥ दृष्ट्वा हरौ परां भक्तिं विश्वामित्र उवाच ह ॥ ७३ ॥ विश्वामित्र उवाच ॥ यतः प्रवृत्तिर्भूतानां यस्मिन्सर्वं यतो जगत् ॥ ७४ ॥ स विष्णुः सर्वभूतात्मा तमाश्रित्य विमुच्यते ॥ यमक्षरात्परतरात्परं प्राहुर्गुहाश्रयम् ॥ ७५ ॥ आनन्दं परमं व्योम स वै नारायणः स्मृतः ॥ नित्योदितो निर्विकल्पो नित्यानन्दो निरञ्जनः ॥ ७६ ॥ चतुर्व्यूहधरो विष्णुरव्यूहः प्रोच्यते स्वयम् ॥ परमात्मा परन्धाम परं व्योम परं पदम् ॥ ७७ ॥ त्रिपादमक्षरं ब्रह्म तमाहुर्ब्रह्मवादिनः ॥ स वासुदेवो विश्वात्मा योगात्मा पुरुषोत्तमः ॥ ७८ ॥ यस्यांशसम्भवो ब्रह्मा रुद्रोऽपि परमेश्वरः ॥ स्ववर्णाश्रमधर्मेण पुंसां यः पुरुषोत्तमः ॥ ७९ ॥ अकामाद्धतभावेन समाराध्यो न चान्यथा ॥ एतावदुक्त्वा भगवान्विश्वामित्रो महातपाः ॥ ८० ॥ शूराद्यैः पूजितो विप्रो जगामाथ स्वमाश्रमम् ॥ अथ शूरादयो देवमयजन्त महेश्वरम् ॥ ८१ ॥ यज्ञेन यज्ञगम्यं तं निष्कामा रुद्रमव्ययम् ॥ तान्वसिष्ठस्तु भगवान्याजयामास धर्मवित् ॥ ८२ ॥ गौतमोऽगस्तिरत्रिश्च सर्वे रुद्रपराक्रमाः ॥ विश्वामित्रस्तु भगवाञ्जयध्वजमरिन्दमम् ॥ ८३ ॥ याजयामासात भूतादिमादिदेवं जनार्द

१ कृत्वा जयपराक्रममिति पा० । २ सम्भ्रान्तमानस इति, मयास्त्रेण इति पा० । ३ संख्ये इति पा० । ४ पश्यामि । ५ प्रकारेण इति पा० । ६ गुहाशया इति, यमक्षरात्क्षराच्चैव परंप्राहुर्गुहाशयमिति पा० । गुहा मनीषिणां परिशुद्धा बुद्धिरिति शङ्करभाष्ये । ७ निरामयः । ८ बुधैः । ९ वेदं । १० यस्याङ्गादभवद्ब्रह्मा । ११ सवर्णाश्रमधर्मेण इति पा० । १२ रुद्रस्यायं परा मूर्त्तिरिति, अकामहतभावेन इति, अकामाहतभावेन इति पा० । १३ रुद्रपरायणा इति पा० ।

नम् ॥ तस्य यज्ञे महायोगी साक्षाद्देवः स्वयं हरिः ॥ ८४ ॥ आविरासीत्स भगवान्तदद्भुतमिवाभवत् ॥ ८५ ॥ जयध्वजोऽपि तं विष्णुं रुद्रस्य परमां तनुम् ॥ इत्येवं सर्वदा बुद्ध्वा यत्नेनायजदच्युतम् ॥ ८६ ॥ य इमं शृणुयान्नित्यं जयध्वजपराक्रमम् ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ८७ ॥ इति श्रीकूर्मपुराणे सोमवंशानुकीर्त्तनं नाम ×द्वाविंशोऽध्यायः ॥ २२ ॥ सूत उवाच ॥ जयध्वजस्य पुत्रोऽभूत्तालजङ्घ इति स्मृतः ॥ शतं पुत्रास्तु तस्यासन्तालजङ्घा इति स्मृताः ॥ १ ॥ तेषां ज्येष्ठो महावीर्यो वीतिहोत्रोऽभवन्नृपः ॥ वृषप्रभृतयश्चान्ये यादवाः पुण्यकर्मिणः ॥ २ ॥ वृषो वंशकरस्तेषां तस्य पुत्रोऽभवन्मधुः ॥ मधोः पुत्रशतं त्वासीद्वृषणस्तस्य वंशभाक् ॥ ३ ॥ वीतिहोत्रसुतश्चापि विश्रुतोऽनन्त इत्यतः ॥ दुर्जयस्तस्य पुत्रोऽभूत्सर्वशास्त्रविशारदः ॥ ४ ॥ तस्य भार्या रूपवती गुणैः सर्वैरलंकृता ॥ पतिव्रतासीत्पतिना स्वधर्मपरिपालिका ॥ ५ ॥ स कदाचिन्महाराजः कालिन्दीतीरसंस्थिताम् ॥ अपश्यदुर्वशीं देवीं गायन्तीं मधुरश्रुतिम् ॥ ६ ॥ ततः कामाहतमनास्तत्समीपमुपेत्य वै ॥ प्रोवाच सुचिरं कालं देवि रन्तुं मयार्हसि ॥ ७॥ सा देवी नृपतिं दृष्ट्वा रूपलावण्यसंयुतम् ॥ रेमे तेन चिरं कालं कामदेवमिवापरम् ॥ ८ ॥ कालात्प्रबुद्धो राजा तामुर्वशीं प्राह शोभनाम् ॥ गमिष्यामि पुरीं रम्यां हसन्तीत्यब्रवीद्वचः ॥ ९ ॥ न ह्येतेनोपभोगेन भवतो राजसुन्दर ॥ प्रीतिः सञ्जायते मह्यं स्थातव्यं वत्सरं पुनः ॥ १० ॥ तामब्रवीत्स मतिमान् गत्वा शीघ्रतरं पुरीम् ॥ आगमिष्यामि भूयोऽत्र तन्मेऽनुज्ञातुमर्हसि ॥ ११ ॥ तमब्रवीत्सा सुभगा तथा कुरु विशाम्पते ॥ नान्ययाप्सरसा तावद्रन्तव्यं भवता पुनः ॥ १२ ॥ ओमित्युक्त्वा ययौ तूर्णं पुरीं परमशोभनाम् ॥ गत्वा पतिव्रतां पत्नीं दृष्ट्वा भीतोऽभवन्नृपः ॥ १३ ॥ संप्रेक्ष्य सा गुणवती भार्या तस्य पतिव्रता ॥ भीतं प्रसन्नया प्राह वाचा पीनपयोधरा ॥ १४ ॥ स्वामिन्

---

× एकविंशोध्यायः लि० पु० १ प्रकीर्तिता इति पा० । २ वृषा इति, वृषादंशकर इति पा० । ३ कर्षण इति वृषश इति पा० पुत्रोभूत् इति, । ४ सुतश्चासीदिति पा० । ५ ऽवनिरक्षक इति, इत्युत इति पा० । ६ सत्यवती । ७ कदाचिन्महाभाग इति पा० । ८ मधुरस्वरामिति पा० । ९ कामयमानां तां स समीपमिति । १० राजासावुर्वशीमिति पा० । ११ साब्रवी द्वचः । १२ नह्यनेनोपभोगेनेतिं पा० । १३ भीतं प्राह प्रसन्नैवेति पा० ।

किमत्र भवतो भीतिरद्य प्रवर्त्तते ॥ तद्ब्रूहि मे यथातत्त्वं न राज्ञां कीर्त्तयेत्विदम् ॥ १५ ॥ स तस्या वाक्यमाकर्ण्य लज्जावनतमानसः ॥ नोवाच किञ्चिन्नृपतिर्ज्ञानदृष्ट्या विवेद सा ॥ १६ ॥ न भेतव्यं त्वया राजन् कार्यं पापविशोधनम् ॥ भीते त्वयि महाराज राष्ट्रं ते नाशमेष्यति ॥ १७ ॥ ततः स राजा द्युतिमान्निर्गत्य तु पुरात्ततः ॥ गत्वा कण्वाश्रमं पुण्यं दृष्ट्वा तत्र महामुनिम् ॥ १८ ॥ निशम्य कण्ववदनात्प्रायश्चित्तविधिं शुभम् ॥ जगाम हिमवत्पृष्ठं समुद्दिष्टं महाबलः ॥ १९ ॥ सोऽपश्यत्पथि राजेन्द्रो गन्धर्ववरमुत्तमम् ॥ भ्राजमानं श्रिया व्योम्नि भूषितं दिव्यमालया ॥२०॥ वीक्ष्य मालाममित्रघ्नः सस्माराप्सरसं वराम् ॥ उर्वशीं तां मनश्चक्रे तस्या एवेयमर्हति ॥२१॥ सोऽतीव कामुको राजा गन्धर्वेणाथ तेन हि ॥ चकार सुमहद्युद्धं मालामादातुमुद्यतः ॥२२॥ विजित्य समरे मालां गृहीत्वा दुर्जयो द्विजाः ॥ जगाम तामप्सरसं कालिन्दीं द्रष्टुमादरात् ॥ २३ ॥ अदृष्ट्वाप्सरसं तत्र कामबाणाभिपीडितः ॥ बभ्राम सकलां पृथ्वीं सप्तद्वीपसमन्विताम् ॥ २४ ॥ आक्रम्य हिमवत्पार्श्वमुर्वशीदर्शनोत्सुकः ॥ जगाम शैलप्रवरं हेमकूटमिति श्रुतम् ॥ २५ ॥ तत्र तत्राप्सरोवर्या दृष्ट्वा तं सिंहविक्रमम् ॥ कामं सन्दधिरे घोरं भूषितं चित्रमालया ॥२६॥ संस्मरन्नुर्वशीवाक्यं तस्यां संसक्तमानसः ॥ न पश्यति स्म ताः सर्वा गिरेः शृङ्गाणि जग्मिवान् ॥ २७॥ तत्राप्यप्सरसं दिव्यामदृष्ट्वा कामपीडितः ॥ देवलोकं महामेरुं ययौ देवपराक्रमः ॥ २८ ॥ स तत्र मानसं नाम सरस्त्रैलोक्यविश्रुतम् ॥ भेजे शृङ्गमतिक्रम्य स्वबाहुबलभावितः ॥ २९ ॥ तस्य तीरेषु सुभगाश्चरन्तीमतिलालसाम् ॥ दृष्टवाननवद्याङ्गीं तस्यै मालान्ददौ पुनः ॥ ३० ॥ स मालया तदा देवीं भूषितां प्रेक्ष्य मोहितः ॥ रेमे कृतार्थमात्मानं जानानः सुचिरन्तया ॥ ३१ ॥ अथोर्वशी राजवर्यं रतान्ते वाक्यमब्रवीत् ॥ किं कृतं भवता वीर पुरीं गत्वा तदा

१ तद्ब्रूहि यथा तत्त्वमिति, ब्रूहि मे स्वं यथातत्त्वं न भयं कर्तुमर्हसि इति च पा० । २ रागादिति पा० । ३ कुरु । ४ तदेति पा० । ५ निर्दिश्य इति पा० । ६ नृपः । ७ हिमवत्पार्श्वं समुद्दिश्य इति पा० । ८ सोऽपश्यदथ इति पा० । ९ वीक्ष्यमाणो ह्यमित्रघ्न इति पा० । १० तस्यामेव महामतिः । ११ जगाम । १२ स्मृतामिति पा० । १३ साचा । १४ दिव्यमालया । १५ शृङ्गाण्यतिक्रम्य इति पा० । १६ स तस्य तीरे इतिपा० । १७ दृष्ट्वातामनवद्याङ्गीं । १८ मेने इति पा० । १९ नभः सुरुचिरं यथा इति पा० । २० वृथा इति पा० ।

नृप॥३२॥ स तस्यै सर्वमाचष्ट पत्न्या यत्समुदीरितम् ॥ कण्वस्य दर्शनञ्चैव मालापहरणं तथा॥३३॥श्रुत्वैतद्व्याहृतं तेन गच्छेत्याह हितैषिणी ॥ शापं दास्यति ते कण्वो ममापि भवतः प्रिया ॥ ३४ ॥ तया सकृन्महाराजः प्रोक्तोऽपि मदमोहितः ॥ न च तत्कृतवान्वाक्यं तत्र संन्यस्तमानसः ॥ ३५ ॥ तदोर्वशी कामरूपा राज्ञे स्वं रूपमुत्कटम् ॥ सुरोमशं पिङ्गलाक्षं दर्शयामास सर्वदा ॥ ३६ ॥ तस्यां विरक्तचेतस्कः स्मृत्वा कण्वाभिभाषितम् ॥ धिङ्मामिति विनिश्चित्य तपः कर्त्तुं समारभत् ॥ ३७ ॥ संवत्सरद्वादशकं कन्दमूलफलाशनः ॥ भूय एव द्वादशकं वायुभक्षोऽभवन्नृपः ॥ ३८ ॥ गत्वा कण्वाश्रमं भीत्या तस्मै सर्वं न्यवेदयत् ॥ वासमप्सरसा भूयस्तपोयोगमनुत्तमम् ॥ ३९ ॥ वीक्ष्य तं राजशार्दूलं प्रसन्नो भगवानृषिः ॥ कर्त्तुकामो हि निर्बीजं तस्याघमिदमब्रवीत् ॥ ४० ॥ कण्व उवाच ॥ गच्छ वाराणसीं दिव्यामीश्वराध्युषितां पुरीम् ॥ आस्ते मोचयितुं लोकं तत्र देवो महेश्वरः ॥ ४१ ॥ स्नात्वा सन्तर्प्य विधिवद्गङ्गायां देवताः पितॄन् ॥ दृष्ट्वा विश्वेश्वरं लिङ्गं किल्बिषान्मोक्ष्यसे क्षणात् ॥ ४२ ॥ प्रणम्य शिरसा कण्वमनुज्ञाप्य च दुर्जयः ॥ वाराणस्यां हरं दृष्ट्वा पापान्मुक्तोऽभवत्ततः॥४३॥जगाम स्वपुरीं शुभ्रां पालयामास मेदिनीम् ॥ याजयामास तं कण्वो याचितो घृणया मुनिः॥४४॥ तस्य पुत्रोऽथ मतिमान् सुप्रतीक इति स्मृतः ॥ बभूव जातमात्रं तं राजानमुपतस्थिरे॥४५॥उर्वश्याञ्च महावीर्याः सप्त देवसुतोपमाः ॥ कन्या जगृहिरे सर्वा गन्धर्व्यो दयिता द्विजाः ॥४६॥ एष वः कथितः सम्यक् सहस्रजित उत्तमः ॥ वंशः पापहरो नृणां क्रोष्टोरपि निबोधत ॥ २७ ॥ इति श्रीकूर्मपुराणे राजवंशानुकीर्त्तने ×त्रयोविंशोऽध्यायः ॥ २३ ॥ अथ वंशकीर्तिवर्णनम् ॥ सूत उवाच ॥ क्रोष्टोरेकोऽभवत्पुत्रो वज्रवानिति विश्रुतः ॥ तस्य पुत्रोऽभवच्छान्तिः कुशिकस्तत्सुतोऽभवत् ॥ १ ॥ कुशिकादभवत्पुत्रो नाम्ना चित्ररथो बली ॥

१ वचनं । २ शापंददातीति पा० । ३ न तत्याजाथ तत्पार्श्वमिति पा० । ४ कुत्सितम् । ५ विनिश्चत्य तपः कर्त्तुं, ततः कर्त्तुमिति पा० । समारभत इति साधु । ६ प्रीत्योति पा० । ७ गत्वा इति पा० । ८ देव्या इति पा० । ९ मोक्ष्यसेखिलात् इति पा० । १० शिवभिति० । ११ रम्यामिति पा० । १२ धर्मेत इति पा० । १३ सुप्रीत इति, विश्रुत इति पा० । × द्वाविंशः लि० पु० । १४ कुशंकुरिति पा० ।

अथ चैत्ररथिर्लोके शंशबिन्दुरिति स्मृतः ॥ २ ॥ तस्य पुत्रः पृथुयशा राजाभूद्धर्मतत्परः ॥ पृथुकर्मा च तत्पुत्रस्तस्मात्पृथुजयोऽभवत् ॥ ३ ॥ पृथुकीर्तिरभूत्तस्मात्पृथुदानस्ततोऽभवत् ॥ पृथुश्रवास्तस्य पुत्रस्तस्यासीत्पृथुसत्तमः ॥ ४ ॥ उशनास्तस्य पुत्रोऽभूच्छतेपुस्तत्सुतोऽभवत् ॥ तस्माद्वै रुक्मकवचः परावृत्तश्च तत्सुतः ॥ ५ ॥ परावृत्तसुतो जज्ञे यामघो लोकविश्रुतः ॥ तस्माद्विदर्भः सञ्जज्ञे विदर्भात्क्रथकौशिकौ ॥ ६ ॥ लोमपादस्तृतीयस्तु बभ्रुस्तस्यात्मजो नृपः ॥ धृतिस्तस्याभवत्पुत्रः श्वेतस्तस्याप्यभूत्सुतः ॥ ७ ॥ श्वेतस्य पुत्रो बलवान्नाम्ना विश्वसहः स्मृतः ॥ तस्य पुत्रो महावीर्यः प्रभावात्कौशिकः स्मृतः ॥ ८ ॥ अभूत्तस्य सुतो धीमान् सुमन्तश्च ततोऽनलः ॥ अनलस्य सुतः श्वेनिः श्वेनेरन्येऽभवन्सुताः ॥ ९ ॥ तेषां प्रधानो द्युतिमान्वपुष्मान्तत्सुतोऽभवत् ॥ वपुष्मतो बृहन्मेधाः श्रीदेवस्तत्सुतोऽभवत् ॥ १० ॥ तस्य वीतरथो विप्रा रुद्रभक्तो महाबलः ॥ क्रथस्याप्यभवत्कुन्तिर्वृष्णिस्तस्याभवत्सुतः ॥ ११ ॥ तस्मान्नवरथो नाम बभूव सुमहाबलः ॥ कदाचिन्मृगयां यातो दृष्ट्वा राक्षसमूर्जितम् ॥ १२ ॥ दुद्राव महताविष्टो भयेन मुनिपुङ्गवाः ॥ अन्वधावत संक्रुद्धो राक्षसस्तं महाबलः ॥ १३ ॥ दुर्योधनोऽग्निसंकाशः शूलासक्तमहाकरः ॥ राजा नवरथो भीतो नातिदूरादवस्थितम् ॥ १४ ॥ अपश्यत्परमं स्थानं सरस्वत्याः सुगोपितम् ॥ स तद्वेगेन महता सम्प्राप्य मतिमान्नृपः ॥ १५ ॥ ववन्दे शिरसा दृष्ट्वा साक्षाद्देवीं सरस्वतीम् ॥ तुष्टाव वाग्भिरिष्टाभिर्बद्धाञ्जलिरमित्रजित् ॥ १६ ॥ पपात दण्डवद्भूमौ त्वामहं शरणङ्गतः ॥ नमस्यामि महादेवीं साक्षाद्देवीं सरस्वतीम् ॥ १७ ॥ वाग्देवतामनाद्यन्तामीश्वरीं ब्रह्मचारिणीम् ॥ नमस्ये जगतां योनिं योगिनीं परमां कलाम् ॥ १८ ॥ हिरण्यगर्भसम्भूतां त्रिनेत्रां चन्द्रशेखराम् । नमस्ये परमानन्दां चित्कलां ब्रह्मरूपिणीम् ॥ १९ ॥ पाहि मां परमेशानि भीतं शरणमागतम् ॥ एतस्मिन्नन्तरे क्रुद्धो राजानं राक्षसे

१ शशिबिन्दुरिति पा०। २ पृथुवर्मा इति पा०। ३ तस्याभूदिति पा०। ४ रोमपाद इति, रोमपादसुतो यस्तु रुद्रस्तस्यात्मजोऽभवदिति पा०। ५ सन्तः इति, सत इति पा०। ६ सन्तस्य इति पा०। ७ शुभ इति पा०। ८ प्रजावान् कौशिकस्तत इति पा०। ९ सुमन्तुस्तत्सुतोऽनल इति, ततोऽमळ इति पा०। १० कौशिकस्य सुतश्चेदिश्चैद्यस्तस्याभवन्सुताः, अमलस्य इति। ११ कुंभी इति०। १२सुतः। वृष्णेर्निर्वृतिरुत्पन्नो दशार्हस्तत्सुतो द्विजाः। दशार्हपुत्रोमारस्याज्जीवसूस्तत्सुतोभवत्। आसीद्भीमरथो वीरो निष्कृतिः परवीरहा। तस्य भीमरथः पुत्रस्तस्माद्वै तरथोभवत्। दाता धर्मरतो नित्यं सत्यशीलपराक्रमः इति। १३ सभयाविष्टो भवनं। १४ भीत्या। १५ धर्मचारिणीम्। १६हिरण्यगर्भमहिषीमिति०। १७निष्कलां १८शांकरीशानि इति पा०।

श्वरः ॥ २० ॥ हन्तुं समागतः स्थानं यत्र देवी सरस्वती ॥ समुद्यम्य तथा शूलं प्रविष्टो बलगर्वितः ॥ २१ ॥ त्रिलोकमातुर्हि स्थान शशाङ्कादित्यसन्निभम् ॥ तदन्तरे महद्भूतं युगान्तादित्यसन्निभम् ॥२२॥ शूलेनोरसि निर्भिद्य पातयामास तं भुवि ॥ गच्छेत्याह महाराज न स्थातव्यं त्वया पुनः ॥ २३ ॥ इदानीं निर्भयस्तूर्णं स्थानेऽस्मिन्राक्षसो हतः ॥ ततः प्रणम्य हृष्टात्मा राजा नवरथः परम् ॥ २४ ॥ पुरीं जगाम विप्रेन्द्राः पुरन्दरपुरोपमाम् ॥ स्थापयामास देवेशीं तत्र भक्तिसमन्वितः ॥ २५ ॥ ईजे च विविधैर्यज्ञैर्होमैर्देवीं सरस्वतीम् ॥ तस्य चासीद्दशरथः पुत्रः परमधार्मिकः ॥ २६ ॥ देव्या भक्तो महातेजाः शकुनिस्तस्य चात्मजः ॥ तस्मात्करम्भः सम्भूतो देवरातोऽभवत्ततः ॥ २७ ॥ ईजे स चाश्वमेधेन देवक्षत्रश्च तत्सुतः ॥ मधुस्तस्य तु दायादस्तस्मात्कुरुरजायत ॥ २८ ॥ पुत्रद्वयमभूत्तस्य सुत्रामा चानुरेव च ॥ अनोस्तु प्रियगोत्रोऽभूदंशुस्तस्य च रिक्थभाक् ॥ २९ ॥ अथांशोरन्धको नाम विष्णुभक्तः प्रतापवान् ॥ महात्मा दाननिरतो धनुर्वेदविदां वरः ॥ ३० ॥ स नारदस्य वचनाद्वासुदेवार्चने रतः ॥ शास्त्रं प्रवर्त्तयामास कुण्डगोलादिभिः श्रुतम् ॥३१॥ तस्य नाम्ना तु विख्यातं सात्वतानाञ्च शोभनम् ॥ प्रवर्त्तते महच्छास्त्रं कुण्डादीनां हितावहम् ॥ ३२ ॥ सात्वतस्तस्य पुत्रोऽभूत्सर्वशास्त्रविशारदः॥पुण्यश्लोको महाराजस्तेन वै तत्प्रवर्त्तितम् ॥३३॥ सात्वतान्सत्वसम्पन्नान्कौशल्या सुषुवे सुतान् ॥ अन्धकं वै महाभोजं वृष्णिं देवावृधं नृपम् ॥३४॥ ज्येष्ठञ्च भजमानाख्यं धनुर्वेदविदां वरम्॥तेषां देवावृधो राजा चचार परमं तपः ॥३५॥ पुत्रः सर्वगुणोपेतो मम भूयादिति प्रभुः ॥ तस्य बभ्रुरिति ख्यातः पुण्यश्लोकोऽभवन्नृपः ॥ ३६ ॥ धार्मिको रूपसम्पन्नस्तत्त्वज्ञानरतः सदा ॥ भजमानाः श्रियन्दिव्यां भजमानाद्विजज्ञिरे ॥ ३७ ॥ तेषां प्रधानौ विख्यातौ निमिः कृकण एव च ॥ महाभोजकुले जाता

२ तदा इति, महाशूलमिति पा० । ३ बलदर्पित इति पा० । ४ मातुस्संस्थानं इति पा० । ५ यजते इति पा० । ६ संजातो इति पा०। ७ देवराडभवत् इति पा० । ८ देवक्षेत्रश्च इति पा० । ९ तस्मात्कुरुवशोऽभवदिति पा० । १० कुरुकुत्सोऽभूदिति पा० । ११ अथांशोः सात्वत इति, सत्वतो नाम इति, साधक इति पा० । १२ श्रितम् इति पा० । १३ सात्वतं नाम इति पा० । १४ तेनचैतत् इति पा० । १५ सात्वतात्सत्वसम्पन्नं कौशल्या सुषुवे सुतमिति पा० । १६ धनुर्वेदविशारदम् । १७ भजमानस्य मृञ्जय्यामिति, भजमानस्य संज्ञायामिति पा० । १८ शनिः कृकश एव च इति, कृतक इति पा० ।

भोजा वैमातृकास्तथा[1] ॥ ३८ ॥ वृष्णेः[2] सुमित्रो बलवाननमित्रस्तिमिस्तथा ॥ अनमित्रादभून्निघ्नो निघ्नस्य द्वौ बभूवतुः ॥ ३९ ॥ प्रसेनस्तु महाभागः सत्राजिन्नाम चोत्तमः[3] ॥ अनमित्रात्शिनिर्जज्ञे[4] कनिष्ठो वृष्णिनन्दनात् ॥ ४० ॥ सत्यवाक् सत्यसम्पन्नः सत्यकस्तत्सुतोऽभवत् ॥ सात्यकिर्युयुधानस्तु तस्यासङ्गोऽभवत्सुतः[5] ॥ ४१ ॥ कुणिस्तस्य[6] सुतो धीमांस्तस्य पुत्रो युगन्धरः ॥ माद्र्यां[7] वृष्णिः सुतो जज्ञे वृष्णेर्वै यदुनन्दनः ॥ ४२ ॥ जज्ञाते तनयौ वृष्णेः श्वफल्कश्चित्रकस्तु हि ॥ श्वफल्कः काशिराजस्य सुतां भार्यामविन्दत ॥ ४३ ॥ तस्यामजनयत्पुत्रमक्रूरं नाम धार्मिकम्[8]॥ उपमंगुं[9] तथा मंगुमन्ये च बहवः सुताः ॥ ४४ ॥ अक्रूरस्य स्मृतः[10] पुत्रो देववानिति विश्रुतः ॥ उपदेवश्च देवात्मा[11] तयोर्विश्वप्रमाथिनौ ॥ ४५ ॥ चित्रकस्याभवत्पुत्रः पृथुर्विपृथुरेव च ॥ अश्वग्रीवः सुबाहुश्च सुधांश्चकगवेक्षकौ[12] ॥ ४६ ॥ अन्धकस्य[13] सुतायान्तु लेभे च चतुरः सुतान् ॥ कुकुरं भजमानं[14]श्च शमीकं बलगर्वितम् ॥ ४७ ॥ कुकुरस्य सुतो वृष्णिर्वृष्णेस्तु[15] तनयोऽभवत् ॥ कपोतरोमा[16] विख्यातस्तस्य पुत्रो विलोमकः ॥ ४८ ॥ तस्यासीत्तुम्बुरुसखा विद्वान्पुत्रस्तमः[17] किल ॥ तमस्याप्यभवत्पुत्रस्तथैवानकदुन्दुभिः[18] ॥ ४९ ॥ स गोवर्द्धनमासाद्य तताप विपुलं तपः ॥ वरं तस्मै ददौ देवो ब्रह्मा लोकमहेश्वरः[19] ॥ ५० ॥ वंशस्ते[20] चाक्षया कीर्त्तिर्ज्ञानयोगस्तथोत्तमः ॥ गुरोरप्यधिकं विप्राः[21] कामरूपित्वमेव च ॥ ५१ ॥ स लब्ध्वा वरमव्यग्रो वरेण्यं[22] वृषवाहनम् ॥ पूजयामास गानेन स्थाणुं त्रिदशपूजितम् ॥ ८२ ॥ तस्य[23] गानरतस्याथ भगवानम्बिकापतिः ॥ कन्यारत्नं ददौ देवो दुर्लभं त्रिदशैरपि ॥ ५३ ॥ तया स सङ्गतो राजा गानयोगमनुत्तमम् ॥ अशिक्षयदमित्रघ्नः प्रियां[24] तां भ्रान्तलोचनाम् ॥ ५४ ॥ तस्यामुत्पादयामास सुभुजं नाम शोभनम् ॥ रूपलावण्यसम्पन्नां ह्रीमतीमिति[25] कन्यकाम् ॥ ५५ ॥ ततस्तं जननी पुत्रं बाल्ये

---

१ वैमूतिकस्तथा इति पा० । २ वृष्णेस्तु पुत्र इति, विष्णोम्तु मित्र इति, विष्णोस्तु पुत्र इति पा० । ३ पार्थिवः इति पा० । ४ च्छिनिरिति, च्छनिरिति पा० । ५ तस्याष्टाङ्ग इति पा० । ६ कालस्तस्येति, कुलिस्तस्य इति पा० । ७ साध्या इति पा० । ८ पार्थिवम् इति पा० । ९ उपमद्गुस्तथामद्गुरिति पा० । १० सुतो जज्ञे इति पा० । ११ पुण्यात्मा इति पा० । १२ सुपार्श्वकगवेषणौ इति पा० । १३ अन्धकात्काश्यदुहिता इति पा० । १४ भजमानं च अन्धकं बलबर्हिषम् इति पा० । १५ धृष्णिर्धृष्णेस्तु इति पा० । १६ कपोतनामा विपुलस्तस्य पुत्रो विलोमकः इति पा० । १७ पुत्रोनलः इति पा० । १८ स्थीयते तस्यनाम्नातु तयोरानकदुन्दुभिः इति पा० । १९ लोकपितामहः इति पा० । २० वंशस्य चाव्यया कीर्तिरिति पा० । २१ पुत्रं इति पा० । २२ वरेण्यामिति पा० । २३ तस्य गानेन वश्योऽथ इति पा० । २४ प्रियां रक्ताङ्गलोचनाम् इति पा० । २५ ह्रीमतीमपीति पा० ।

वयसि शोभनम् ॥ शिक्षयामास विधिंवद्गानविद्यांश्च कन्यकाम् ॥ ५६ ॥ कृतोपनयनो वेदानधीत्य विधिवद्गुरोः ॥ उद्ववाहात्मजां कन्यां गन्धर्वाणां तु मानसीम् ॥ ५७ ॥ तस्यामुत्पादयामास पञ्च पुत्रानुत्तमान् ॥ वीणावादनतत्त्वज्ञान् गानशास्त्रविशारदान् ॥ ५८ ॥ पुत्रैः पौत्रैः सपत्नीको राजा गानविशारदः ॥ पूजयामास गानेन देवं त्रिपुरनाशनम् ॥ ५९ ॥ ह्रीमतीश्चारुसर्वाङ्गीं श्रीमिवायतलोचनाम् ॥ सुबाहुनामा गन्धर्वस्तामादाय ययौ पुरीम् ॥ ६० ॥ तस्यामप्यभवन् पुत्रा गन्धर्वस्य सुतेजसः ॥ सुषेणधीरसुग्रीवसुभोजनरवाहनाः ॥ ६१ ॥ अथासीदभिजित्पुत्रश्चन्दनोदकदुन्दुभेः ॥ पुनर्वसुश्चाभिजितः सम्बभूवाहुकस्ततः ॥ ६२ ॥ आहुकस्योग्रसेनश्च देवकश्च द्विजोत्तमाः ॥ देवकस्य सुता वीरा जज्ञिरे त्रिदशोपमाः ॥ ६३ ॥ देववानुपदेवश्च सुदेवो देवरक्षितः ॥ तेषां स्वसारः सप्तासन्वसुदेवाय तां ददौ ॥ ६४ ॥ धृतदेवोपदेवा च तथान्या देवरक्षिता ॥ श्रीदेवा शान्तिदेवा च सहदेवा च सुव्रता ॥ ६५ ॥ देवकी चापि तासां तु वरिष्ठाभूत्सुमध्यमा ॥ उग्रसेनस्य पुत्रोऽभून्न्यग्रोधः कंस एव च ॥ ६६ ॥ सुभूमी राष्ट्रपालश्च तुष्टिमाञ्छंकुरेव च ॥ भजमानादभूत्पुत्रः प्रख्यातोऽसौ विदूरथः ॥ ६७ ॥ तस्य सूरसमस्तस्मात्प्रतिक्षत्रश्च तत्सुतः ॥ स्वयं भोजस्ततस्तस्माद्धात्रीकः शत्रुतापनः ॥ ६८ ॥ कृतवर्माथ तत्पुत्रः शूरसेनः सुतोऽभवत् ॥ वसुदेवोऽथ तत्पुत्रो नित्यं धर्मपरायणः ॥ ६९ ॥ वसुदेवान्महाबाहुर्वासुदेवो जगद्गुरुः ॥ बभूव देवकीपुत्रो देवैरभ्यर्थितो हरिः ॥ ७० ॥ रोहिणी च महाभागा वसुदेवस्य शोभना ॥ असूत पत्नी संकर्ष रामं ज्येष्ठं हलायुधम् ॥ ७१ ॥ स एव परमात्मासौ वासुदेवो जगन्मयः ॥ हलायुधः स्वयं साक्षाच्छेषः सङ्कर्षणः प्रभुः ॥ ७२ ॥ भृगुशापच्छलेनैव मानयन्मानुषीं तनुम् ॥ बभूव तस्यां देवक्यां रोहिण्यामपि

१ विविधां गानविद्यां चेति पा० । २ उद्ववाहात्मनः कन्यां इति पा० । ३ ह्रीमती चापि या कन्या श्रीरिवायतलोचना इति पा० । ४ वीरस्थानकदुन्दुभिरिति पा० । ५ सम्बभूवाहुकः सुत इति पा० । ६ त्रिदशोत्तमाः इति पा० । ७ सुदेवाय च तां ददौ इति पा० । ८ वृकदेव्युपदेवीति, वृकदेवोपदंशीति पा० । ९ सुसीमा इति पा० । १० चक्षुरेव इति पा० । ११ प्रतिक्षत्रस्ततोऽभवदिति पा० । १२ भोजःसुतस्तस्माद्धाह्निकः इति पा० । १३ शतधर्मा च वीर्यवान्, देवलस्तत्सुतः स्मृत इति च पा० । १४ शूरस्यामारिगीयांतुवसुदेवो भवत्सुतः, स शूरस्तत्सुतोधीमान्वसुदेवोऽथ तत्सुत इति च पा० । १५ बभूवुरस्यामिति पा० ।

माधवः ॥ ७३ ॥ उमादेहसमुद्भूता योगनिद्रा च कौशिकी ॥ नियोगाद्वासुदेवस्य यशोदातनया त्वभूत् ॥७४॥ ये चान्ये वसुदेवस्य वासुदेवाग्रजाः सुताः ॥ प्रागेव कंसस्तान्सर्वाञ्जघान मुनिसत्तमाः ॥ ७५ ॥ सुषेणश्च तथोदायी भद्रसेनो महाबलः ॥ वज्रदम्भो भद्रसेनः कीर्तिमानपि पूजितः ॥ ७६ ॥ हतेष्वेतेषु सर्वेषु रोहिणी वसुदेवतः ॥ असूत रामं लोकेशं बलभद्रं हलायुधम् ॥ ७७ ॥ जातेऽथ रामे देवानामादिमात्मानमच्युतम् ॥ असूत देवकी कृष्णं श्रीवत्साङ्कितवक्षसम् ॥ ७८ ॥ रेवती नाम रामस्य भार्यासीत्सुगुणान्विता ॥ तस्यामुत्पादयामास पुत्रौ द्वौ निशितोल्मुकौ ॥ ७९ ॥ षोडशस्त्रीसहस्राणि कृष्णस्याक्लिष्टकर्मणः ॥ बभूवुश्चात्मजास्तासु शतशोऽथ सहस्रशः ॥ ८० ॥ चारुदेष्णः सुचारुश्च चारुवेषो यशोधरः ॥ चारुश्रवाश्चारुयशाः प्रद्युम्नः साम्ब एव च ॥ ८१ ॥ रुक्मिण्यां वासुदेवस्य महाबलपराक्रमाः ॥ विशिष्टाः सर्वपुत्राणां सम्बभूवुरिमे सुताः ॥ ८२ ॥ तान्दृष्ट्वा तनयान्वीरान्रौक्मिणेयाञ्जनार्दनात् ॥ जाम्बवत्यब्रवीत्कृष्णं भार्या तस्य शुचिस्मिता ॥ ८३ ॥ मम त्वं पुण्डरीकाक्ष विशिष्टगुणवत्तरम् ॥ सुरेशसम्मितं पुत्रं देहि दानवसूदन ॥८४॥ जाम्बवत्या वचः श्रुत्वा जगन्नाथः स्वयं हरिः ॥ समारेभे तपः कर्तुं तपोनिधिररिन्दमः ॥ ८५ ॥ तच्छृणुध्वं मुनिश्रेष्ठा यथासौ देवकीसुतः ॥ दृष्ट्वा लेभे सुतं रुद्रं तप्त्वा तीव्रं महत्तपः ॥ ८६ ॥ इति श्रीकूर्मपुराणे यदुवंशानुकीर्तनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ अथ यदुवंशकृष्णकीर्तिवर्णनम् ॥ सूत उवाच ॥ अथ देवो हृषीकेशो भगवान्पुरुषोत्तमः ॥ ततापं घोरं पुत्रार्थं निधानं तपसंस्तपः ॥१॥ स्वेच्छयाप्यवतीर्णोऽसौ कृतकृत्योऽपि विश्वसृक् ॥ चचार स्वात्मनो मूलं बोधयन्परमेश्वरम् ॥ २ ॥ जगाम योगिभिर्जुष्टं नानापक्षिसमाकुलम् ॥ आश्रमं तूपमन्योर्वै मुनीन्द्रस्य महात्मनः ॥ ३ ॥ पतत्रिराजमारूढः सुपर्णमतितेजसम् ॥ शंखचक्रगदापाणिः श्रीवत्साङ्कित

---

१ उमा देवी समुद्भूता इति पा० । २ मुनिपुङ्गवा इति पा० । ३ तथोदापिर्भद्रसेन इति पा० । ४ रुद्रवासोभद्रसेनः, ऋजुदासो भद्रदासः इति च पा० । ५ पूर्वजइति पा० । ६ श्रीवत्सकृतलक्षणमिति पा० । ७ निशयोल्मुकौ इति, निषधोल्मुका इति पा० । ८ विशिष्टं गुणवत्तरमिति पा० । ९ सुरेशसदृशमिति पा० । १० तपसान्तपः इति पा० । ११ विश्वधृगिति पा० । १२ भावमैश्वरमिति पा० ।

लक्षणः ॥ ४ ॥ नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ॥ ऋषीणामाश्रमैर्जुष्टं वेदघोषनिनादितम् ॥ ५ ॥ सिंहर्क्षशरभाकीर्णं शार्दूल गजसंयुतम् ॥ विमलस्वादुपानीयैः सरोभिरुपशोभितम् ॥ ६ ॥ आरामैर्विविधैर्जुष्टं देवतायतनैः शुभैः ॥ ऋषिभिर्ऋषिपुत्रैश्च महा मुनिगणैस्तथा ॥ ७ ॥ वेदाध्ययनसम्पन्नैः सेवितं चाग्निहोत्रिभिः ॥ योगिभिर्ध्याननिरतैर्नासाग्रन्यस्तलोचनैः ॥ ८ ॥ उपेतं सर्वतः पुण्यं ज्ञानिभिस्तत्त्वदर्शिभिः ॥ नदीभिरभितो जुष्टं जापकैर्ब्रह्मवादिभिः ॥ ९ ॥ सेवितं तापसैः पुण्यैरीशाराधनतत्परैः ॥ प्रशान्तैः सत्य सङ्कल्पैर्निःशोकैर्निरुपद्रवैः ॥ १० ॥ भस्मावदातसर्वाङ्गैः रुद्रजाप्यपरायणैः ॥ मुण्डितैर्जटिलैः शुद्धैस्तथान्यैश्च शिखाजटैः ॥ ११ ॥ सेवितं तापसैर्नित्यं ज्ञानिभिर्ब्रह्मवादिभिः ॥ तत्राश्रमवरे रम्ये सिद्धाश्रमविभूषिते ॥ १२ ॥ गंगा भगवती नित्यं वहत्येवाघनाशिनी ॥ स तत्र वीक्ष्य विश्वात्मा तापसान्वीतकल्मषान् ॥ १३ ॥ प्रणामेनाथ वचसा पूजयामास माधवः ॥ तं ते दृष्ट्वा जगद्योनिं शंखचक्रगदा धरम् ॥ १४ ॥ प्रणेमुर्भक्तिसंयुक्ता योगिनां परमं गुरुम् ॥ स्तुवन्ति वैदिकैर्मन्त्रैः कृत्वा हृदि सनातनम् ॥ १५ ॥ प्रोचुरन्योन्यमव्यक्त मादिदेवं महामुनिम् ॥ अयं स भगवानेकः साक्षी नारायणः परः ॥ १६ ॥ आगच्छत्यधुना देवः प्रधानपुरुषः स्वयम् ॥ अयमेवाव्ययः स्रष्टा संहर्त्ता चैव रक्षकः ॥ १७ ॥ अमूर्तो मूर्तिमान् भूत्वा मुनीन्द्रष्टुमिहागतः ॥ एष धाता विधाता च समागच्छति सर्वगः ॥ १८ ॥ अनादिरक्षयोऽनन्तो महाभूतो महेश्वरः ॥ श्रुत्वा बुद्ध्वा हरिस्तेषां वचांसि वचनातिगः ॥ १९ ॥ ययौ स तूर्णं गोविन्दः स्थानं तस्य महात्मनः ॥ उपस्पृश्याथ भावेन तीर्थे तीर्थे स यादवः ॥ २० ॥ चकार देवकीसूनुर्देवर्षिपितृतर्पणम् ॥ नदीनां तीरसंस्थाने स्थापि तानि मुनीश्वरैः ॥ २१ ॥ लिंगानि पूजयामास शम्भोरमिततेजसः ॥ दृष्ट्वा दृष्ट्वा समायान्तं यत्र यत्र जनार्दनम् ॥ २२ ॥ पूजयाञ्चक्रिरे

१ शार्दूलगजसंकुलमिति पा० । २ सेवितं मुनिपुत्रैश्चेति पा० । ३ प्रशान्तसर्वसंकल्पैर्विशोकैर्निरुपद्रवैः इति पा० । ४ निरुपल्पवैरिति पा० । ५ शिरोध्वजैः इति पा० । ६ न्यासिभिरिति पा० । ७ तदाश्रमवरे इति पा० । ८ भागीरथी इति पा० । ९ स तानुद्दिश्य, सतान्वीक्ष्य इति पा० । १० विविधैः स्तोत्रैरिति पा० । ११ पुराणपुरुष इति पा० । १२ अनादिरजरोनन्त इति पा० । १३ भगवानिति पा० । १४ तत्र तत्र इति पा० ।

पुष्पैरक्षतैस्तन्निवासिनः ॥ समीक्ष्य वासुदेवं तं शार्ङ्गशङ्खासिधारिणम् ॥ २३ ॥ तास्थिरे निश्चलाः सर्वे शुभाङ्गा[1] यतमानसाः ॥ यानि तत्रारुरुक्षूणां मानसानि जनार्दनम् ॥ २४ ॥ दृष्ट्वा समाहितान्यासन्निष्क्रामन्ति पुरा हरिम् ॥ अथावगाह्य गङ्गायां कृत्वा देवर्षितर्पणम् ॥ २५ ॥ आदाय पुष्पवर्याणि मुनीन्द्र[2]स्याविशद्गृहम् ॥ दृष्ट्वा तं योगिनां श्रेष्ठं भस्मोद्धूलितविग्रहम् ॥ २६ ॥ जटाचीरधरं शान्तं ननाम शिरसा मुनिम्[3] ॥ आलोक्य कृष्णमायान्तं पूजयामास तत्त्ववित् ॥ २७ ॥ आसने वासयामास[4] योगिनां[5] प्रथमातिथिम् ॥ उवाच वचसां योनिं[6] ज्ञानीमः परमम्पदम् ॥ २८ ॥ विष्णुमव्यक्तसंस्थानं शिष्यभावेन संस्थितम् ॥ स्वागतं ते हृषीकेश सफलानि तपांसि नः ॥ २९ ॥ यत्साक्षादेव विश्वात्मा मद्गेहं विष्णुरागतः ॥ त्वां[7] न पश्यन्ति मुनयो यतन्तो[8]पीह योगिनः ॥ ३० ॥ तादृशस्यात्र[9]भवतः किमागमनकारणम् ॥ × श्रुत्वोपमन्योस्तद्वाक्यं भगवान्देवकी[10]सुतः ॥ व्याजहार महायोगी प्रसन्नं[11] प्राणिपत्य तम् ॥ ३१ ॥ कृष्ण उवाच ॥ भगवन्द्रष्टुमिच्छामि गिरीशं कृत्तिवाससम् ॥ ३२ ॥ सम्प्राप्तो भवतः स्थानं भगवद्दर्शनोत्सुकः ॥ कथं स भगवानीशो दृश्यो योगविदां वरः ॥ ३३ ॥ मयाचिरेण कुत्राहं[12] द्रक्ष्यामि तमुमापतिम् ॥ प्रत्याह[13] भगवानुक्तो दृश्यते परमेश्वरः ॥ ३४ ॥ भक्त्यैवोग्रेण तपसा तत्कुरुष्वेह संयतः[14] ॥ × इहेश्वरं देवदेवं[15] मुनीन्द्रा ब्रह्मवादिनः ॥ ३५ ॥ ध्यायन्त्या[16]राधयन्त्येनं योगिनस्तापसाश्च ये ॥ इह देवः सपत्नीको भगवान् वृषभध्वजः ॥ ३६ ॥ क्रीडते विविधैर्भूतै[17]र्योगिभिः परिवारितः ॥ इहाश्रमे पुरा रुद्रं तपस्तप्त्वा सुदारुणम् ॥ ३७ ॥ लेभे महेश्वराद्योगं वसिष्ठो भगवानृषिः ॥ इहैव भगवान्व्यासः कृष्णद्वैपायनः स्वयम् ॥ ३८ ॥ दृष्ट्वा तं परमेशानं[18] लब्धवान् ज्ञानमैश्वरम् ॥ इहाश्रम[19]

१ शुभाङ्गावनताननाः, शुभाङ्गं तन्निवासिन इति पा० । २ मुनीशस्येति पा० । ३ महीमिति पा० । ४ चालयामास इति पा० । ५ योगिनमिति पा० । ६ योनिमयोनिमिति पा० । ७ त्वां नमस्यन्तीति पा० । ८ यतन्त इत्यार्षं, यतमाना इति साधु । ९ तादृशस्याथ भवत इति, तावदाख्याहि भवत इति पा० । × सूत उवाच । लि० पु । १० केशिमर्दन इति पा० । ११ वचनमिति पा० । १२ पुत्रार्थमिति पा० । १३ इत्याह इति, यथेह, वनेह भगवान् रुद्र इति च पा० । १४ प्रयततः इति पा० । × उपमन्युरुवाच लि० पु० । १५ महादेवमिति पा० । १६ ध्यायंति साधवो देवं योगिनस्तपसा स्वयम्; ध्यायन्त आसते देवं याजिनस्तापसाश्च ये इति च पा० । १७ प्रभुरिति पा० । १८ परमं ज्ञानं लब्धवानीश्वरमिति पा० । १९ इहाश्रमवरे इति पा० ।

पदे रम्ये तपस्तप्त्वा कपर्दिनः ॥ ३९ ॥ अविन्दन्पुत्रकान्रुद्रात्सूरयो भक्तिसंयुताः ॥ इह देवा महादेवीं भवानीञ्च महेश्वरीम् ॥ ४० ॥ संस्तुवन्तो महादेवं निर्भया निर्वृतिं ययुः ॥ इहाराध्य महादेवं सावर्णिस्तपतां वरः ॥ ४१ ॥ लब्धवान्परमं योगं ग्रन्थकारत्वमुत्तमम् ॥ प्रवर्त्तयामास सतां कृत्वा वै संहितां शुभाम् ॥ ४२ ॥ ( इहैव संहितां दृष्ट्वा कामो यः शशिपायिनः ॥ महादेवश्चकारेमां पौराणीं तन्नियोगतः ॥ द्वादशैव सहस्राणि श्लोकानां पुरुषोत्तम॥इह प्रवर्त्तिता पुण्या व्यष्टसाहस्रिकोत्तरा ॥ वायवीयोत्तरं नाम पुराणं वेदसंमतम् ॥ ) द्विजैः पौराणिकीं पुण्यां प्रसादेन द्विजोत्तमैः ॥ इहैवं ख्यापितं शिष्यैर्वैशम्पायनभाषितम् ॥ ४३ ॥ याज्ञवल्क्यो महायोगी दृष्ट्वात्र तपसा हरम् ॥ चकार तन्नियोगेन योगशास्त्रमनुत्तमम् ॥४४॥ इहैव भृगुणा पूर्वं तप्त्वा पूर्वं महातपः ॥ शुक्रो महेश्वरात्पुत्रो लब्धो योगविदां वरः ॥ ४५ ॥ तस्मादिहैव देवेशं तपस्तप्त्वा सुदुश्चरम् ॥ द्रष्टुमर्हसि विश्वेशमुग्रं भीमं कपर्दिनम् ॥ ४६ ॥ एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः ॥ व्रतं पाशुपतं योगं कृष्णायाक्लिष्टकर्मणे ॥ ४७ ॥ स तेन मुनिवर्येण व्यहृतो मधुसूदनः ॥ तत्रैव तपसा देवं रुद्रमाराधयत्प्रभुः ॥ ॥ ४८ ॥ भस्मोद्धूलितसर्वाङ्गो मुण्डो वल्कलसंयुतः ॥ जजाप रुद्रमनिशं शिवैकाहितमानसः ॥ ४९ ॥ ततो बहुतिथे काले सोमः सोमार्द्धभूषणः ॥ अदृश्यत महादेवो व्योम्नि देव्या महेश्वरः ॥ ५० ॥ किरीटिनं गदिनं चित्रमालं पिनाकिनं शूलिनं देवदेवम् ॥ शार्दूलचर्माम्बरसंवृताङ्गं देव्या महादेवमसौ ददर्श ॥ ५१ ॥ प्रभुं पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम् ॥ अणोरणीयांसमनन्तशक्तिं प्राणेश्वरं शम्भुमसौ ददर्श ॥ ५२ ॥ परश्वधासक्तकरं त्रिनेत्रं नृसिंहचर्मावृतभस्मगात्रम् ॥ समुद्गिरन्तं प्रणवं बृहन्तं सहस्रसूर्यप्रतिमं ददर्श ॥ ५३ ॥ न यस्य देवा न पितामहोऽपि नेन्द्रो न चाग्निर्वरुणो न मृत्युः ॥ प्रभावमद्यापि वदन्ति[12] रुद्रं तमादिदेवं

१ कपर्द्दिनमिति पा० । २ इहैव देवताः पूर्वं कालाद्भीता महेश्वरम् । दृष्टवन्तो हरं देवमिति, इहैव देवताः पूर्वं कालाग्निं वा महेश्वरमिति पा० । ३ शुभामिति पा० । ४ द्विजा इति पा० । ५ पौराणिकीं सुपुण्यार्थं सच्छिष्येष्विति पा० । ६ इहैव स्थापितं देवं शिंशपायनभाषितम् इति पा० । ७ देवेशं तपस्तप्त्वा महेश्वरम् इति पा० । ८ प्रभुमिति पा० । ९ रुद्रं मनसा तत्रैकाहितमानसः इति पा० । १० सौम्यः इति पा० । ११ देवदेवं महेशमिति पा० । १२ विदन्ति इति पा० ।

पुरतो ददर्श ॥ ५४ ॥ तदान्वपश्यद्गिरिशस्य वामे स्वात्मानमव्यक्तमनन्तरूपम् ॥ स्तुवन्तमीशं बहुभिर्वचोभिः शङ्खासिचक्रान्वित हस्तमाद्यम् ॥ ५५॥ कृताञ्जलिं दक्षिणतः सुरेशं हंसाधिरूढं पुरुषं ददर्श ॥ स्तुवानमीशस्य परं प्रभावं पितामहं लोकगुरुं दिविस्थम् ॥ ५६ ॥ गणेश्वरानर्कसहस्रकल्पान्नन्दीश्वरादीनमितप्रभावान् ॥ त्रिलोकभर्तुः पुरतोऽन्वपश्यत्कुमारमग्निप्रतिमं गणेशम् ॥ ५७॥ मरीचिमत्रिं पुलहं पुलस्त्यं प्रचेतसं दक्षमथापि कण्वम् ॥ पराशरं तत्परतो वसिष्ठं स्वायम्भुवञ्चापि मनुं ददर्श ॥५८॥ तुष्टाव मन्त्रैरमरप्रधानं बद्धाञ्जलिर्विष्णुरुदारबुद्धिः ॥ प्रणम्य देव्या गिरिशं स्वभक्त्या स्वात्मन्यथात्मानमसौ विचिन्त्य ॥ ५९ ॥ कृष्ण उवाच ॥ नमोऽस्तु ते शाश्वत सर्वयोग ब्रह्मादयस्त्वामृषयो वदन्ति॥ तमश्चं सत्त्वञ्च रजस्त्रयञ्च त्वामेव सर्वं प्रवदन्ति संतः॥६०॥ त्वं ब्रह्मा हरिरथ रुद्रविश्वकर्त्ता संहर्त्ता दिनकरमण्डलाधिवासः॥प्राणस्त्वं हुतवहवासवादिभेदस्त्वामेकं शरणमुपैमि देवमीशम् ॥६१॥ साङ्ख्यास्त्वांमगुणमथाहुरेकरूपं योगस्थं सततमुपासते हृदिस्थम्॥ वेदास्त्वामभिदधतीह रुद्रमीड्यं त्वामेकं शरणमुपैमि देवमीशम् ॥६२॥ त्वत्पादे कुसुममथापि पत्रमेकं दत्वासौ भवति विमुक्तविश्वबन्धः ॥ सर्वाघं प्रणुदति सिद्धयोगिजुष्टं स्मृत्वा ते पदयुगलं भवत्प्रसादात् ॥६३॥ यस्याशेषविभागहीनममलं हृद्यन्तरावस्थितं ते[12] त्वां योनिमनन्तमेकमचलं सत्यं परं सर्वगम् ॥ ६४ ॥ स्थानं प्राहुरनादिमध्यनिधनं यस्मादिदं जायते नित्यं त्वाहमुपैमि सत्यविभवं विश्वेश्वरं तं शिवम् ॥ ६५ ॥ ॐ नमो नीलकण्ठाय त्रिनेत्राय च रंहसे ॥ महादेवाय ते नित्यमीशानाय नमो नमः ॥ ६६ ॥ नमः पिनाकिने तुभ्यं नमो मुण्डाय दण्डिने ॥ नमस्ते वज्रहस्ताय दिग्वस्त्राय कपर्दिने ॥ ६७ ॥ नमो भैरवनादाय[13] कालरूपाय दंष्ट्रिणे॥नागयज्ञोपवीताय नमस्ते वह्निरेतसे[14]॥६८॥नमोऽस्तु ते गिरिशाय स्वाहाकाराय ते नमः ॥नमो मुक्ताट्टहासाय भीमाय

---

१ प्रयत इति पा० । २ चक्रार्पित इति पा० । ३ गणेश्वरानेक इति पा० । ४ विशाखमिति पा० । ५ विश्वयोग इति, सर्वयोने इति पा० । ६ ब्रह्माधिपन्त्वामृषय इति पा० । ७ तपश्च तत्त्वञ्च रजस्तमश्च इति, त्वमेव सत्त्वं च रजस्तमश्च इति पा० । ८ त्वंब्रह्माविरसिविश्वयोनिराग्निः संहर्ता इति पा० । ९ वासवादिदेवस्त्वामेकामिति पा० । १० स्त्वां त्रिगुणमथाहुरेकयोनिामिति पा० । ११ रुद्रमग्निमिति पा० । १२ तत्त्वं ज्योतिरिति, यस्य ज्योतिरिति पा० । १३ भैरवनाशाय इति पा० । १४ ब्रह्मरेतसे इति, चार्करेतसे इति पा० ।

च नमो नमः॥६९॥ नमस्ते कामनाशाय नमः कालप्रमाथिने॥नमो भैरववेषाय हराय च निषङ्गिणे ॥ ७० ॥ नमोऽस्तु ते त्र्यम्बकाय नमस्ते कृत्तिवाससे॥नमोऽम्बिकाधिपतये पशूनां[1] पतये नमः॥७१॥नमस्ते व्योमरूपाय व्योमाधिपतये नमः॥नरनारीशरीराय साङ्ख्ययोग प्रवर्त्तिने ॥ ७२ ॥ नमो भैरवनाथाय देवानुगतलिङ्गिने ॥ कुमारगुरवे तुभ्यं[2] देवदेवाय ते नमः ॥ ७३ ॥ नमो यज्ञाधिपतये नमस्ते ब्रह्मचारिणे ॥ मृगव्याधाय महते ब्रह्माधिपतये नमः ॥७४॥ नमो हंसाय[3] विश्वाय मोहनाय नमो नमः ॥ योगिने योगगम्याय योगमायाय ते नमः ॥ ७५ ॥ नमस्ते प्राणपालाय[4] घण्टानादप्रियाय च ॥ कपालिने नमस्तुभ्यं ज्योतिषां पतये नमः ॥ ७६ ॥ नमोनमो ऽस्तु ते तुभ्यं भूय एव नमो नमः ॥ मह्यं सर्वात्मना कामान् प्रयच्छ परमेश्वर ॥ ७७ ॥ सूत उवाच ॥ एवं हि भक्त्या देवेशमभिष्टूय[5] स माधवः ॥ पपात पादयोर्विप्रा देवदेव्योः स दण्डवत् ॥ ७८ ॥ उत्थाप्य भगवान् सोमः कृष्णं केशिनिषूदनम् ॥ बभाषे मधुरं वाक्यं मेघगम्भीर निःस्वनः[6] ॥ ७९ ॥ × किमर्थं पुण्डरीकाक्ष तप्यते[7] भवता तपः ॥ त्वमेव दाता सर्वेषां कामानां कर्मणामिह[8] ॥ ८० ॥ त्वं हि सा परमा मूर्त्तिर्मम नारायणाह्वया ॥ नं[9] विना त्वां जगत्सर्वं विद्यते पुरुषोत्तम ॥ ८१ ॥ वेत्थ नारायणानन्तमात्मानं परमेश्वरम्[10] ॥ महादेवं महायोगं स्वेन[11] योगेन केशव ॥ ८२ ॥ × श्रुत्वा तद्वचनं कृष्णः प्रहसन्वै वृषध्वजम् ॥ उवाचान्वीक्ष्य विश्वेशं देवीञ्च हिमशैलजाम् ॥ ८३ ॥ ज्ञातं हि भवता सर्वं स्वेन योगेन शङ्कर ॥ इच्छाम्यात्मसमं पुत्रं त्वद्भक्तं देहि शङ्कर ॥ ८४ ॥ तथास्त्वित्याह विश्वात्मा प्रहृष्टमनसा हरः ॥ देवीमालोक्य गिरिजां केशवं परिषस्वजे ॥ ८५ ॥ ततः सा जगतां माता शङ्करार्द्धशरीरिणी ॥ व्याजहार हृषीकेशं देवी हिम गिरीन्द्रजा ॥ ८६ ॥ अहं[12] जाने तवानन्त निश्चलां सर्वदाच्युत ॥ अनन्यामीश्वरे[13] भक्तिमात्मन्यपि च केशव ॥ ८७ ॥ त्वं हि नारायणः

---

१ वसूनामिति पा० । २ नित्यमिति पा० । ३ भवाय, मोहाय इति पा० । ४ प्राणनादाय इति पा० । ५ मभिस्तुत्य इति पा० । ६ निस्वनम् इति पा० । × शिव उवाच लि० पु० । ७ तपस्तप्तं त्वयाव्यय इति पा० । ८ कामिनामिह इति पा० । ९ नानवाप्तं त्वया तात, नानवाप्तं त्वयीशान इति पा० । १० पुरुषोत्तमामिति पा० । ११ येन इति पा० । × सूत उवाच लि० पु० । १२ वत्स जाने तवात्यन्तनिश्चला भक्तिरच्युत इति पा० । १३ जनन्यामीश्वरे इति पा० ।

साक्षात्सर्वात्मा पुरुषोत्तमः ॥ प्रार्थितो दैवतैः पूर्वं सञ्जातो देवकीसुतः ॥ ८८ ॥ पश्य त्वमात्मनात्मानमात्मानं मम सम्प्रति ॥ नावयो र्विद्यते भेद एकं पश्यन्ति सूरयः ॥ ८९ ॥ इमानिह वरानिष्टान्मत्तो गृहीष्व केशव ॥ सर्वज्ञत्वं तथैश्वर्यं ज्ञानं तत्पारमेश्वरम् ॥ ९० ॥ ईश्वरे निश्चलां भक्तिमात्मन्यपि परं बलम्॥एवमुक्तस्तया कृष्णो महादेव्या जनार्द्दनः ॥९१॥ आदेशं शिरसा गृह्य देवोऽप्याह तथेश्वरम्॥ प्रगृह्य कृष्णं भगवानथेशः करेण देव्या सह देवदेवः ॥ सम्पूज्यमानो मुनिभिः सुरेशैर्जगाम कैलासगिरिं गिरीशः ॥ ९२ ॥ इति श्रीकूर्मे पुराणे यदुवंशानुकीर्त्तने कृष्णतपश्चरणं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥ अथ शंकरकीर्तिवर्णनम् ॥ सूत उवाच ॥ प्रविश्य मेरुशिखरं कैलासं कनकप्रभम् ॥ रराम भगवान्सोमः केशवेन महेश्वरः ॥ १ ॥ अपश्यंस्ते महात्मानं कैलासगिरिवासिनः ॥ पूजयाञ्चक्रिरे कृष्णं देवदेवमिवाच्युतम् ॥ २ ॥ चतुर्बाहुमुदाराङ्गं कालमेघसमप्रभम् ॥ किरीटिनं शार्ङ्गपाणिं श्रीवत्साङ्कितवक्षसम् ॥ ३ ॥ दीर्घबाहुं विशालाक्षं पीतवाससमच्युतम् ॥ दधानमुरसा मालां वैजयन्तीमनुत्तमाम् ॥ ४ ॥ भ्राजमानं श्रिया देव्या युवानमतिकोमलम् ॥ पद्माङ्घ्रिं पद्मनयनं सस्मितं सद्गतिप्रदम् ॥ ५ ॥ कदाचित्तत्र लीलार्थं देवकीनन्दवर्द्धनः ॥ भ्राजमानः श्रिया कृष्णश्चचार गिरिकन्दरम् ॥ ६ ॥ गन्धर्वाप्सरसां मुख्या नागकन्याश्च कृत्स्नशः ॥ सिद्धा यक्षाश्च गन्धर्वा देवास्तं च जगन्मयम् ॥ ७ ॥ दृष्ट्वाश्चर्यं परं गत्वा हर्षादुत्फुल्ललोचनाः ॥ मुमुचुः पुष्पवर्षाणि तस्य मूर्ध्नि महात्मनः ॥ ८ ॥ गन्धर्वकन्यका दिव्यास्तद्वदप्सरसो वराः ॥ दृष्ट्वा चकमिरे कृष्णं सुस्तुतं शुचिभूषणाः ॥ ९ ॥ काश्चिद्गायन्ति विविधं गानं गीतविशारदाः ॥ सम्प्रेक्ष्य देवकीसूनुं सुन्दरं काममोहिताः ॥१०॥ काश्चिद्विलासबहुला नृत्यन्ति स्म तदग्रतः ॥ सम्प्रेक्ष्य सस्मितं काश्चित्पपुस्तद्वदनामृतम् ॥ ११ ॥ काश्चिद्भूषणवर्याणि स्वांगादादाय सादरम् ॥

१ अमलं पदमिति, परमं पदमिति पा० । २ अन्यानपीति पा० । ३ देवदेव्या इति पा० । ४ आशिष इति पा० । ५ देवः प्राह महेश्वर इति पा० । ६ भगवानपीश इति पा० । ७ भगवान् शिवः इति पा० । ८ रराम इति परस्मैपदमार्षम् । १० देव्याननेन्दुमतीति पा० । ११ देवक्यानन्दवर्धनः इति पा० । १२ गिरिकन्दरे इति पा० । १३ स्तत्रतत्रेति पा० । १४ अप्सरसामिति पा० । १५ स्रस्तवस्त्रविभूषणा इति पा० । १६ विविधा गीतीरिति पा० । १७ सुस्मितमिति पा० । १८ समादाय तदंगतः इति पा० ।

भूषयाञ्चक्रिरे कृष्णं कन्या[1] लोकविभूषणम् ॥१२॥ काश्चिद्भूषणवर्याणि समादाय तदङ्गतः ॥ स्वात्मानं भूषयामासुः स्वात्मकैरपि माधवम् ॥ १३ ॥ काचिदागत्य कृष्णस्य समीपं काममोहिता ॥ चुचुम्ब वदनाम्भोजं हरेर्मुग्धमृगेक्षणा ॥१४॥ प्रगृह्य काचिद्गोविन्दं[2] करेण भवनं स्वकम् ॥ प्रापयामास लोकादिं मायया तस्य मोहिता ॥ १५ ॥ तासां स भगवान् कृष्णः कामान् कमललोचनः ॥ बहूनि कृत्वा रूपाणि पूरयामास लीलया ॥ १६ ॥ एवं वै[3] सुचिरं कालं देवदेवपुरे हरिः ॥ रेमे नारायणः श्रीमान्मायया मोहयञ्जगत् ॥ १७ ॥ गते बहुतिथे काले द्वारवत्या[4] निवासिनः ॥ बभूवुर्विकला भीता गोविन्दविरहे जनाः ॥ १८ ॥ ततः सुपर्णो बलवान्[5] पूर्वमेव विसर्जितः ॥ स कृष्णं मार्गमाणस्तु हिमवन्तं ययौ गिरिम्[6] ॥ १९ ॥ अदृष्ट्वा तत्र गोविन्दं प्रणम्य शिरसा मुनिम् ॥ आजगामोपमन्युं तं पुरीं द्वारवतीं पुनः ॥ २० ॥ तदन्तरे महादैत्या राक्षसाश्चातिभीषणाः ॥ आजग्मुर्द्वारकां शुभ्रां भीषयन्तः[7] सहस्रशः ॥ २१ ॥ स तान् सुपर्णो बलवान् कृष्णतुल्यपराक्रमः ॥ हत्वा युद्धेन महता रक्षति स्म पुरीं शुभाम् ॥ २२ ॥ एतस्मिन्नेव काले तु नारदो भगवानृषिः ॥ दृष्ट्वा कैलासशिखरे कृष्णं द्वारवतीं गतः ॥ २३ ॥ तं[8] दृष्ट्वा नारदमृषिं सर्वे तत्र निवासिनः ॥ प्रोचुर्नारायणो नाथः कुत्रास्ते भगवान् हरिः ॥ २४ ॥ स तानुवाच भगवान्कैलासशिखरे हरिः ॥ रमतेऽद्य महायोगी तं दृष्ट्वाहमिहागतः ॥ २५ ॥ तस्योपश्रुत्य वचनं सुपर्णः पततां वरः ॥ जगामाकाशगो विप्राः कैलासं गिरिमुत्तमम् ॥ २६ ॥ ददर्श देवकीसूनुं भवने रत्नमण्डिते ॥ तत्रासनस्थं[9] गोविन्दं देवदेवान्तिके हरिम् ॥ २७ ॥ उपास्यमानममरैर्दिव्यस्त्रीभिः समन्ततः ॥ महादेवगणैः सिद्धैर्योगिभिः परिवारितम् ॥ २८ ॥ प्रणम्य दण्डवद्भूमौ सुपर्णः शङ्करं शिवम् ॥ निवेदयामास[10] हरिं प्रवृत्तं द्वारकापुरे ॥ २९॥ ततः प्रणम्य शिरसा शङ्करं नीललोहितम् ॥ आजगाम पुरीं कृष्णः सोऽनुज्ञातो हरेण तु ॥ ३० ॥ आरुह्य कश्यपसुतं स्त्रीगणैरभिपूजितः ॥ वचोभिरमृतास्वादैर्मानितो मधुसूदनः ॥ ३१ ॥

१ कामिन्यो लोकभूषणमिति पा० । २ चापि गोविन्दमिति पा० । ३ तु इति पा० । ४ द्वारावत्यामिति पा० । ५ भगवानिति पा० । ६ नगमिति पा० । ७ संशयन्त इति पा० । ८ तमिति पा० । ९ वरासनस्थमिति पा० । १० वेदयामास स तत इति पा० ।

[illegible]स्य यान्तममित्रघ्नं गन्धर्वाप्सरसां वराः ॥ अन्वगच्छन्महायोगं शङ्खचक्रगदाधरम् ॥ ३२ ॥ विसर्जयित्वा विश्वात्मा सर्वा एवा [illegible]ना हरिः ॥ ययौ स तूर्णं गोविन्दो दिव्यां द्वारवतीं पुरीम् ॥ ३३ ॥ गते देवेऽसुररिपौ न कामिन्यो मुनीश्वराः ॥ निशेव चन्द्ररहिता [illegible]ना तेन चकाशिरे ॥ ३४ ॥ श्रुत्वा पौरजनास्तूर्णं कृष्णागमनमुत्तमम् ॥ मण्डयाञ्चक्रिरे दिव्यां पुरीं द्वारवतीं शुभाम् ॥ ३५ ॥ पताकाभिर्विशालाभिर्ध्वजैरन्तर्बहिः कृतैः ॥ मालादिभिः पुरीं रम्यां भूषयाञ्चक्रिरे जनाः ॥ ३६ ॥ अवादयन्त विविधान्वादित्रान् मधुरस्वनान् ॥ शङ्खान् सहस्रशो दध्मुर्वीणावादान्वितेनिरे ॥ ३७ ॥ प्रविष्टमात्रे गोविन्दे पुरीं द्वारवतीं शुभाम् ॥ अगायन्मधुरं गानं [illegible]यो यौवनशोभिताः ॥ ३८ ॥ दृष्ट्वा ननृतुरीशानं स्थिताः प्रासादमूर्द्धसु ॥ मुमुचुः पुष्पवर्षाणि वसुदेवसुतोपरि ॥ ३९ ॥ प्रविश्य [illegible]गवान् कृष्णस्त्वाशीर्वादाभिवर्द्धितः ॥ वरासने महायोगी भाति देवीभिरन्वितः ॥ ४० ॥ सुरम्ये मण्डपे शुभ्रे शङ्खाद्यैः परिवा[illegible]तः ॥आत्मजैरभितो मुख्यैः स्त्रीसहस्रैश्च संवृतः ॥ तत्रासनवरे रम्ये जाम्बवत्या सहाच्युतः ॥ ४१ ॥ भ्राजते चोमया देवो यथा [illegible]व्या समन्वितः ॥ ४२ ॥ आजग्मुर्देवगन्धर्वा द्रष्टुं लोकादिमव्ययम् ॥ महर्षयः पूर्वजाता मार्कण्डेयादयो द्विजाः ॥ ४३ ॥ ततः स [illegible]गवान् कृष्णो मार्कण्डेयं समागतम् ॥ ननामोत्थाय शिरसा स्वासनञ्च ददौ हरिः ॥ ४४ ॥ संपूज्य तानृषिगणान् प्रणामेन सहानुगः ॥ विसर्जयामास हरिर्दत्वा तदभिवाञ्छितान् ॥ ४५ ॥ तदा मध्याह्नसमये देवदेवः स्वयं हरिः ॥ स्नातः शुक्लाम्बरो भानुमुपतिष्ठन् कृता[illegible]लिः ॥४६॥ जजाप जाप्यं विधिवत्प्रेक्षमाणो दिवाकरम् ॥ तर्पयामास देवेशो देवान् पितृगणान्मुनीन् ॥४७॥ प्रविश्य देवभवनं मार्क[illegible]ण्डेयेन चैव हि ॥ पूजयामास लिङ्गस्थं भूतेशं भूतिभूषणम् ॥ ४८ ॥ समाप्य नियमं सर्वं नियन्ता स स्वयं नृणाम् ॥ भोजयित्वा मुनि

१ गन्धर्वाप्सरसां गणः इति पा० । २ सर्वात्मा सर्वानेव हि तान् गणान् इति पा० । ३ गतेऽसुररिपौ नैव कामिन्यो मुनिपुङ्गवाः इति पा० । ४ ध्वजैरलपरिष्कृतैरिति पा० । ५ लाजादिभिरिति पा० । ६ यौवनपालिता इति पा० । ७ भवनमिति पा० । ८ देवीभिरर्चितः इति पा० । ९ भ्राजते चानया देव्या भवान्येव समं शिवः इति पा० । १० हरिम् इति पा० । ११ विष्णुरिति पा० । १२ त्वासनं प्रददौ पुनरिति पा० । १३ संपूज्यार्षिगणान् सर्वान् प्रणामेन महाभुज इति पा० । १४ दत्त्वा तदभिवाञ्छितानित्यत्र पुंस्त्वमार्षं सामा[illegible]न्यात् क्लीबत्वमेवोचितम् । १५ स्नात्वा इति पा० । १६ उपतिष्ठन्नित्यार्षम् । उपतिष्ठमान इति साधु । १७ नियन्तासौ नृणां स्वयमिति पा० ।

वरं ब्राह्मणानभिपूज्य च ॥ ४९ ॥ कृत्वात्मयोगं विप्रेन्द्रा मार्कण्डेयेन चाच्युतः ॥ कथां पौराणिकीं पुण्यां चक्रे पुत्रादिभिर्वृतः ॥५०॥ अथैतत्सर्वमखिलं दृष्ट्वा कर्म महामुनिः ॥ मार्कण्डेयो हसन्कृष्णं बभाषे मधुरं वचः ॥ ५१ ॥ मार्कण्डेय उवाच ॥ कः समाराध्यते देवो भवता कर्मभिः शुभैः ॥ ब्रूहि त्वं कर्मभिः पूज्यो योगिनां ध्येय एव च ॥ ५२ ॥ त्वं हि तत्परमं ब्रह्म निर्वाणममलं पदम् ॥ भारावतरणार्थाय जातो वृष्णिकुले प्रभुः ॥ ५३ ॥ तमब्रवीन्महाबाहुः कृष्णो ब्रह्मविदां वरः॥ शृण्वतामेव पुत्राणां सर्वेषां प्रहसन्निव ॥ ५४ ॥ श्रीभगवानुवाच ॥ भवता कथितं सर्वं तथ्यमेव न संशयः ॥ तथापि देवमीशानं पूजयामि सनातनम् ॥ ५५ ॥ न मे विप्रास्ति कर्त्तव्यं नानवाप्तं कथञ्चन ॥ पूजयामि तथापीशं जानन्वै परमं शिवम् ॥ ५६ ॥ न वै पश्यन्ति ते देवं मायया मोहिता जनाः ॥ ततश्चैवात्मनो मूलं ज्ञापयन् पूजयामि तम् ॥ ५७ ॥ न च लिङ्गार्चनात्पुण्यं लोके दुर्गतिनाशनम् ॥ तथा लिङ्गे हितायैषां लोकानां पूजयेच्छिवम् ॥ ५८ ॥ योऽहं तल्लिंगमित्याहुर्वेदवादविदो जनाः ॥ ततोऽहमात्ममीशानं पूजयाम्यात्मनैव तत् ॥५९॥ तस्यैव परमा मूर्त्तिस्तन्मयोऽहं न संशयः ॥ नावयोर्विद्यते भेदो वेदेष्वेतन्न संशयः ॥ ६० ॥ एष देवो महादेवः सदा संसारभीरुभिः ॥ ध्येयः पूज्यश्च वन्द्यश्च ज्ञेयो लिंगे महेश्वरः ॥ ६१ ॥ मार्कण्डेय उवाच ॥ किं तल्लिंगं सुरश्रेष्ठ लिंगे संपूज्यते च कः ॥ ब्रूहि कृष्ण विशालाक्ष गहनं ह्येतदुत्तमम् ॥ ६२ ॥ श्रीभगवानुवाच ॥ अव्यक्तं लिंगमित्याहुरानन्दं ज्योतिरक्षयम् ॥ वेदा महेश्वरं देवमाहुर्लिंगिनमव्ययम् ॥ पुरा चैकार्णवे घोरे नष्टे स्थावरजंगमे ॥ ६३ ॥ प्रबोधार्थं ब्रह्मणो मे प्रादुर्भूतो महाशिवः ॥ तस्मात्कालात्समारभ्य ब्रह्मा चाहं सदैव हि ॥ पूजयावो महादेवं लोकानां हितकाम्यया ॥ ६४ ॥ मार्कण्डेय उवाच ॥ कथं लिंगमभूत्पूर्वमैश्वरं परमं पदम् ॥ प्रबोधार्थं स्वयं

१ पौरादिभिरिति पा० । २ योगिभिर्ध्येय इति पा० । ३ निर्वाणममलं परमिति पा० । ४ हरिरिति पा० । ५ महातेजा इति पा० । ६ कृष्ण उवाच इति पा० । ७ ततोऽहं स्वात्मनो मूलं ज्ञापयामि च तं शिवमिति पा० । ८ लोकेऽस्मिन् भीतिनाशनमिति पा० । ९ विप्र इति पा० । १० आत्ममात्मस्वरूपं स्वरूपार्थे षण् ततो नलोपः । ११ पूजयाम्यात्मदैवतमिति पा० । १२ वेदेष्वेवं विनिश्चयः, वेदेष्वेवं विनिश्चितमिति पा० । १३ ध्येय इति पा० । १४ ज्योतिरक्षरमिति पा० । १५ लिङ्गमिति स्वयमिति पा० । १६ प्रादुर्भूतः स्वयं शिव इति पा० ।

कृष्ण वक्तुमर्हसि साम्प्रतम् ॥ ६५ ॥ श्रीभगवानुवाच ॥ आसीदेकार्णवं घोरमविभागं तमोमयम् ॥ मध्ये चैकार्णवे तस्मिञ्छंखचक्रगदाधरः ॥ सहस्रशीर्षा भूत्वाहं सहस्राक्षः सहस्रपात् ।६६। सहस्रबाहुः पुरुषः शयितोऽहं सनातनः । एतस्मिन्नन्तरे दूरे पश्यामि ह्यमितप्रभम् ॥ कोटिसूर्यप्रतीकाशं भ्राजमानं श्रियावृतम् ॥ ६७ ॥ चतुर्वक्त्रं महायोगं पुरुषं कारणं प्रभुम् ॥ कृष्णाजिनधरं देवमृग्यजुःसामभिः स्तुतम् ॥ ६८ ॥ निमेषमात्रेण स मां प्राप्तो योगविदां वरः ॥ व्याजहार स्वयं ब्रह्मा स्मयमानो महाद्युतिः ॥ ६९ ॥ कस्त्वं कुतो वा किञ्चेह तिष्ठसे वद मे प्रभो ॥ अहं कर्त्ता हि लोकानां स्वयम्भूः प्रपितामहः ॥ ७० ॥ एवमुक्तस्तदा तेन ब्रह्मणाहमुवाच ह ॥ अहं कर्त्तास्मि लोकानां संहर्ता च पुनः पुनः ॥ ७१ ॥ एवं विवादे वितते मायया परमेष्ठिनः ॥ प्रबोधार्थं परं लिंगं प्रादुर्भूतं शिवात्मकम् ॥ ७२ ॥ कालानलसमप्रख्यं ज्वालामालासमाकुलम् ॥ क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्जितम् ॥ ७३ ॥ ततो मामाह भगवानधो गच्छ त्वमाशु वै ॥ अन्तमस्य विजानीष्व ऊर्ध्वं गच्छेऽहमित्यजः ॥ ७४ ॥ तदाशु समयं कृत्वा गतावूर्ध्वमधश्च तौ ॥ पितामहोऽप्यहं नान्तं ज्ञातवन्तौ समेत्य तौ ॥ ७५ ॥ ततो विस्मयमापन्नौ भीतौ देवस्य शूलिनः ॥ मायया मोहितौ तस्य ध्यायन्तौ विश्वमीश्वरम् ॥ ७६ ॥ प्रोच्चरन्तौ महानादमोङ्कारं परमं पदम् ॥ तं प्राञ्जलिपुटौ भूत्वा शम्भुं तुष्टुवतुः परम् ॥ ७७ ॥ ब्रह्मविष्णू ऊचतुः ॥ अनादिमूलसंसाररोगवैद्याय शम्भवे ॥ नमः शिवाय शान्ताय ब्रह्मणे लिंगमूर्त्तये ॥ ७८ ॥ प्रलयार्णवसंस्थाय प्रलयोद्भूतिहेतवे ॥ नमः शिवाय शान्ताय ब्रह्मणे लिंगमूर्त्तये ॥ ७९ ॥ ज्वालामालाप्रतीकाय ज्वलनस्तंभरूपिणे ॥ नमः शिवाय शान्ताय ब्रह्मणे लिंगमूर्त्तये ॥ ८० ॥ आदिमध्यान्तहीनाय स्वभावामलदीप्तये ॥ नमः शिवायानन्ताय ब्रह्मणे लिंगमूर्त्तये ॥ ८१ ॥ ×प्रधानपुरुषेशाय व्योमरूपाय वेधसे ॥ नमः शिवाय शान्ताय ब्रह्मणे लिंगमूर्त्तये ॥ ८२ ॥ निर्विकाराय सत्याय नित्यायातुलतेजसे ॥ वेदान्तसाररूपाय कालरूपाय ते नमः ॥ ८३ ॥ नमः शिवाय

१ मत्तिगाव्यामिति पा० । २ युक्तात्मा इति पा० । ३ महाघोरं पुरुषं काञ्चनप्रभमिति पा० । ४ तु इति पा० । ५ तमिति पा० । ६ शतेति पा० । ७ विजानीया इति पा० । ८ समाः शतमिति पा० । ९ कृताञ्जलिपुटौ इति पा० । १० वृताङ्गाय इति पा० । ११ स्तम्भमूर्त्तये इति पा० । × महादेवाय महते ज्योतिषेऽनन्तशक्तये । नमः शिवाय इत्यधिकः पाठः लि. पु. । १२ नित्यायामलमूर्त्तये, नित्यायामलतेजसे च इति पा० ।

शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥ एवं संस्तूयमानस्तु व्यक्तो भूत्वा महेश्वरः ॥ ८४ ॥ भाति देवो महायोगी सूर्यकोटिसमप्रभः ॥ वक्त्रकोटि सहस्रेण ग्रसमान इवाम्बरम् ॥ ८५ ॥ सहस्रहस्तचरणः सूर्यसोमाग्निलोचनः ॥ पिनाकपाणिर्भगवान् कृत्तिवासास्त्रिशूलधृक् ॥ ८६ ॥ व्यालयज्ञोपवीतश्च मेघदुन्दुभिनिःस्वनः ॥ अथोवाच महादेवः[1] प्रीतोऽहं सुरसत्तमौ ॥ ८७ ॥ पश्येतं[2] मां महादेवं भयं सर्वं प्रमुच्यताम् ॥ युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ ॥ ८८ ॥ अयं[3] मे दक्षिणे पार्श्वे ब्रह्मा लोक[4]पितामहः ॥ वाम[5]पार्श्वे च मे विष्णुः पालको हृदये हरः ॥ ८९ ॥ प्रीतोऽहं युवयोः सम्यग्वरं दद्मि[6] यथेप्सितम् ॥ एव[7]मुक्त्वाथ मां देवो महादेवः स्वयं शिवः ॥ ९० ॥ आलिङ्ग्य देवं ब्रह्माणं प्रसादाभिमुखोऽभवत् ॥ ततः प्रहृष्टमनसौ प्रणिपत्य महेश्वरम् ॥ ९१ ॥ ऊचतुः प्रेक्ष्य तद्वक्त्रं नारायणपितामहौ ॥ यदि प्रीतिः समुत्पन्ना यदि देयो[8] वरो हि नः ॥ ९२ ॥ भक्तिर्भवतु नौ नित्यं त्वयि[9] देव महेश्वरे ॥ ततः स भगवानीशः प्रहसन्परमेश्वरः ॥ ९३ ॥ उवाच मां महादेवः प्री[10]तं प्रीतेन चेतसा ॥ देवदेव उवाच ॥ प्रलयस्थितिसर्गाणां कर्ता त्वं धर[11]णीपते ॥ ९४ ॥ वत्स वत्स हरे विश्वं पालयैतच्चराचरम् ॥ त्रिधा भिन्नोऽस्म्यहं विष्णो ब्रह्मविष्णुहरा[12]ख्यया ॥ सर्गरक्षालयगुणैर्निर्गुणोऽपि निरञ्जनः ॥ संमोहं त्यज भो विष्णो पालयैनं पितामहम् ॥ ९६ ॥ भविष्यत्येव भगवांस्तव पुत्रः सनातनः ॥ अ[13]हं च भवतो वक्त्रात्कल्पादौ सुररूपधृक् ॥ ९७ ॥ शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ॥ एवमुक्त्वा महादेवो ब्रह्माणं मुनिसत्तम ॥ ९८ ॥ अनुगृह्य च मां देवस्तत्रैवान्तरधीयत ॥ ततःप्रभृति लोकेषु लिंगार्चा सुप्रतिष्ठिता ॥ ९९ ॥ लिङ्गं[14] तत्तु यतो ब्रह्मन् ब्रह्मणः परमं वपुः ॥ एतल्लिंगस्य माहात्म्यं भाषितं ते मयानघ ॥ १०० ॥ एतद्बुध्यन्ति योगज्ञा न देवा न च दानवाः ॥ एतद्धि परमं ज्ञानमव्यक्तं शिवसंज्ञितम् ॥ १०१ ॥ येन सूक्ष्ममचिन्त्यं तत्पश्यन्ति

---

१ आदिदेव इति पा० । २ पश्यतमिति पा० । ३ स्वयंभूर्दक्षिणे इति पा० । ४ लोककरः प्रभुरिति पा० । ५ वामे पार्श्वे चैव इति पा० । ६ दद्मीति आर्षं, ददामीति साधु । ७ एवमुक्त्वा तु इति पा० । ८ देयौ वरौ हितौ इति पा० । ९ भुवि इति पा० । १० प्रीतिनम्रेण इति पा० । ११ धरणीतले इति पा० । १२ शिवाख्यया इति पा० । १३ अहं भवतो वक्त्रात् कल्पान्ते घोररूपधृगिति पा० । १४ लिङ्गं त्वव्ययनादीति पा० ।

शानचक्षुषः ॥ तस्मै भगवते नित्यं नमस्कारं प्रकुर्महे ॥ १०२ ॥ महादेवाय देवाय देवदेवाय भृंगिणे ॥ नमो वेदरहस्याय नीलकण्ठाय ते नमः ॥ १०३ ॥ विभीषणाय शान्ताय स्थाणवे हेतवे नमः ॥ ब्रह्मणे वामदेवाय त्रिनेत्राय महीयसे ॥ १०४ ॥ शंकराय महेशाय गिरीशाय शिवाय च ॥ नमः कुरुष्व सततं ध्यायस्व च महेश्वरम् ॥ १०५ ॥ संसार सागरादस्मादचिरादुद्धरिष्यसि ॥ एवं स वासुदेवेन व्याहृतो मुनिपुंगवः ॥ १०६ ॥ जगाम मनसा देवमीशानं विश्वतोमुखम् ॥ प्रणम्य शिरसा कृष्णमनुज्ञातो महामुनिः ॥ १०७॥ जगाम चेप्सितं शंभुं देवदेवं त्रिशूलिनम् ॥ य इमं श्रावयेन्नित्यं लिङ्गाध्यायमनुत्तमम् ॥ ॥ १०८ ॥ शृणुयाद्वा पठेद्वापि सर्वपापैः प्रमुच्यते ॥ श्रुत्वा सकृदपि ह्येतत्तपश्चरणमुत्तमम् ॥१०९॥ वासुदेवस्य विप्रेन्द्राः पापं मुञ्चति मानवः ॥ जपेद्वाहरहर्नित्यं ब्रह्मलोके महीयते ॥ एवमाह महायोगी कृष्णद्वैपायनः प्रभुः ॥ ११० ॥ इति श्रीकूर्मपुराणे यदुवंशानुकीर्त्तने लिंगोत्पत्तिर्नाम षड्विंशोऽध्यायः ॥ २६ ॥ अथ राजवंशानुकीर्त्तनम् ॥ सूत उवाच ॥ ततो लब्धवरः कृष्णो जाम्बवत्यां महेश्वरात् ॥ अजीजनन्महात्मानं साम्बमात्मजमुत्तमम् ॥ १ ॥ प्रद्युम्नस्य ह्यभूत्पुत्रो ह्यनिरुद्धो महाबलः ॥ तावुभौ गुणसम्पन्नौ कृष्णस्यैवापरे तनू ॥ २॥ हत्वा च कंसं नरकमन्यांश्च शतशोऽसुरान् ॥ विजित्य लीलया शंकरं जित्वा बाणं महासुरम् ॥ ३ ॥ स्थापयित्वा जगत्कृत्स्नं लोके धर्मांश्च शाश्वतान् ॥ चक्रे नारायणो गन्तुं स्वस्थानं बुद्धिमुत्तमाम् ॥ ४ ॥ एतस्मिन्नन्तरे विप्रा भृग्वाद्याः कृष्णमीश्वरम् ॥ आजग्मुर्द्वारकां द्रष्टुं कृतकार्यं सनातनम् ॥ ५ ॥ स तानुवाच विश्वात्मा प्रणिपत्याभिपूज्य च ॥ आसनेषूपविष्टान्वै सह रामेण धीमता ॥ ६ ॥ गमिष्यामि परं स्थानं स्वकीयं विष्णुसंज्ञितम् ॥ कृतानि सर्वकार्याणि प्रसीदध्वं मुनीश्वराः ॥ ७ ॥ इदं कलि

१ ज्ञानचक्षुषेति पा०। २ रुद्राय इति पा०। ३ लिङ्गिने इति पा०। ४ देवरहस्याय इति पा० । ५ योगिने इति पा०। ६ देवदेवाय इति पा०। ७ मनसाहरमिति पा० । ८ मुनिसत्तमाः इति पा० । ९ विष्णुमिति पा० । १० देशं देवदेवश्च शूलिनामिति पा० । ११ मुञ्चन्ति मानवा इति पा० । १२ साम्बमात्मजसत्तमामिति पा० । १३ शत्रून् इति पा० । १४ लोकधर्मांश्च इति ० । १५ आसनेषूपविष्टेषु इति पा० । १६ प्रसीदंतु इति पा० आर्षमात्मनेपदम् ।

युगं घोरं सम्प्राप्तमधुनाऽशुभम् ॥ भविष्यन्ति जनाः सर्वे ह्यस्मिन्पापानुवर्त्तिनः ॥ ८ ॥ प्रवर्त्तयध्वं विज्ञानमज्ञानाच्च हितावहम् ॥ येनेमे कलिजैः पापैर्मुच्यन्ते हि द्विजोत्तमाः ॥ ९ ॥ ये मां जनाः संस्मरन्ति कलौ सकृदपि प्रभुम् ॥ तेषां नंश्यति तत्पापं भक्तानां पुरुषोत्तमे ॥ १० ॥ येऽर्चयिष्यन्ति मां भक्त्या नित्यं कलियुगे द्विजाः ॥ विधिना वेददृष्टेन ते गमिष्यन्ति तत्पदम् ॥११॥ ये ब्राह्मणा वंशजाता युष्माकं वै सहस्रशः ॥ तेषां नारायणे भक्तिर्भविष्यति कलौ युगे ॥ १२ ॥ परात्परतरं यान्ति नारायणपरा जनाः ॥ न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ १३ ॥ ध्यानं योगंस्तपस्तप्तं ज्ञानं यज्ञादिको विधिः ॥ तेषां विनश्यति क्षिप्रं ये निन्दन्ति महेश्वरम् ॥ १४ ॥ यो मां समर्च्चयेन्नित्यमेकान्तं भावमाश्रितः ॥ विनिन्दन्देवमीशानं स याति नरकायुतम् ॥ १५ ॥ तस्मात्संपरिहर्तव्या निन्दा पशुपतेर्द्विजाः ॥ कर्मणा मनसा वाचा मद्भक्तेष्वपि यत्नतः ॥ १६ ॥ ये च दक्षाध्वरे शप्ता दधीचेन द्विजोत्तमाः ॥ भविष्यन्ति कलौ भक्तैः परिहार्याः प्रयत्नतः ॥ १७ ॥ द्विषन्तो देवमीशानं युष्माकं वंशसम्भवाः ॥ शप्ताश्च गौतमेनोर्व्यां न सम्भाष्या द्विजोत्तमैः ॥ १८ ॥ एवमुक्ताश्च कृष्णेन सर्वे ते वै महर्षयः ॥ ओमित्युक्त्वा ययुस्तूर्णं स्वानि स्थानानि सत्तमाः ॥ १९ ॥ ततो नारायणः कृष्णो लीलयैव जगन्मयः ॥ संहृत्य स्वकुलं सर्वं ययौ तत्परमं पदम् ॥ २० ॥ इत्येष वः समासेन राज्ञां वंशः सुकीर्तितः ॥ न शक्यो विस्तराद्वक्तुं किं भूयः श्रोतुमिच्छथ ॥ २१ ॥ यः पठेच्छृणुयाद्वापि वंशानां कथनं शुभम् ॥ सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥ २२ ॥ इति श्रीकूर्मपुराणे राजवंशानुकीर्त्तनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥ अथ पार्थाय व्यासदर्शनम् ॥ ऋषय ऊचुः ॥ कृतं त्रेता द्वापरञ्च कलिश्चेति चतुर्युगम् ॥ एषां प्रभावं सूताद्य कथयस्व समासतः ॥ १ ॥ सूत उवाच ॥ गते नारायणे कृष्णे स्वमेव परमं पदम् ॥ पार्थः परमधर्मात्मा पाण्डवः शत्रुतापनः ॥ २ ॥ कृत्वा चैवोत्तरविधिं शोकेन महतावृतः ॥ अपश्यत्पथि गच्छन्तं कृष्ण

१ वै ज्ञानं ब्राह्मणानामिति पा० । २ वै इति पा० । ३ नश्यतु इति पा० । ४ होम इति पा० । ५ पिनाकिनामिति पा० । ६ तस्मात्सा परिहर्त्तव्या इति पा० । ७ द्विजोत्तमाः इति पा० । ८ इत्येवमुक्ता इति पा० । ९ वंशोऽनुकीर्त्तितः इति पा० । १० स्वभावमिति पा० ।

द्वैपायनं मुनिम्॥३॥शिष्यैः प्रशिष्यैरभितः संवृतं ब्रह्मवादिनम्॥पपात दण्डवद्भूमौ त्यक्त्वा शोकं तदार्जुनः ॥४॥ उवाच परमप्रीत्या कस्मादेतन्महामुने॥इदानीं गच्छसि क्षिप्रं कं वा देशं प्रति प्रभो ॥५॥ सन्दर्शनाद्वै भवतः शोको मे विपुलो गतः ॥ इदानीं मम यत्कार्यं ब्रूहि पद्मदलेक्षण ॥ ६ ॥ तमुवाच महायोगी कृष्णद्वैपायनः स्वयम्॥उपविश्य नदीतीरे शिष्यैः परिवृतो मुनिः ॥७॥ इति श्रीकूर्मपुराणे पार्थाय व्यासदर्शनं नामाष्टाविंशोऽध्यायः ॥ ॥ २८ ॥ अथ युगवंशानुकीर्तनम् ॥ व्यास उवाच ॥ इदं कलियुगं घोरं सम्प्राप्तं पाण्डुनन्दन ॥ ततो गच्छामि देवस्य पुरीं वाराणसीं शुभाम् ॥ १ ॥ अस्मिन् कलियुगे घोरे लोकाः पापानुवर्त्तिनः ॥ भविष्यन्ति महाबाहो वर्णाश्रमविवर्जिताः ॥२॥ नान्यत्पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् ॥ सर्वपापोपशमनं प्रायश्चित्तं कलौ युगे ॥ ३ ॥ कृतं त्रेता द्वापरश्च सर्वेष्वेतेषु वै नराः ॥ भविष्यन्ति महात्मानो धार्मिकाः सत्यवादिनः ॥४॥ त्वं हि लोकेषु विख्यातो धृतिमाञ्जनवत्सलः॥ पालयाद्य परं धर्मं स्वकीयं मुच्यसे भयात्॥५॥एवमुक्तो भगवता पार्थः परपुरञ्जयः ॥ पृष्टवान्प्रणिपत्यासौ युगधर्मान्द्विजोत्तमाः ॥ ६ ॥ तस्मै प्रोवाच सकलं मुनिः सत्यवतीसुतः॥प्रणम्य देवमीशानं युगधर्मान्सनातनान्॥७॥व्यास उवाच॥वक्ष्यामि ते समासेन युगधर्मान्नरेश्वर ॥ न शक्यते मया राजन्विस्तरेणाभिभाषितुम्॥८॥आद्यं कृतयुगं प्रोक्तं ततस्त्रेतायुगं बुधैः॥तृतीयं द्वापरं पार्थ चतुर्थं कलिरुच्यते ॥९॥ ध्यानं तपः कृतयुगे त्रेतायां ज्ञानमुच्यते ॥ द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥ १० ॥ ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान्रविः ॥ द्वापरे दैवतं विष्णुः कलौ देवो महेश्वरः ॥ ११ ॥ ब्रह्मा विष्णुस्तथा सूर्यः सर्व एव कलावपि ॥ पूज्यन्ते भगवान्रुद्रश्चतुर्ष्वपि पिनाकधृक् ॥१२॥ आद्ये कृतयुगे धर्मश्चतुष्पादः प्रकीर्त्तितः ॥ त्रेतायुगे त्रिपादः स्याद्द्विपादो द्वापरे स्थितः ॥ १३ ॥ त्रिपादहीनस्तिष्ठेत्तु सत्तामात्रेण

१ परमप्रीतः इति पा० । २ कस्मादेशान्महामुने इति पा० । ३ गङ्गादेशामिति पा० । ४ विगतो यतः इति पा० × अत्राध्यायसमाप्तिर्न दृश्यते लि० पु० । ५ वाराणसीं महापुरीमिति पा० । ६ महापापा इति पा० । ७ त्यक्त्वा इति पा० । ८ सर्वपापप्रशमनमिति पा० । ९ धृतिमान्भूतवत्सलः इति पा० । १० सनातनः इति पा० । ११ परमिति पा० । १२ ज्ञानमध्वर इति पा० । १३ दानमेव इति पा० । १४ रुद्र इति पा० । १५ सनातन इति पा० ।

तिष्ठति ॥ कृते तु मिथुनोत्पत्तिर्वृत्तिः साक्षादलोलुपा ॥१४॥ प्रजास्तृप्ताः सदा सर्वाः सर्वानन्दाश्च भोगिनः ॥ अधमोत्तमत्वं नास्त्यासां निर्विशेषाः पुरञ्जय ॥ १५ ॥ तुल्यमायुः सुखं रूपं तासु तस्मिन् कृते युगे ॥ विशोकास्तत्त्वबहुला एकान्तबहुलास्तथा ॥ १६ ॥ ध्याननिष्ठास्तपोनिष्ठा महादेवपरायणाः ॥ तां वै निष्कामचारिण्यो नित्यं मुदितमानसाः ॥ १७ ॥ पर्वतोदधिवासिन्यो ह्यनिकेताः परन्तप ॥ रसोल्लासः कालयोगात्त्रेताख्ये नश्यति द्विजाः ॥ १८ ॥ तस्यां सिद्धौ प्रनष्टायामन्या सिद्धिरवर्त्तत ॥ अपां सौख्ये प्रतिहते तदा मेघात्मना तु वै ॥ १९ ॥ मेघेभ्यस्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्ज्जनम् ॥ सकृदेव तया वृष्ट्या संयुक्ते पृथिवीतले ॥ २० ॥ प्रादुरासन् तथा तासां वृक्षा वै गृहसंज्ञिताः ॥ सर्वः प्रत्युपयोगस्तु तासां तेभ्यः प्रजायते ॥ २१ ॥ वर्त्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः ॥ ततः कालेन महता तासामेव विपर्ययात् ॥ २२ ॥ रागलोभात्मको भावस्तदा ह्याकस्मिकोऽभवत् ॥ विपर्ययेण तासां तु तेन तत्काल भाविता ॥ २३ ॥ प्रणश्यन्ति ततः सर्वे वृक्षास्ते गृहसंज्ञिताः ॥ ततस्तेषु प्रनष्टेषु विभ्रान्ता मैथुनोद्भवाः ॥ २४ ॥ अभिध्यायन्ति तां सिद्धिं सत्याभिध्यानतस्तदा ॥ प्रादुर्बभूवुस्तासां तु वृक्षास्ते गृहसंज्ञिताः ॥ २५ ॥ वस्त्राणि ते प्रसूयन्ते फलान्याभरणानि च ॥ तेष्वेव जायते तासां गन्धवर्णरसान्वितम् ॥ २६ ॥ अमाक्षिकं महावीर्यं पुटके पुटके मधु ॥ तेन ता वर्त्तयन्ति स्म त्रेतायुगमुखे प्रजाः ॥२७॥ हृष्टास्तुष्टास्तया सिद्ध्या सर्वा वै विगतज्वराः ॥ पुनः कालान्तरेणैव ततो लोभावृतास्तदा ॥ २८ ॥ वृक्षांस्तान् पर्यगृह्णन्त मधु वा माक्षिकं बलात् ॥ तासां तेनापचारेण पुनर्लोभकृतेन वै ॥ २९ ॥ प्रनष्टा मधुना सार्द्धं कल्पवृक्षाः क्वचित् क्वचित् ॥ शीतवर्षातपैस्तीव्रै

---

१ भोगिन्य इति वक्तव्ये भोगिन इति आर्षम् । २ सदानन्दाः पुरन्भ्रय इति पा० । ३ तासामिति पा० । ४ सत्त्वबहुला इति पा० । ५ भावेन कामचारिण्य इति पा० । ६ आलस्यात्कालयोगाच्च इति, रसोल्लासः कलायोगादिति पा० । ७ नश्यते नृप, नश्यते तत इति पा० । ८ प्रतिगते इति पा० । ९ संपृक्ते इति पा० । १० विपर्यये इति पा० । ११ भोगात्मक इति० । १२ नाशाच्च इति पा० । १३ सत्याभिध्यायिन इति पा० । १४ हृष्टाः पुष्टास्तथा सिद्धाः । १५ तत इति पा० । १६ पुनरिति पा० । १७ तीक्ष्णैरिति पा० ।

स्तास्तंतो दुःखिता भृशम् ॥ ३० ॥ द्वन्द्वैः संपीड्यमानास्तु चक्रुरावरणानि च ॥ कृत्वा द्वन्द्वविनिघातान् वार्त्तोपायमचिन्तयन् ॥३१॥ नष्टेषु मधुना सार्द्धं कल्पवृक्षेषु वै तदा ॥ ततः प्रादुरभूत्तासां सिद्धिस्त्रेतायुगे पुनः ॥ ३२ ॥ वार्त्ताया: साधिका ह्यन्या वृष्टिस्तासां निकामतः ॥ तासां वृष्ट्युदकानीह यानि निम्नैर्गतानि तु ॥३३॥ अभवन् वृष्टिसन्तत्या स्रोतःस्थानानि निम्नगाः ॥ यदा आपो बहुतरा आपन्नाः पृथिवीतले ॥ ३४ ॥ अपां भूमेश्च संयोगादौषध्यस्तास्तदाभवन् ॥ अफालकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्दश ॥ ३५ ॥ ऋतुपुष्पफलैश्चैव वृक्षगुल्माश्च जज्ञिरे ॥ ततः प्रादुरभूत्तासां रागो लोभश्च सर्वशः ॥ ३६ ॥ अवश्यम्भावितार्थेन त्रेतायुगवशेन वै ॥ ततस्ताः पर्यगृह्णन्त नदीक्षेत्राणि पर्वतान् ॥ ३७ ॥ वृक्षगुल्मौषधीश्चैव प्रसह्य तु यथाबलम् ॥ विपर्ययेण तासां ता ओषध्यो विविशुर्महीम् ॥३८॥ पितामहनियोगेन दुदोह पृथिवीं पृथुः ॥ ततस्ता जगृहुः सर्वा ह्यन्योन्यं क्रोधमूर्च्छिताः ॥ ३९ ॥ सदाचारे विनष्टे तु बलात्कालबलेन च ॥ मर्यादायाः प्रतिष्ठार्थं ज्ञात्वैतद्भगवानजः ॥ ४० ॥ ससर्ज क्षत्रियान्ब्रह्मा ब्राह्मणानां हिताय वै ॥ वर्णाश्रमव्यवस्थाश्च त्रेतायां कृतवान्प्रभुः ॥ ४१ ॥ यज्ञप्रवर्तनञ्चैव पशुहिंसाविवर्जितम् ॥ द्वापरेऽप्यथ विद्यन्ते मतिभेदास्तथा नृणाम् ॥ ४२ ॥ रागो लोभस्तथा युद्धं मत्वा बुद्धिविनिश्चयम् ॥ एको वेदश्चतुष्पादस्त्रिधा त्विह विभाव्यते ॥ ४३ ॥ वेदव्यासैश्चतुर्द्धा च न्यस्यते द्वापरादिषु ॥ ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः ॥ ४४ ॥ मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ॥ संहिता ऋग्यजुःसाम्नां प्रोच्यन्ते परमर्षिभिः ॥ ४५ ॥ सामान्योद्भावना चैवं दृष्टिभेदैः क्वचित्क्वचित् ॥ ब्राह्मणं कल्पसूत्राणि ब्रह्मप्रवचनानि च ॥४६॥ इतिहासपुराणानि धर्मशास्त्राणि सुव्रत ॥ अवृष्टिर्मरणञ्चैव तथैवान्ये ह्युपद्रवाः ॥४७॥ वाङ्मनःकायजैर्दोषैर्निर्वेदो जायते नृणाम् ॥ निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा ॥४८॥ विचारणाच्च वैराग्यं

१ ततस्ता इति पा० । २ द्वन्द्वप्रतीकारानिति; प्रतीघातानिति पा० । ३ प्रादुर्बभूवाथोति पा० । ४ अवहन्निति पा० । ५ ये पुनस्तदपां स्तोका इति पा० । ६ नाशाच्च इति पा० । ७ पशुदारधनाद्यास्तु, आप्तदारधनाद्यास्तु इति च पा० । ८ प्रतिष्ठानमिति पा० । ९ तत्त्वानामविनिश्चय इति पा० ।१० एको देवश्चतुष्पादस्त्रेतास्विह विधीयते इतिपा०। ११ संहन्यंते श्रुतर्षिभिरिति पा० । १२ सामान्यादैकृताश्चैव इति पा० १३ मंत्रप्रवचनानि तु इति पा० । १४ तथैव व्याध्युपद्रवा इति पा० ।

वैराग्याद्दोषदर्शनम् ॥ दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसम्भवः ॥ ४९ ॥ एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे द्विजाः ॥ आद्ये कृते तु धर्मोऽस्ति स त्रेतायां प्रवर्त्तते ॥ ५० ॥ द्वापरे व्यांकुलीभूत्वा प्रणश्यति कलौ युगे ॥ ५१ ॥ इति श्रीकूर्मपुराणे युगवंशानुकीर्त्तनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

अथ व्यासार्जुनसंवादे युगधर्मनिरूपणम् ॥ व्यास उवाच ॥ तिष्ये मायांमसूयाञ्च वधञ्चैव तपस्विनाम् ॥ साधयन्ति नरा नित्यं तमसा व्याकुलीकृताः ॥ १ ॥ कलौ प्रमारको रोगः सततं क्षुद्भयं तथा ॥ अनावृष्टिभयं घोरं देशानाञ्च विपर्ययः ॥ २ ॥ अधार्मिका निराहारा महाकोपाल्पतेजसः ॥ अनृतं ब्रुवते लुब्धास्तिष्ये जाताः सुदुष्प्रजाः ॥ ३ ॥ दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ॥ विप्राणां कर्मदोषैश्च प्रजानां जायते भयम् ॥ ४ ॥ नांधीयते तदा वेदान् न यजन्ति द्विजातयः ॥ यजन्ति यज्ञान्वेदांश्च पठन्ते चाल्पबुद्धयः ॥ ५ ॥ शूद्राणां मन्त्रंयोगैश्च सम्बन्धो ब्राह्मणैः सह ॥ भविष्यति कलौ तस्मिञ्छयनासनभोजनैः ॥ ६ ॥ राजानः शूद्रभूयिष्ठा ब्राह्मणान्बाधयन्ति च ॥ भ्रूणहत्या वीरहत्या प्रजांयेत नरेश्वरे ॥ ७ ॥ स्नानं होमं जपं दानं देवतानां तथार्चनम् ॥ तथान्यानि च कर्मांणि न कुर्वन्ति द्विजातयः ॥ ८ ॥ विनिन्दन्ति महादेवं ब्राह्मणान् पुरुषोत्तमम् ॥ आम्नायधर्मशास्त्राणि पुराणानि कलौ युगे ॥ ९ ॥ कुर्वन्त्यवेददृष्टानि कर्मांणि विविधानि तु ॥ स्वधर्मे तु रुचिर्नैव ब्राह्मणानां प्रजायते ॥ १० ॥ कुशीलचर्याः पाषण्डैर्वृथारूपैः समावृताः ॥ बहुयाचनका लोका भविष्यन्ति परस्परम् ॥ ११ ॥ अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ॥ प्रमदाः केशशूलाश्च भविष्यन्ति कलौ युगे ॥ १२ ॥ शुक्लदन्ता जिनाख्याश्च मुण्डाः काषायवाससः ॥ शूद्रा धर्मं चरिष्यन्ति युगान्ते समुपस्थिते ॥ १३ ॥ सस्यचौरा भविष्यन्ति तथा चेलाभिमर्शिनः ॥ चौरांश्चौराश्च हर्त्तारो हर्त्तुर्हन्ता तथापरः ॥ १४ ॥ दुःखप्रचुरमल्पायुर्देहोत्सादः सरोगता ॥ अधर्माभिनिवेशत्वात्तमो वृत्तं कलौ स्मृतम् ॥ १५ ॥ काषा

---

१ व्याकुलीभूय इति साधु । × अष्टाविंशोऽध्यायः लि० पु० । २ मायामसूयांच भयंचैव, वधश्चैव इति च पा० । ३ अनाचाराः इति पा० । ४ नाधीयन्ते कलौ वेदा इति पा० । ५ यजन्त्यन्यायता देवान्मन्यन्ते बाह्यबुद्धयः, यजन्त्यन्यायतो देवानिति, जपन्त्यन्यायतोवेदानिति च पा० । ६ मन्त्रमौनैश्च इति पा० । ७ स जायेत नरेश्वर इति पा० । ८ अन्यानि चैव इति पा० । ९ सर्व शास्त्राणि, स्मृतिशास्त्राणीति पा० । १० केशशूलिन्यो इति पा० । ११ चौराश्चौरस्य इति पा० । १२ प्रचुरताल्पायुरिति पा० ।

यिणोऽथ निर्ग्रन्थास्तथा कापालिकाश्च ये ॥ वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे ॥ १६ ॥ आसनस्थान्द्विजान्दृष्ट्वा चालयन्त्यल्प बुद्धयः ॥ ताडयन्ति द्विजेन्द्रांश्च शूद्रा राजोपजीविनः ॥ १७ ॥ उच्चासनस्थाः शूद्रांश्च द्विजमध्ये परन्तप ॥ द्विजामानकरो राजा कलौ कालबलेन तु ॥ १८ ॥ पुष्पैश्च भूषणैश्चैव तथान्यैर्मङ्गलैर्द्विजाः ॥ शूद्रांन्परिचरन्त्यल्पश्रुतभाग्यबलान्विताः॥ १९ ॥ न प्रेक्षन्तेऽर्चितां श्चापि शूद्रान्द्विजवरान्नृप ॥ सेवावसरमालोक्य द्वारे तिष्ठन्ति च द्विजाः ॥ २० ॥ वाहनस्थान्समावृत्य शूद्राञ्छूद्रोपजीविनः ॥ सेवन्ते ब्राह्मणास्तांस्तु स्तुवन्ति स्तुतिभिः कलौ ॥ २१ ॥ अध्यापयन्ति वै वेदाञ्छूद्राञ्छूद्रोपजीविनः ॥ एवं निर्वेदकानर्थान्नास्तिक्यं घोरमाश्रिताः ॥ २२ ॥ तपोयज्ञफलानान्तु विक्रेतारो द्विजोत्तमाः ॥ यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ॥ २३ ॥ नाशं यन्तः स्वकान्धर्मानधिगच्छन्ति तत्पदम् ॥ गायन्ति लौकिकैर्गानैर्दैवतानि नराधिप ॥ २४ ॥ वामपाशुपताचारास्तथा वै पाञ्चरात्रिकाः ॥ भविष्यन्ति कलौ तस्मिन्ब्राह्मणाः क्षत्रियास्तथा ॥ २५ ॥ ज्ञाने कर्मण्यपगते लोके निष्क्रियतां गते ॥ कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानुषान्[१२] ॥ २६ ॥ कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै ॥ देवीशापविनिर्दग्धाः[१३] पुरा दक्षाध्वरे द्विजाः ॥ २७ ॥ निन्दन्ति च महादेवं तमसाविष्टचेतसः ॥ वृथा धर्मञ्चरिष्यन्ति कलौ तस्मिन्युगान्तिके ॥ २८ ॥ सर्वे वीरा भविष्यन्ति ब्राह्मणाद्याः स्वजातिषु ॥ ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः ॥ २९ ॥ सर्वे तेऽवतरिष्यन्ति ब्राह्मणास्तासु योनिषु ॥ विनिन्दंति हृषीकेशं ब्राह्मणा ब्रह्मवादिनः ॥ ३० ॥ वेदबाह्यव्रताचारा दुराचारा वृथाश्रमाः ॥ मोहयंति जनान् सर्वान् दर्शयित्वा फलानि च ॥ ३१ ॥ तमसाविष्टमनसो बैडालव्रतिकाधमाः ॥ कलौ रुद्रो महादेवो लोकानामीश्वरः परः ॥ ३२ ॥ तंदेव साधयेन्नृणां देवतानां च दैवतम् ॥ करिष्यत्य

---

१ शूद्रास्तु इति पा० । २ ज्ञात्वा न हिंसते इति पा० । ३ हिंसतैश्चैव इति पा० । ४ शूद्रानभ्यर्चयन्त्यल्प इति पा० । ५श्रुतिभिरिति पा० । ६ पठंति वैदिकान्मंत्रान् इति पा० । ७ फलानां तु इति पा० । ८ नाशयन्ति ह्यधीतानि तानि गच्छन्तिचानघ इति पा० । ९ गीतैरिति पा० । १० वामाः इति पा० । ११ ज्ञान इति पा० । १२ मानवानिति पा० । १३ दधीचशापनिर्दग्धाः इति पा० । १४ ते च भविष्यन्तीति पा० । १५ न देवता भवेन्नृणामिति पा० ।

व्रतां[1]राणि शंकरो नीललोहितः ॥ ३३ ॥ श्रौतं[2]स्मार्त्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ उपदेक्ष्यंति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ॥ ३४ ॥ सर्ववेदान्तसारं हि धर्मान्वेदनि[3]दर्शितान् ॥ सर्ववर्णान् समुद्दिश्य स्वधर्मा ये निदर्शिताः ॥ ३५ ॥ ये त[4]म्प्रीता निषेवन्ते येन केनोपचारतः ॥ विजित्य कलिजान्दोषान्यान्ति ते परमं पदम् ॥ ३६ ॥ अनायासेन सुमहत्पुण्यमाप्नोति मानवः ॥ अनेकदोषदुष्टस्य कलेरेको महान् गुणः ॥ ३७ ॥ तस्मात्सर्वप्रयत्नेन प्राप्य माहेश्वरं युगम् ॥ विशेषाद्ब्राह्मणो रुद्रमीशानं शरणं व्रजेत् ॥ ३८ ॥ ये नमन्ति विरूपाक्षमीशानं कृत्तिवाससम् ॥ प्रसन्नचेतसो रुद्रं ते [5]यान्ति परमं पदम् ॥ ३९ ॥ यथा रुद्रनमस्कारः सर्वकामफलो ध्रुवः ॥ अ[6]न्यदेवनमस्कारान्न तत्फलमवाप्नुयात् ॥ ४० ॥ एवंविधे कलियुगे दोषाणामेव शोधनम् ॥ महादेवनमस्कारो ध्यानं दा[7]नमिति श्रुतिः ॥ ४१ ॥ त[8]स्मादनीश्वरानन्यान् त्यक्त्वा देवं महेश्वरम् ॥ समाश्रयेद्वि[9]रूपाक्षं यदीच्छेत्परमं पदम् ॥ ४२ ॥ नार्चयन्तीह ये रुद्रं शिवं त्रिदशवंदितम् ॥ तेषां दानं तपो यज्ञो वृथा जीवितमेव च ॥ ४३ ॥ नमो रुद्राय महते देवदेवाय शूलिने ॥ त्र्यम्बकाय त्रिनेत्राय योगिनां गुरवे नमः ॥ ४४ ॥ नमोऽस्तु दे[10]वदेवाय महादेवाय वे[11]धसे ॥ शम्भवे स्थाणवे नि[12]त्यं शिवाय परमेष्ठिने ॥ ४५ ॥ नमः सोमाय रुद्राय महा[13]ग्रासाय हेतवे ॥ प्रपद्येऽहं विरूपाक्षं शरण्यं ब्रह्मचारिणम् ॥ ४६ ॥ महादेवं महायोगमीशानं चांबिकापतिम् ॥ योगिनां योगदातारं योगमायासमावृतम् ॥४७॥ योगिनां गुरुमाचा[14]र्यं योगिगम्यं पिनाकिनम्॥ संसार तारणं रुद्रं ब्रह्माणं ब्रह्मणोऽधिपम् ॥ ४८ ॥ शाश्वतं सर्वगं शान्तं ब्रह्मण्यं ब्राह्मणप्रियम् ॥ कपर्दिनं कालमूर्त्तिमम[15]मूर्तिं परमेश्वरम् ॥ ४९ ॥ एकमूर्त्ति महामूर्त्ति वेदवेद्यं दिवस्पतिम् ॥ नीलकण्ठं विश्वमूर्त्ति व्यापिनं विश्वरेत[16]सम् ॥५०॥ कालाग्नि कालदहनं कामदं कामनाशनम् ॥

१ क्लीबत्वमार्षम् । २ कलौ तस्मात्प्रतिष्ठार्थं लोकानां हितकाम्यया इति पा०। ३ निदर्शनानिति पा० ४ ये त्रिप्रास्तानिति पा०। ५ यान्ति ते इति पा०। ६ आत्मदेवनमस्कारान्नतं साकल्यमाप्नुयात् इति पा० । ७ दानं परा गतिरिति पा० । ८ तस्माद्धीश्वरानन्यानिति पा०। ९ विरूपाक्षमीशानं कृत्तिवाससम् । प्रसन्नचेतसो रुद्रं यांति ते परमं पदम् इति पा०। १० वामदेवाय इति पा० । ११ धीमते इति पा०। १२ शिवाय इति पा०। १३ महाग्रासाभिहेतवे इति पा०। १४ परमाचार्यमिति पा०।१५ममरेश्वरमिति पा०।१६ विश्वचेतसमिति पा०।

नमस्ये गिरिशं देवं चन्द्रावयवभूषणम् ॥ ५१ ॥ विलोहितं लेलिहानमादित्यं परमेष्ठिनम् ॥ उग्रं पशुपतिं भीमं भास्करं परमं तपः ॥५२॥ इत्येतल्लक्षणं प्रोक्तं युगानां वै समासतः ॥ अतीतानागतानां वै यावन्मन्वन्तरक्षयः ॥ ५३ ॥ मन्वन्तरेण चैकेन सर्वाण्येवान्तराणि वै ॥ व्याख्यातानि न सन्देहः कल्पः कल्पेन चैव हि ॥ ५४ ॥ मन्वन्तरेषु चैतेषु अतीतानागतेषु वै ॥ तुल्याभिमानिनः सर्वे नामरूपैर्भवन्त्युत ॥ ५५ ॥ × एवमुक्तो भगवता किरीटी श्वेतवाहनः ॥ बभार परमां भक्तिमीशानेऽव्यभिचारिणीम् ॥ ५६ ॥ नमश्चकार तमृषिं कृष्णद्वैपायनं प्रभुम् ॥ सर्वज्ञं सर्वकर्त्तारं साक्षाद्विष्णुं व्यवस्थितम् ॥ ५७ ॥ तमुवाच पुनर्व्यासः पार्थं परपुरञ्जयम् ॥ कराभ्यां सुशुभाभ्याञ्च संस्पृश्य प्रणतं मुनिः ॥ ५८ ॥ धन्योऽस्यनुगृहीतोऽसि त्वादृशोऽन्यो न विद्यते ॥ त्रैलोक्ये शङ्करे नूनं भक्तः परपुरञ्जय ॥ ५९ ॥ दृष्टवानसि तं देवं विश्वाक्षं विश्वतोमुखम् ॥ प्रत्यक्षमेव सर्वेषां रुद्रं सर्वजगन्मयम् ॥ ६० ॥ ज्ञानं तदैश्वरं दिव्यं यथावद्विदितं त्वया ॥ स्वयमेव हृषीकेशः प्रीत्योवाच सनातनः ॥६१॥ गच्छ गच्छ स्वकं स्थानं न शोकं कर्त्तुमर्हसि॥ व्रजस्व परया भक्त्या शरण्यं शरणं शिवम् ॥ ६२ ॥ एवमुक्त्वा स भगवाननुगृह्यार्जुनं प्रभुः ॥ जगाम शङ्करपुरीं समाराधयितुं भवम् ॥ ६३ ॥ पाण्डवेयोऽपि तद्वाक्यात्संप्राप्य शरणं शिवम् ॥ सन्त्यज्य सर्वकर्माणि ज्ञात्वा तत्परमोऽभवत् ॥ ६४ ॥ नार्चनेन समः शम्भोर्भक्त्या भूतो भविष्यति ॥ मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ॥ ६५ ॥ तस्मै भगवते नित्यं नमः शान्ताय धीमते ॥ पाराशर्याय मुनये व्यासायामिततेजसे ॥ ६६ ॥ कृष्णद्वैपायनः साक्षाद्विष्णुरेव सनातनः ॥ को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम् ॥ ६७ ॥ नमः कुरुध्वं तमृषिं कृष्णं सत्यवती

१ नमस्ये–नमस्करोमि । आर्षमात्मनेपदम् । २ भूषितमिति पा० । ३ तमसः परमिति पा० । ४ कल्पे तथैव हि इति पा० । × सूत उवाच इति लि० पु० । ५ सनातनम् इति पा० । ६ साक्षात् । ७ धन्योऽस्म्यनुगृहीतोऽस्मीति पा० । ८ सर्वेशमिति, सर्वज्ञमिति पा० । ९ सर्वजगद्धरमिति, सर्वजगद्गुरुम् इति पा० । १० तच्चेश्वरमिति पा० । ११ हृषीकेशः प्रत्युवाच समासतः इति, गुडाकेशमिति पा० । हृषीकाणामिन्द्रियाणामीशः जितेन्द्रिय इत्यर्थः, सनातनः चिरजीवी, व्यास इत्यर्थः । अथवा हृषीकेशस्य अवतारत्वाद्व्यासो हृषीकेशः इत्युक्तः; तथाच "व्यासो नारायणः स्वयम्" इति । १२ प्रतीति, पुनरिति पा० । १३ शिवमिति पा० । १४ पाण्डवोऽपि च इति पा० । १५ तद्भक्तिपरमोऽभवदिति पा० । १६ सत्यायेति पा० । १७ नमामि रुद्रमिति पा० ।

॥ ६४ ॥

सुतम् ॥ पाराशर्यं महात्मानं योगिनं विष्णुमव्ययम् ॥६८॥ एवमुक्त्वा तु मुनयः सर्वे एव समाहिताः॥ प्रणेमुस्तं महात्मानं व्यासं सत्य
वतीसुतम् ॥ ६९ ॥ इति श्रीकूर्मपुराणे व्यासार्जुनसंवादे युगधर्मनिरूपणंनाम× त्रिंशोऽध्यायः ॥ ३० ॥ अथ वाराणसीमाहात्म्यम् ॥
ऋषय ऊचुः ॥ प्राप्य वाराणसीं दिव्यां कृष्णद्वैपायनो मुनिः ॥ किमकार्षीन्महाबुद्धिः श्रोतुं कौतूहलं हि नः ॥ १ ॥ सूत उवाच ॥ प्राप्य
वाराणसीं दिव्यामुपस्पृश्य महामुनिः ॥ पूजयामास जाह्नव्यां देवं विश्वेश्वरं शिवम् ॥ २ ॥ तमागतं मुनिं दृष्ट्वा तत्र ये निवसन्ति वै ॥
पूजयाञ्चक्रिरे व्यासं मुनयो मुनिपुङ्गवम् ॥ ३ ॥ पप्रच्छुः प्रणताः सर्वे कथां पापप्रणाशिनीम् ॥ महादेवाश्रयां पुण्यां मोक्षधर्मान्सना
तनान् ॥ ४ ॥ स चापि कथयामास सर्वज्ञो भगवानृषिः ॥ माहात्म्यं देवदेवस्य धर्म्यं वेदनिदर्शनात् ॥ ५ ॥ तेषां मध्ये मुनीन्द्राणां
व्यासशिष्यो महामुनिः ॥ पृष्टवाञ्जैमिनिर्व्यासं गूढमर्थं सनातनम् ॥ ६ ॥ जैमिनिरुवाच ॥ भगवन् संशयश्चैकं छेत्तुमर्हसि सर्ववित् ॥
न विद्यते ह्यविदितं भवतः परमर्षिणः ॥ ७ ॥ केचिद्ध्यानं प्रशंसन्ति धर्ममेवापरे जनाः ॥ अन्ये साङ्ख्यं तथा योगं तपश्चान्ये
महर्षयः ॥ ८ ॥ ब्रह्मचर्यमथो नूनमन्ये प्राहुर्महर्षयः ॥ अहिंसां सत्यमप्यन्ये संन्यासमपरे विदुः ॥ ९ ॥ केचिद्दयां प्रशं
सन्ति दानमध्ययनं तथा ॥ तीर्थयात्रां तथा केचिदन्ये चेन्द्रियनिग्रहम् ॥ १० ॥ किमेषांश्च भवेच्छ्रेयः प्रब्रूहि मुनिपुङ्गव ॥
यदि वा विद्यतेऽप्यन्यद्गुह्यं तद्वक्तुमर्हसि ॥ ११ ॥ श्रुत्वा स जैमिनेर्वाक्यं कृष्णद्वैपायनो मुनिः ॥ प्राह गम्भीरया
वाचा प्रणम्य वृषकेतनम् ॥ १२ ॥ × श्रीभगवानुवाच ॥ साधु साधु महाभाग यत्पृष्टं भवता मुने ॥ वक्ष्ये गुह्यतमाद्गुह्यं शृण्वन्त्वन्ये
महर्षयः ॥ १३ ॥ ईश्वरेण पुरा प्रोक्तं ज्ञानमेतत्सनातनम् ॥ गूढमप्राज्ञविद्विष्टं सेवितं सूक्ष्मदर्शिभिः ॥ १४ ॥ नाश्रद्दधाने दातव्यं
नाभक्ते परमेष्ठिनः ॥ नांवेदविदुषे देयं ज्ञानानां ज्ञानमुत्तमम् ॥ १५ ॥ मेरुशृङ्गे महादेवमीशानं त्रिपुरद्विषम् ॥देवासनगता देवी महादेव

× एकोनत्रिंशोध्यायः लि. पु. । १ कथाः पापविनाशिनीरिति पा० । २ धर्मान्वेदनिदर्शितानिति पा० । ३ तत्त्वविदिति पा० । ४ तपस्त्वन्ये इति पा० । ५ मौनमन्ये इति पा० ।
६ किमेतेषामिति पा० । × व्यास उवाच इति लि० पु० । ७ न वेदविदुषो ज्ञेयमिति पा० ।

मपृच्छत॥ १६॥श्रीदेव्युवाच॥ देवदेव महादेव भक्तानामार्त्तिनाशन॥ कथं त्वां पुरुषो देवमचिरादेव पश्यति ॥ १७ ॥ साङ्ख्ययोगस्तपो ध्यानं कर्मयोगश्च वैदिकः ॥ आयासबहुलान्याहुर्यानि चान्यानि शङ्कर ॥ १८ ॥ येन विभ्रान्तचित्तानां विज्ञानां योगिनामपि ॥ दृश्यो हि भगवान्सूक्ष्मः सर्वेषामपि देहिनाम् ॥ १९ ॥ एतद्गुह्यतमं ज्ञानं गूढं ब्रह्मादिसेवितम् ॥ हिताय सर्वभक्तानां ब्रूहि कामाङ्गनाशन ॥ २० ॥ ईश्वर उवाच ॥ अवाच्यमेतद्गूढार्थं ज्ञानमज्ञैर्बहिष्कृतम् ॥ वक्ष्ये तव यथातत्त्वं यदुक्तं परमर्षिभिः ॥ २१ ॥ परं गुह्यतमं क्षेत्रं मम वाराणसी पुरी ॥ सर्वेषामेव भूतानां संसारार्णवतारिणी ॥ २२ ॥ तस्मिन् भक्ता महादेवि मदीयं व्रतमास्थिताः ॥ निवसन्ति महात्मानः परं नियममास्थिताः ॥ २३ ॥ उत्तमं सर्वतीर्थानां स्थानानामुत्तमञ्च यत् ॥ ज्ञानानामुत्तमं ज्ञानमविमुक्तं परं मम ॥ २४ ॥ स्थानान्तरे पवित्राणि तीर्थान्यायतनानि च ॥ श्मशाने संस्थितान्येव दिवि भूमिगतानि च ॥ २५ ॥ भूर्लोके नैव संलग्नमन्तरिक्षे ममालयम् ॥ अविमुक्ता न पश्यन्ति मुक्ताः पश्यन्ति चेतसा ॥ २६ ॥ श्मशानमेतद्विख्यातमविमुक्तमिति स्मृतम् ॥ कालो भूत्वा जगदिदं संहराम्यत्र सुन्दरि ॥ २७ ॥ देवीदं सर्वगुह्यानां स्थानं प्रियतमं मम ॥ मद्भक्ता यत्र गच्छन्ति मामेव प्रविशन्ति ते ॥ २८ ॥ दत्तं जप्तं हुतञ्चेष्टं तपस्तप्तं कृतञ्च यत् ॥ ध्यानमध्ययनं ज्ञानं सर्वं तत्राक्षयं भवेत् ॥ २९ ॥ जन्मान्तरसहस्रेषु यत्पापं पूर्वसञ्चितम् ॥ अविमुक्ते प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ॥ ३० ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये वर्णसङ्कराः ॥ स्त्रियो म्लेच्छाश्च ये चान्ये संकीर्णाः पापयोनयः ॥ ३१ ॥ कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ॥ कालेन निधनं प्राप्ता अविमुक्ते वरानने ॥ ३२ ॥ चन्द्रार्द्धमौलयस्त्र्यक्षा महावृषभवाहनाः ॥ शिवे मम पुरे देवि जायन्ते तत्र मानवाः ॥३३॥ नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ॥ ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥ ३४ ॥ मोक्षं सुदुर्लभं ज्ञात्वा संसारं चातिभीषणम् ॥ अश्मना चरणौ हत्वा वाराणस्यां

---

१ तथा इति पा० । २ योगोऽथ इति पा० । ३ योगिनां कर्मिणामपीति, स्वकर्मकर्मिणामपीति पा० । ४ विज्ञानमिति पा० । ५ तत्र इति पा० । ६ नदिति पा० । ७ दिव्येति पा० । ८ श्रुतमिति पा० । ९ तत्र इति, तमिति पा० । १० सङ्कीर्णाः-अनुलोमप्रतिलोमाभ्यां सङ्करजातीया इत्यर्थः । ११ मत्वा इति पा० ।

वसेन्नरः ॥ ३५ ॥ दुर्लभा तपसो[1]ऽवाप्तिर्भूतस्य परमेश्वरि ॥ यत्र तत्र विपन्नस्य गतिः संसारमोक्षणी ॥ ३६ ॥ प्रसादाद्दह्यते[2] ह्येनो मम शैलेन्द्रनन्दिनि ॥ अत्रा[3]बुधा न पश्यन्ति मम मायाविमोहिताः ॥ ३७ ॥ अविमुक्तं न पश्यन्ति[4] मूढा ये तमसावृताः ॥ विण्मूत्ररेतसां मध्ये संविशन्ति पुनः पुनः ॥ ३८॥ हन्यमानोऽपि यो देवि[5] विशेद्विघ्नशतैरपि ॥ स याति परमं स्थानं यत्र गत्वा न शोचति ॥ ३९ ॥ जन्ममृत्युजरामुक्तं परं याति शिवालयम् ॥ अपुनर्मरणानां हि सा गतिर्मोक्षकांक्षिणाम् ॥ ४० ॥ यां प्राप्य कृतकृत्यः स्यादिति मन्येतं[6] पण्डितः ॥ न दानैर्न तपोभिश्च न यज्ञैर्नापि विद्यया ॥ ४१ ॥ प्राप्यते गतिरुत्कृष्टा या विमुक्ते तु लभ्यते ॥ नानावर्णा विवर्णाश्च चण्डालाद्या जुगुप्सिताः ॥ ४२॥ कालिबषैः[7] पूर्णदेहा ये प्रकृष्टैस्तापकैस्तथा ॥ भेषजं परमं तेषामविमुक्तं विदुर्बुधाः ॥४३॥ अविमुक्तं परं ज्ञानमविमुक्तं परं पदम् ॥ अविमुक्तं परन्तत्त्वमविमुक्तं परं शिवम् ॥ ४४ ॥ कृत्वा वै नैष्ठिकीन्दीक्षामविमुक्ते वसन्ति ये ॥ तेषां तत्परमं ज्ञानं ददाम्यन्ते परं पदम् ॥ ४५ ॥ प्रयागं नैमिषं पुण्यं श्रीशैलोऽथ हिमालयः ॥ केदारं भद्रकर्णञ्च गया पुष्करमेव च ॥ ४६ ॥ कुरुक्षेत्रं रुद्रकोटिर्नर्मदा हाटकेश्वरम् ॥ शालिग्रामञ्च पुष्पाग्रं वंशं कोकामुखं तथा ॥ ४७ ॥ प्रभासं विजयेशानं गोकर्णं शङ्कुकर्णकम् ॥ एतानि पुण्यस्थानानि त्रैलोक्ये विश्रुतानि च ॥४८॥ यांस्यन्ति[8] परमं मोक्षं वाराणस्यां यथा मृताः ॥ वाराणस्यां विशेषेण गङ्गा त्रिपथगामिनी ॥४९॥ प्रविष्टा[9] नाशयेत्पापं जन्मान्तरशतैः कृतम् ॥ अन्यत्र सुलभा गङ्गा श्राद्धं दानं तथा जपंः[10] ॥५०॥ व्रतानि सर्वमेवैतद्वाराणस्यां सुदुर्लभम् ॥ यजेत्तु जुहुयान्नित्यं ददात्यर्चयतेऽपरान्[11] ॥ ५१ ॥ वायुभक्षश्च सततं वाराणस्यां स्थितो नरः ॥ यदि पापो यदि शठो यदि चांधार्म्मिको[12] नरः ॥५२॥ वाराणसीं समासाद्य पुनाति सं[13] कुलत्रयम् ॥ वाराणस्यां महादेवं

---

१ तपसा चापि पूतस्य इति पा० । २ जायते ह्येतदिति पा० । ३ अपि इति, अविद्वांस इति पा० । ४ सेवन्ते इति पा० । ५ विद्वानिति, पुमान्देवि शश्वद्विघ्नशतैरिति, विद्वानिति पा० । ६ मन्यन्ति पण्डिता इति पा० । ७ विशिष्टैः पातकैरिति पा० । ८ न यास्यन्ति परमिति पा० । ९ प्रवेशादिति पा० । १० तपः इति पा० । ११ ऽमरानिति पा० । १२ वाधार्मिक इति पा० । १३ सकलं कुलमिति पा० ।

ये स्तुवन्त्यर्च्चयन्ति च ॥ ५३ ॥ सर्व्वपापविनिर्मुक्तास्ते विज्ञेया गणेश्वराः ॥ अन्यत्र यागाज्ज्ञानाद्वा संन्यासादथवान्यतः ॥ ५४ ॥ प्राप्यते तत्परं स्थानं सहस्रेणैव जन्मना ॥ ये भक्ता देवदेवेशे वाराणस्यां वसन्ति वै ॥ ५५ ॥ ते विन्दन्ति परं मोक्षमेकेनैव तु जन्मना ॥ यत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना ॥५६॥ अविमुक्तं समासाद्य नान्यद्गच्छेत्तपोवनम्॥ यतो मया न मुक्तं तदविमुक्तमिति स्मृतम् ॥५७॥ तदेव गुह्यं गुह्यानामेतद्विज्ञाय मुच्यते ॥ ज्ञानध्याननिविष्टानां परमानन्दमिच्छताम्॥५८॥ यां गतिर्विहिता सुभ्रु साविमुक्ते मृतस्य तु ॥ यानि कान्यविमुक्तानि देवैरुक्तानि नित्यशः ॥५९॥ पुरी वाराणसी तेभ्यः स्थानेभ्योऽप्यधिका शुभा ॥ यत्र साक्षान्महादेवो देहान्तेऽक्षय्यमीश्वरः ॥ ६० ॥ व्याचष्टे तारकं ब्रह्म तथैव ह्यविमुक्तकम् ॥ यत्तत्परतरं तत्त्वमविमुक्तमिति स्मृतम् ॥ ६१॥ एकेन जन्मना देवि वाराणस्यां तदाप्यते॥ भ्रूमध्ये नाभिमध्ये च हृदयेऽपि च मूर्द्धनि॥ ६२॥ यथाविमुक्तमादित्ये वाराणस्यां व्यवस्थितम्॥ वरणायास्तथा ह्यस्या मध्ये वाराणसी पुरी ॥६३ ॥ तत्रैव संस्थितं तत्त्वं नित्यमेवाविमुक्तिकम् ॥ वाराणस्याः परं स्थानं न भूतं न भविष्यति ॥६४॥ यथा नारायणो देवो महादेवादिवेश्वरात् ॥ तत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ॥ ६५ ॥ उपासते मां सततं देवदेवः पितामहः ॥ महापातकिनो ये च ये तेभ्यः पापकृत्तमाः ॥ ६६ ॥ वाराणसीं समासाद्य ते यान्ति परमां गतिम् ॥ तस्मान्मुमुक्षुर्नियतो वसेद्वामरणान्तिकम् ॥ ६७ ॥ वाराणस्यां महादेवि ज्ञानं लब्ध्वा विमुच्यते ॥ किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसाम् ॥ ६८ ॥ ततो नैव चरेत्पापं कायेन मनसा गिरा ॥ एतद्रहस्यं वेदानां पुराणानां द्विजोत्तमाः ॥ ६९ ॥ अविमुक्ताश्रयं ज्ञानं न किञ्चिद्वेद्मि तत्परम् ॥ देवतानामृषीणाञ्च शृण्वतां परमेष्ठिनाम् ॥ ७० ॥ देव्यै देवेन कथितं सर्वपापविनाशनम् ॥ यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः ॥ ७१ ॥

---

१ येऽर्च्चयन्ति स्तुवन्ति च इति पा० । २ परममिति पा० । ३ भक्त्यादेवदेवस्य इति पा० । ४ मेतद्विज्ञानमुच्यते इति पा० । ५ ज्ञानध्यानाभिनिष्ठानामिति पा० । ६ योगान्ते विहिता मुक्तिः साविमुक्तमृतस्य तु इति पा० । ७ स्वयमीश्वर इति पा० । ८ तत्रैव इति पा० । ९ तदाप्नुयादिति पा० । १० चास्या इति पा० । ११ महादेवं निरंजनम् इति पा० । १२ पुरुषाणाञ्च सुव्रता इति पा० । १३ कश्चिद्वेत्ति तत्त्वत इति पा० । १४ प्रणाशनमिति पा० ।

यथेश्वराणां गिरिशः स्थानानाञ्चैतदुत्तमम् ॥ यैः समाराधितो रुद्रः पूर्वस्मिन्नेव जन्मनि ॥ ७२ ॥ तं विन्दन्ति परं क्षेत्रमविमुक्तं शिवालयम् ॥ कलिकल्मषसम्भूता येषामुपहता मतिः ॥ ७३ ॥ न तेषां वीक्षितुं शक्यं स्थानं तत्परमेष्ठिनः ॥ ये स्मरन्ति सदा कालं विन्दन्ति च पुरीमिमाम् ॥ ७४ ॥ तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम् ॥ यानि चेह प्रकुर्वन्ति पातकानि कृतालयाः ॥७५॥ नाशयेत्तानि सर्वाणि तेन कालतनुः शिवः ॥ आगच्छतामिदं स्थानं सेवितुं मोक्षकांक्षिणाम् ॥ ७६ ॥ मृतानां वै पुनर्जन्म न भूयो भवसागरे ॥ तस्मात्सर्वप्रयतेन वाराणस्यां वसेन्नरः ॥ ७७ ॥ योगी वाप्यथवायोगी पापी वा पुण्यकृत्तमः ॥ न लोकवचनात् पित्रोर्नैव गुरुवादतः ॥ ७८ ॥ मतिरुत्क्रमणीया स्यादविमुक्तागतिं प्रति ॥ ७९ ॥ सूत उवाच ॥ एवमुक्त्वाथ भगवान्व्यासो वेदविदां वरः ॥ सहैव शिष्यप्रवरैर्वाराणस्याञ्चचार ह ॥ ८० ॥ इति श्रीकूर्मपुराणे वाराणसीमाहात्म्यं नाम + एकात्रिंशोऽध्यायः ॥३१॥

अथ वाराणसीमाहात्म्यम् ॥ सूत उवाच ॥ स शिष्यैः संवृतो धीमान् गुरुर्द्वैपायनो मुनिः ॥ जगाम विपुलं लिंगमोंकारं मुक्तिदायकम् ॥ १ ॥ तत्राभ्यर्च्य महादेवं शिष्यैः सह महामुनिः ॥ प्रोवाच तस्य माहात्म्यं मुनीनां भावितात्मनाम् ॥ २ ॥ इदं तद्विमलं लिंगमोङ्कारं नाम शोभनम् ॥ अस्य स्मरणमात्रेण मुच्यते सर्वपातकैः ॥ ३ ॥ अत्र तत्परमं ज्ञानं पञ्चायतनमुत्तमम् ॥ अर्चितं मुनिभिर्नित्यं वाराणस्यां विमोक्षदम् ॥ ४ ॥ अत्र साक्षान्महादेवः पञ्चायतनाविग्रहः ॥ रमते भगवान्रुद्रो जन्तूनामपवर्गदः ॥ ५ ॥ यत्तत्पाशुपतं ज्ञानं पञ्चार्थमिति कथ्यते ॥ तदेव विमलं लिंगमोङ्कारं समवस्थितम् ॥ ६ ॥ शान्त्यतीता परा शान्तिर्विद्या चैव यथाक्रमम् ॥ प्रतिष्ठा च निवृत्तिश्च पञ्चार्थं लिंगमैश्वरम् ॥ ७ ॥ पञ्चानामपि देवानां ब्रह्मादीनां यदाश्रयम् ॥ ओङ्कारबोधितं लिङ्गं पञ्चायतनमुच्यते ॥ ८ ॥

---

१ वेदितुमिति पा० । २ वहन्तीति पा० । ३ देवः इति पा० । ४ इत्येवमुक्त्वा इति पा० । × त्रिंशोध्यायः लि० पु० । ५ विमलमिति पा० । ६ अत्रैतदितिं पा० । ७ सेवितमिति पा० । ८ वसते इति पा० । ९ शक्यते इति पा० । १० पराकला । प्रवृत्तिश्च निवृत्तिश्च इति प्रा० । ११ सदाश्रयमिति पा० । १२ ओङ्कारबोधकमिति । १३ मन्ययमिति पा० ।

संस्मरेदैश्वरं लिङ्गं पञ्चायतनमव्ययम् ॥ देहान्ते तत्परं ज्योतिरानन्दं विशते पुनः ॥ ९ ॥ अत्र देवर्षयः पूर्वं सिद्धा ब्रह्मर्षयस्तथा ॥ उपास्य देवमीशानं प्राप्तवन्तः परं पदम् ॥ १० ॥ मत्स्योदर्यास्तटे पुण्यं स्थानं गुह्यतम शुभम् ॥ गोचर्ममात्रं विप्रेन्द्रा ओङ्कारेश्वरमुत्तमम् ॥ ११ ॥ कृत्तिवासेश्वरं लिङ्गं मध्यमेश्वरमुत्तमम् ॥ विश्वेश्वरं तथोंकार कपर्दीश्वरमुत्तमम् ॥ १२ ॥ एतानि गुह्यलिंगानि वाराणस्यां द्विजोत्तमाः ॥ न कश्चिदिह जानाति विना शम्भोरनुग्रहात् ॥ १३ ॥ ॥ एवमुक्त्वा ययौ कृष्णः पाराशर्यो महामुनिः ॥ कृत्तिवासेश्वरं लिंगं द्रष्टुं देवस्य शूलिनः ॥ १४ ॥ समभ्यर्च्य सदा[1] शिष्यैर्माहात्म्यं कृत्तिवाससः ॥ कथयामास विप्रेभ्यो भगवान् ब्रह्मवित्तमः ॥ १५ ॥ अस्मिन् स्थाने पुरा दैत्यो हस्ती भूत्वा भवान्तिकम् ॥ ब्राह्मणान् हन्तुमायातो येऽत्र[2] नित्यमुपासते ॥ १६ ॥ तेषां लिंगान्महादेवः प्रादुरासीत्त्रिलोचनः ॥ रक्षणार्थं द्विजश्रेष्ठा भक्तानां भक्तवत्सलः ॥ १७ ॥ हत्वा गजाकृतिं दैत्यं शूलेनावज्ञया हरः ॥ वासस्तस्याकरोत्कृत्तिं कृत्तिवासेश्वरस्ततः ॥ १८ ॥ अत्र[3] सिद्धिं परां प्राप्ता मुनयो मुनिपुंगवाः ॥ तेनैव च शरीरेण प्राप्तास्तत्परमं पदम् ॥ १९ ॥ विद्या विद्येश्वरा रुद्राः शिवा ये वः[4] प्रकीर्त्तिताः ॥ कृत्तिवासेश्वरं लिंगं नित्यमावृत्य संस्थिताः ॥ २० ॥ ज्ञात्वा कलियुगं घोरमधर्मबहुलं जनाः ॥ कृत्तिवासं न मुञ्चन्ति कृतार्थास्ते न संशयः ॥ २१ ॥ जन्मान्तरसहस्रेण मोक्षोऽन्यत्राप्यते न वा ॥ एकेन जन्मना[5] मोक्षः कृत्तिवासे तु लभ्यते ॥ २२ ॥ आलयः सर्वसिद्धानामेतत्स्थानं वदन्ति हि[6] ॥ गोपितं देवदेवेन महादेवेन शम्भुना ॥ २३ ॥ युगे युगे ह्यत्र दान्ता ब्राह्मणा वेदपारगाः ॥ उपासते महादेवं जपन्ति शतरुद्रियम् ॥ २४ ॥ स्तुवन्ति सततं देवं महादेवं[7] त्रियम्बकम् ॥ ध्यायन्तो[8] हृदये नित्यं स्थाणुं सर्वान्तरं[9] शिवम् ॥ २५ ॥ गायन्ति सिद्धाः किल गीतकानि[10] ये वाराणस्यां निवसन्ति विप्राः ॥ तेषामथैकेन भवेन मुक्तिर्ये कृत्तिवासं शरणं प्रपन्नाः ॥ २६ ॥ सम्प्राप्य लोके जगतामभीष्टं सुदुर्लभं विप्रकुलेषु जन्म ॥ ध्यानं[11] समादाय जपन्ति

१ बुधः इति पा० । २ तथा इति पा० । ३ येनेति पा० । ४ तत्र इति पा० । ५ च इति पा० । ६ वसता इति पा० । ७ त्र्यम्बकमिति, त्र्यक्षकं कृत्तिवाससमिति पा० ।
८ ध्यायन्तीति पा० । ९ सर्वोत्तरमिति पा० । १० वाराणसीं ये निवसन्ति विप्राः इति पा० । ११ काले इति पा० ।

रुद्रं ध्यायन्ति[1] चित्ते यतयो महेशम् ॥ २७ ॥ आराधयन्ति प्रभुमीशितारं वाराणसीमध्यगता मुनीन्द्राः ॥ यजन्ति यज्ञैरभिसन्धिहीनाः स्तुवन्ति रुद्रं प्रणमन्ति शम्भुम् ॥ २८ ॥ नमो भवायामलभावधाम्ने स्थाणुं प्रपद्ये गिरिशं पुराणम् ॥ स्मरामि रुद्रं हृदये निविष्टं जाने महादेवमनेकरूपम् ॥ २९ ॥ इति श्रीकूर्मपुराणे वाराणसीमाहात्म्यं नाम ×द्वात्रिंशोऽध्यायः ॥ ३२ ॥ सूत उवाच ॥ समाभाष्य मुनीन्धीमान्देवदेवस्य शूलिनः ॥ जगाम लिङ्गं तद्द्रष्टुं कपर्दीश्वरमव्ययम् ॥ १ ॥ स्नात्वा तत्र विधानेन तर्पयित्वा पितॄन्द्विजाः ॥ पिशाचमोचने तीर्थे पूजयामास शूलिनम् ॥ २ ॥ तत्राश्चर्यमपश्यंस्ते मुनयो गुरुणा सह ॥ मेनिरे क्षेत्रमाहात्म्यं प्रणेमुर्गिरिशं हरम् ॥ ३ ॥ कश्चिदभ्याजगामेमं शार्दूलो घोररूपधृक् ॥ मृगीमेकां भक्षयितुं कपर्दीश्वरमुत्तमम् ॥ ४ ॥ तत्र सा भीतहृदया कृत्वा कृत्वा प्रदक्षिणम् ॥ धावमाना सुसम्भ्रान्ता[3] व्याघ्रस्य वशमागता ॥ ५ ॥ तां विदार्य नखैस्तीक्ष्णैः शार्दूलः सुमहाबलः ॥ जगाम चान्यद्विजनं स दृष्ट्वा तान्मुनीश्वरान्[4] ॥ ६ ॥ मृतमात्रा च सा बाला कपर्दीशाग्रतो मृगी ॥ अदृश्यत महाज्वाला व्योम्नि सूर्यसमप्रभा ॥ ७ ॥ त्रिनेत्रा नीलकण्ठा[5] च शशाङ्काङ्कितशेखरा ॥ वृषाधिरूढा पुरुषैस्तादृशैरेव संयता ॥ ८ ॥ पुष्पवृष्टिं विमुञ्चन्ति खेचरास्तस्य मूर्द्धनि[6] ॥ गणेश्वरः स्वयं भूत्वा न दृष्टस्तत्क्षणात्ततः ॥ ९ ॥ दृष्ट्वैतदाश्चर्यवरं[7] जैमिनिप्रमुखास्तदा ॥ कपर्दीश्वरमाहात्म्यं पप्रच्छुर्गुरुमच्युतम् ॥ १० ॥ तेषां प्रोवाच भगवान्देवाग्रे चोपविश्य सः ॥ कपर्दीशस्य माहात्म्यं प्रणम्य वृषभध्वजम् ॥ ११ ॥ ( स्मृत्यैवाशेषपापौघं क्षिप्रमस्य विनश्यति ॥ कामक्रोधादयो दोषा वाराणस्यां निवासिनः ॥ विघ्नाः सर्वे विनश्यन्ति कपर्दीश्वरपूजनात् ॥ तस्मात्सदैव द्रष्टव्यं कपर्दीश्वरमुत्तमम् ॥ ) इदं देवस्य तल्लिङ्गं कपर्दीश्वरमुत्तमम् ॥ पूजितव्यं प्रयत्नेन स्तोतव्यं वैदिकैः स्तवैः ॥ १२ ॥ ध्यायतामत्र नियतं योगिनां शान्तचेतसाम् ॥ जायते योगसिद्धिश्च[8] षण्मासेन न संशयः ॥ १३ ॥ ब्रह्महत्यादिपापानि विनश्यन्त्यस्य पूजनात् ॥ पिशाच

१ ध्यायन्ति ये चित्तगतं महेशमिति पा० । २ योग इति पा० । × एकत्रिंशोऽध्यायः लि० पु० । ३ वारयामास सम्भ्रान्ता इति पा० । ४ देशं विजनं देवं दृष्ट्वा मुनिश्वरमिति. पा० । ५ नीलखट्वाङ्गा इति पा० । ६ मूर्द्धजा इति पा० । ७ तरमिति पा० । ८ सिद्धिः सा इति पा० ।

मोचने कुण्डे स्नातस्यात्र समीपतः ॥ १४ ॥ अस्मिन् क्षेत्रे पुरा विप्रास्तपस्वी शंसितव्रतः ॥ शङ्कुकर्ण इति ख्यातः पूजयामास शूलिनम् ॥ १५ ॥ जजाप रुद्रमनिशं प्रणवं रुद्ररूपिणम् ॥ पुष्पधूपादिभिः स्तोत्रैर्नमस्कारैः प्रदक्षिणैः ॥ १६ ॥ उवाच तत्र योगात्मा कृत्वा दीक्षां तु नैष्ठिकीम् ॥ कदाचिदागतं प्रेतं पश्यति स्म क्षुधान्वितम् ॥ १७ ॥ अस्थिचर्मापिनद्धाङ्गं निःश्वसन्तं मुहुर्मुहुः ॥ तं दृष्ट्वा स मुनिश्रेष्ठः कृपया परया युतः ॥ १८ ॥ प्रोवाच को भवान् कस्माद्देशाद्देशमिमं गतः॥ तस्मै पिशाचः क्षुधया पीडयमानोऽब्रवीद्वचः ॥ १९ ॥ पूर्वजन्मन्यहं विप्रो धनधान्यसमन्वितः ॥ पुत्रपौत्रादिभिर्युक्तः कुटुम्बभरणोत्सुकः ॥ २० ॥ न पूजिता मया देवा गावोऽप्यतिथयस्तथा ॥ न कदाचित्कृतं पुण्यमल्पं वा स्वल्पमेव वा ॥ २१ ॥ एकदा भगवान्रुद्रो गोवृषेश्वरवाहनः ॥ विश्वेश्वरो वाराणस्यां दृष्टः स्पृष्टो नमस्कृतः ॥ २२ ॥ तदाचिरेण कालेन पञ्चत्वमहमागतः ॥ न दृष्टं तन्महाघोरं यमस्य वदनं मुने ॥ २३ ॥ ईदृशीं योनिमापन्नः पैशाचीं क्षुधयार्दितः ॥ पिपासया[२] परिक्रान्तो न जानामि हिताहितम् ॥ २४ ॥ यदि कश्चित्समुद्धर्तुमुपायं पश्यसि प्रभो ॥ कुरुष्व तं नमस्तुभ्यं त्वामहं शरणं गतः ॥ २५ ॥ इत्युक्तः शङ्कुकर्णोऽथ पिशाचमिदमब्रवीत् ॥ त्वादृशो न हि लोकेऽस्मिन्विद्यते पुण्यकृत्तमः ॥ २६ ॥ यत्त्वया भगवान् पूर्वं दृष्टो विश्वेश्वरः शिवः ॥ संस्पृष्टो वन्दितो भूयः कोऽन्यस्त्वत्सदृशो भुवि ॥ २७ ॥ तेन कर्मविपाकेन देशमेतं समागतः ॥ स्नानं कुरुष्व शीघ्रं त्वमस्मिन् कुण्डे समाहितः ॥ २८ ॥ येनेमां कुत्सितां योनिं क्षिप्रमेव प्रहास्यसि ॥ २९ ॥ स एवमुक्तो मुनिना पिशाचो दयावता देववरं त्रिनेत्रम् ॥ स्मृत्वा कपर्दीश्वरमीशितारं चक्रे समाधाय मनोऽवगाहम् ॥ ३० ॥ तदावगाहान्मुनिसन्निधाने[३] ममार दिव्याभरणोपपन्नः ॥ अदृश्यतार्कप्रतिमे विमाने शशांकचिह्नांकितचारुमौलिः ॥ ३१ ॥ विभाति रुद्रैरुदितो दिविस्थैः समावृतो योगिभिरप्रमेयैः ॥ स वालखिल्यादिभिरेष देवो यथोदये भानुरशेषदेवः ॥ ३२ ॥ स्तुवंति सिद्धा दिवि देवसंघा नृत्यंति दिव्याप्सरसोऽभिरामाः ॥ मुञ्चंति वृष्टिं कुसुमालिमिश्रां गन्धर्वविद्याधरकिन्नराद्याः ॥ ३३ ॥ संस्तूयमानोऽथ मुनींद्र

१ देव इति पा० । २ पिपासयाधुनाक्रान्त इति पा० । ३ तदावगाढो मुनिसंनिधाने समानदिव्या इति, सदावगाह्य इति पा० ।

संघैरवाप्य बोधं भगवत्प्रसादात् ॥ समाविशन्मण्डलमेवमग्र्यं त्रयीमयं यत्र विभाति रुद्रः ॥ ३४ ॥ दृष्ट्वा विमुक्तं स पिशाचभूतं मुनिः प्रहृष्टो मनसा महेशम् ॥ विचिन्त्य रुद्रं कविमेवमग्र्यं प्रणम्य तुष्टाव कपर्दिनं तम् ॥ ३५ ॥ शंकुकर्ण उवाच ॥ नमामि नित्यं परतः परस्ताद्गोप्तारमेकं पुरुषं पुराणम् ॥ व्रजामि योगेश्वरमीशितारमादित्यमग्निं कपिलाधिरूढम् ॥ ३६ ॥ त्वां ब्रह्मपारं हृदि सन्निविष्टं हिरण्मयं योगिनमादिहीनम् ॥ व्रजामि रुद्रं शरणं दिविस्थं महामुनिं ब्रह्मपरं पवित्रम् ॥ ३७ ॥ सहस्रपादाक्षिशिरोऽभियुक्तं सहस्रबाहुं तमसः परस्तात् ॥ त्वां ब्रह्मपारं प्रणमामि शंभुं हिरण्यगर्भाधिपतिं त्रिनेत्रम् ॥ ३८॥ यतः प्रसूतिर्जगतो विनाशो येनाहृतं सर्वमिदं शिवेन ॥ तं ब्रह्मपारं भगवन्तमीशं प्रणम्य नित्यं शरणं प्रपद्ये ॥ ३९ ॥ अलिङ्गमालोकविहीनरूपं स्वयंप्रभुं चित्पतिमेकरुद्रम् ॥ तं ब्रह्मपारं परमेश्वरं त्वां नमस्करिष्ये न यतोऽन्यदस्ति ॥४०॥ यं योगिनस्त्यक्तसबीजयोगाल्लब्ध्वा समाधिं परमात्मभूताः ॥ पश्यन्ति देवं प्रणतोऽस्मि नित्यं तद्ब्रह्मपारं भवतः स्वरूपम् ॥ ४१ ॥ न यत्र नामानि विशेषक्लृप्तिर्न संदृशे तिष्ठति यत्स्वरूपम् ॥ तं ब्रह्मपारं प्रणतोऽस्मि नित्यं स्वयंभुवं त्वां शरणं प्रपद्ये ॥ ४२ ॥ यद्वेदवेदाभिरता विदेहं स ब्रह्मविज्ञानमभेदमेकम् ॥ पश्यन्त्यनेकं भवतः स्वरूपं तद्ब्रह्मपारं प्रणमामि नित्यम् ॥ ४३ ॥ यतः प्रधानं पुरुषः पुराणो विवर्त्तते यं प्रणमन्ति देवाः ॥ नमामि तं ज्योतिषि संनिविष्टं कालं बृहन्तं भवतः स्वरूपम् ॥ ४४ ॥ व्रजामि नित्यं शरणं महेशं स्थाणुं प्रपद्ये गिरिशं पुराणम् ॥ शिवं प्रपद्ये हरमिन्दुमौलिं पिनाकिनं त्वां शरणं व्रजामि ॥ ४५ ॥ स्तुत्वैवं शंकुकर्णोऽसौ भगवन्तं कपर्दिनम् ॥ पपात दण्डवद्भूमौ प्रोच्चरन्प्रणवं शिवम् ॥ ४६ ॥ तत्क्षणात्परमं लिङ्गं प्रादुर्भूतं शिवात्मकम् ॥ ज्ञानमानन्दमद्वैतं कोटिकालाग्निसन्नि

---

१ मेतद्ग्र्यमिति पा० । २ कपर्दिनं त्वामिति पा० । ३ भोगिनमादिमन्तमिति पा० । ४ ब्रह्ममयमिति पा० । ५ सहस्ररूपमिति पा० । ६ रुद्रमिति पा० । ७ मानादीति, नामादीति पा० । ८ यस्य रूपमिति पा० । ९ वेदवेदाभिरताः–वेदानां वेदः ज्ञानं तस्मिन् रताः । ब्रह्मवादाभिरताः इति, यद्वेदवाक्यादिभिरादिदेवमिति पा० । १० प्रणतोऽस्मीति पा० । ११ वेदाः इति पा० । १२ गृहेशमिति, गुहेशमिति पा० । १३ नमामीति पा० । १४ परमिति पा० ।

भम् ॥ ४७ ॥ शंकुकर्णोऽथ सं तदा मुनिः सर्वात्मकोऽमलः ॥ निलिम्पे विमले लिंगे तदद्भुतमिवाभवत् ॥ ४८ ॥ एतद्रहस्यमाख्यातं माहात्म्यं च कपर्दिनः ॥ न कश्चिद्वेत्ति तमसा विद्वानप्यत्र मुह्यति ॥ ४९ ॥ य इमां शृणुयान्नित्यं कथां पापप्रणाशिनीम् ॥ भक्तः पापविमुक्तात्मा रुद्रसामीप्यमाप्नुयात् ॥ ५० ॥ पठेच्च सततं शुद्धो ब्रह्मपारं महास्तवम् ॥ प्रातर्मध्याह्नसमये स योगं प्राप्नुयान्नरः ॥५१॥ इहैव नित्यं वत्स्यामो देवदेवं कपर्दिनम् ॥ द्रक्ष्यामः सततं देवं पूजयामस्त्रिलोचनम् ॥ ५२॥ इत्युक्त्वा भगवान्व्यासः शिष्यैः सह महाद्युतिः ॥ उवास तत्र युक्तात्मा पूजयन्वै कपर्दिनम् ॥ ५३ ॥ इति श्रीकूर्मपुराणे वाराणसीमाहात्म्यं नाम×त्रयस्त्रिंशोऽध्यायः ॥३३॥

सूत उवाच ॥ उषित्वा तत्र भगवान् कपर्दीशान्तिके पुनः ॥ ययौ द्रष्टुं मध्यमेशं बहुवर्षगणान्प्रभुः ॥ १ ॥ तत्र मन्दाकिनीं पुण्यामृषिसंघनिषेविताम् ॥ नदीं विमलपानीयां दृष्ट्वा हृष्टोऽभवन्मुनिः ॥२॥ स तामन्वीक्ष्य मुनिभिः सह द्वैपायनः प्रभुः ॥ चकार भावपूतात्मा स्नानं स्नानविधानवित् ॥ ३ ॥ ( पूजयामास लोकादिं पुष्पैर्नानाविधैर्भवम् ॥ प्रविश्य शिष्यप्रवरैः सार्द्धं सत्यवतीसुतः ॥ ) सन्तर्प्य विधिवद्देवानृषीन् पितृगणांस्तथा ॥ मध्यमेश्वरमीशानमर्चयामास शूलिनम् ॥ ४ ॥ ततः पाशुपताः शांता भस्मोद्धूलितविग्रहाः ॥ द्रष्टुं समागता रुद्रं मध्यमेश्वरमीश्वरम् ॥ ५ ॥ ओङ्कारासक्तमनसो वेदाध्ययनतत्पराः ॥ जटिला मुण्डिताश्चापि शुक्लयज्ञोपवीतिनः ॥ ६ ॥ कौपीनवसनाः केचिदपरे चाप्यवाससः ॥ ब्रह्मचर्यरताः शांता दांता वै ज्ञानतत्पराः ॥ ७ ॥ दृष्ट्वा द्वैपायनं विप्राः शिष्यैः परिवृतं मुनिम् ॥ पूजयित्वा यथान्यायमिदं वचनमब्रुवन् ॥ ८ ॥ को भवान् कुत आयातः सह शिष्यैर्महामुने ॥ प्रोचुः पैलादयः शिष्यास्तानृषीन्धर्मभावितान् ॥ ९ ॥ अयं सत्यवतीसूनुः कृष्णद्वैपायनः प्रभुः ॥ व्यासः स्वयं हृषीकेशो येन वेदाः पृथक्कृताः ॥१०॥

---

१ मुक्तात्मा–धर्मात्मा सर्वगोऽमलः इति पा० । २ निनिन्ये इति पा० । ३ त्यक्तपापविमुक्तात्मा इति पा० । ४ परमिति पा० । ५ पूजयामोऽथ शूलिनमिति पा० । ६ महामुनिरिति पा० । × द्वात्रिंशोध्यायः लि० पु० । ७ मध्यदेशमिति पा० । ८ शुक्लेति पा० । ९ चान्यवाससः इति पा० । १० वेदान्तध्यानतत्पराः इति, वेदान्तज्ञानतत्परा इति पा० । ११ शैलादयः इति पा० । १२ मुनिरिति पा० ।

यस्य देवो महादेवः साक्षाद्देवः पिनाकधृक् ॥ अंशांशेनाभवत्पुत्रो नाम्ना शुक इति प्रभुः ॥ ११ ॥ यो वै साक्षान्महादेवं सर्वभावेन शंकरम् ॥ प्रपन्नः परया भक्त्या यस्य तज्ज्ञानमैश्वरम् ॥ १२ ॥ ततः पाशुपताः सर्वे ते[2] च हृष्टतनूरुहाः ॥ ऊचुरव्यग्रमनसो व्यासं सत्यवतीसुतम् ॥ १३ ॥ भगवन् भवता ज्ञातं विज्ञानं परमेष्ठिनः ॥ प्रसादाद्देवदेवस्य यत्तन्माहेश्वरं परम् ॥ १४ ॥ तद्वदास्माकमव्यग्रं रहस्यं गुह्यमुत्तमम् ॥ क्षिप्रं पश्येम तं देवं श्रुत्वा भगवतो मुखात् ॥ १५ ॥ विसर्जयित्वा ताञ्छिष्यान् सुमन्तुप्रमुखांस्तदा ॥ प्रोवाच तत्परं ज्ञानं योगिभ्यो योगवित्तमः ॥ १६ ॥ तत्क्षणादेव विमलं सम्भूतं ज्योतिरुत्तमम् ॥ लीनास्तत्रैव ते विप्राः क्षणादन्तरधीयत ॥ १७ ॥ ततः शिष्यान् समाहूय भगवान् ब्रह्मवित्तमः ॥ प्रोवाच मध्यमेशस्य माहात्म्यं पैलपूर्वकान् ॥ १८ ॥ अस्मिन् स्थाने स्वयं देवो देव्या सह महेश्वरः ॥ रमते भगवान्नित्यं रुद्रैश्च परिवारितः ॥ १९ ॥ अत्र पूर्वं हृषीकेशो विश्वात्मा देवकीसुतः ॥ उवास वत्सरं कृष्णः सदा पाशुपतैर्वृतः ॥ २० ॥ भस्मोद्धूलितसर्वांगो रुद्राराधनतत्परः[12] ॥ आराधयन् हरिः शंभुं कृत्वा पाशुपतं व्रतम् ॥ २१ ॥ तस्य वै बहवः शिष्या ब्रह्मचर्यपरायणाः ॥ लब्ध्वा तद्वचनाज्ज्ञानं[13] दृष्टवन्तो महेश्वरम् ॥ २२ ॥ तस्य देवो महादेवः प्रत्यक्षं नीललोहितः ॥ ददौ कृष्णस्य भगवान्वरदो वरमुत्तमम् ॥ २३ ॥ येऽर्चयिष्यन्ति गोविन्दं मद्भक्ता विधिपूर्वकम् ॥ तेषां तदैश्वरं ज्ञानमुत्पत्स्यंति जगन्मय ॥ २४ ॥ त्वमीशोऽर्चयितव्यश्च ध्यातव्यो मत्परैर्जनैः ॥ भविष्यसि न सन्देहो मत्प्रसादाद्द्विजातिभिः ॥ २५ ॥ ये च द्रक्ष्यन्ति देवेशं ध्यात्वा देवं पिनाकिनम् ॥ ब्रह्महत्यादिकं पापं तेषामाशु विनश्यति ॥ २६ ॥

---

१ स इति पा० । २ हृष्टसर्वतनूरुहाः इति पा० । ३ नेमुरिति पा० । ४ प्रोचुरिति पा० । ५ पदमिति पा० । ६ मव्यक्तमिति पा० । ७ समाभाष्य च इति पा० विसर्जयित्वा इत्यार्षम् । ८ स्वयम्भूप्रमुखांस्ततः इति पा० । ९ योगिन इति पा० । १० समाहूयेति पा० । ११ शैलपूर्वकानिति पा० । १२ रुद्राध्ययनतत्पर इति, रुद्रजाप्यपरायणः इति पा० । १३ तद्वदनादिति पा० । १४ परस्मैपदमार्षम् । १५ नमस्कार्योऽर्चितव्य इति पा० । १६ भविष्यन्तीति पा० । १७ द्विजातयः इति पा० । १८ येऽत्र इति पा० । १९ स्नात्वा रुद्रमिति' ज्ञात्वा रुद्रमिति पा० ।

प्राणांस्त्यजन्ति ये विप्राः पापकर्मरता अपि ॥ ते यान्ति परमं स्थानं नात्र कार्या विचारणा ॥ २७ ॥ धन्यास्तथ्यन्तु ते विप्रा मन्दाकिन्यां कृतोदकाः ॥ अर्चयन्ति महादेवं मध्यमेश्वरमुत्तमम् ॥ २८ ॥ स्नानं दानं तपः श्राद्धं पिण्डनिर्वपणं त्विह ॥ एकैकशः कृतं विप्राः पुनात्यासप्तमं कुलम् ॥ २९ ॥ सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ॥ यत्फलं लभते मर्त्यस्तस्माद्दशगुणं त्विह ॥ ३० ॥ एवमुक्त्वा महायोगी मध्यमेशान्तिके प्रभुः ॥ उवास सुचिरङ्कालं पूजयन्वै महेश्वरम् ॥ ३१ ॥ इति श्रीकूर्मपुराणे वाराणसीमाहात्म्यं नाम × चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ सूत उवाच ॥ ततः सर्वाणि गुह्यानि तीर्थान्यायतनानि च ॥ जगाम भगवान्व्यासो जैमिनिप्रमुखैर्वृतः ॥ १ ॥ प्रयागं परमं तीर्थं प्रयागादधिकं शुभम् ॥ विश्वरूपं तथा तीर्थं कालतीर्थमनुत्तमम् ॥ २ ॥ आकाशाख्यं महातीर्थं तीर्थञ्चैवानुषं परम् ॥ स्वर्लीनञ्च महातीर्थं गौरीतीर्थमनुत्तमम् ॥ ३ ॥ प्राजापत्यं परं तीर्थं स्वर्गद्वारं तथैव च ॥ जम्बुकेश्वरमित्युक्तं चर्माख्यं तीर्थमुत्तमम् ॥ ४ ॥ गयातीर्थं महातीर्थं तीर्थञ्चैव महानदी ॥ नारायणं परं तीर्थं वायुतीर्थमनुत्तमम् ॥ ५ ॥ ज्ञानतीर्थं परं गुह्यं वाराहं तीर्थमुत्तमम् ॥ यमतीर्थं महापुण्यं तीर्थं संवर्त्तकं परम् ॥ ६ ॥ अग्नितीर्थं द्विजश्रेष्ठाः कालकेश्वरमुत्तमम् ॥ नागतीर्थं सोमतीर्थं सूर्यतीर्थं तथैव च ॥ ७ ॥ पर्वताख्यं महापुण्यं मणिकर्णमनुत्तमम् ॥ घटोत्कचं तीर्थवरं श्रीतीर्थञ्च पितामहम् ॥ ८ ॥ गङ्गातीर्थन्तु देवेशं तथा तत्तीर्थमुत्तमम् ॥ कापिलञ्चैव सोमेशं ब्रह्मतीर्थमनुत्तमम् ॥ ९ ॥ ( यत्र लिंगं पूजनीयं स्नातुं ब्रह्मा यदागतः ॥ तदानीं स्थापयामास विष्णुस्तल्लिंगमैश्वरम् ॥ ततः स्नात्वा समागत्य ब्रह्मा प्रोवाच तं हरिम् ॥ मयानीतमिदं लिंगं कस्मात्स्थापितवानसि ॥ तमाह विष्णुस्त्वत्तोऽपि रुद्रे भक्तिर्दृढा यतः ॥ तस्मात्प्रतिष्ठितं लिंगं नाम्ना तत्र भविष्यति ॥ ) भूतेश्वरं तथा तीर्थं तीर्थं धर्मसमुद्भवम् ॥ गन्धर्वतीर्थं सुशुभं वाह्नेयं तीर्थमुत्तमम् ॥ १० ॥ दौर्वासिकं होमंतीर्थं चन्द्रतीर्थं द्विजोत्तमाः ॥ चित्राङ्गदेश्वरं पुण्यं पुण्यं विद्याधरे

१ मर्त्या इति पा० । २ तत्परमिति पा० । ३ कार्यविचारणा इति पा० । ४ धन्यास्तु खलु मे इति पा० । × त्रयस्त्रिंशोध्यायः लि० पु० । ५ स श्रुत्वा इति पा० । ६ चैवार्षभमिति पा० । ७ केदारं तीर्थमुत्तमामिति पा० । ८ स्वर्गतीर्थमिति पा० । ९ शुभमिति पा० । १० कलशेश्वरमुत्तममिति पा० । ११ महागुह्यमिति पा० । १२ देवीशमिति पा० । १३ ययातेस्तीर्थमुत्तममिति पा० । १४ व्योमतीर्थमिति पा० ।

श्वरम् ॥ ११ ॥ केदारं तीर्थमुख्याख्यं कालञ्जरमनुत्तमम् ॥ सारस्वतं प्रभासञ्च खेटकर्णं हरं शुभम् ॥ १२ ॥ लौकिकाख्यं महातीर्थं तीर्थञ्चैव हिमालयम् ॥ हिरण्यगर्भं गोप्रख्यं तीर्थञ्चैव वृषध्वजम् ॥ १३ ॥ उपशान्तं शिवञ्चैव व्याघ्रेश्वरमनुत्तमम् ॥ त्रिलोचनं महातीर्थं लोलार्कञ्चोत्तराह्वयम् ॥ १४ ॥ कपालमोचनं तीर्थं ब्रह्महत्याविनाशनम् ॥ शुक्रेश्वरं महापुण्यमानन्दपुरमुत्तमम् ॥ १५ ॥ एवमादीनि तीर्थानि प्राधान्यात्कथितानि तु ॥ न शक्या विस्तराद्वक्तुं तीर्थसंख्या द्विजोत्तमाः ॥ १६ ॥ तेषु सर्वेषु तीर्थेषु स्नात्वाभ्यर्च्य सनातनम् ॥ उपोष्य तत्र तत्रासौ पाराशर्यो महामुनिः ॥ १७ ॥ तर्पयित्वा पितॄन्देवान् कृत्वा पिण्डप्रदानकम् ॥ जगाम पुनरेवापि यत्र विश्वेश्वरः शिवः ॥ १८ ॥ स्नात्वाभ्यर्च्य महालिंगं शिष्यैः सह महामुनिः ॥ उवाच शिष्यान्धर्मात्मा यथेष्टं गन्तुमर्हथ ॥ १९ ॥ ते प्रणम्य महात्मानं जग्मुः पैलादयो द्विजाः ॥ वासञ्च तत्र नियतो वाराणस्यां चकार सः ॥ २० ॥ शान्तो दान्तस्त्रिषवणं स्नात्वाभ्यर्च्य पिनाकिनम् ॥ भैक्षाहारो विशुद्धात्मा ब्रह्मचर्यपरायणः ॥ २१ ॥ कदाचित्तत्र वसता व्यासेनामिततेजसा ॥ भ्रममाणेन भिक्षा वै नैव लब्धा द्विजोत्तमाः ॥ २२ ॥ ततः क्रोधावृततनुर्नराणामिह वासिनाम् ॥ विघ्नं सृजामि सर्वेषां येन सिद्धिर्हि हीयते ॥ २३ ॥ तत्क्षणात्सा महादेवी शंकरार्द्धशरीरिणी ॥ प्रादुरासीत्स्वयं प्रीत्या वेषं कृत्वा तु मानुषम् ॥ २४ ॥ भो भो व्यास महाबुद्धे शप्तव्या न त्वया पुरी ॥ गृहाण भिक्षां मत्तस्त्वमुक्त्वैवं प्रददौ शिवा ॥ २५ ॥ उवाच च महादेवी क्रोधनस्त्वं यतो मुने ॥ इह क्षेत्रे न वस्तव्यं कृतघ्नोऽसि यतः सदा ॥ २६ ॥ एवमुक्तः स भगवान्ध्यानाज्ज्ञात्वा परां शिवाम् ॥ उवाच प्रणतो भूत्वा स्तुत्वा च प्रवरैः स्तवैः ॥ २७ ॥ चतुर्दश्यामथाष्टम्यां प्रवेशं देहि शाङ्करि ॥ एवमस्त्वित्यनुज्ञाय देवी चान्तरधीयत ॥ २८ ॥ एवं स भगवान्व्यासो महायोगी पुरातनः ॥ ज्ञात्वा क्षेत्रगुणान् सर्वान् स्थितस्तस्याथ पार्श्वतः ॥ २९ ॥ एवं व्यासं स्थितं ज्ञात्वा क्षेत्रं सेवन्ति पण्डिताः ॥ तस्मात्सर्वप्रयत्नेन वाराणस्यां वसेन्नरः ॥ ३० ॥ सूत उवाच।

---

१ कालिञ्जरमिति पा० । २ भद्रकर्णं फलमिति पा० । ३ शक्रेश्वरमिति पा० । ४ महातीर्थमिति पा० । ५ पिनाकिनामिति पा० । ६ परं लिङ्गमिति पा० । ७ कदाचिद्वसता तत्रेति पा० । ८ भवता न हीति पा० । ९ भवान्यत इति पा० । १० अपार्श्वत इति पा० पार्श्वभिन्ने देशे इत्यर्थः, अतिपार्श्वत इति पा० । ११ सेवन्तीति परस्मैपदमार्षम् ।

यः पठेदविमुक्तस्य माहात्म्यं शृणुयादथ ॥ श्रावयेद्वा द्विजाञ्छान्तान् स याति परमां गतिम् ॥ ३१ ॥ श्राद्धे वा दैविके कार्ये रात्रावहनि वा द्विजाः ॥ नदीनां चैव तीरेषु देवतायतनेषु च ॥ ३२ ॥ ज्ञात्वा समाहितमनाः कामक्रोधविवर्जितः ॥ जपेदीशं नमस्कृत्य स याति परमां गतिम् ॥ ३३॥ इति श्रीकूर्मपुराणे वाराणसीमाहात्म्ये ×पञ्चत्रिंशोऽध्यायः ॥ ३५॥ वाराणसीमाहात्म्यं समाप्तम् ॥ अथ प्रयागमाहात्म्यम् ॥ ऋषय ऊचुः ॥ माहात्म्यमविमुक्तस्य यथावत्समुदीरितम् ॥ इदानीञ्च प्रयागस्य माहात्म्यं ब्रूहि सुव्रत ॥ १ ॥ यानि तीर्थानि तत्रैव विश्रुतानि महान्ति वै ॥ इदानीं कथयास्माकं सूत सर्वार्थविद्भवान् ॥ २ ॥ सूत उवाच ॥ शृणुध्वमृषयः सर्वे विस्तरेण ब्रवीमि वः ॥ प्रयागस्य च माहात्म्यं यत्र देवः पितामहः ॥ ३ ॥ मार्कण्डेयेन कथितं कौन्तेयाय महात्मने ॥ यथा युधिष्ठिरायैतत्तद्वक्ष्ये भवतामहम् ॥ ४ ॥ निहत्य कौरवान् सर्वान्भ्रातृभिः सह पार्थिवः ॥ शोकेन महताविष्टो मुमोह स युधिष्ठिरः ॥ ५ ॥ अचिरेणाथ कालेन मार्कण्डेयो महातपाः ॥ सम्प्राप्तो हास्तिनपुरं राजद्वारे स तिष्ठति ॥ ६ ॥ द्वारपालोऽपि तं दृष्ट्वा राज्ञे कथितवान्द्रुतम् ॥ मार्कण्डेयो द्रष्टुमिच्छंस्त्वामास्ते द्वार्यसौ मुनिः ॥ ७ ॥ त्वरितो धर्मपुत्रस्तु द्वारमभ्येत्य सत्वरम् ॥ द्वारमभ्यागतस्येह स्वागतं ते महामुने ॥ ८ ॥ अद्य मे सफलं जन्म अद्य मे तारितं कुलम् ॥ अद्य मे पितरस्तुष्टास्त्वयि तुष्टे सदा मुने ॥ ९ ॥ सिंहासनमुपस्थाप्य पादशौचार्चनादिभिः ॥ युधिष्ठिरो महात्मेति पूजयामास तं मुनिम् ॥ १० ॥ मार्कण्डेयस्तु संपृष्टः प्रोवाच स युधिष्ठिरम् ॥ किमर्थं मुह्यसे विद्वन् सर्वं ज्ञात्वा समागतः ॥ ११ ॥ ततो युधिष्ठिरो राजा प्रणम्य शिरसाब्रवीत् ॥ कथयस्व समासेन येन मुञ्चामि किल्बिषम् ॥ १२ ॥ निहता बहवो युद्धे पुमांसोऽनपराधिनः ॥ अस्माभिः कौरवैः सार्द्धं प्रसङ्गान्मुनिसत्तम ॥ १३ ॥ येन हिंसासमुद्भूताज्जन्मान्तरकृतादपि ॥

१ शृणुयान्नरः इति, शृणुयादपीति पा० । २ सोऽपि याति परं पदमिति पा० । ३ यात्रायां वा द्विजोत्तमा इति पा० । ४ स्नात्वा समाहितमना दम्भमात्सर्यवर्जित इति पा० । × चतुस्त्रिंशः लि० पु० । ५ इदानीन्तु इति पा० । ६ सत्तम इति पा० । ७ शृणुध्वं मुनय इति पा० । ८ द्रष्टुमिच्छुरिति पा० । ९ द्वारमित्याह तत्पर इति, गत्वा नत्वाह तं मुनिम् । स्वागतं ते महाप्राज्ञ इति पा० । १० महामुने इति पा० । ११ ततस्तुष्ट इति पा० । १२ मुह्यसे राजन् सर्वं ज्ञात्वाहमागत इति पा० । १३ प्रणम्याह महामुनिमिति पा० । १४ कथय त्वमिति पा० । १५ मुच्येय किल्बिषैरिति पा० । १६ पुङ्गव इति पा० ।

मुच्येमं पातकादद्य तद्भवान्वक्तुमर्हति ॥ १४ ॥ मार्कण्डेय उवाच ॥ शृणु राजन्महाभाग यन्मां पृच्छसि भारत ॥ प्रयागगमनं श्रेष्ठं नराणां पापनाशनम् ॥ १५ ॥ तत्र देवो महादेवो रुद्रोऽवात्सीन्नरेश्वर ॥ समास्ते भगवान् ब्रह्मा स्वयम्भूः सह दैवतैः ॥ १६ ॥ युधिष्ठिर उवाच ॥ भगवञ्छ्रोतुमिच्छामि प्रयागगमने फलम् ॥ मृतानां का गतिस्तत्र स्नातानाञ्चैव किम्फलम् ॥ १७ ॥ ये वसन्ति प्रयागे तु ब्रूहि तेषान्तु किम्फलम् ॥ भवतो विदितं ह्येतत्तन्मे ब्रूहि नमोऽस्तु ते ॥ १८ ॥ मार्कण्डेय उवाच ॥ कथयिष्यामि ते वत्स प्रयागस्नानजं फलम् ॥ पुरा महर्षिभिः सम्यक्कथ्यमानं मया श्रुतम् ॥ १९ ॥ एतत्प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ॥ अत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ २० ॥ तत्र ब्रह्मादयो देवा रक्षां कुर्वन्ति संगताः ॥ बहून्यन्यानि तीर्थानि सर्वपापापहानि तु ॥ २१ ॥ कथितुं नेह शक्नोमि बहुवर्षशतैरपि ॥ संक्षेपेण प्रवक्ष्यामि प्रयागस्येह कीर्त्तनम् ॥ २२ ॥ षष्टिर्धनुःसहस्राणि तानि रक्षन्ति जाह्नवीम् ॥ यमुनां रक्षति सदा सविता सप्तवाहनः ॥ २३ ॥ प्रयागे तु विशेषेण स्वयं वसति[३] वासवः ॥ मण्डलं रक्षति हरिः सर्वदेवैश्च सम्मितम् ॥ २४ ॥ न्यग्रोधं रक्षते नित्यं शूलपाणिर्महेश्वरः ॥ स्थानं रक्षन्ति वै देवाः सर्वपापहरं शुभम् ॥ २५ ॥ स्वकर्मणा वृता लोका नैव गच्छन्ति तत्पदम् ॥ स्वल्पमल्पतरं पापं यस्य चास्ति नराधिप ॥ २६ ॥ प्रयागं स्मरमाणस्य सर्वमायाति संक्षयम् ॥ दर्शनात्तस्य तीर्थस्य नामसंकीर्त्तनादपि ॥ २७ ॥ मृत्तिकालम्भनाद्वापि नरः पापात्प्रमुच्यते ॥ पञ्चकुण्डानि राजेन्द्र येषां मध्ये तु जाह्नवी ॥२८॥ प्रयागं विशतः पुंसः पापं नश्यति तत्क्षणात् ॥ योजनानां सहस्रेषु गंगां स्मरति यो नरः ॥ २९ ॥ अपि दुष्कृतकर्मासौ लभते परमां गतिम् ॥ कीर्त्तनान्मुच्यते पापाद्दृष्ट्वा भद्राणि पश्यति ॥ ३० ॥ तथोपस्पृश्य राजेन्द्र सुरलोके महीयते ॥ व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः ॥ ३१ ॥ पितॄणां तारकश्चैव सर्वपापप्रणाशनम् ॥ यैः प्रयागे कृतो वास उत्तीर्णो भवसागरः ॥ ३२ ॥ गंगा

१ मुच्यते इति पा० । २ या चेष्टा यत्र तत्फलमिति, यच्च ते फलमिति पा० । ३ सस्मित इति पा० । ४ यदा तरयेति पा० । ५ यः स्मरते इति पा० ।

यमुंनमासाद्य त्यजेत्प्राणान्प्रयततः ॥ ईप्सितांल्लभते कामान्वदन्ति मुनिपुंगवाः ॥ ३३ ॥ दीप्तकाञ्चनवर्णाभैर्विमानैर्भानुवर्त्तिभिः ॥ सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः ॥ ३४ ॥ वरांगनासमाकीर्णैर्मोदते शुभलक्षणः ॥ गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ॥ ३५ ॥ यावन्न स्मरते जन्म तावत्स्वर्गे महीयते ॥ तस्मात्स्वर्गात्परिभ्रष्टः क्षीणकर्मा नरोत्तमः ॥ ३६ ॥ हिरण्यरत्नसम्पूर्णे समृद्धे जायते कुले ॥ तदेव स्मरते तीर्थं स्मरणात्तत्र गच्छति ॥ ३७ ॥ देशे वा यदि वारण्ये विदेशे यदि वा गृहे ॥ प्रयागं स्मरमाणस्तु यस्तु प्राणान् परित्यजेत् ॥ ३८ ॥ ब्रह्मलोकमवाप्नोति वदन्ति मुनिपुंगवाः ॥ सर्वकामफला वृक्षा मही यत्र हिरण्मयी ॥३९ ॥ ऋषयो मुनयः सिद्धास्तत्र लोके स गच्छति ॥ स्त्रीसहस्राकुले रम्ये मंदाकिन्यास्तटे शुभे ॥ ४० ॥ मोदते मुनिभिः सार्द्धं स्वकृतेनेह कर्मणा ॥ सिद्धचारण गन्धर्वैः पूज्यते देवदानवैः ॥ ४१ ॥ ततः स्वर्गात्परिभ्रष्टो जम्बुद्वीपपतिर्भवेत् ॥ ततः शुभानि कर्माणि चिन्तयानः पुनः पुनः ॥ ४२ ॥ गुणवान्वृत्तसम्पन्नो भवतीत्यनुशुश्रुम ॥ कर्मणा मनसा वाचा सत्ये धर्मे प्रतिष्ठितः ॥ ४३ ॥ गंगायमुनयोर्मध्ये यस्तु ग्रांसं प्रयच्छति ॥ सुवर्णमथ मुक्तां वा तथैवान्यंत्परिग्रहम् ॥ ४४ ॥ स्वकार्ये पितृकार्ये वा तीर्थे योऽभ्यर्च्चयेन्नरः ॥ निष्फलं तस्य तत्तीर्थं यावत्तत्फलमश्नुते ॥ ४५ ॥ अतस्तीर्थे न गृह्णीयात्पुण्येष्वायतनेषु च ॥ निमित्तेषु च सर्वेषु अप्रमत्तो द्विजो भवेत् ॥ ४६ ॥ कपिलां पाटलां धेनुं यस्तु कृष्णां प्रयच्छति ॥ स्वर्णशृङ्गीं रौप्यखुरां चैलकर्णीं पयस्विनीम् ॥ ४७ ॥ तस्य यावन्ति लोमानि सन्ति गात्रेषु सत्तम॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥४८॥ इति श्रीकूर्मपुराणे प्रयागमाहात्म्ये × षट्त्रिंशोऽध्यायः ॥३६॥

तदेव ॥ मार्कण्डेय उवाच॥ कथयिष्यामि ते वत्स तीर्थयात्राविधिक्रमम् ॥ आर्षेण तु विधानेन यथादृष्टं यथाश्रुतम् ॥ १ ॥ प्रयांग

१ गङ्गायमुनामित्यत्र समाहारद्वन्दः । २ वर्णिभिरिति, वह्निभैरिति पा० । ३ यावन्नागमते इति, यावन्न लभते इति पा० । ४ शिवलोकामिति पा० । ५ सिद्धाः शिवलोके इति पा० । ६ सुकृतेनेहेति पा० । ७ दिवि दैवतैरिति पा० । ८ भवतीह न संशय इति पा० । ९ सत्यधर्मप्रतिष्ठित इति पा० । १० याममिति, ग्राममिति पा० । ११ तस्मै वान्यत्प्रतिग्रहमिति सर्वं तत्राक्षयं भवेत् । तीर्थे न प्रतिगृह्णीयात्तथैवान्यत्प्रतिग्रहमिति पा० । प्रतिग्रहमिति क्लीबत्वमार्षम् । १२ देवताभ्यर्चनेऽपिवा इति पा० । १३ स्वर्णशृङ्गामिति पा० । × पंचत्रिंशः लि० पु० । १४ प्रयागतीर्थं यात्रार्थीति पा० ।

तीर्थयात्रार्थी यः प्रयाति नरः क्वचित् ॥ बलीवर्द्द समारूढः शृणु तस्यापि यत्फलम् ॥ २ ॥ नरके वसते घोरे समाः कल्पशतायुतम् ॥ ततो निवर्त्तितो घोरो गवां क्रोधः सुदारुणः ॥ ३ ॥ सलिलञ्च न गृह्णन्ति पितरस्तस्य देहिनः ॥ यस्तु पुत्रांस्तथा बालान्स्नानहीनान्प्रमुञ्चति ॥ ४ ॥ यथात्मानं तदा सर्वं दानं विप्रेषु दापयेत् ॥ ऐश्वर्याल्लोभमोहाद्वा गच्छेद्यानेन यो नरः ॥ ५ ॥ निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्जयेत् ॥ गंगायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति ॥ ६ ॥ आर्षेण तु विधानेन यथाविभवविस्तरम् ॥ न स पश्यति तं घोरं नरकं तेन कर्मणा ॥ ७ ॥ उत्तरान् स कुरून् गत्वा मोदते कालमव्ययम् ॥ वटमूलं समाश्रित्य यस्तु प्राणान् परित्यजेत् ॥ ८ ॥ स्वर्गलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥ यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ॥ ९ ॥ लोकपालाश्च पितरः सर्वे ते लोकसंस्थिताः ॥ सनत्कुमारप्रमुखास्तथा ब्रह्मर्षयोऽपरे ॥ १० ॥ नागाः सुपर्णाः सिद्धाश्च तथा नित्यं समासते ॥ हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥ ११ ॥ गंगायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् ॥ प्रयागं राजशार्दूल त्रिषु लोकेषु विश्रुतम् ॥ १२ ॥ तत्राभिषेकं यः कुर्यात्सङ्गमे शंसितव्रतः ॥ तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ॥ १३ ॥ न मातृवचनात्तात न लोकवचनादपि ॥ मतिरुत्क्रमणीया ते प्रयागगमनं प्रति ॥ १४ ॥ षष्टि तीर्थसहस्राणि षष्टिकोटयस्तथापराः ॥ तेषां सान्निध्यमत्रैव तीर्थानां कुरुनन्दन ॥ १५ ॥ या गतिर्योगयुक्तस्य संन्यस्तस्य मनीषिणः ॥ सा गतिस्त्यजतः प्राणान् गङ्गायमुनसङ्गमे ॥ १६ ॥ न ते जीवन्ति लोकेऽस्मिन्यत्र तत्र युधिष्ठिर ॥ ये प्रयागं न सम्प्राप्तास्त्रिषु लोकेषु वञ्चिताः ॥ १७ ॥ एवं दृष्ट्वा तु तत्तीर्थं प्रयागं परमं पदम् ॥ मुच्यते सर्वपापेभ्यः शशाङ्क इव राहुणा ॥ १८ ॥ कम्बलाश्वतरौ नागौ यमुनादक्षिणे तटे ॥ तत्र स्नात्वा च पीत्वा च मुच्यते सर्वपातकैः ॥ १९ ॥ तत्र गत्वा नरः स्नानं महादेवस्य धीमतः ॥ समस्तांस्तारयेत् पूर्वान्दशातीतान् दशावरान् ॥ २० ॥ कृत्वाभिषेकं तु नरः सोऽश्व

---

१ बलीवर्दसमारूढ इति पा० । २ यत इति पा० । ३ क्रोधोहि दारुण इति पा० । ४ पितरोलोकसंश्रिताः इति, लोकसम्मता इति पा० । ५ दशेति पा० । ६ सत्त्वस्थस्येति पा० । ७ विश्रुतामिति पा० । ८ नवस्थानमिति, नरः स्थानमिति पा० । ९ आत्मना तारयेदिति पा० । १० अतीतानूर्द्ध्वतनान्–अवरानधस्तनान् ।

मेधफलं लभेत् ॥ स्वर्गलोकमवाप्नोति यावदाभूतसंप्लवम् ॥ २१ ॥ पूर्वपार्श्वे तु गंगायास्त्रैलोक्ये याति मानवः ॥ अवटः सर्वसामुद्रः प्रतिष्ठानञ्च विश्रुतम् ॥ २२ ॥ ब्रह्मचारी जितक्रोधस्त्रिरात्रं यदि तिष्ठति ॥ सर्वपापविशुद्धात्मा सोऽश्वमेधफलं लभेत् ॥ २३ ॥ उत्तरेण प्रतिष्ठानं भागीरथ्यास्तु सव्यतः ॥ हंसप्रपतनं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥ २४ ॥ अश्वमेधफलं तत्र स्मृतमात्रे तु जायते ॥ यावच्चन्द्रश्च सूर्यश्च तावत्स्वर्गे महीयते ॥ २५ ॥ उर्वशीपुलिने रम्ये विपुले हंसपाण्डुरे ॥ परित्यजति यः प्राणाञ्छृणु तस्यापि यत्फलम् ॥ २६ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ आस्ते स पितृभिः सार्द्धं स्वर्गलोके नराधिप ॥ २७ ॥ अथ सन्ध्यावटे रम्ये ब्रह्मचारी समाहितः ॥ नरः शुचिरुपासीत ब्रह्मलोकमवाप्नुयात् ॥ २८ ॥ कोटितीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ॥ कोटिवर्षसहस्राणि स्वर्गलोके महीयते ॥ २९ ॥ यत्र गङ्गा महाभागा बहुतीर्थतपोवना ॥ सिद्धं क्षेत्रं हि तज्ज्ञेयं नात्र कार्या विचारणा ॥३०॥ क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः ॥ दिवि तारयते देवांस्तेन सा त्रिपथा स्मृता ॥ ३१ ॥ यावदस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य तु ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥३२॥ तीर्थानां परमं तीर्थं नदीनां परमा नदी॥मोक्षदा सर्वभूतानां महापातकिनामपि ॥ ३३ ॥ सर्वत्र सुलभा गंगा त्रिषु स्थानेषु दुर्लभा ॥ गंगाद्वारे प्रयागे च गंगासागरसंगमे ॥ ३४ ॥ सर्वेषामेव भूतानां पापोपहतचेतसाम् ॥ गतिमन्वेषमाणानां नास्ति गंगासमा गतिः ॥ ३५ ॥ पवित्राणां पवित्रं यन्मंगलानाञ्च मंगलम् ॥ महेश्वरात्परिभ्रष्टा सर्वपापहारा शुभा ॥ ३६ ॥ कृते तु नैमिषं तीर्थं त्रेतायां पुष्करं वरम् ॥ द्वापरे तु कुरुक्षेत्रं कलौ गंगा विशिष्यते ॥ ३७ ॥ गंगामेव निषेवन्ते प्रयागे तु विशेषतः ॥ नान्यत्कलियुगे रौद्रे भेषजं नृप विद्यते ॥ ३८ ॥ अकामो वा सकामो वा गंगायां यो विपद्यते ॥ स मृतो जायते स्वर्गे नरकं च न पश्यति ॥ ३९ ॥ इति श्रीकूर्मपुराणे प्रयागमाहात्म्ये× सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ तदेव ॥ मार्कण्डेय उवाच ॥ षष्टिस्तीर्थ

१ परस्मैपदमार्षम् । २ आभूतसंप्लवं यावत्प्रलयपर्यन्तमित्यर्थः । ३ ख्यातिमान्नृप इति पा० । ४ मध्यत इति पा० । ५ स्मृतमात्रात्तु इति पा० । ६ समाश्रित्य इति पा० । ७ बहुतीर्थतपोवना–बहूनि तीर्थानि तपोवनानि च यत्र सा । ८ नान्यत्कलियुगोद्भूतं मलं हन्तुं सुदुष्करमिति पा० । × षट्त्रिंशोध्यायः लिं० पु० । ९ षष्टितीर्थेति पा० ।

सहस्राणि षष्टिस्तीर्थशतानि च ॥ माघमासे गमिष्यन्ति गंगायमुनसंगमे ॥ १ ॥ गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ॥ प्रयागे माघमासे तु त्र्यहं स्नातस्य तत्फलम् ॥ २ ॥ गंगायमुनयोर्मध्ये करीषाग्निश्च साधयेत् ॥ अहीनांगो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥ ३ ॥ यावंति रोमकूपाणि तस्य गात्रेषु भूमिप ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ ४ ॥ ततः स्वर्गात्परिभ्रष्टो जंबूद्वीपपतिर्भवेत् ॥ भुक्त्वा स विपुलान्भोगांस्तत्तीर्थं लभत पुनः ॥ ५ ॥ जलप्रवेशं यः कुर्यात्संगमे लोकविश्रुते ॥ राहुग्रस्तो यथा सोमो विमुक्तः सर्वपातकैः ॥ ६ ॥ सोमलोकमवाप्नोति सोमेन सह मोदते ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ ७ ॥ स्वर्गतः शक्रलोकेऽसौ मुनिगन्धर्वसेविते ॥ ततो भ्रष्टस्तु राजेन्द्र समृद्धे जायते कुले ॥८॥ अधःशिरास्तु यो धारामूर्द्धपादः पिबेन्नरः ॥ सप्तवर्षसहस्राणि स्वर्गलोके महीयते ॥ ९ ॥ तस्माद्भ्रष्टस्तु राजेन्द्र अग्निहोत्री भवेन्नरः ॥ भुक्त्वाथ विपुलान्भोगांस्तत्तीर्थं भजते पुनः ॥ १० ॥ यः शरीरं विकर्त्तित्वा शकुनिभ्यः प्रयच्छति ॥ ११ ॥ विहंगैरुपभुक्तस्य शृणु तस्यापि यत्फलम् ॥ शतं वर्षसहस्राणां सोमलोके महीयते ॥ १२ ॥ ततस्तस्मात्परिभ्रष्टो राजा भवति धार्मिकः ॥ गुणवान्रूपसंपन्नो विद्वांस्तु प्रियवाक्यवान् ॥ १३ ॥ भोगान् भुक्त्वाथ दत्त्वा च तत्तीर्थं भजते पुनः ॥ उत्तरे यमुनातीरे प्रयागस्य च दक्षिणे ॥ १४ ॥ ऋणप्रमोचनं नाम तीर्थन्तु परमं स्मृतम् ॥ एकरात्रोषितः स्नात्वा ऋणैंस्तत्र प्रमुच्यते ॥ १५ ॥ स्वर्गलोकमवाप्नोति अनृणश्च सदा भवेत् ॥१६ ॥ इति श्रीकूर्मपुराणे प्रयागमाहात्म्यं नाम÷ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ तदेव ॥ मार्कण्डेय उवाच ॥ तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥ समागता महाभागा यमुना यत्र निम्नगा ॥ १ ॥ येनैव निःसृता गंगा तेनैव यमुना गता ॥ योजनानां सहस्रेषु कीर्त्तनात्पापनाशिनी ॥ २ ॥ तत्र स्नात्वा च पीत्वा च यमुनां

१ षष्टितीर्थैतिं पा० । २ समायान्तीति पा० । ३ सङ्गमामीति पा० । ४ काष्ठाग्निं यस्तु धारयेदिति पा० । ५ मानवः इति पा० । ६ व्रजते इति, भजते इति पा० । ७ पुनरिति पा० । ८ धूममिति पा० । ९ भुक्त्वा तु इति पा । १० विकर्त्तित्वा इति आर्षम्, विकृत्य इति साधु । ११ विद्वान् सुप्रियवाक्यवानिति पा० । १२ भुक्त्वा तु विपुलान् भोगानिति पा० । १३ ऋणैस्तत्रेति पा० । ऋषिदेवपितॄणैरित्यर्थः । १४ सूर्यलोक इति पा० । ÷ सप्तत्रिंशः लि० पु० । १५ यमुनायां युधिष्ठिर इति पा० ।

यत्र निम्नगा ॥ सर्वपापविनिर्मुक्तः पुनात्यासप्तमं कुलम् ॥ ३ ॥ प्राणांस्त्यजति यस्तत्र स याति परमां गतिम् ॥ अग्नितीर्थमिति ख्यातं यमुनादक्षिणे तटे ॥ ४ ॥ पश्चिमे धर्मराजस्य तीर्थं त्वनरकं स्मृतम् ॥ तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ ५ ॥ कृष्णपक्षे चतुर्दश्यां स्नात्वा सन्तर्प्य वै शुचिः ॥ धर्मराजं महापापैर्मुच्यते नात्र संशयः ॥ ६ ॥ दशतीर्थसहस्राणि दशकोट्यस्तथापराः॥ प्रयागसंस्थितानि स्युरेवमाहुर्मनीषिणः ॥ ७ ॥ तिस्रः कोट्योऽर्द्धकोटिश्च तीर्थानां वायुरब्रवीत् ॥ दिवि भूम्यन्तरिक्षे च तत्सर्वं जाह्नवी स्मृता ॥ ८ ॥ यत्र गंगा महाभागा स देशस्तत्तपोवनम् ॥ सिद्धक्षेत्रं तु तज्ज्ञेयं गङ्गातीरं समाश्रितम् ॥ ९ ॥ यत्र देवो महादेवो माधवेन महेश्वरः ॥ आस्ते देवेश्वरो नित्यं तत्तीर्थं तत्तपोवनम् ॥ १० ॥ इदं सत्यं द्विजातीनां साधूनामात्मजस्य च ॥ सुहृदाञ्च जपेत्कर्णे शिष्यस्यानुगतस्य च॥ ११॥ इदं धन्यमिदं स्वर्ग्यमिदं मेध्यमिदं शुभम्॥इदं पुण्यमिदं रम्यं पावनं धर्म्यमुत्तमम् ॥ १२॥ महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम् ॥ अत्राधीत्य द्विजोऽध्यायं निर्मलत्वमवाप्नुयात् ॥ १३ ॥ यश्चेदं शृणुयान्नित्यं तीर्थं पुण्यं सदा शुचिः॥ जातिस्मरत्वं लभते नाकपृष्ठे च मोदते ॥ १४ ॥ प्राप्यन्ते तानि तीर्थानि सद्भिः शिष्टानुदर्शिभिः ॥ स्नाहि तीर्थेषु कौरव्य मा च वक्रमतिर्भव ॥ १५ ॥ एवमुक्त्वा स भगवान्मार्कण्डेयो महामुनिः॥ तीर्थानि कथयामास पृथिव्यां यानि कानिचित् ॥ १६ ॥ भूसमुद्रादिसंस्थानं गृहाणां ज्योतिषां स्थितिम् ॥ पृष्टः प्रोवाच सकलमुक्त्वाथ प्रययौ मुनिः ॥ १७॥ सूत उवाच ॥ य इदं कल्यमुत्थाय शृणोति पठतेऽथवा ॥ मुच्यते सर्वपापैस्तु रुद्रलोकं स गच्छति ॥ १८ ॥ इति श्रीकूर्मपुराणे प्रयागमाहात्म्यं नाम × एकोनचत्वारिंशोऽध्यायः ॥ ३९॥ अथ भुवनविन्यासप्रकरणम् ॥ × मुनय ऊचुः ॥ एवमुक्तास्तु मुनयो नैमिषीया महामुनिम् ॥ पप्रच्छुरुत्तरं सूतं पृथिव्यादिविनिर्णयम् ॥ १ ॥ ऋषय ऊचुः ॥ कथितो भवता सर्गः मनुः स्वायंभुवः शुभः ॥ इदानीं श्रोतुमिच्छामस्त्रिलोकस्यास्य मण्डलम् ॥ २॥

१ त्रिंशदिति पा० । २ गङ्गातीरसमाश्रितमिति पा० । ३ देव्या सहेति पा० । ४ वटेश्वर इति पा० । ५ कानि चोति पा० । ६ प्रमाणं ज्योतिषां स्मृतमिति, प्रमाणं ज्योतिषां स्थितमिति पा० । ७ सर्वपापेभ्य इति पा० ० । × अष्टत्रिंशत् लि० पु० । × सूत उवाच लि० पु० । ८ महामतिमिति पा० । ९ पप्रच्छुः पुरुषं कूर्मं इति पा० । उत्तरं सर्गोत्परवर्तिनम्, प्रतिसर्गान्तर्गतं पृथिव्यादिविनिर्णयं सूतं पप्रच्छुरित्यर्थः। १० सूत सर्गः स्वायंभुवस्तु यः इति पा० ।

यावन्तः सागरद्वीपास्तथा वर्षाणि पर्वताः॥वनानि सरितः सूर्यो ग्रहाणां स्थितिरेव च ॥ ३ ॥ यदाधारमिदं सर्वं येषां पृथ्वी पुरान्वियम् ॥
नृपाणां तत्समासेन तत्तद्वक्तुमिहार्हसि॥४॥सूत उवाच ॥ वक्ष्ये देवाधिदेवाय विष्णवे प्रभविष्णवे॥नमस्कृत्याप्रमेयाय यदुक्तं तेन धीमता ॥
॥५॥ स्वायंम्भुवस्यास्य मनोः प्रागुक्तो यः प्रियव्रतः॥ पुत्रस्तस्याभवन्पुत्राः प्रजापतिसमा दश॥६॥आग्नीध्रश्चाग्निबाहुश्च वपुष्मान्द्युतिमां
स्तथा।मेधा मेधातिथिर्हव्यः सवनः पुत्र एव च ।७। ज्योतिष्मान्दशमस्तेषां महाबलपराक्रमः॥धार्मिको दाननिरतः सर्वभूतानुकम्पकः। ८।
मेधाग्निबाहुपुत्रास्तु त्रयो योगपरायणाः ॥ जातिस्मरा महाभागा न राज्ये दधिरे मतिम् ॥ ९ ॥ प्रियव्रतोऽभ्यषिञ्चद्वै सप्तद्वीपेषु सप्त
तान् ॥ जम्बुद्वीपेश्वरं पुत्रमाग्नीध्रमकरोन्नृपः ॥ १० ॥ प्लक्षद्वीपेश्वरश्चैव तेन मेधातिथिः कृतः ॥ शाल्मलीशं वपुष्मन्तं नरेन्द्रमभिषि
क्तवान् ॥ ११ ॥ ज्योतिष्मन्तं कुशद्वीपे राजानं कृतवान् प्रभुः ॥ द्युतिमन्तञ्च राजानं क्रौञ्चद्वीपे समादिशत् ॥ १२ ॥ शाकद्वीपे
श्वरञ्चापि हव्यञ्चक्रे प्रियव्रतः ॥ पुष्कराधिपतिञ्चक्रे सवनञ्च प्रजापतिः ॥ १३ ॥ पुष्करेश्वरतश्चापि महीवीतसुतोऽभवत् ॥ धातकिश्चैव
द्वावेतौ पुत्रौ पुत्रवतां वरौ ॥१४॥ महावीतं स्मृतं वर्षं तस्य स्यात्तु महात्मनः॥ नाम्ना वैधातकेश्चापि धातकीखण्डमुच्यते ॥ १५ ॥
शाकद्वीपेश्वरस्यापि हव्यस्याप्यभवन् सुताः ॥ जलदश्च कुमारश्च सुकुमारो मणीचकः ॥ १६ ॥ कुशोत्तरोऽथ मोदाकिः सप्तमः
स्यान्महाद्रुमः ॥ जलदं जलदस्याथ वर्षं प्रथममुच्यते ॥ १७॥ कुमारस्य तु कौमारं तृतीयं सुकुमारकम् ॥ मणिचकञ्चतुर्थञ्च पञ्चमञ्च
कुशोत्तरम् ॥ १८ मोदाकं षष्ठमित्युक्तं सप्तमन्तु महाद्रुमम् ॥ क्रौञ्चद्वीपेश्वरस्यापि सुता द्युतिमतोऽभवन् ॥ १९ ॥ कुशलः प्रथम
स्तेषां द्वितीयस्तु मनोहरः ॥ उष्णस्तृतीयः सम्प्रोक्तश्चतुर्थः पीवरः स्मृतः ॥ २० ॥ अन्धकारो मुनिश्चैव दुन्दुभिश्चैव सप्त वै ॥
तेषां स्वनामभिर्देशाः क्रौञ्चद्वीपाश्रयाः शुभाः॥ २१ ॥ ज्योतिष्मतः कुशद्वीपे सप्तैवासन्महौजसः ॥ उद्भेदो वेणुमांश्चैवाश्वरथो लम्बनो

१ सूत वक्तु इति पा०। २ स्वायम्भुवस्य तु इति पा० । ३ कम्पन इति पा० । ४ भव्यमिति पा० । ५ भव्यस्या इति पा० । ६ पञ्चमं कुसुमोत्तरमिति पा० । ७ मोदकं षण्डमिति पा० । ८ प्रवर इति पा० । ९ दुन्दुभिश्चोति सप्तम इति पा० ।

धृतिः ॥ २२ ॥ षष्ठः प्रभाकरश्चापि सप्तमः कपिलः स्मृतः ॥ स्वनामचिह्नतश्चात्र तथा वर्षाणि सुव्रताः ॥ २३ ॥ ज्ञेयानि च तथान्येषु द्वीपेष्वेवनयो मतः ॥ शाल्मलिद्वीपनाथस्य सुताश्चासन्वपुष्मतः ॥ २४ ॥ श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा ॥ वैद्युतो मानसश्चैव सप्तमः सुप्रभो मतः ॥२५॥ प्लक्षद्वीपेश्वरस्यापि सप्त मेधातिथेः सुताः॥ज्येष्ठः शान्तमयस्तेषां शिशिरस्तु सुखोदयः॥२६॥आनन्दश्च शिवश्चैव क्षेमकश्च ध्रुवस्तथा ॥ प्लक्षद्वीपादिके ज्ञेयाः शाकद्वीपान्तिकेषु च ॥ २७ ॥ वर्णानाञ्च विभागेन स्वधर्मो मुक्तये मतः ॥ जम्बुद्वीपेश्वरस्यापि पुत्राश्चासन्महाबलाः ॥ २८ ॥ आग्नीध्रस्य द्विजश्रेष्ठास्तन्नामानि निबोधत ॥ नाभिः किम्पुरुषश्चैव तथा हरिरिलावृतः ॥ २९ ॥ रम्यो हिरण्वांश्च कुरुर्भद्राश्वः केतुमालकः ॥ जम्बुद्वीपेश्वरो राजा स चाग्नीध्रो महामतिः ॥३०॥ विभज्य नवधा तेभ्यो यथान्यायं ददौ पुनः ॥ नाभेस्तु दक्षिणं वर्षं हिमाह्वं प्रददौ पिता ॥३१॥ हेमकूटं ततो वर्षं ददौ किम्पुरुषाय सः ॥ तृतीयं नैषधं वर्षं हरये दत्तवान् पिता ॥ ३२ ॥ इलावृताय प्रददौ मेरुमध्यमिलावृतम् ॥ नीलाद्रेराश्रितं वर्षं रम्याय प्रददौ पिता ॥ ३३ ॥ श्वेतं यदुत्तरं वर्षं पित्रा दत्तं हिरण्वते ॥ यदुत्तरं शृङ्गवतो वर्षं तत्कुरवे ददौ ॥ ३४ ॥ मेरोः पूर्वेण यद्वर्षं भद्राश्वाय न्यवेदयत् ॥ गन्धमादनवर्षं तु केतुमालाय दत्तवान् ॥ ३५ ॥ वर्षेष्वेतेषु तान्पुत्रानभ्यंषिञ्चन्नराधिपः ॥ संसारासांरतां ज्ञात्वा तपस्तप्तुं वनं गतः ॥ ३६ ॥ हिमाह्वयं तु यंद्वर्षं नाभेरासीन्महात्मनः ॥ तस्यर्षभोऽभवत्पुत्रो मेरुदेव्यां महाद्युतिः ॥ ३७ ॥ ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः ॥ सोऽभिषिच्यर्षभः पुत्रं भरतं पृथिवीपतिः ॥ ३८ ॥ वानप्रस्थाश्रमं गत्वा तपस्तेपे यथाविधि ॥ तपसा कर्षितोऽत्यर्थं कृशोऽयमंनिशं ततः ॥३९॥ ज्ञानयोगरतो भूत्वा महापाशुपतोऽभवत् ॥ सुमतिर्भरतस्यापि पुत्रः परमधार्मिकः ॥ ४० ॥ सुमतेस्तैजसस्तस्मादिन्द्रद्युम्नो महा

१ स्वनाम चिह्निता यत्र इति पा० । २ द्वीपेषु पतयो मताः, द्वीपेष्वेतानि नामत इति पा० । ३ कुशद्वीपेति पा० । ४ आनन्दश्चामरश्चैव इति पा० । ५ प्लक्षद्वीपादिषु ज्ञेयाः इति पा० । ६ वर्णाश्रम इति पा० । ७ द्विजा इति पा० । ८ महामुनिरिति पा० । ९ नीलाचलाश्रयमिति पा० । १० अभिषिच्य नराधिप इति पा० । ११ संसारकष्टतामिति पा० । १२ यस्यैतदिति पा० । १३ धीर इति पा० । १४ धमनिसन्तत इति पा० । १५ भरतस्याभूदिति पा० ।

द्युतिः ॥ परमेष्ठीसुतस्तस्मात्प्रतीहारस्तदन्वयः ॥ ४१ ॥ प्रतिहर्त्तेति विख्यात उत्पन्नस्तस्य चात्मजः ॥ भवस्तस्मादथोद्गीथः प्रस्ता विस्तत्सुतोऽभवत् ॥ ४२ ॥ पृथुस्ततस्ततो नक्तो नक्तस्यापि गयः स्मृतः ॥ नरो गयस्य तनयस्तस्य भूयो विराडभूत् ॥ ४३ ॥ तस्य पुत्रो महावीर्यो धीमांस्तस्मादजायत ॥ धीमतोऽपि ततश्चाभूद्भौवनस्तत्सुतोऽभवत् ॥४४॥ त्वष्टा त्वष्टुश्च विरजो रजस्तस्मादभूत्सुतः ॥ शतजिद्रथजित्तस्य जज्ञे पुत्रशतं द्विजाः ॥४५॥ तेषां प्रधानो बलवान्विश्वज्योतिरिति स्मृतः॥ आराध्य देवं ब्रह्माणं क्षेमकं नाम पार्थिवम् ॥४६॥ असूत पुत्रं धर्मज्ञं महाबाहुमरिन्दमम्।एते पुरस्ताद्राजानो महासत्त्वा महौजसः॥४७॥ एषां वंशप्रसूतैस्तु भुक्तेयं पृथिवी पुरा॥४८॥ इति श्रीकूर्मपुराणे भुवनविन्यासे + चत्वारिंशोऽध्यायः॥४०॥अथ ज्योतिःसन्निवेशवर्णनम्।सूत उवाच ॥ अतः परं प्रवक्ष्यामि संक्षेपेण द्विजोत्तमाः॥त्रैलोक्यस्यास्य मानं वो न शक्यं विस्तरेण तु ॥१॥भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा । जनस्तपश्च सत्यञ्च लोकास्त्वण्डोद्भवास्तथा ॥२॥ सूर्याचन्द्रमसौ यावत्किरणैरेव भासतः ॥ तावद्भूर्लोक आख्यातः पुराणे द्विजपुंगवाः ॥ ३ ॥ यावत्प्रमाणो भूर्लोको विस्तरात्परिमण्डलात्॥भुवर्लोकोऽपि तावत्स्यान्मण्डलाद्भास्करस्य तु॥४॥ऊर्द्ध्वं यन्मण्डलं व्योम्नि ध्रुवो यावद्व्यवस्थितः॥स्वर्गलोकःसमाख्यातस्तत्र वायोस्तु नेमयः ॥ ५ ॥ आवहः प्रवहश्चैव तत्रैवानुवहः पुनः ॥ संवहो विवहश्चैव तदूर्द्ध्वं स्यात्परावहः ॥ ६ ॥ तथा परिवहश्चैव वायोर्वै सप्त नेमयः ॥ भूमेर्योजनलक्षे तु भानोर्वै मण्डलं स्थितम् ॥ ७ ॥ लक्षे दिवाकरस्यापि मण्डलं शशिनः स्मृतम् ॥ नक्षत्रमण्डलं कृत्स्नं तल्लक्षेण प्रकाशते ॥ ८ ॥ द्विलक्षे ह्यन्तरे विप्रा बुधो नक्षत्रमण्डलात् ॥ तावत्प्रमाणभागे तु बुधस्याप्युशनाः स्थितः ॥ ९ ॥ अंगारकोऽपि शुक्रस्य तत्प्रमाणे व्यवस्थितः ॥ लक्षद्वयेन भौमस्य स्थितो देवपुरोहितः ॥ १० ॥ सौरिर्द्विलक्षेण गुरोर्ग्रहाणामथ मण्डलात् ॥ सप्तर्षिमण्डलं तस्माल्लक्षमात्रे प्रकाशते ॥ ११ ॥ ऋषीणां मण्डलादूर्द्ध्वं लक्षमात्रे स्थितो ध्रुवः ॥ तत्र धर्मः स भगवान्विष्णुर्नारायणः

१ शौचन इति पा० । २ प्रसूतैश्च इति पा० । × एकोनचत्वारिंशः लि० पु० । ३ मता इति पा० । ४ विवाहश्चाथ इति पा० । ५ परिवहश्चोर्ध्वमिति पा० । ६ द्वे लक्षेऽप्युत्तरे इति पा० । ७ ऋषीणां मण्डलादूर्ध्वे लक्षमात्रे व्यवस्थितः । मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः । इ० पा० । मेढीभूत मेधीभूतो वा केन्द्रीभूत इत्यर्थः ।

स्थितः ॥ १२ ॥ नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः ॥ त्रिगुणस्तस्य विस्तारो मण्डलस्य प्रमाणतः ॥ १३ ॥ द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः ॥ तुल्यस्तयोस्तु स्वर्भानुर्भूत्वा तानुपसर्पति ॥ १४ ॥ उद्धृत्य पृथिवीच्छायां निर्मितो मण्डलाकृतिः ॥ स्वर्भानोस्तु बृहत्स्थानं तृतीयं यत्तमोमयम् ॥ १५ ॥ चन्द्रस्य षोडशो भागो भार्गवस्य विधीयते ॥ भार्गवात्पादहीनस्तु विज्ञेयो वै बृहस्पतिः ॥ १६ ॥ बृहस्पतेः पादहीनौ भौमसौरावुभौ स्मृतौ ॥ विस्तारान्मण्डलाच्चैव पादहीनस्तयोर्बुधः ॥ १७ ॥ तारानक्षत्ररूपाणि वपुष्मन्तीह यानि वै ॥ बुधेन तानि तुल्यानि विस्तारान्मण्डलात्तथा ॥ १८ ॥ तारानक्षत्ररूपाणि हीनानि तु परस्परम् ॥ शतानि पञ्च चत्वारि त्रीणि द्वे चैव योजने ॥ १९ ॥ पूर्वापरानुकृष्टानि तारकामण्डलानि तु ॥ योजनान्यर्द्धमात्राणि तेभ्यो ह्रस्वं न विद्यते ॥ २० ॥ उपरिष्टात्त्रयस्तेषां ग्रहा वै दूरसर्पिणः ॥ सौरोऽङ्गिराश्च वक्रश्च ज्ञेयो मन्दविचारणः ॥ २१ ॥ तेभ्योऽधस्ताच्च चत्वारः पुनरन्ये महाग्रहाः ॥ सूर्यः सोमो बुधश्चैव भार्गवश्चैव शीघ्रगाः ॥ २२ ॥ दक्षिणायनमार्गस्थो यदा चरति रश्मिमान् ॥ तदा पूर्वग्रहाणां वै सूर्योऽधस्तात्प्रसर्पति॥२३॥ विस्तीर्णं मण्डलं कृत्वा तस्योर्द्ध्वं चरते शशी॥ नक्षत्रमण्डलं कृत्स्नं सोमादूर्द्ध्वं प्रसर्पति॥ २४॥ नक्षत्रेभ्यो बुधश्चोर्द्ध्वं बुधादूर्द्ध्वं तु भार्गवः ॥ वक्रस्तु भार्गवादूर्द्ध्वं वक्रादूर्द्ध्वं बृहस्पतिः ॥ २५ ॥ तस्माच्छनैश्चरोऽप्यूर्द्ध्वं तस्मात्सप्तर्षिमण्डलम् ॥ ऋषीणाञ्चैव सप्तानां ध्रुवश्चोर्द्ध्वं व्यवस्थितः ॥ २६ ॥ योजनानां सहस्राणि भास्करस्य रथो नव ॥ ईषादण्डस्तथा तस्य द्विगुणो द्विजसत्तमाः ॥ २७ ॥ सार्द्धकोटिस्तथा सप्त नियुतान्याधिकानि तु ॥ योजनानान्तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥ २८॥ त्रिनाभिमति पञ्चारे षण्णेमिन्यक्षयात्मके ॥ संवत्सरमयं कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥ २९ ॥ चत्वारिंशत्सहस्राणि द्वितीयाक्षो व्यवस्थितः ॥ पञ्चाशयानि सार्द्धानि योजनानि द्विजोत्तमाः ॥ ३० ॥ अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयोः ॥ ह्रस्वोक्षस्तद्युगार्द्धेन ध्रुवा

१ उपरिष्टाच्च तेषां ये इति पा० । २ शुक्रः शीघ्रगा दक्षिणायने इति पा० । ३ शनिस्तु इति पा० । ४ त्रिनाभिमति इति पा० । ५ द्वितीयोऽपि विवस्वत इति पा० । ६ पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य द्विजोत्तमाः ।लक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयोरिति पा० । ७ तत्परार्द्धयोरिति पा० । ८ भूयोऽक्षस्तद्युगार्द्धे तु इति पा० ।

धारो रथस्य तु ॥ ३१ ॥ द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ॥ हयाश्च सप्त च्छन्दांसि तन्नामानि निबोधत ॥ ३२ ॥ गायत्री च बृहत्युष्णिक् जगती पंक्तिरेव च ॥ अनुष्टुब्त्रिष्टुबप्युक्ता च्छन्दांसि हरयो हरेः ॥ ३३ ॥ मानसोपरि माहेन्द्री प्राच्यां दिशि महापुरी ॥ दक्षिणायां यमस्याथ वरुणस्य तु पश्चिमे ॥ ३४ ॥ उत्तरेषु च सोमस्य तन्नामानि निबोधत ॥ अमरावती संयमनी सुखा चैव विभावरी ॥ ३५॥ काष्ठागतो दक्षिणतः क्षिप्तेषुरिव सर्पति ॥ ज्योतिषां चक्रमादाय देवदेवः पितामहः ॥ ३६ ॥ दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः ॥ सप्तद्वीपेषु विप्रेन्द्रा निशार्द्धस्य च सम्मुखः ॥ ३७ ॥ उदयास्तमने चैव सर्वकालं तु संमुखे ॥ दिशास्वशेषासु तथा विप्रेन्द्रा विदिशासु च ॥ ३८ ॥ कुलालचक्रपर्यन्तं भ्रमत्येष यथेश्वरः ॥ करोत्येष यथा रात्रिं विमुञ्चन्मेदिनीं द्विजाः ॥ ३९ ॥ दिवाकरकरैरेतत्पूरितं भुवनत्रयम् ॥ त्रैलोक्यं कथितं सद्भिर्लोकानां मुनिपुंगवाः ॥ ४० ॥ आदित्यमूलमखिलं त्रैलोक्यं नात्र संशयः ॥ भवत्यस्माज्जगत्सर्वं सदेवासुरमानुषम् ॥ ४१ ॥ रुद्रेन्द्रोपेन्द्रचन्द्राणां विप्रेन्द्राणां दिवौकसाम् ॥ द्युतिमान्द्युतिमत्कृत्स्नमजयत्सार्वलौकिकम् ॥४२॥ सर्वात्मा सर्वलोकेशो महादेवः प्रजापतिः ॥ सूर्य एष तु लोकस्य मूलं परमदैवतम् ॥४३॥ द्वादशान्ये तथादित्या देवास्ते येऽधिकारिणः ॥ निर्वहन्ति वदन्त्यस्य तदंशा विष्णुमूर्त्तयः ॥ ४४ ॥ सर्वे नमस्यन्ति सहस्रबाहुं गन्धर्वयक्षोरगकिन्नराद्याः ॥ यजन्ति यज्ञैर्विविधैर्मुनीन्द्राश्छन्दोमयं ब्रह्ममयं पुराणम् ॥४५॥ इति श्रीकूर्मपुराणे ज्योतिषां सन्निवेशे×एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ सूत उवाच ॥ सरथोऽधिष्ठितो देवैरादित्यैर्मुनिभिस्तथा ॥ गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥ १ ॥ धातार्यमा च मित्रश्च वरुणः शक्र एव च ॥ विवस्वानथ पूषा च पर्ज्जन्यश्चांशुरेव च ॥ २ ॥ भगस्त्वष्टा च विष्णुश्च द्वादशैते दिवाकराः ॥ आप्याययति वै भानुर्वसन्तादिषु वै क्रमात् ॥३॥ पुलस्त्यः पुलहश्चात्रिर्वसिष्ठश्चाङ्गिरा भृगुः ॥ भरद्वाजो गौतमश्च कश्यपः क्रतुरेव च ॥४॥ जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः ॥ स्तुवन्ति देवं विविधै

१ दिवाकरः । करोत्यहस्तथा इति पा० । २ कृत्स्नामिति पा० । ३ द्युतिर्द्युतिमतां कृत्स्नं यत्तेजः सार्वकालिकम् इति पा० । ४ त्रिलोकस्य इति पा० । ÷ चत्वारिंशः लि० पु० । ५ वसुभिरिति पा० । ६ धातार्यमाथ इति पा० । ७ पर्यन्यश्चांश एव चेति पा० ।

श्छन्दोभिस्ते यथाक्रमम् ॥५॥ रथकृच्च रथौजाश्च रथचित्रः सुबाहुकः ॥ रथस्वनोऽथ वरुणः सुषेणः सेनजित्तथा ॥६॥ तार्क्ष्यश्चारिष्टनेमिश्च कृतजित् सत्यजित्तथा ॥ ग्रामण्यो देवदेवस्य कुर्वतेऽभीषुसंग्रहम् ॥७॥ अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा ॥ सर्पो व्याघ्रस्तथापश्च वातो विद्युद्दिवाकरः ॥ ८ ॥ ब्रह्मोपेतश्च विप्रेन्द्रा यज्ञोपेतस्तथैव च ॥ राक्षसप्रवरा ह्येते प्रयान्ति पुरतः क्रमात् ॥ ९ ॥ वासुकिः कंङ्क नीलश्च तक्षकः सर्पपुङ्गवः ॥ एलापत्रः शङ्खपालस्तथैरावतसंज्ञितः ॥ १० ॥ धनञ्जयो महापद्मस्तथा कर्कोटको द्विजाः ॥ कम्बलोश्व तरश्चैव वहन्त्येनं यथाक्रमम् ॥ ११ ॥ तुम्बुरुर्नारदो हाहाहूहूर्विश्वावसुस्तथा ॥ उग्रसेनोऽथ सुरुचिरर्वावसुस्तथापरः ॥ १२ ॥ चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः ॥ सूर्यवर्चा द्वादशैते गन्धर्वा गायनावराः ॥ १३ ॥ गायन्ति गानैर्विविधैर्भानुं षड्जादिभिः क्रमात् ॥ ऋतुस्थलाप्सरोवर्या तथान्या पुञ्जिकस्थला ॥ १४ ॥ मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः ॥ अनुम्लोचा च विश्वाची घृताची चोर्वशी तथा ॥ १५ ॥ अन्या च पूर्वचित्तिः स्याद्रम्भा चैव तिलोत्तमा ॥ ताण्डवैर्विविधैरेनं वसन्तादिषु वै क्रमात् ॥ १६ ॥ तोषयन्ति महादेवं भानुमात्मानमव्ययम् ॥ एवं देवा वसन्त्यर्के द्वौ द्वौ मासौ क्रमेण तु ॥ १७ ॥ सूर्यमाप्याययन्त्येते तेजसा तेजसां निधिम् ॥ ग्रथितैस्तैर्वचोभिस्तु स्तुवन्ति मुनयो रविम् ॥ १८ ॥ गन्धर्वाप्सरसश्चैनं नृत्यगेयैरुपासते ॥ ग्रामणीयक्षभूतानि कुर्वतेऽभीषुसंग्रहम् ॥ १९ ॥ सर्पा वहन्ति देवेशं यातुधानाः प्रयान्ति च ॥ वालखिल्या नयन्त्यस्तं परिवार्योदयाद्रविम् ॥ २० ॥ एते तपन्ति वर्षन्ति भान्ति वान्ति सृजन्ति तु ॥ भूतानामशुभं कर्म व्यपोहन्तीति कीर्त्तिताः ॥ २१ ॥ एते सहैव सूर्येण भ्रमन्ति दिवि भानुगाः ॥ विमाने च स्थिता नित्यं कामगे वातरंहसि ॥ २२ ॥ वर्षन्तश्च तपन्तश्च ह्लादयन्तश्च वै क्रमात् ॥ गोपायन्तीह भूतानि सर्वाणीह युगक्रमात् ॥ २३ ॥ एतेषामेव देवानां यथावीर्यं यथातपः ॥ यथायोगं यथासत्वं स एष तपति प्रभुः ॥ २४ ॥ अहोरात्रव्यवस्थानकारणं स प्रजापतिः ॥ पितृ

१ रथजिदिति पा० । २ कङ्कनीरश्चेति पा० । ३ विविधैर्नागैर्भानुं षड्जर्षभैरिति, षड्धातुषु क्रमादिति पा० । ४ कृतस्थला इति, ऋतुस्थला इति पा० । ५ घृताची च विश्वाचीति पा० ।
६ सानुषु इति, सानुगा इति पा० । ७ प्रजाः इति पा० ।

देवमनुष्यादीन्स सदाप्याययंद्रविः ॥ २५ ॥ तत्र देवो महादेवो भास्वान्साक्षान्महेश्वरः॥ भासते वेदविदुषां नीलग्रीवः सनातनः ॥२६॥ स एष देवो भगवान्परमेष्ठी प्रजापतिः ॥ स्थानं तद्विदुरादित्ये वेदज्ञा वेदविग्रहाः ॥ २७ ॥ इति श्रीकूर्मपुराणे ×द्वाचत्वारिंशोऽध्यायः ॥ ४२ ॥ अथ भुवनकोशवर्णनम् ॥ सूत उवाच ॥ एवमेष महादेवो देवदेवः पितामहः ॥ करोति नियतं कालं कालात्मा ह्यैश्वरी तनुः ॥ १ ॥ तस्य ये रश्मयो विप्राः सर्वलोकप्रदीपकाः ॥ तेषां श्रेष्ठाः पुनः सप्तरश्मयो ग्रहयोनयः ॥ २ ॥ सुषुम्नो हरिकेशश्च विश्वकर्मा तथैव च ॥ विश्वश्रवाः पुनश्चान्यः संयद्वसुरतः परः ॥ ३ ॥ अर्वावसुरिति ख्यातः स्वरकः सप्त कीर्त्तिताः ॥ सुषुम्नः सूर्यरश्मिस्तु पुष्णाति शिशिरद्युतिम् ॥ ४ ॥ तिर्यगूर्द्ध्वप्रचारोऽसौ सुषुम्नः परिपठ्यते ॥ हरिकेशस्तु यः प्रोक्तो रश्मिर्नक्षत्रपोषकः ॥ ५ ॥ विश्वकर्मा तथा रश्मिर्बुधं पुष्णाति सर्वदा ॥ विश्वश्रवास्तु यो रश्मिः शुक्रं पुष्णाति नित्यदा ॥ ६ ॥ संयद्वसुरिति ख्यातो यः पुष्णाति स लोहितम् ॥ बृहस्पतिं सुपुष्णाति रश्मिरर्वावसुः प्रभुः ॥ ७ ॥ शनैश्चरं प्रपुष्णाति सप्तमस्तु स्वरस्तथा ॥ एवं सूर्यप्रभावेण सर्वा नक्षत्रतारकाः ॥ ८ ॥ वर्द्धन्ते वर्द्धिता नित्यं नित्यमाप्याययन्ति च ॥ दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव नित्यशः ॥ ९ ॥ आदानान्नित्यमादित्यस्तेजसां तमसामपि ॥ आदत्ते स तु नाडीनां सहस्रेण समन्ततः ॥ १० ॥ नादेयं चैव सामुद्रं कौप्यं चैव सहस्रदृक् ॥ स्थावरं जङ्गमञ्चैव यच्च कुल्यादिकं पयः ॥ ११ ॥ तस्य रश्मिसहस्रन्तु शीतवर्षोष्णनिस्रवम् ॥ तासाञ्चतुःशता नाड्यो वर्षन्ते चित्रमूर्त्तयः ॥ १२ ॥ चन्द्रगाश्चैव गाह्याश्च काञ्चनाः शातनास्तथा ॥ अमृता नामतः सर्वा रश्मयो वृष्टिसर्जनाः ॥ १३ ॥ हिमोद्वताश्च ता नाड्यो रश्मयो निःसृताः पुनः ॥ रेध्यो मेध्यश्च वास्यश्च ह्लादिन्यः सर्जनास्तथा ॥ १४ ॥ चन्द्रास्ता नामतः सर्वाः पीता

१ प्यायते रविरिति पा० । × एवचत्वारिंशः लि० पु० । २ पुनश्चण्ड इति पा० । ३ ग्रहयोनयः इति पा० । ४ परिवर्णितः इति, परिगीयते इति पा० । ५ सुराट् ततः इति पा० । ६ नादेयांश्चैव सामुद्रान् कूप्यांश्चैव सहस्रदृगिति पा० । ७ चन्द्रगाश्चैव याम्याश्च केतगाः पूतनास्तथा इति, चन्द्रनाश्चैव जाक्षाश्च कोतला भूतलास्तथा इति पा० । ८ रम्यो मेध्यश्च पौष्णश्च इति, रश्यो मेष्यश्च पौष्यश्च इति पा० ।

स्ताः स्युर्गभस्तयः ॥ शुक्लाश्च कुंकुमांश्चैव गावो विश्वभृतस्तथा ॥ १५ ॥ शुक्लास्ता नामतः सर्वास्त्रिविधा घर्मसर्जनाः ॥ समं बिभर्त्ति ताभिः स मनुष्यपितृदेवताः ॥ १६ ॥ मनुष्यानौषधेनेह स्वधया च पितॄनपि ॥ अमृतेन सुरान्सर्वांस्त्रींस्त्रिभिस्तर्पयत्यसौ ॥ १७ ॥ वसन्ते ग्रीष्मके चैव षड्भिः स तपति प्रभुः ॥ शरद्यपि च वर्षास्तु चतुर्भिः संप्रवर्षति ॥ १८ ॥ हेमन्ते शिशिरे चैव हिममुत्सृजति त्रिभिः ॥ वरुणो माघमासे तु सूर्यः पूषा तु फाल्गुने ॥ १९ ॥ चैत्रे मासे स देवेशो धाता वैशाखतापनः ॥ [1]ज्येष्ठे मासे भवेदिन्द्रः आषाढे तपते रविः ॥ २० ॥ विवस्वान् श्रावणे मासि प्रौष्ठपद्यां भगः स्मृतः ॥ [3]पर्जन्यश्चाश्विने मासि कार्त्तिके मासि भास्करः ॥ २१ ॥ मार्गशीर्षे भवेन्मित्रः पौषे विष्णुः सनातनः ॥ पञ्चरश्मिसहस्राणि वरुणस्यार्ककर्मणि ॥ २२ ॥ षड्भिः सहस्रैः पूषा तु देवेशः सप्तभिस्तथा ॥ धाताष्टभिः सहस्रैस्तु नवभिश्च शतक्रतुः ॥ २३ ॥ विवस्वान्दशभिः पाति पात्येकादशभिर्भगः ॥ सप्तभिस्तपते मित्रस्त्वष्टा चैवाष्टभिस्तपेत् ॥ २४ ॥ अर्यमा दशभिः पाति पर्जन्यो नवभिस्तथा ॥ षड्भी रश्मिसहस्रैस्तु विष्णुस्तपति विश्वधृक् ॥ २५ ॥ वसन्ते कपिलः सूर्यो ग्रीष्मे काञ्चनसप्रभः ॥ श्वेतो वर्षासु विज्ञेयः पाण्डुरः शरदि प्रभुः ॥ २६ ॥ हेमन्ते ताम्रवर्णः स्याच्छिशिरे लोहितो रविः ॥ औषधीषु कलां धत्ते स्वधामपि पितृष्वथ ॥ २७ ॥ सूर्योऽमरेष्वमृतं तु त्रयं त्रिषु नियच्छति ॥ अन्ये चाष्टौ ग्रहा ज्ञेयाः सूर्येणाधिष्ठिता द्विजाः ॥ २८ ॥ चन्द्रमाः सोमपुत्रश्च शुक्रश्चैव बृहस्पतिः ॥ भौमो मन्दस्तथा राहुः केतुमानपि चाष्टमः ॥ २९ ॥ सर्वे ध्रुवे निबद्धा वै ग्रहास्ते वातरश्मिभिः ॥ भ्राम्यमाणा यथायोगं भ्रमन्त्यनु दिवाकरम् ॥ ३० ॥ अलातचक्रवद्यान्ति वातचक्रेरितास्तथा ॥ यस्माद्वहति तान्वायुः प्रवहस्तेन स स्मृतः ॥ ३१ ॥ रथस्त्रिचक्रः सोमस्य

१ ककुभश्चैव इति पा० । २ ज्येष्ठामूले पतेदिन्द्रः इति पा० । ३ पर्जन्योऽश्वयुजित्वष्टा इति पा० । ४ भार्गवः इति पा० । ५ वर्णेन इति पा० । ६ बलं धत्ते इति पा० । ७ सूर्येणाधिकृता इति, सूर्येणाधिगता इति पा० ।

कुन्दाभास्तस्य वाजिनः ॥ वामदक्षिणतो युक्ता दश तेन क्षपाकरः ॥ ३२ ॥ वीथ्याश्रयाणि चरति नक्षत्राणि रविर्यथा ॥ ह्रासवृद्धी तु विप्रेन्द्रा ध्रुवाधाराणि सर्वदा ॥ ३३ ॥ स सोमः शुक्लपक्षे तु भास्करे परतः स्थिते ॥ आपूर्यते परस्यान्ते सततञ्चैव ताः प्रभाः ॥ ३४ ॥ क्षीणं पीतं सुरैः सोममाप्याययति नित्यदा ॥ एकेन रश्मिना विप्राः सुषुम्नाख्येन भास्करः ॥ ३५ ॥ एषा सूर्यस्य वीर्येण सोमस्याप्यायिता तनुः ॥ पौर्णमास्यां स दृश्येत संपूर्णो दिवसक्रमात् ॥ ३६ ॥ संपूर्णमर्द्धमासेन तं सोमममृतात्मकम् ॥ पिबन्ति देवता विप्रा यतस्तेऽमृतभोजनाः ॥ ३७ ॥ ततः पञ्चदशे भागे किञ्चिच्छिष्टे कलात्मके ॥ अपराह्णे पितृगणा जघन्यं पर्युपासते ॥ ३८ ॥ पिबन्ति द्विलवं कालं शिष्टा तस्य कला तु या ॥ सुधामृतमयीं पुण्यां तामिन्दोरमृतात्मिकाम् ॥ ३९ ॥ निःसृतं तदमावास्यां गभस्तिभ्यः स्वधामृतम् ॥ मासतृप्तिमवाप्स्यन्ति पितरः सन्ति निर्वृताः ॥ ४० ॥ न सोमस्य विनाशः स्यात्सुधा चैवं सुपीयते ॥ एवं सूर्यनिमित्तोऽस्य क्षयो वृद्धिश्च सत्तमाः ॥ ४१ ॥ सोमपुत्रस्य चाष्टाभिर्वाजिभिर्वायुवेगिभिः ॥ वारिजैः स्यन्दनो युक्तस्तेनासौ याति सर्वतः ॥ ४२ ॥ शुक्रस्य भूमिजैरश्वैः स्यन्दनो दशभिर्वृतः ॥ अष्टभिश्चापि भौमस्य रथो हैमः सुशोभनः ॥ ४३ ॥ बृहस्पते रथोऽष्टाश्वः स्यन्दनो हेमनिर्मितः ॥ रथो रूप्यमयोऽष्टाश्वो मन्दस्यायसनिर्मितः ॥ ४४ ॥ स्वर्भानोर्भास्कराररेश्च तथाष्टाभिर्हयैर्वृतः ॥ एते महाग्रहाणां वै समाख्याता रथाश्च वै ॥ ४५ ॥ सर्वे ध्रुवे महाभागा निबद्धा वायुरश्मिभिः ॥ ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धान्यशेषतः ॥ भ्रमन्ति भ्रामयन्त्येनं सर्वाण्यनिलरश्मिभिः ॥ ४६ ॥ इति श्रीकूर्मपुराणे भुवनकोशे × त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ सूत उवाच ॥ ध्रुवादूर्द्ध्वं महर्लोकः कोटियोजनविस्तृतः ॥ कल्पाधिकारिणस्तत्र संस्थिता द्विजपुङ्गवाः ॥ १ ॥ जनलोको महर्लोकात्तथा कोटिद्वया

---

१ निशाकर इति पा० । २ रश्मीनां सूर्यवत्स्मृत इति पा० । ३ सततं दिवसक्रमादिति पा० । ४ क्षीणायितामिति पा० । ५ विकलमिति, द्विकलमिति पा० । ६ मवाप्यास्यामिति, ममावस्यामिति पा० । ७ देवैस्तु पीयते इति पा० । ८ वाजिभिरिति, वायुभिरिति पा० । ९ वातरश्मिरिति, निबद्धाम्बुदरश्मिभिरिति पा० । निबद्धा अम्बुदरश्मिभिरत्र सन्धिः सोढव्य आर्षत्वात् । × द्विचत्वारिंशः लि० पु० ।

त्मकः ॥ सनकाद्यास्तथा तत्र संस्थिता ब्रह्मणः सुताः ॥ २ ॥ जनलोकात्तपोलोकः कोटित्रयसमन्वितः ॥ वैराजास्तत्र वै देवाः स्थिता दाहविवर्जिताः ॥ ३ ॥ प्राजापत्यात्सत्यलोकः कोटिषट्केन संयुतः ॥ अपुनर्मारको नाम ब्रह्मलोकस्तु स स्मृतः ॥ ४ ॥ अत्र लोकगुरु ब्रह्मा विश्वात्मा विश्वभावनः ॥ आस्ते स योगिभिर्नित्यं पीत्वा योगामृतं परम् ॥ ५ ॥ वसन्ति यतयः शान्ता नैष्ठिका ब्रह्मचारिणः ॥ योगिनस्तापसाः सिद्धा जापकाः परमेष्ठिनः ॥ ६ ॥ द्वारं तद्योगिनामेकं गच्छतां परमं पदम् ॥ तत्र गत्वा न शोचन्ति स विष्णुः स च शंकरः ॥ ७ ॥ सूर्यकोटिप्रतीकाशं पुरं तस्य दुरासदम् ॥ न मे वर्णयितुं शक्यं ज्वालामालासमाकुलम् ॥ ८ ॥ तत्र नारायणस्यापि भवनं ब्रह्मणः पुरे ॥ शेते तत्र हरिः श्रीमान्योगी मायामयः परः ॥ ९ ॥ स विष्णुलोकः कथितः पुनरावृत्तिवर्जितः ॥ यान्ति तत्र महात्मानो ये प्रपन्ना जनार्दनम् ॥ १० ॥ ऊर्ध्वं तद्ब्रह्मसदनात्पुरं ज्योतिर्मयं शुभम् ॥ वह्निना च परिक्षिप्तं तत्रास्ते भगवान् हरः ॥ ११ ॥ देव्या सह महादेवश्चिन्त्यमानो मनीषिभिः ॥ योगिभिः शतसाहस्रैर्भूतै रुद्रैश्च संवृतः ॥ १२ ॥ तत्र ते यान्ति निरता भक्ता वै ब्रह्मचारिणः ॥ महादेवपराः शान्तास्तापसाः सत्यवादिनः ॥ १३ ॥ निर्ममा निरहङ्काराः कामक्रोधविवर्जिताः ॥ द्रक्ष्यन्ति ब्राह्मणा युक्ता रुद्रलोकः स वै स्मृतः ॥ १४ ॥ एते सप्त महालोकाः पृथिव्याः परिकीर्त्तिताः ॥ महातलादयश्चाधः पातालाः सन्ति वै द्विजाः ॥ १५ ॥ महातलं च पातालं सर्वरत्नोपशोभितम् ॥ प्रासादैर्विविधैः शुभ्रैर्देवतायतनैर्युतम् ॥ १६ ॥ अनन्तेन च संयुक्तं मुचुकुन्देन धीमता ॥ नृपेण बलिना चैव पातालं स्वर्गवासिना ॥ १७ ॥ शैलं रसातलं विप्राः शार्करं हि तलातलम् ॥ पीतं सुतलमित्युक्तं वितलं विद्रुमप्रभम् ॥ १८ ॥ सितं च वितलं प्रोक्तं तलश्चैव सितेतरम् ॥ सुपर्णेन मुनिश्रेष्ठास्तथा वासुकिना शुभम् ॥ १९ ॥ रसातलमिति ख्यातं तथान्यैश्च निषेवितम् ॥ विरोचन

१ देहवर्जिताः इति पा० । २ अपुनर्नरकास्तत्र इति पा० । ३ विश्वतोमुखः इति पा० । ४ विशन्तीति पा० । ५ ज्ञानमिति पा० । ६ महातलं हेमतलमिति पा० । ७ स्वर्गवासिनामिति पा० ।

हिरण्याक्षतारकाद्यैश्च सेवितम् ॥ २० ॥ तलातलमिति ख्यातं सर्वशोभासमन्वितम् ॥ वैनतेयादिभिश्चैव कालनेमिपुरोगमैः ॥ २१॥ पूर्वदेवैः समाकीर्णं सुतलञ्च तथा परैः ॥ वितलं यवनाद्यैश्च तारकाग्निमुखैस्तथा ॥ २२ ॥ जम्भकाद्यैस्तथा नागैः प्रह्लादेनासुरेण च ॥ वितलं चैव विख्यातं कम्बलाहीन्द्रसेवितम् ॥२३॥ महाजम्भेन वीरेण हयग्रीवेण धीमता॥शंकुकर्णेन सम्भिन्नं तथा नमुचिपूर्वकैः ॥२४॥ तथान्यैर्विविधैर्नागैस्तलञ्चैव सुशोभनम् ॥ तेषामधस्तान्नरकाः कूमाद्याः[३] परिकीर्त्तिताः॥२५॥पापिनस्तेषु पच्यन्ते न ते वर्णयितुं क्षमाः॥ पातालानामधश्चास्ते शेषाख्या वैष्णवी तनुः॥२६॥ कालाग्निरुद्रो योगात्मा नारसिंहोऽपि माधवः ॥ योऽनन्तः पव्यते देवो नागरूपी जनार्दनः ॥ तदाधारमिदं सर्वं स कालाग्निं समाश्रितः ॥ २७ ॥ तमाविश्य महायोगी कालस्तद्वदनोषितः[४] ॥ विषज्वालामयश्चेशो जगत् संहराति स्वयम् ॥ २८ ॥ सहस्रमारिप्रतिमः[५] संहर्त्ता शंकरो भवः ॥ तामसी शाम्भवी मूर्तिः कालो लोकप्रकालनः ॥ २९ ॥ इति श्रीकूर्मपुराणे भुवनविन्यासे[×] चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ अथ भुवनकोशे पर्वतादिसंख्या ॥ सूत उवाच ॥ एतद्ब्रह्माण्डमाख्यातं चतुर्दशविधं महत् ॥ अतः परं प्रवक्ष्यामि भूर्लोकस्यास्य निर्णयम् ॥१॥ जम्बूद्वीपः प्रधानोऽयं प्लक्षः शाल्मलिरेव च ॥ कुशः क्रौञ्चश्च शाकश्च पुष्करश्चैव[६] सप्तमः ॥ २ ॥ एते सप्त महाद्वीपाः समुद्रैः सप्तभिर्वृताः ॥ द्वीपाद्द्वीपो महानुक्तः सागराच्चापि सागरः ॥ ३ ॥ क्षारोदेक्षुरसोदश्च सुरोदश्च घृतोदकः ॥ दध्योदः क्षीरसलिलः स्वादूदश्चेति सागराः ॥ ४ ॥ पञ्चाशत्कोटिविस्तीर्णा ससमुद्रा धरा स्मृता ॥ द्वीपैश्च सप्तभिर्युक्ता योजनानां समन्ततः[७] ॥ ५ ॥ जंबूद्वीपः समस्तानां मध्ये[८] चैव व्यवस्थितः ॥ तस्य मध्ये महामेरुर्विश्रुतः कनकप्रभः ॥ ६ ॥ चतुरशीतिसाहस्रो योजनैस्तस्य चोच्छ्रयः ॥ प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥ ७ ॥ मूले षोडशसाहस्रो विस्तारस्तस्य सर्वतः ॥ भूपद्मस्यास्य शैलोऽसौ कर्णिकात्वेन संस्थितः ॥ ८ ॥ हिमवान्

१ तक्षकाद्यैश्च इति पा० । २ महान्तकाद्यैर्नागैश्च इति पा० । ३ मायाद्या इति पा० । ४ कालतत्त्वे व्यवस्थितः इति, वदनोत्थित इति पा० । ५ सहस्रमायोऽप्रतिम इति पा० ।
× त्रिचत्वारिंशः लि० पु० ६ पुष्कलश्चैवेति पा० । ७ समासत इति पा० । ८ द्वीपानां मध्यमः शुभ इति, मध्यतः शुभ इति पा० ।

हेमकूटश्च निषधश्चास्य दक्षिणे ॥ नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे ॥ सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ १० ॥ भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम् ॥ हरिवर्षं तथैवान्यन्मेरोर्दक्षिणतो द्विजाः ॥ ११ ॥ रम्यकञ्चोत्तरं वर्षं तस्यैवानु हिरण्मयम् ॥ उत्तरे कुरवश्चैव यथैते भारतास्तथा ॥१२॥ नवसाहस्रमेकैकमेतेषां द्विजसत्तमाः॥इलावृतञ्च तन्मध्ये तन्मध्ये मेरुरुच्छ्रितः॥१३॥ मेरोश्चतुर्दशं तत्र नवसाहस्रविस्तरम् ॥ इलावृतं महाभागाश्चत्वारस्तत्र पर्वताः ॥ १४ ॥ विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः ॥ पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥ १५ ॥ विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरः स्मृतः ॥ कदम्बस्तेषु जम्बूश्च पिप्पलो वट एव च ॥ १६ ॥ जम्बूद्वीपस्य सा जम्बूर्नामहेतुर्महर्षयः ॥ महागजप्रमाणानि जंब्वास्तस्याः फलानि च ॥ १७ ॥ पतन्ति भूभृतः पृष्ठे शीर्यमाणानि सर्वतः ॥ रसेन तस्याः प्रख्यता तत्र जम्बूनदी गिरौ ॥ १८ ॥ सरित्प्रवर्त्तते चापि पीयते तत्र वासिभिः ॥ न स्वेदो न च दौर्गन्ध्यं न जरा नेन्द्रियक्षयः ॥ १९ ॥ न तापः स्वच्छमनसां नासौख्यं तत्र जायते ॥ तत्तीरमृद्रसं प्राप्य वायुना सुविशोषितम् ॥ २० ॥ जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणम् ॥ भद्राश्वः पूर्वतो मेरोः केतुमालश्च पश्चिमे ॥ २१ ॥ वर्षे द्वे तु मुनिश्रेष्ठास्तयोर्मध्ये इला वृतम् ॥ वनं चैत्ररथं पूर्वं दक्षिणं गन्धमादनम् ॥२२॥ वैभ्राजं पश्चिमं विद्यादुत्तरं सवितुर्वनम् ॥ अरुणोदं महाभद्रमसितोदश्च मानसम् ॥ २३ ॥ सरांस्येतानि चत्वारि देवभोग्यानि सर्वदा ॥ सितान्तश्च कुमुद्वांश्च कुररी माल्यवांस्तथा ॥ २४ ॥ वैकङ्को मणिशैलश्च वृक्षवांश्चाचलोत्तमः ॥ महानीलोऽथ रुचकः सबिन्दुर्मन्दरस्तथा ॥ २५ ॥ वेणुमांश्चैव मेघश्च निषधो देवपर्वतः ॥ इत्येते देवरचिताः सिद्धावासाः प्रकीर्तिताः ॥२६॥ अरुणोदस्य सरसः पूर्वतः केसराचलः ॥ त्रिकूटः सशिरश्चैव पतङ्गो रुचकस्तथा ॥२७॥ निषधो वसुधारश्च कलिङ्गस्त्रिशिखः स्मृतः ॥ समूलो वसुवेदिश्च कुररुश्चैव सानुमान् ॥ २८ ॥ ताम्रातश्च विशालश्च कुमुदो वेणुपर्वतः।एकशृङ्गो महाशैलो गंजशैलश्च पिञ्जकः।२९।पञ्चशैलोऽथ कैलासो हिमवांश्चाचलोत्तमः॥इत्येते देवचरिता

१ दक्षिणमिति पा० । २ भागे इति पा० । ३ तत्पानात्सुस्थमनसां नराणामिति पा० ।४ विन्ध्यादुत्तरे इति पा० । ५ देवचरिता इति पा० । ६ केशवाचल इति पा० । ७ त्रिकूटः शिखरश्चैव इति शशिवांश्चैव इति, पा० । ८ वसुमारश्चेति पा० ।वसुधारश्चेति, वसुधीरश्चेति पा० १० गजशैलः पिशाचक इति पा० ।

उत्कटाः पर्वतोत्तमाः ॥ ३० ॥ महाभद्रस्य सरसो दक्षिणे केसराचलः॥ शिखिवासाश्च वैदूर्यः कपिलो गन्धमादनः ॥ ३१ ॥ जारुधिश्च[1] सुराम्बुश्च सर्वगन्धाचलोत्तमः ॥ सुपार्श्वश्च सुपक्षश्च कंकः कपिल एव च ॥ ३२ ॥ विरंजो[2] भद्रजालश्च सुसकश्च महाबलः ॥ अञ्जनो मधुमांस्तद्वच्चित्रशृङ्गो महालयः ॥ ३३ ॥ कुमुदो[3] मुकुटश्चैव पाण्डुरः कृष्ण एव च ॥ पारिजातो महाशैलस्तथैव कपिलाचलः[4] ॥३४॥ सुषेणः पुण्डरीकश्च महामेघस्तथैव च ॥ एते पर्वतराजाश्च सिद्धगन्धर्वसेविताः ॥ ३५ ॥ असितोदस्य सरसः[5] पश्चिमे केसराचलः ॥ शङ्ख कूटोऽथ वृषभो हंसो नागस्तथैव च ॥ ३६ ॥ कालाञ्जनः[6] शुक्रशैलो नीलः कमल एव च ॥ पारिजातो महाशैलः शैलः कनक एव च ॥३७॥ पुष्पकश्च सुमेघश्च वाराहो विरजास्तथा ॥ मयूरः कपिलश्चैव महाकपिल एव च ॥३८॥ इत्येते देवगन्धर्वसिद्धयक्षैश्च[7] सेविताः ॥ सरसो मानसस्येह उत्तरे केसराचलः ॥ ३९ ॥ एतेषां शैलमुख्यानामन्तरेषु यथाक्रमम् ॥ सन्ति चैवान्तरद्रोण्यः सरांसि च वनानि च ॥ ४० ॥ वसन्ति तत्र मुनयः सिद्धा वै ब्रह्मभाविताः ॥ प्रसन्नाः शान्तरजसः सर्वदुःखविवर्जिताः ॥४१॥ इति श्रीकूर्मपुराणे भुवनकोशे पर्वतसंख्याने × पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ अथ भुवनन्यासवर्णनम् ॥ सूत उवाच ॥ चतुर्दशसहस्राणि योजनानां महापुरी ॥ मेरोरुपरि विख्याता देवदेवस्य वेधसः ॥ १ ॥ तत्रास्ते भगवान् ब्रह्मा विश्वात्मा विश्वभावनः ॥ उपास्यमानो योगीन्द्रैर्मुनीन्द्रोपेन्द्रशंकरैः ॥ २ ॥ तत्र देवेश्वरेशानं विश्वात्मानं प्रजापतिम् ॥ सनत्कुमारो भगवानुपास्ते नित्यमेव हि ॥ ३ ॥ स सिद्धऋषिगंधर्वैः पूज्यमानः सुरैरपि ॥ समास्ते योगयुक्तात्मा पीत्वा तत्परमामृतम् ॥ ४ ॥ तत्र देवाधिदेवस्य[8] शम्भोरमिततेजसः ॥ दीप्तमायतनं शुभ्रं पुरस्ताद्ब्रह्मणः स्थितम् ॥ ५ ॥ दिव्यकान्तिसमायुक्तं चतुर्द्वारं सुशोभनम् ॥ महर्षिगणसंकीर्णं ब्रह्मविद्भिर्निषेवितम् ॥ ६ ॥ देव्या सह महादेवः शशाङ्कार्काग्निलोचनः ॥ रमते तत्र विश्वेशः प्रमथैः प्रमथेश्वरः ॥ ७ ॥ तत्र वेदविदः शान्ता मुनयो ब्रह्मचारिणः ॥ पूजयन्ति महादेवं तपसा सत्यवादिनः ॥ ८ ॥ तेषां साक्षान्महादेवो मुनीनां भावितात्मनाम्[9] ॥ गृह्णाति पूजां शिरसा पार्वत्या परमेश्वरः ॥ ९ ॥ तत्रैव पर्वतवरे

१ जारुधितः सुगन्धश्चेति, सुगन्धश्च श्रीशृङ्गश्चाचलोत्तम इति पा० । २ पिंजलो भद्रशैलश्च सुरश्चेति पा० । ३ सहस्रशिखरश्चैव इति पा० । ४ कमलोदकः इति, कपिलोदर इति पा० । ५ पारेण इति पा० । ६ कलिञ्जरः शक्रेति पा० । ७ सिद्धसंघनिषेविता इति पा० । × चतुश्चत्वारिंशः लि० पु० । ८ देवादिदेवस्येति, देवातिदेवस्य इति पा० । ९ ब्रह्मवादिनामिति पा० ।

शक्रस्य परमा पुरी ॥ नाम्नामरावती पूर्वं सर्वशोभासमन्विता ॥ १० ॥ तत्र चाप्सरसः सर्वा गन्धर्वाः सिद्धचारणाः ॥ उपासते सहस्राक्षं देवास्तत्र सहस्रशः ॥ ११ ॥ ये धार्मिका वेदविदो यागहोमपरायणाः ॥ तेषां तत्परमं स्थानं देवानामपि दुर्लभम् ॥ १२ ॥ तस्मा दक्षिणदिग्भागे वह्नेरमिततेजसः ॥ तेजोवती नाम पुरी दिव्याश्चर्यसमन्विता ॥ १३ ॥ तत्रास्ते भगवान्वह्निर्भ्राजमानः स्वतेजसा ॥ जपिनां होमिनां स्थानं दानवानां दुरासदम् ॥ १४ ॥ दक्षिणे पर्वतवरे यमस्यापि महापुरी ॥ नाम्ना संयमनी दिव्या सर्वशोभासमन्विता ॥ १५ ॥ तत्र वैवस्वतं देवं देवाद्याः पर्युपासते ॥ स्थानं तत्सत्यसन्धानां लोके पुण्यकृतां नृणाम् ॥ १६ ॥ तस्यास्तु पश्चिमे भागे निर्ऋतेस्तु महात्मनः ॥ रक्षोवती नाम पुरी राक्षसैः संवृता तु या ॥ १७ ॥ तत्र ते नैर्ऋतं देवं राक्षसाः पर्युपासते ॥ गच्छंति तां धर्मरता ये तु तामसवृत्तयः ॥ १८ ॥ पश्चिमे पर्वतवरे वरुणस्य महापुरी ॥ नाम्ना शुद्धवती पुण्या सर्वकामर्द्धिसंयुता ॥१९॥ तत्राप्सरो गणैः सिद्धैः सेव्यमानोऽमराधिपैः ॥ आस्ते स वरुणो राजा तत्र गच्छंति येऽम्बुदाः ॥ २० ॥ तस्या उत्तरदिग्भागे वायोरपि महापुरी ॥ नाम्ना गन्धवती पुण्या तत्रास्तेऽसौ प्रभञ्जनः ॥ २१ ॥ अप्सरोगणगन्धर्वैः सेव्यमानो महान् प्रभुः ॥ प्राणायामपरा विप्राः स्थानं तद्यान्ति शाश्वतम् ॥ २२ ॥ तस्याः पूर्वे तु दिग्भागे सोमस्य परमा पुरी ॥ नाम्ना कान्तिमती शुभ्रा तस्यां सोमो विराजते ॥ २३ ॥ तत्र ये धर्मनिरताः स्वधर्मं पर्युपासते ॥ तेषां तदुचितं स्थानं नानाभोगसमन्वितम् ॥ २४ ॥ तस्यास्तु पूर्वदिग्भागे शङ्करस्य महा पुरी ॥ नाम्ना यशोवती पुण्या सर्वेषां सा दुरासदा ॥ २५ ॥ तत्रेशानस्य भवनं रुद्रेणाधिष्ठितं शुभम् ॥ गणेश्वरस्य विपुलं तत्रास्ते स गणावृतः ॥ २६ ॥ तत्र भोगादिलिप्सूनां भक्तानां परमेष्ठिनः ॥ निवासः कल्पितः पूर्वं देवदेवेन शूलिना ॥ २७ ॥ विष्णुपादाद्वि निष्क्रान्ता प्लावयित्वेन्दुमण्डलम् ॥ समन्ताद्ब्रह्मणः पुर्यां गंगा पतति वै ततः ॥ २८ ॥ सा तत्र पतिता दिक्षु चतुर्द्धा ह्यभवद्द्विजाः ॥

१ गीततत्परा इति, गीततत्परमिति पा० । २ तस्य दक्षिणेति पा० । ३ सिद्धगन्धर्वसेविता इति पा० । ४ सर्वतो वृता इति पा० । ५ धर्मवतां ये वै इति पा० । ६ नराधिपैरिति पा० । ७ सेव्यमानोऽमरः प्रभुरिति पा० । ८ मर्त्याः इति, प्राणायामरता मर्त्याः इति पा० । ९ शोभनामिति पा० । १० शान्तिमती शुद्धा इति पा० । ११ भोगनिरता इति पा० ।

सीता चालकनन्दा च सुचक्षुर्भद्रनामिका ॥ २९ ॥ पूर्वेण शैलाच्छैकं[1] तु सीतां[2] यात्यन्तरिक्षगा ॥ ततश्च पूर्ववर्षेण भद्राश्वायाति चार्णवम् ॥ ३० ॥ तथैवालकनन्दा च दक्षिणादेत्य भारतम् ॥ प्रयाति सागरं भित्त्वा सप्तभेदा द्विजोत्तमाः ॥ ३१ ॥ सुचक्षुः पश्चिमगिरीनतीत्य सकलांस्तथा ॥ पश्चिमं केतुमालाख्यं वर्षं गत्वैति चार्णवम् ॥ ३२ ॥ भद्रा तथोत्तरगिरीनुत्तरांश्च तथा कुरून् ॥ अतीत्य चोत्तराम्भोधिं समभ्येति महर्षयः ॥ ३३ ॥ आनीलनिषधायामौ माल्यवद्गन्धमादनौ ॥ [3]तयोर्मध्यं गतो मेरुः कर्णिकाकारसंस्थितः ॥ ३४ ॥ भार[4]ताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ पत्राणि लोकपद्मस्य मर्यादाशैलबाह्यतः ॥ ३५ ॥ जठरो देवकूटश्च मर्यादापर्वतावुभौ ॥ दक्षिणोत्तरमायातावानीलनिषधायतौ ॥ ३६ ॥ गन्धमादनकैलासौ पूर्वपश्चायतावुभौ ॥ अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ ॥ ३७ ॥ निषधः पारियात्रश्च मर्यादापर्वताविमौ ॥ मेरोः पश्चिमदिग्भागे यथापूर्वं व्यवस्थितौ ॥ ३८ ॥ त्रिशृङ्गो जारुधिस्तद्वदुत्तरे वर्षपर्वतौ ॥ तावदायामविस्तारावर्णवान्तर्व्यवस्थितौ ॥ ३९ ॥ मर्यादापर्वताः प्रोक्ता अष्टाविह मया द्विजाः ॥ जठराद्याः स्थिता मेरोश्चतुर्दिक्षु महर्षयः ॥ ४० ॥ इति श्रीकूर्मपुराणे भुवनविन्यासे ×षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ अथ भुवनकोशवर्णनम् ॥ सूत उवाच ॥ केतुमाले नराः कांकाः सर्वे पनसभोजनाः ॥ स्त्रियश्चोत्पलपत्राभास्ते जीवन्ति वर्षायुतम् ॥ १ ॥ भद्राश्वे पुरुषाः शुक्लाः स्त्रियश्चन्द्रांशुसन्निभाः ॥ दशवर्षसहस्राणि जीवन्ते चान्नभोजनाः ॥ २ ॥ रम्यके पुरुषा नार्यो रमन्ति रजतप्रभाः ॥ दशवर्षसहस्राणि शतानि दश पञ्च च ॥ ३ ॥ जीवन्ति चैव सत्त्वस्था न्यग्रोधफलभोजनाः ॥ हिरण्मये हिरण्याभाः सर्वे श्रीफलभोजनाः ॥ ४ ॥ एकादशसहस्राणि शतानि दश पञ्च च ॥ जीवन्ति पुरुषा नार्यो देवलोकस्थिता इव ॥ ५ ॥ त्रयोदशसहस्राणि शतानि दश पञ्च च ॥ जीवन्ति कुरुवर्षे तु श्यामांगाः क्षीरभोजनाः ॥ ६ ॥ सर्वे मिथुनजाताश्च नित्यं सुखनिषेविताः ॥ चन्द्रद्वीपे महादेवं यजन्ति सततं शिवम् ॥ ७ ॥ तथा किंपुरुषे विप्रा

---

१ सीता शैलात्तु इति पा० । २ शैले यात्यन्तरिक्षतः इति पा० । ३ तयोर्मध्यगतः इति पा० । ४ तारका इति पा० । ५ पूर्वपश्चायतावेतौ इति पा० । × पंचचत्वारिंशः लि० पु० ६ कालाः इति पा० । ७ पत्राश्यः इति पा० । ८ जीवन्ते इत्यार्षमात्मनेपदम् । ९ वायुभोजनाः इति पा० । १० रमन्तीति परस्मैपदमार्षम् । ११ च लकुचासनाः इति पा० ।

मानवा हेमसन्निभाः ॥ दशवर्षसहस्राणि जीवन्ति प्लक्षभोजनाः ॥ ८ ॥ यजन्ति सततं देवं चतुःशीर्षं[1] चतुर्भुजम् ॥ ध्याने मनः समाधाय सादरं भक्तिसंयुताः ॥ ९ ॥ तथा च हरिवर्षे तु महारजतसन्निभाः ॥ दशवर्षसहस्राणि जीवन्तीक्षुरसाशिनः ॥ १० ॥ तत्र नारायणं देवं विश्वयोनिं सनातनम् ॥ उपासते सदा विष्णुं मानवा विष्णुभाविताः ॥ ११ ॥ तत्र चन्द्रप्रभं शुभ्रं शुद्धस्फटिकसन्निभम् ॥ विमानं वासुदेवस्य पारिजातवनाश्रितम् ॥ १२ ॥ चतुर्द्वारमनौपम्यं चतुस्तोरणसंयुतम् ॥ प्राकारैर्दशभिर्युक्तं दुराधर्षं सुदुर्गमम् ॥ १३ ॥ स्फाटिकैर्मण्डपैर्युक्तं देवराजगृहोपमम् ॥ सुवर्णस्तम्भसाहस्रैः सर्वतः समलंकृतम् ॥ १४ ॥ हेमसोपानसंयुक्तं नानारत्नोपशोभितम् ॥ दिव्यसिंहासनोपेतं सर्वशोभासमन्वितम् ॥ १५ ॥ सरोभिः स्वादुपानीयैर्नदीभिश्चोपशोभितम् ॥ नारायणपरैः शुद्धैर्वेदाध्ययनतत्परैः ॥ १६ ॥ योगिभिश्च समाकीर्णं ध्यायद्भिः पुरुषं हरिम् ॥ स्तुवद्भिः सततं मन्त्रैर्नमस्यद्भिश्च माधवम् ॥ १७ ॥ तत्र देवाधिदेवस्य विष्णोरमिततेजसः ॥ राजानः सर्वकालं तु महिमानं प्रकुर्वते ॥ १८ ॥ गायन्ति चैव नृत्यन्ति विलासिन्यो मनोहराः ॥ स्त्रियो यौवनशालिन्यः सदा मण्डनतत्पराः ॥ १९ ॥ इलावृते पद्मवर्णा जम्बूरसफलाशिनः ॥ त्रयोदशसहस्राणि वर्षाणां च स्थिरायुषः ॥ २० ॥ भारतेषु स्त्रियः पुंसो[2] नानावर्णाः प्रकीर्त्तिताः ॥ नानादेवार्चने युक्ता नानाकर्माणि कुर्वते ॥ २१ ॥ परमायुः स्मृतं तेषां शतं वर्षाणि सुव्रताः ॥ नव योजनसाहस्रं वर्षमेतत्प्रकीर्त्तितम् ॥ २२ ॥ कर्मभूमिरियं विप्रा नराणामधिकारिणाम् ॥ महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः ॥ २३ ॥ विन्ध्यश्च पारियात्रश्च[3] सप्तात्र कुलपर्वताः ॥ इन्द्रद्वीपः कसेरुक्मान् ताम्रपर्णो गभस्तिमान् ॥ २४ ॥ नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ॥ अयं तु नवमस्तेषां द्वीपः सागरसंस्थितः ॥ २५ ॥ योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः ॥ पूर्वे किरातास्तस्यान्ते पश्चिमे यवनास्तथा ॥ २६ ॥ ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्रास्तथैव च ॥ इज्यायुद्धवाणिज्याभिर्वर्तयन्त्यत्र मानवाः ॥ २७ ॥ स्रवन्ते पावना नद्यः पर्वतेभ्यो विनिःसृताः ॥ शतद्रुश्चन्द्रभागा च सरयूर्यमुना तथा ॥ २८ ॥ इरावती वितस्ता च विपाशा देविका कुहूः ॥

१ चतूर्मूर्तिं चतुर्मुखमिति पा० । २ पुंस इति आर्षं पुमांस इति साधु । ३ पारिपात्रश्च इति पा० ।

गोमती धूतपापा च बाहुदा च दृषद्वती ॥ २९ ॥ कौशिकी लोहिनी चेति हिमवत्पादनिःसृताः ॥ वेदस्मृतिर्वेदवती व्रतघ्नी त्रिदिवा तथा ॥ ३० ॥ वर्णाशा चन्दना चैव सचर्मण्यवती सुरा ॥ विदिशा वेत्रवत्यापि पारियात्राश्रयाः स्मृताः ॥ ३१ ॥ नर्मदा सुरसा शोणो दशार्णा च महानदी ॥ मन्दाकिनी चित्रकूटा तामसी च पिशाचिका ॥ ३२ ॥ चित्रोत्पला विशाला च मंजुला वालुवाहिनी ॥ ऋक्षवत्पादजा नद्यः सर्वपापहरा नृणाम् ॥ ३३ ॥ तापी पयोष्णी निर्विन्ध्या शीघ्रोदा च महानदी ॥ विन्ना वैतरणी चैव बलाका च कुमुद्वती ॥ ३४ ॥ तथा चैव महागौरी दुर्गा चान्तःशिला तथा ॥ विन्ध्यपादप्रसूतास्तु नद्यः पापहरा नृणाम् ॥ ३५ ॥ गोदावरी भीमरथी कृष्णा वेणा च वश्यता ॥ तुंगभद्रा सुप्रयोगा कावेरी च द्विजोत्तमाः ॥ ३६ ॥ दक्षिणापथनद्यस्तु सह्यपादाद्विनिःसृताः ॥ ऋतुमाला ताम्रपर्णी पुण्यवत्युत्पलावती ॥ ३७ ॥ मलयान्निःसृता नद्यः सर्वाः शीतजलाः स्मृताः ॥ ऋषिकुल्या त्रिसामा च गन्धमादनगामिनी ॥ ३८ ॥ क्षिप्रा पलाशिनी चैव ऋषीका वंशधारिणी ॥ शुक्तिमत्पादसञ्जाताः सर्वपापहरा नृणाम् ॥ ३९ ॥ आसां नद्युपनद्यश्च शतशो द्विजपुङ्गवाः ॥ सर्वपापहराः पुण्याः स्नानदानादिकर्मसु ॥ ४० ॥ तास्विमे कुरुपाञ्चाला मध्यदेशादयो जनाः ॥ पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥ ४१ ॥ पुण्ड्राः कलिङ्गा मगधा दाक्षिणात्याश्च कृत्स्नशः ॥ तथापरान्ताः सौराष्ट्रशूद्रा हीनास्तथार्बुदाः ॥ ४२ ॥ मालका मलपाश्चैव पारियात्रनिवासिनः ॥ सौवीराः सैन्धवा हूणा माल्या बाल्यानिवासिनः ॥४३ ॥ माद्रा रामास्तथैवान्ध्राः पारसीकास्तथैव च ॥ आसां पिबन्ति सलिलं वसन्ति सरितां सदा ॥ ४४ ॥ चत्वारि भारते वर्षे युगानि कवयोऽब्रुवन् ॥ कृतं त्रेता द्वापरञ्च कलिश्चान्यत्र न क्वचित् ॥४५॥ यानि किम्पुरुषाद्यानि वर्षाण्यष्टौ महर्षयः ॥ न तेषु शोको नायासो नोद्वेगः क्षुद्भयं न च ॥ ४६ ॥ स्वस्थाः प्रजाः निरातङ्काः सर्वदुःख

१ लोहिता इति पा० । २ वेदरता इति । ३ पर्णा सावन्यना इति, पर्णाशा चन्दना चैवेति पा० । ४ विपाशा च इति पा० । ५ रत्नवाहिनीति पा० । ६ वेण्या, चिन्ता इति पा० । ७ पुण्यजनाः शुभाः इति पा० । ८ बलकारिणीति, रसकारिणी इति पा० । ९ कृष्णाः शाल्वाः कलपनिवासिन इति पा० ।

विवर्ज्जिताः ॥ रमन्ते विविधैर्भावैः सर्वाश्च स्थिरयौवनाः ॥४७॥ इति श्रीकूर्मपुराणे भुवनकोशवर्णनं नाम × सप्तचत्वारिंशोऽध्यायः ॥४७॥

अथ जम्बूद्वीपवर्णनम् ॥ सूत उवाच ॥ हेमकूटगिरेः शृङ्गे महाकूटं सुशोभनम् ॥ स्फाटिकं देवदेवस्य विमानं परमेष्ठिनः ॥ ॥ १ ॥ तत्र देवाधिदेवस्य भूतेशस्य त्रिशूलिनः ॥ देवाः सर्षिगणाः सिद्धाः पूजां नित्यं प्रकुर्वते ॥ २ ॥ स देव्या गिरिशः सार्द्धं महादेवो महेश्वरः ॥ भूतैः परिवृतो नित्यं भाति तत्र पिनाकधृक् ॥ ३ ॥ विभक्तचारुशिखरः कैलासो यत्र पर्वतः ॥ निवासः कोटियक्षाणां कुबेरस्य च धीमतः ॥ ४ ॥ तत्रापि देवदेवस्य भवस्यायतनं महत् ॥ मन्दाकिनी तत्र पुण्या रम्या सुविमलोदका ॥ ५ ॥ नदी नानाविधैः पद्मैरनेकैः समलंकृता ॥ देवदानवगन्धर्वयक्षराक्षसकिन्नरैः ॥६॥ उपस्पृष्टजला नित्यं सुपुण्या सुमनोरमा ॥ अन्याश्च नद्यः शतशः स्वर्णपद्मैरलंकृताः ॥ ७ ॥ तासां कूले तु देवस्य स्थानानि परमेष्ठिनः ॥ देवर्षिगणजुष्टानि तथा नारायणस्य तु ॥ ८ ॥ तस्यापि शिखरे शुभ्रं पारिजातवनं शुभम् ॥ तत्र शक्रस्य विपुलं भवनं रत्नमण्डितम् ॥ ९ ॥ स्फाटिकस्तम्भसंयुक्तं हेमगोपुरशोभितम् ॥ तत्राथ देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ॥ १० ॥ पुण्यश्च भवनं रम्यं सर्वरत्नोपशोभितम् ॥ तत्र नारायणः श्रीमान् लक्ष्म्या सह जगत्पतिः ॥ ११ ॥ आस्ते सर्वेश्वरः श्रेष्ठः पूज्यमानः सनातनः ॥ तथा च वसुधारे तु वसूनां रत्नमण्डितम् ॥ १२ ॥ स्थानानामुत्तमं पुण्यं दुराधर्षं सुरद्विषाम् ॥ रत्नधारे गिरिवरे सप्तर्षीणां महात्मनाम् ॥ १३ ॥ सप्ताश्रमाणि पुण्यानि सिद्धावासैर्युतानि च ॥ तत्र हैमं चतुर्द्वारं वज्रनीलादिमण्डितम् ॥ १४ ॥ सुपुण्यं सदवस्थानं ब्रह्मणोऽव्यक्तजन्मनः ॥ तत्र देवर्षयो विप्राः सिद्धा ब्रह्मर्षयोऽपरे ॥१५॥ उपासते देवदेवं पितामहमजं परम् ॥ सर्वैः सम्पूजितो नित्यं देव्या सह चतुर्मुखः ॥ १६ ॥ आस्ते हिताय लोकानां शान्तानां परमा गतिः ॥ तस्यैकशृङ्गशिखरे महापद्मैरलंकृते ॥ १७ ॥ स्वच्छामृतजलं पुण्यं सुगन्धं सुमहत्सरः ॥ जैगीषव्याश्रमं पुण्यं योगीन्द्रैरुप

× षट्चत्वारिंशः लि० पु० । १ सिद्धगणा यक्षाः इति पा० । २ देवः इति पा० । ३ महादेव्या इति पा० । ४ दिव्या इति पा० । ५ सिताभ्रशिखरे चापि इति, सितान्तशिखरे चापि इति पा० । ६ संयुतमिति पा० । ७ सुमहत्स्थानमिति पा० । ८ सरस्तत्र सुविस्तीर्णं महापद्मैरलंकृतम् इति पा० । ९ सुगन्धं सुमहत्परम् इति, सुगन्धमार्षं, सुगन्धि ।

सेवितम् ॥१८॥ तत्रास्ते भगवान्नित्यं सर्वशिष्यैः समावृतः ॥ प्रशान्तदोषैरक्षुद्रैर्ब्रह्मविद्भिर्महात्मभिः ॥१९॥ शंखो मनोहरश्चैव कौशिकः कृष्ण एव च ॥ सुमना वेदनादश्च शिष्यास्तस्य प्रसादतः[2] ॥ २० ॥ सर्वयोगरताः शान्ता भस्मोद्धूलितविग्रहाः ॥ उपासते महाचार्या[3] ब्रह्मविद्यापरायणाः ॥ २१ ॥ तेषामनुग्रहार्थाय यतीनां शान्तचेतसाम् ॥ सान्निध्यं कुरुते भूयो देव्या सह महेश्वरः ॥ २२ ॥ अनेका न्याश्रमाणि स्युस्तस्मिन् गिरिवरोत्तमे ॥ मुनीनां युक्तमनसां[4] सरांसि सरितस्तथा ॥ २३ ॥ तेषु योगरता विप्रा जापकाः संयतेन्द्रियाः ॥ ब्रह्मण्यासक्तमनसो रमन्ते ज्ञानतत्पराः ॥ २४ ॥ आत्मन्यात्मानमाधाय शिखान्ते[5] पर्यवस्थितम् ॥ ध्यायन्ति देवमीशानं येन सर्वमिदं ततम् ॥ २५ ॥ सुमेघं[6] वासवस्थानं सहस्रादित्यसन्निभम् ॥ तत्रास्ते भगवानिन्द्रः शच्या सह सुरेश्वरः ॥ २६ ॥ गजशैले तु दुर्गाया भवनं मणितोरणम् ॥ आस्ते भगवती दुर्गा तत्र साक्षान्महेश्वरी ॥ २७ ॥ उपास्यमाना विविधैः शक्तिभेदैरितस्ततः ॥ पीत्वा योगामृतं लब्ध्वा साक्षादमृतमैश्वरम्[7] ॥ २८ ॥ सुनीलस्य गिरेः शृङ्गे नानाधातुसमुज्ज्वले ॥ राक्षसानां पुराणि स्युः सरांसि शतशो द्विजाः ॥ २९ ॥ तथा पुरशतं विप्राः शतशृङ्गे महाचले ॥ स्फाटिकस्तम्भसंयुक्तं यक्षाणाममितौजसाम् ॥ ३० ॥ श्वेतोदरगिरेः शृंगे सुपर्णस्य महात्मनः ॥ प्राकारगोपुरोपेतं मणितोरणमण्डितम् ॥ ३१ ॥ स तत्र गरुडः श्रीमान् साक्षाद्विष्णुरिवापरः ॥ ध्यात्वा[8] तत्परमं ज्योतिरात्मन्येवमथाव्ययम् ॥३२॥ अन्यच्च भवनं पुण्यं श्रीशृंगे मुनिपुंगवाः ॥ श्रीदेव्याः सर्वरत्नाढ्यं हैमं समणितोरणम् ॥ ३३ ॥ तत्र सा परमा शक्तिर्विष्णोरतिमनोरमा ॥ अनन्तविभवा लक्ष्मीर्जगत्संमोहनोत्सुका ॥३४॥ अध्यास्ते देवगन्धर्वसिद्धचारणवन्दिता ॥ विचिन्त्या जगतो योनिः स्वशक्तिकिरणोज्ज्वला ॥ ३५ ॥ तत्रैव देवदेवस्य विष्णोरायतनं महत् ॥ सरांसि तत्र चत्वारि विचित्रकमलाश्रयाः ॥ ३६ ॥ तथा सहस्रशिखरे विद्याधरपुराष्टकम् ॥ रत्नसोपानसंयुक्तं सरोभिश्चोपशोभितम् ॥ ३७ ॥ नद्यो विमलपानीयाश्चित्रनीलोत्पलाकराः ॥

१ शोभितमिति पा० । २ प्रधानत इति पा० । ३ महावीर्या इति पा० । ४ योगनिरतचित्तानामित्यर्थः । ५ शिखान्तान्तरसंस्थितम् इति पा० । ६ सुमेघे इति, अमोघमिति पा० । ७ साक्षादानन्दमैश्वरमिति पा० । ८ ध्यात्वास्ते तत्परं ज्योतिरात्मानं विष्णुमव्ययमिति पा० ।

कर्णिकारवनं दिव्यं तत्रास्ते शंकरः[1] स्वयम् ॥ ३८ ॥ पारिजाते[2] महालक्ष्म्याः पर्वते तु पुरं शुभम् ॥ रम्यप्रासादसंयुक्तं घण्टाचामर भूषितम् ॥ ३९ ॥ नृत्यद्भिरप्सरःसंघैरितश्चेतश्च शोभितम् ॥ मृदंगपणवोद्घुष्टं वेणुवीणानिनादितम् ॥ ४० ॥ गन्धर्वकिन्नराकीर्णं संवृतं सिद्धपुंगवैः ॥ भास्वद्भिर्भूश्च[3] समायुक्तं महाप्रासादसङ्कुलम् ॥ ४१ ॥ महागणेश्वरैर्जुष्टं[4] धार्मिकाणां सुदर्शनम् ॥ तत्र सा वसते देवी नित्यं योगपरायणा ॥ ४२ ॥ महालक्ष्मीर्महादेवी त्रिशूलवरधारिणी ॥ त्रिनेत्रा सर्वशक्त्यौघसंवृता सा[5] च तन्मयी ॥ ४३ ॥ पश्यन्ति तत्र मुनयः सिद्धा ये ब्रह्मवादिनः ॥ सुपार्श्वस्योत्तरे भागे सरस्वत्याः पुरोत्तमम् ॥४४॥ सरांसि सिद्धजुष्टानि देवभोग्यानि सत्तमाः ॥ पाण्डुरस्य गिरेः शृंगे विचित्रद्रुमसङ्कुलम्[6] ॥ ४५ ॥ गन्धर्वाणां पुरशतं दिव्यस्त्रीभिः समावृतम् ॥ तत्र नित्यं मदोत्सिक्ता नरा नार्यस्तथैव च ॥ ४६ ॥ क्रीडन्ति मुदिता नित्यं विलासैर्भोगतत्पराः ॥ अञ्जनस्य गिरेः शृंगे नारीपुरमनुत्तमम् ॥ ४७ ॥ वसन्ति तत्राप्सरसो रम्भाद्या रतिलालसाः ॥ चित्रसेनादयो यत्र समायान्त्यर्थिनः सदा ॥ ४८ ॥ सा पुरी सर्वरत्नाढ्या नैकप्रस्रवणैर्युता ॥ अनेकानि पुराणि स्युः कौमुदे चापि सत्तमाः[7] ॥ ४९ ॥ रुद्राणां शान्तरजसामीश्वरासक्तचेतसाम् ॥ तेषु रुद्रा महायोगा महेशान्तरचारिणः ॥५०॥ समासते पुरं ज्योतिरारूढाः स्थानमैश्वरम्[8] ॥ पिञ्जरस्य गिरेः शृङ्गे गणेशानां पुरत्रयम् ॥ ५१ ॥ नदीश्वरस्य कपिला तत्रास्ते स महामतिः ॥ तथा च जारुधेः शृङ्गे देवदेवस्य धीमतः ॥ ५२ ॥ दीप्तमायतनं पुण्यं भास्करस्यामितौजसः ॥ तस्यैवोत्तरदिग्भागे चन्द्रस्थानमनुत्तमम् ॥ ५३ ॥ वसते तत्र रम्यात्मा भगवान् शान्तदीधितिः ॥ अन्यत्र भवनं दिव्यं हंसशैले महर्षयः ॥ ५४ ॥ सहस्रयोजनायामं सुवर्णमणितोरणम् ॥ तत्रास्ते भगवान् ब्रह्मा सिद्धसङ्घैरभिष्टुतः ॥ ५५ ॥ सावित्र्या सह विश्वात्मा वासुदेवादिभिर्युतः[9] ॥ तस्य दक्षिणदिग्भागे सिद्धानां पुरमुत्तमम्[10] ॥५६॥ सनन्दनादयो यत्र वसन्ति मुनिपुंगवाः ॥ पञ्चशैलस्य शिखरे दानवानां पुरत्रयम् ॥५७॥

१ शंकरोऽम्बया इति पा० । २ परिपात्रे महाशैले महालक्ष्म्याः इति पा० । ३ रत्नभित्तिसमायुक्तामिति, भास्वद्भित्तिसमाकीर्णमिति पा० । ४ गणेश्वरादिना युक्तामिति, गणेश्वराङ्गनाजुष्टमिति पा० । ५ सद्रसन्मया इति पा० । ६ संकुले इति पा० । ७ सुव्रताः इति पा० । ८ स्थानमुत्तमामिति पा० । ९ वामदेवादिभिरिति पा० । १० पुरसत्तममिति पा० ।

नातिदूरेण तस्माच्च दत्त्याचार्यस्य धीमतः ॥ सुगन्धशैलशिखरे सरिद्भिरुपशोभितम् ॥ ५८ ॥ कर्दमस्याश्रमं पुण्यं तत्रास्ते भगवानृषिः ॥ तस्यैव पूर्वदिग्भागे किञ्चिद्दूरे दक्षिणाश्रिते ॥ ५९ ॥ सनत्कुमारो भगवांस्तत्रास्ते ब्रह्मवित्तमः ॥ सर्वेष्वेतेषु शैलेषु तथान्येषु मुनीश्वराः ॥ ६० ॥ सरांसि विमला नद्यो देवानामालयानि च ॥ सिद्धलिंगानि पुण्यानि मुनिभिः स्थापितानि च ॥ ६१ ॥ तानि चायतनान्याशु संख्यातुं नैव शक्यते ॥ एष संक्षेपतः प्रोक्तो जम्बूद्वीपस्य विस्तरः ॥ न शक्यो विस्तराद्वक्तुं मया वर्षशतैरपि ॥ ६२ ॥ इति श्रीकूर्मपुराणे जम्बूद्वीपवर्णनं नामा × षट्चत्वारिंशोऽध्यायः ॥ ४८ ॥ अथ भुवनविन्यासवर्णनम् ॥ सूत उवाच ॥ जम्बूद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः ॥ संवेष्टयित्वा[3] क्षीरोदं प्लक्षद्वीपो व्यवस्थितः ॥ १ ॥ प्लक्षद्वीपे च विप्रेन्द्राः सप्तासन्कुलपर्वताः ॥ सिद्धायुताः सुपर्वाणः सिद्धसङ्घनिषेविताः ॥ २ ॥ गोमेदः प्रथमस्तेषां द्वितीयश्चन्द्र उच्यते ॥ नारदो दुन्दुभिश्चैव मणिमान्मेघनिस्वनः ॥ ३ ॥ वैभ्राजः सप्तमस्तेषां ब्रह्मणोऽत्यन्तवल्लभः ॥ तत्र देवर्षिगन्धर्वैः सिद्धैश्च भगवानजः ॥ ४ ॥ उपास्यते स विश्वात्मा साक्षी सर्वस्य विश्वदृक् ॥ तेषु पुण्या जनपदा आधयो व्याधयो न च ॥ ५ ॥ न तत्र पापकर्त्तारः पुरुषा वै कथञ्चन ॥ तेषां नद्यश्च सप्तैव वर्षाणां तु समुद्रगाः ॥६॥ तासु ब्रह्मर्षयो नित्यं पितामहमुपासते ॥ अनुतप्ताशिखे चैव विपापा त्रिदिवा कृता ॥ ७ ॥ अमृता सुकृता चैव नामतः परिकीर्त्तिताः ॥ क्षुद्रनद्यस्तु विख्याताः सरांसि च बहून्यपि ॥८॥ न चैतेषु युगावस्था पुरुषा वै चिरायुषः ॥ आर्यकाः कुरुराश्चैव विदेहा भाविनस्तथा ॥९॥ ब्रह्मक्षत्रियविट्शूद्रास्तस्मिन्द्वीपे प्रकीर्त्तिताः॥ इज्यते भगवानीशो वर्णैस्तत्र निवासिभिः॥१०॥तेषाञ्च सोमसाम्राज्यं सारूप्यं मुनिपुङ्गवाः ॥ सर्वे धर्मरता नित्यं सर्वे मुदितमानसाः ॥ ११॥ पञ्चवर्षसहस्राणि जीवन्ति च निरामयाः ॥ प्लक्षद्वीपप्रमाणं तु द्विगुणेन समन्ततः ॥ १२ ॥ संवेष्ट्येक्षुरसाम्भोधिं शाल्मलिः संव्यवस्थितः ॥ सप्त वर्षाणि तत्रापि सप्तैव कुलपर्वताः ॥१३॥

---

१ अत्र क्लीबत्वमार्षम् । २ वन्यान्याश्रमवर्याणीति पा० । × सप्तचत्वारिंशः लि० पु० । ३ संवेष्टयित्वा इत्यार्षम् संवेष्ट्य इति साधु । ४ सोमस्य ऋषभस्तथेति पा० । ५ भगवान् सोमः इति पा० । ६ सोमसायुज्यमिति पा० ।

ऋज्वायताः सुपर्वाणः सप्त नद्यश्च सुव्रताः ॥ कुमुदश्चान्नदश्चैव तृतीयश्च बलाहकः ॥ १४ ॥ द्रोणः कंसस्तु महिषः ककुद्मान् सप्तमस्तथा ॥ योनी तोया वितृष्णा च चन्द्रा शुक्ला विमोचनी ॥ १५ ॥ निवृत्तिश्चेति ता नद्यः स्मृताः पापहरा नृणाम् ॥ न तेषु विद्यते लोभः क्रोधो वा द्विजसत्तमाः ॥ १६ ॥ न चैवास्ति युगावस्था जना जीवन्त्यनामयाः ॥ यजन्ति सततं तत्र वर्णा वायुं सनातनम् ॥ १७ ॥ तेषां तत्साधनं युक्तं सारूप्यञ्च सलोकता ॥ कपिला ब्राह्मणाः प्रोक्ता राजानश्चारुणास्तथा ॥ १८ ॥ पीता वैश्याः स्मृताः कृष्णा द्वीपेऽस्मिन् वृषला द्विजाः ॥ शाल्मलस्य तु विस्ताराद्द्विगुणेन समन्ततः ॥ १९ ॥ संवेष्ट्य तु सुरोदाब्धिं कुशद्वीपो व्यवस्थितः ॥ विद्रुमश्चैव होमश्च द्युतिमान् पुष्पवांस्तथा ॥ २० ॥ कुशेशयो हरिश्चैव मन्दरः सप्त पर्वताः ॥ धूतपापा शिवा चैव पवित्रा संमिता तथा ॥ २१ ॥ तथा विद्युत्प्रभा रामा महानद्यश्च सप्त वै ॥ अन्याश्च शतशो विप्रा नद्यो मणिजलाः शुभाः ॥ २२ ॥ तास्तु ब्रह्माणमीशानं देवाद्याः पर्युपासते ॥ ब्राह्मणा द्रविणो विप्राः क्षत्रियाः शुष्मिणस्तथा ॥ २३ ॥ वैश्याःस्तोभास्तु मन्देहाः शूद्रास्तत्र प्रकीर्त्तिताः ॥ नरोऽपि ज्ञानसम्पन्ना मैत्र्यादिगुणसंयुताः ॥ २४ ॥ यथोक्तकारिणः सर्वे सर्वे भूतहिते रताः ॥ यजन्ति यज्ञैर्विविधैर्ब्रह्माणं परमेष्ठिनम् ॥ २५ ॥ तेषाञ्च ब्रह्मसायुज्यं सारूप्यञ्च सलोकता ॥ कुशद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः ॥ २६ ॥ क्रौञ्चद्वीपः स्थितो विप्रा वेष्टयित्वा घृतोदधिम् ॥ क्रौंचो वामनकश्चैव तृतीयश्चाधिकारिकः ॥ २७ ॥ देवावृदश्च विवेदश्च पुण्डरीकस्तथैव च ॥ नाम्ना च सप्तमः प्रोक्तः पर्वतो दुन्दुभिस्वनः ॥ २८ ॥ गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ॥ कोभिश्च पुण्डरीकाक्षा नद्यः प्राधान्यतः स्मृताः ॥ २९ ॥ पुष्कलाः पुष्करा धन्यास्तिष्या वर्णाः क्रमेण वै ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव द्विजोत्तमाः ॥ ३० ॥ अर्चयन्ति महादेवं यज्ञदानशमादिभिः ॥ व्रतोपवासैर्विविधैर्होमैश्चं पितृतर्पणैः ॥ ३१ ॥ तेषां वै रुद्रसायुज्यं सारूप्यं चातिदुर्लभम् ॥ सलोकता च सामीप्यं

१ सप्त पर्वता इति पा० । २ यान्ति तेभ्यो वितृष्णा इति पा० । ३ तेषां तस्याथ सायुज्यमिति पा० । ४ हेमश्च इति पा० । ५ विद्युदन्ता मही चेति नद्यस्तत्र जलावहाः इति पा० । ६ वैश्याः स्नेहास्तु इति पा० । ७ सर्वविज्ञानसंपन्ना इति पा० । ८ दिवावृत्तगिरीन्द्रश्च इति, देवपूर्वोगिरिन्द्रश्च इति पा० । ९ तिष्यान्तस्य इति, तिष्यास्तत्र इति पा० । १० होमैः स्वाध्यायतर्पणैरिति पा० ।

जायते तत्प्रसादतः ॥ ३२ ॥ क्रौंचद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः ॥ शाकद्वीपः स्थितो विप्रा आवेष्ट्य दधिसागरम् ॥ ३३ ॥ उदयो रैवतश्चैव श्यामकोष्ठगिरिस्तथा ॥ आम्बिकेयस्तथा रम्यः केसरी चेति पर्वताः ॥ ३४ ॥ सुकुमारी कुमारी च नलिनी वेणुका तथा ॥ इक्षुका धेनुका चैव गभस्तिश्चेति निम्नगाः ॥३५॥ आसां पिबन्तः सलिलं जीवन्ति तत्र मानवाः ॥ अनामयाश्चाशोकाश्च रागद्वेषविवर्जिताः ॥ ३६ ॥ मृगाश्च मगधाश्चैव मानसा मन्दगास्तथा ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चात्र क्रमेण तु ॥ ३७ ॥ यजन्ति सततं देवं सर्वलोकैकसाक्षिणम् ॥ व्रतोपवासैर्विविधैर्देवदेवं दिवाकरम् ॥३८॥ तेषां वै सूर्यसायुज्यं सामीप्यञ्च सरूपता॥ सलोकता च विप्रेन्द्रा जायते तत्प्रसादतः॥३९॥ शाकद्वीपं समावृत्य क्षीरोदः सागरः स्थितः ॥ श्वेतद्वीपश्च तन्मध्ये नारायणपरायणाः ॥ ४० ॥ तत्र पुण्या जनपदा नानाश्चर्यसमन्विताः ॥ श्वेतास्तत्र नरा नित्यं जायन्ते विष्णुतत्पराः ॥ ४१ ॥ नाधयो व्याधयस्तत्र जरामृत्युभयं न च ॥ क्रोधलोभविनिर्मुक्ता मायामात्सर्यवर्जिताः ॥ ४२ ॥ नित्यपुष्टा निरातङ्का नित्यानन्दाश्च भोगिनः ॥ नारायणसमाः सर्वे नारायणपरायणाः ॥ ४३ ॥ केचिद्ध्यानपरा नित्यं योगिनः संयतेन्द्रियाः ॥ केचिज्जपन्ति तप्यन्ति केचिद्विज्ञानिनोऽपरे ॥ ४४ ॥ अन्ये निर्बीजयोगेन ब्रह्मभावेन भाविताः ॥ ध्यायन्ति तत्परं ब्रह्म वासुदेवं सनातनम् ॥ ४५ ॥ एकान्तिनो निरालम्बा महाभागवताः परे ॥ पश्यन्ति तत्परे[3] ब्रह्म विष्ण्वाख्यं तमसः परम् ॥ ४६ ॥ सर्वे चतुर्भुजाकाराः शंखचक्रगदाधराः ॥ सुपीतवाससः सर्वे श्रीवत्साङ्कितवक्षसः ॥ ४७ ॥ अन्ये महेश्वरपरास्त्रिपुण्ड्राङ्कितमस्तकाः ॥ सुयोगाद्भूतिकरणा महागरुडवाहनाः ॥ ४८ ॥ सर्वे शक्तिसमायुक्ता नित्यानन्दाश्च निर्मलाः ॥ वसन्ति तत्र पुरुषा विष्णोरन्तरचारिणः ॥ ४९ ॥ तत्र नारायणस्यान्यद्दुर्गमं दुरतिक्रमम् ॥ नारायणं नाम पुरं प्रासादैरुपशोभितम् ॥५०॥ हेमप्राकारसंयुक्तं स्फाटिकैर्मण्डपैर्युतम् ॥ प्रभासहस्रकलिलं दुराधर्षं सुशोभनम् ॥५१॥ हर्म्यप्रासादसंयुक्तं महाट्टालसमाकुलम् ॥ हेमगोपुरसाहस्रैर्नानारत्नोपशोभितैः ॥५२॥ शुभ्रास्तरणसंयुक्तैर्विचित्रैः समलंकृतम् ॥ नन्दनै

१ श्यामाकास्त इति पा० । २ परं पदमिति पा० । ३ परममिति पा० । ४ व्यासाद्यैरिति पा० । ५ प्राकार इति पा० ।

विविधाकारैः स्रवन्तीभिश्च शोभितम् ॥ ५३ ॥ सरोभिः सर्वतो युक्तं वीणावेणुनिनादितम् ॥ पताकाभिर्विचित्राभिरनेकाभिश्च शोभितम् ॥ ५४ ॥ वीथिभिः सर्वतो युक्तं सोपानै रत्नभूषितैः ॥ नंदीशतसहस्राढयं दिव्य[2]गाननिनादितम् ॥ ५५ ॥ हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ॥ चातुर्द्वारमनौपम्यमगम्यं देवविद्विषाम् ॥ ५६ ॥ तत्र तत्राप्सरःसंघैर्नृत्यद्भिरुपशोभितम् ॥ नानागीतविधानज्ञैर्देवानामपि दुर्लभैः ॥५७॥ नानाविलाससम्पन्नैः कामुकैरतिकोमलैः ॥ प्रभूतचन्द्रवदनैर्नूपुरारावसंयुतैः ॥५८॥ ईषत्स्मितैः सुबिम्बोष्ठैर्बालमुग्धमृगेक्षणैः ॥ अशेषविभवोपेतैस्तनुमध्याविभूषितैः ॥ ५९ ॥ सुराजहंसचलनैः सुवेषैर्मधुरस्वनैः ॥ संला[3]पालापकुशलैर्दिव्याभरणभूषितैः ॥ ६० ॥ स्तनभारविनम्रैश्च मधुघूर्णितलोचनैः ॥ नानावर्णविचित्राङ्गैर्नानाभोगरतिप्रियैः ॥ ६१ ॥ उत्फुल्लकुसुमोद्यानैस्तद्भूतशतशोभितम् ॥ असंख्येयगुणं शुद्धमसंख्यैस्त्रिदशैरपि ॥ ६२ ॥ श्रीमत्पवित्रं देवस्य श्रीपतेरमितौजसः ॥ तस्य मध्येऽतितेजस्कमुद्यत्प्राकारतोरणम् ॥ ६३ ॥ स्थानं तद्वैष्णवं दिव्यं योगिनां सिद्धिदायकम् ॥ तन्मध्ये भगवानेकः पुण्डरीकदलद्युतिः ॥ ६४ ॥ शेतेऽशेषजगत्सूतिः शेषाहिशयने हरिः ॥ विचिन्त्यमानो योगीन्द्रैः सनन्दनपुरोगमैः ॥ ६५ ॥ स्वात्मानन्दामृतं पीत्वा पुरस्तात्तमसः परः ॥पीतवासा[4] विशालाक्षो महामायो महाभुजः ॥ ६६ ॥ क्षीरोदकन्यया नित्यं गृहीतचरणद्वयः ॥ सा च देवी जगद्वन्द्या पादमूले हरिप्रिया।६७।समास्ते तन्मना नित्यं पीत्वा नारायणामृतम्॥न तत्राधार्मिका यान्ति न च देवा[5]न्तरालयाः।६८॥ वैकुण्ठं नाम तत्स्थानं त्रिदशैरपि वन्दितम्॥न मे प्रभवति प्रज्ञा कृत्स्नं[6]शास्त्रनिरूपणे॥६९॥ एतावच्छक्यते वक्तु नारायणपुरं हि तत् ॥ स एव परमं ब्रह्म वासुदेवः सनातनः ॥ ७० ॥ शेते नारायणः श्रीमान्मायया मोहयञ्जगत् ॥ ७१ ॥ नारायणादिदं जातं तस्मिन्नेव व्यवस्थितम् ॥ तमा[7]श्रयाति कालान्ते स एव परमा गतिः ॥ ७२ ॥ इति श्रीकूर्मपुराणे भुवनविन्यास० ×एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

१ नारीति पा० । २ दिव्यगेयसमन्वितमिति, दिव्यपेयसमन्वितमिति पा० । ३ संलापोल्लाप इति पा० । ४ सुपीतवसनोऽनन्तः इति पा० । ५ देवान्तराश्रयाः इति पा० । ६ कृष्णशास्त्र इति पा० । ७ तमेवाभ्येति इति, तं समभ्येति कल्पान्ते इति पा० । × अष्टचत्वारिंशः लि० पु० ।

सूत उवाच ॥ शाकद्वीपस्य विस्ताराद्द्विगुणेन व्यवस्थितः ॥ क्षीरार्णवं समाश्रित्य द्वीपं पुष्करसंज्ञितम् ॥ १ ॥ एक एवात्र विप्रेन्द्राः पर्वतो मानसोत्तरः ॥ योजनानां सहस्राणि चोर्द्ध्वं पञ्चाशदुच्छ्रितः ॥ २ ॥ तावदेव च विस्तीर्णः सर्वतः पारिमण्डलः ॥ स एव द्वीपश्चार्द्धेन मानसोत्तरसंस्थितः ॥ ३ ॥ एक एव महाभागः सन्निवेशो द्विधा कृतः ॥ तस्मिन्द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ ॥ ४ ॥ अपरौ मानसस्याथ पर्वतस्यानुमण्डलौ ॥ महावीतं स्मृतं वर्षं धातकीखण्डमेव च ॥ ५ ॥ स्वादूदकेनोदधिना पुष्करः परिवारितः ॥ तस्मिन्द्वीपे महावृक्षो न्यग्रोधोऽमरपूजितः ॥ ६ ॥ तस्मिन्निवसति ब्रह्मा विश्वात्मा विश्वभावनः ॥ तत्रैव मुनिशार्दूल शिवनारायणालयः ॥ ७ ॥ वसत्यत्र महादेवो हरोऽर्द्धं हरिरव्ययः ॥ सम्पूज्यमानो ब्रह्माद्यैः कुमाराद्यैश्च योगिभिः ॥ ८ ॥ गन्धर्वैः किन्नरैर्यक्षैरीश्वरः कृष्णपिङ्गलः ॥ स्वस्थास्तत्र प्रजाः सर्वा ब्राह्मणाः शतशस्त्विषः ॥ ९ ॥ निरामया विशोकाश्च रागद्वेषविवर्जिताः ॥ सत्यानृते न तत्रास्तां नोत्तमाधममध्यमाः ॥ १० ॥ न वर्णाश्रमधर्माश्च न नद्यो न च पर्वताः ॥ परेण पुष्करेणाथ समावृत्य स्थितो महान् ॥ ११ ॥ स्वादूदकसमुद्रस्तु समन्ताद्द्विजसत्तमाः ॥ परेण तस्य महती दृश्यते लोकसंस्थितिः ॥ १२ ॥ काञ्चनी द्विगुणा भूमिः सर्वत्रैकशिलोपमा ॥ तस्याः परेण शैलस्तु मर्यादा भानुमण्डलः ॥ १३ ॥ प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ॥ योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः ॥ १४ ॥ तावानेव च विस्तारो लोकालोकमहागिरेः ॥ समावृत्य तु तं शैलं सर्वतो वै समस्थितम् ॥ १५ ॥ तमश्चाण्डकटाहेन समन्तात्परिवेष्टितम् ॥ एते सप्त महालोकाः पातालाः सम्प्रकीर्त्तिताः ॥ १६ ॥ ब्रह्माण्डांशेषविस्तारः संक्षेपेण मयोदितः ॥ अण्डानामीदृशानां तु कोट्यो ज्ञेयाः सहस्रशः ॥ १७ ॥ सर्वगत्वात्प्रधानस्य कारणस्याव्ययात्मनः ॥ अण्डेष्वेतेषु सर्वेषु भुवनानि चतुर्दश ॥ १८ ॥ तत्र तत्र चतुर्वक्त्रा रुद्रा नारायणादयः॥ दशोत्तरमथैकैकमण्डावरणसप्तकम्॥ १९ ॥ समन्तात्संस्थितं

१ समावृत्य इति पा० । २ संज्ञितः इति पा० । ३ महाबीजमिति पा० । ४ ब्राह्मणाः सदृशत्विषः इति, सदृशायुषः इति पा० । ५ स्थाणुमण्डल इति पा० । ६ सप्त कीर्त्तिता इति पा० । ७ ब्रह्माण्डस्यैव इति पा० । ८ वरक इति पा० ।

विप्रास्तत्र यान्ति मनीषिणः ॥ अनन्तमेवमव्यक्तमनादिनिधनं महत् ॥ २० ॥ अतीत्य वर्त्तते सर्वं जगत्प्रकृतिरक्षरम् ॥ अनन्तत्वमनन्तस्य यतः संख्या न विद्यते ॥ २१ ॥ तदव्यक्तमिदं ज्ञेयं तद्ब्रह्म परमं ध्रुवम् ॥ अनन्त एष सर्वत्र सर्वस्थानेषु पठ्यते ॥ २२ ॥ तस्य पूर्वं मयाप्युक्तं यत्तन्माहात्म्यमुत्तमम् ॥ गतः स एष सर्वत्र सर्वस्थानेषु पूज्यते ॥ २३ ॥ भूमौ रसातले चैव आकाशे पवनेऽनले ॥ अर्णवेषु च सर्वेषु दिवि चैव न संशयः ॥ २४ ॥ तथा तमसि तत्त्वे वाप्येष एव महाद्युतिः ॥ अनेकधा विभक्ताङ्गः क्रीडते पुरुषोत्तमः ॥२५॥ महेश्वरः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ॥ अण्डाद्ब्रह्मा समुत्पन्नस्तेन सृष्टमिदं जगत् ॥ २६ ॥ इति श्रीकूर्मपुराणे भुवनकोशवर्णनं नाम पञ्चाशोऽध्यायः ॥ ५० ॥ अथ मन्वन्तरकीर्तने विष्णुमाहात्म्यम् ॥ ऋषय ऊचुः ॥ अतीतानागतानीह यानि मन्वन्तराणि वै ॥ तानि त्वं कथयास्मभ्यं व्यासश्च द्वापरे युगे ॥१॥ वेदशाखाप्रणयिनो देवदेवस्य धीमतः ॥ धर्मार्थानां प्रवक्तारो हीशानस्य कलौ युगे ॥२॥ कियन्तो देवदेवस्य शिष्याः कलियुगेऽपि वै ॥ एतत्सर्वं समासेन सूत वक्तुमिहार्हसि ॥३॥ सूत उवाच ॥ मनुः स्वायम्भुवः पूर्वं ततः स्वारोचिषो मतः ॥ उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ ४ ॥ षडेते मनवोऽतीताः साम्प्रतं तु रवेः सुतः ॥ वैवस्वतोऽयं सप्तैतत्सप्तमं वर्त्तते परम् ॥ ५ ॥ स्वायम्भुवं तु कथितं कल्पादावन्तरं मया ॥ अत ऊर्द्ध्वं निबोधध्वं मनोः स्वारोचिषस्य तु ॥ ६ ॥ पारावताश्च तुषिता देवाः स्वारोचिषेऽन्तरे ॥ विपश्चिन्नाम देवेन्द्रो बभूवासुरमर्दनः ॥ ७ ॥ ऊर्जस्तम्भस्तथा प्राणो दान्तोऽथ ऋषभस्तथा ॥ तिमिरश्चार्वरीवांश्च सप्त सप्तर्षयोऽभवन् ॥ ८ ॥ चैत्राकिम्पुरुषाद्यास्तु सुताः स्वारोचिषस्य तु ॥ द्वितीयमेतदाख्यातमन्तरं शृणु चोत्तमम् ॥ ९ ॥ तृतीयेऽप्यन्तरे चैव उत्तमो नाम वै मनुः ॥ सुशान्तिस्तत्र देवेन्द्रो बभूवामित्रकर्षणः ॥ १० ॥ सुधामानस्तथा सत्यः शिवश्चाथ प्रतर्द्दनः ॥ वशवर्त्तिनः पञ्चैते गणा द्वादशकाः स्मृताः ॥ ११ ॥ रजोगात्रोर्द्ध्वबाहुश्च सवन

१ तदव्यक्तमिति प्रोक्तं ज्ञेय तत्परमं पदमिति पा० । २ विभक्तश्च इति पा० । × एकोनपंचाशः लि० पु० । ३ तथावतारान्धर्मार्थमीशानस्य इति पा० । ४ स्वारोचिषस्ततः इति पा० । ५ यस्यैतत्सप्तमो वर्त्ततेऽन्तरः इति पा० । ६ सूदन इति पा० ।

श्वानघस्तथा ॥ सुतपाः शक्र इत्येते सप्त सप्तर्षयोऽभवन् ॥ १२ ॥ तामसस्यान्तरे देवाः सुरांयासहरास्तथा ॥ सत्याश्च सुधियश्चैव सप्तविंशतिका गणाः ॥ १३ ॥ शिबिरिन्द्रस्तथैवासीच्छतयज्ञोपलक्षणः ॥ बभूव शङ्करे भक्तो महादेवार्च्चने रतः ॥ १४ ॥ ज्योतिर्द्धाम पृथक्कल्पश्चैत्रोऽग्निश्वसनस्तथा ॥ पीवरस्त्वृषयो ह्येते सप्त तत्रापि चान्तरे ॥१५॥ पञ्चमे चापि विप्रेन्द्रा रैवतो नाम नामतः ॥ मनुर्विभुश्च[3] तत्रेन्द्रो बभूवासुरमर्द्दनः ॥ १६ ॥ अमिता भूतयस्तत्र वैकुण्ठाश्च सुरोत्तमाः ॥ एते देवगणास्तत्र चतुर्दश चतुर्दश ॥ १७ ॥ हिरण्यरोमा वेदश्रीरूर्द्ध्वबाहुस्तथैव च ॥ वेदबाहुः सुबाहुश्च सपर्ज्जन्यो महामुनिः ॥ १८ ॥ एते सप्तर्षयो विप्रास्तत्रासन् रैवतेऽन्तरे ॥ स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा ॥ १९ ॥ प्रियव्रतान्विता ह्येते चत्वारो मनवः स्मृताः ॥ षष्ठे मन्वन्तरे चापि चाक्षुषस्तु मनुर्द्विजाः ॥ २० ॥ मनोजवस्तथैवेन्द्रो देवांश्चैव निबोधत ॥ आद्याः प्रभूतभाव्याश्च प्रथनाश्च दिवौकसः ॥ २१ ॥ महानुभावा लेख्याश्च पञ्च देवगणाः स्मृताः ॥ विरजाश्च हविष्मांश्च सोमो मनुसमः स्मृतः ॥ २२ ॥ अविनामा सविष्णुश्च सप्तासन्नृषयः शुभाः ॥ विवस्वतः सुतो विप्राः श्राद्धदेवो महाद्युतिः ॥ २३ ॥ मनुः संवर्त्तनो विप्राः साम्प्रतं सप्तमेऽन्तरे ॥ आदित्या वसवो रुद्रा देवास्तत्र मरुद्गणाः ॥ २४ ॥ पुरन्दरस्तथैवेन्द्रो बभूव परवीरहा ॥ वसिष्ठः कश्यपश्चात्रिर्जमदग्निश्च गौतमः ॥ २५ ॥ विश्वामित्रो भरद्वाजः सप्त सप्तर्षयोऽभवन् ॥ विष्णुशक्तिरनौपम्या सत्त्वोद्रिक्ता स्थिता स्थितौ ॥२६॥ तदंशभूता राजानः सर्वे च त्रिदिवौकसः॥ स्वायम्भुवेऽन्तरे पूर्वं प्रकृत्यां मानसः सुतः ॥ २७ ॥ रुचेः प्रजापतेर्जज्ञे तदंशेनाभवद्द्विजाः ॥ ततः पुनरसौ देवः प्राप्ते स्वारोचिषेऽन्तरे॥ २८ ॥ तुषितायां समुत्पन्नस्तुषितैः सह दैवतैः ॥ उत्तमे त्वन्तरे विष्णुः सत्यैः सह सुरोत्तमः ॥ २९ ॥ सत्यायामभवत्सत्यः सत्यरूपो

---

१ मृगबाहुवयस्तथा इति पा० । २ ज्योतिर्धर्मा पृथुः काव्यश्चैत्रोऽग्निर्वरुणस्तथा इति पा० । ३ वसुश्च इति पा० । ४ देवबाहुः सुधामा च पर्जन्यश्च इति पा० । ५ प्रसूता भव्याश्च पृथुगाश्च इति पा० । ६ पञ्चैते हष्टका गणा इति, पञ्चैतेऽप्यष्टका गणा इति पा० । ७ सुमेधा विरजाश्चैव हविष्मांश्च तमोमधुरिति, हविष्मानुत्तमो मधुरिति पा० ।

जनार्दनः ॥ तामसस्यान्तरे चैव सम्प्राप्ते पुनरेव हि ॥ ३० ॥ हर्यायां हरिभिर्देवैर्हरिरेवाभवद्धरिः ॥ रैवतेऽप्यन्तरे चैव सङ्कल्पान्मानसो हरिः ॥ ३१ ॥ सम्भूतो मानसैः सार्द्धं देवैः सह महाद्युतिः ॥ चाक्षुषेऽप्यन्तरे चैव वैकुण्ठः पुरुषोत्तमः ॥ ३२ ॥ विकुण्ठायामसौ जज्ञे वैकुण्ठैर्दैवतैः सह ॥ मन्वन्तरे च सम्प्राप्ते तथा वैवस्वतेऽन्तरे ॥ ३३ ॥ वामनः कश्यपाद्विष्णुरदित्यां सम्बभूव ह ॥ त्रिभिः क्रमैरिमाँल्लोकाञ्जित्वा येन महात्मना ॥ ३४ ॥ पुरन्दराय त्रैलोक्यं दत्तं निहतकण्टकम् ॥ इत्येतास्तनवस्तस्य सप्तमन्वन्तरेषु वै ॥ ३५ ॥ सप्त चैवाभवन्विप्रा याभिः सङ्कर्षिताः प्रजाः ॥ यस्माद्विश्वमिदं कृत्स्नं वामनेन महात्मना ॥ ३६ ॥ तस्मात्सर्वैः स्मृतो नूनं देवैः सर्वेषु दैत्यहा ॥ एष सर्वं सृजत्यादौ पाति हन्ति च केशवः ॥ ३७ ॥ भूतान्तरात्मा भगवान्नारायण इति श्रुतिः ॥ एकांशेन जगत्सर्वं व्याप्य नारायणः स्थितः ॥ ३८ ॥ चतुर्द्धा संस्थितो व्यापी सगुणो निर्गुणोऽपि च ॥ एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला ॥ ३९ ॥ वासुदेवाभिधाना सा गुणातीता सुनिष्कला ॥ द्वितीया कालसंज्ञान्या तामसी शिवसंज्ञिता ॥ ४० ॥ निहन्त्री सकलस्यान्ते वैष्णवी परमा तनुः ॥ सत्त्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च संज्ञिता ॥ ४१ ॥ जगत्संस्थापयेद्विश्वं सा विष्णोः प्रकृतिर्ध्रुवा ॥ चतुर्थी वासुदेवस्य मूर्त्तिर्ब्रह्मेति संज्ञिता ॥ ४२ ॥ राजसी सानिरुद्धस्य पुरुषसृष्टिकारिता ॥ यः स्वपित्यखिलं हत्वा प्रद्युम्नेन सह प्रभुः ॥ ४३ ॥ नारायणाख्यो ब्रह्मासौ प्रजासर्गं करोति सः ॥ यासौ नारायणतनुः प्रद्युम्नाख्या शुभा स्मृता ॥ ४४ ॥ तया सम्मोहयेद्विश्वं सदेवासुरमानुषम् ॥ ततः सैव जगन्मूर्त्तिः प्रकृतिः परिकीर्त्तिता ॥ ४५ ॥ वासुदेवो ह्यनन्तात्मा केवलो निर्गुणो हरिः ॥ प्रधानं पुरुषं कालः सत्त्वत्रयमनुत्तमम् ॥ ४६ ॥ वासुदेवात्मकं नित्यमेतद्विज्ञाय मुच्यते ॥ एकं चेदं चतुष्पादं चतुर्द्धा पुनरच्युतः ॥ ४७ ॥ बिभेद वासुदेवोऽसौ

१ हरिरेषोऽभवदिति पा० । २ संभूत्यां मानसोऽभवदिति, सम्भूत्यां मानसो हरिरिति पा० । ३ त्रिविक्रमैरिति पा० । ४ विष्णुर्विधेर्धातोः प्रवेशनादिति, देवैः सर्वदेवेषु दैत्यहा इति पा० । ५ चतुर्द्धास्थितः इति पा० । ६ तया संमोहयेद्विश्वं सदेवासुरमानुषम्, जगत्स्थापयने सर्वमिति च पा० । ७ चानिरुद्धाख्या प्रद्युम्नमूर्त्तिकारिका इति पा० । ८ एकं देवमिति पा० ।

प्रद्युम्नो भगवान् हरिः ॥ कृष्णद्वैपायनो व्यासो विष्णुर्नारायणः स्वयम् ॥ ४८ ॥ अज्ञातरतस्तु सम्पूर्णं स्वेच्छया भगवान् हरिः ॥ अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः ॥ ४९ ॥ एकोऽयं वेद भगवान् व्यासो नारायणः प्रभुः ॥ इत्येतद्विष्णुमाहात्म्यं कथितं मुनिसत्तमाः ॥ एतत्सत्यं[1] पुनः सत्यमेवं ज्ञात्वा न मुह्यति ॥ ५० ॥ इति श्रीकूर्मपुराणे मन्वन्तरकीर्त्तने विष्णुमाहात्म्यं नामैकपञ्चाशो[×]ऽध्यायः ॥ ५१ ॥ अथ वेदशाखाप्रणयनम् ॥ सूत उवाच ॥ अस्मिन्मन्वन्तरे पूर्वं वर्त्तमाने महान् प्रभुः[2] ॥ द्वापरे प्रथमे व्यासो[3] मनुः स्वायम्भुवो मतः ॥ १ ॥ बिभेद बहुधा वेदं नियोगाद्ब्रह्मणः प्रभोः ॥ द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ॥ २ ॥ तृतीये चोशना व्यासश्चतुर्थे स्याद्बृहस्पतिः ॥ सविता पञ्चमे व्यासः षष्ठे मृत्युः प्रकीर्तितः ॥ ३ ॥ सप्तमे च तथैवेन्द्रो वसिष्ठश्चाष्टमे मतः ॥ सारस्वतश्च[4] नवमे त्रिधामा दशमे मतः ॥ ४ ॥ एकादशे तु ऋषभः सुतेजा द्वादशे स्मृतः ॥ त्रयोदशे तथा धर्मः सुचक्षुस्तु चतुर्दशे ॥ ५ ॥ त्रय्यारुणिः पञ्चदशे षोडशे तु धनञ्जयः ॥ कृतञ्जयः सप्तदशे ह्यष्टादशे ऋतञ्जयः ॥ ६ ॥ ततो व्यासो भरद्वाजस्तस्मादूर्द्ध्वं तु गौतमः ॥ वाचश्रवाश्चैकविंशे तस्मान्नारायणः[5] परः ॥ ७ ॥ तृणबिन्दुस्त्रयोविंशे वाल्मीकिस्तत्परः स्मृतः ॥ पञ्चविंशे तथा प्राप्ते यस्मिन्वै द्वापरे द्विजाः ॥ ८ ॥ (सप्तविंशे तथा व्यासो जातूकर्णो महामुनिः ॥) पराशरसुतो व्यासः कृष्णद्वैपायनोऽभवत् ॥ स एव सर्ववेदानां पुराणानां प्रदर्शकः ॥ ९ ॥ पाराशर्यो महायोगी कृष्णद्वैपायनो हरिः ॥ आराध्य देवमीशानं दृष्ट्वा स्तुत्वा त्रिलोचनम् ॥ १० ॥ तत्प्रसादादसौ व्यासं वेदानामकरोत्प्रभुः ॥ ११ ॥ अथ शिष्यान् स जग्राह चतुरो वेदपारगान् ॥ जैमिनिञ्च सुमन्तुञ्च वैशम्पायनमेव च ॥ १२ ॥ पैलं तेषां चतुर्थञ्च पञ्चमं मां महामुनिः ॥ ऋग्वेदपाठकं पैलं जग्राह स महामुनिः ॥ १३ ॥ यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ॥ जैमिनिं सामवेदस्य पाठकं सोऽन्वपद्यत ॥ १४ ॥ तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमम् ॥ इतिहासपुराणानि प्रवक्तुं

---

१ एतत्सर्वमिति पा० । × पंचाशः लि० पु० । २ विभुरिति पा० । ३ काल इति पा० । ४ वैवस्वतश्च इति पा० । ५ तस्मात् शुष्मायण इति पा० । ६ श्रुत्वा इति, साम्बमिति पा० । ७ श्रावकामिति पा० ।

मामयोजयत् ॥ १५ ॥ एक आसीद्यजुर्वेदस्तं चतुर्द्धा प्रकल्पयत् ॥ चतुर्होत्रमभूत्तस्मिंस्तेन यज्ञमथाकरोत् ॥ १६ ॥ आध्वर्यवं यजुर्भिः स्यादृग्भिर्होत्रं द्विजोत्तमाः ॥ औद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्वभिः ॥ १७ ॥ ततः सत्रे च उद्धृत्य ऋग्वेदं कृतवान् प्रभुः ॥ यजूंषि तु यजुर्वेदं सामवेदं तु सामभिः ॥ १८ ॥ एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा ॥ शाखानान्तु शतेनैव यजुर्वेदमथाकरोत् ॥ १९ ॥ सामवेदं सहस्रेण शाखानां प्रबिभेद सः ॥ अथर्वाणमथो वेदं बिभेद कुशकेतनः ॥ २० ॥ भेदैरष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः ॥ सोऽयमेकश्चतुष्पादो वेदः पूर्वं पुरातनः ॥ २१ ॥ ओङ्कारो ब्रह्मणो जातः सर्वदोषविशोधनः ॥ वेदविद्योऽथ भगवान्वासुदेवः सनातनः ॥ २२ ॥ स गीयते परो वेदैर्यो वेदैनं स वेदवित् ॥ एतत्परतरं ब्रह्म ज्योतिरानन्दमुत्तमम् ॥ २३ ॥ वेदवाक्योदितं तत्त्वं वासुदेवः परम्पदम् ॥ वेदविद्यमिमं[३] वेत्ति वेदं वेदपरो मुनिः ॥ २४ ॥ अवेदं परमं वेत्ति वेदनिःश्वासकृत्परः ॥ स वेदवेद्यो भगवान्वेदमूर्त्तिर्महेश्वरः ॥ २५ ॥ स एव वेद्यो वेदश्च तमेवाश्रित्य मुच्यते ॥ इत्येतदक्षरं वेदमोङ्कारं वेदमव्ययम् ॥ अवेदञ्च विजानाति पाराशर्यो महामुनिः ॥ २६ ॥ इति श्रीकूर्मपुराणे वेदशाखाप्रणयनं नाम द्वापञ्चाशोऽध्यायः ॥ ५२ ॥ सूत उवाच ॥ वेदव्यासावताराणि द्वापरे कथितानि तु ॥ महादेवावताराणि कलौ शृणुत सुव्रताः ॥ १ ॥ आद्ये कलियुगे श्वेतो देवदेवो महाद्युतिः ॥ नाम्ना हिताय विप्राणामभूद्वैवस्वतेऽन्तरे ॥ २ ॥ हिमवच्छिखरे रम्ये सकले पर्वतोत्तमे ॥ तस्य शिष्याः प्रशिष्याश्च बभूवुरमितप्रभाः ॥ ३ ॥ श्वेतः श्वेतशिखश्चैव श्वेतास्यः श्वेतलोहितः ॥ चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः ॥ ४ ॥ सुतारो मदनश्चैव सुहोत्रः कङ्कगस्तथा ॥ लोकाक्षिरत्नथ योगीन्द्रो जैगीषव्योऽथ सप्तमे ॥ ५ ॥ अष्टमे दधिवाहः स्यान्नवमे ऋषभः प्रभुः ॥ भृगुस्तु दशमे प्रोक्तस्तस्मादुग्रः पुरः स्मृतः ॥ ६ ॥ द्वादशेऽतिसमाख्यातो बाली वाथ त्रयोदशे ॥ चतुर्दशे गौतमस्तु वेददर्शी ततः परः ॥ ७ ॥ गोकर्णश्चाभवत्तस्माद्गुहावासः शिखण्डधृक् ॥

१ व्यकल्पयदिति पा० । २ नवकेन तु इति पा० । ३ वेदविद्यामिमामिति पा० । ४ वेदनिष्ठः सदेश्वरः इति, वेदनिष्ठं सदेश्वरमिति पा० । ५ अत्र क्लीबत्वमार्षम् । ६ आद्यो इति पा० । ७ शिखायुक्तः इति पा० । ८ सुभावो दमनश्चाथ इति पा० ।

यजमालयट्टहासश्च[1] दारुको लाङ्गली तथा ॥ ८ ॥ महायामो मुनिः शूली डिण्डमुण्डीश्वरः स्वयम् ॥ सहिष्णुः सोमशर्मा च नकुलीश्वर एव च ॥ ९ ॥ ( वैवस्वतेऽन्तरे शम्भोरवतारास्त्रिशूलिनः ॥ अष्टाविंशतिराख्याता ह्यन्ते कलियुगे प्रभोः ॥ तीर्थकार्यावतारे स्याद्देवेशो नकुलीश्वरः ॥ ) तत्र देवाधिदेवस्य चत्वारः सुतपोधनाः ॥ शिष्या बभूवुश्चान्येषां प्रत्येकं मुनिपुङ्गवाः ॥ १० ॥ प्रसन्नमनसो दान्ता ऐश्वरीं भक्तिमास्थिताः[2] ॥ क्रमेण तान्प्रवक्ष्यामि योगिनो योगवित्तमान् ॥११॥ ( श्वेतः श्वेतशिखश्चैव श्वेतास्यः श्वेतलोहितः ॥ ) दुन्दुभिः शतरूपश्च ऋचीकः केतुमांस्तथा ॥ विशोकश्च विकेशश्च[3] विशाखः शापनाशनः ॥ १२ ॥ सुमुखो दुर्मुखश्चैव दुर्दमो दुरतिक्रमः ॥ सनकः सनातनश्चैव तथैव च सनन्दनः ॥ १३ ॥ दाल्भ्यश्च[4] महायोगी धर्मात्मानो महौजसः ॥ सुधामा विरजाश्चैव शङ्खपाण्यज एव च ॥ १४ ॥ सारस्वतस्तथा मोघो धनवाहः सुवाहनः ॥ कपिलश्चासुरिश्चैव वोढुः पञ्चशिखो मुनिः ॥ १५ ॥ पराशरश्च गर्गश्च भार्गवश्चाङ्गिरास्तथा ॥ चलबन्धुर्निरामित्रः केतुशृङ्गस्तपोधनाः ॥ १६ ॥ लम्बोदरश्च लम्बश्च विकोशो लम्बकः शुकः ॥ सर्वज्ञः समबुद्धिश्च साध्यासाध्यस्तथैव च ॥ १७ ॥ सुधामा काश्यपश्चाथ वसिष्ठो विरजास्तथा ॥ अत्रिरुग्रस्तथा चैव श्रवणोऽथ सुवेद्यकः ॥ १८ ॥ कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ॥ कश्यपो ह्युशना चैव च्यवनोऽथ बृहस्पतिः ॥ १९ ॥ उचथ्यो वामदेवश्च महाकालो महानिलिः ॥ वाजश्रवाः सुकेशश्च श्यावाश्वः सुपथीश्वरः ॥ २० ॥ हिरण्यनाभः कौशिल्योऽकाक्षुः कुथुमियस्तथा ॥ सुमन्तवर्चसो विद्वान् कबन्धः कुषिकन्धरः ॥ २१ ॥ प्लक्षो दर्वायणिश्चैव केतुमान् गौतमस्तथा ॥ भल्लाची मधुपिंगश्च श्वेतकेतुस्तपोधनः ॥ २२ ॥ उषिधा बृहदक्षश्च देवलः कविरेव च ॥ शालहोत्राग्निवेश्यस्तु युवनाश्वः शरद्वसुः ॥ २३ ॥ छगलः कुण्डकर्णश्च कुन्तश्चैव प्रवाहकः ॥ उलूको विद्युतश्चैव शाद्वको ह्याश्वलायनः ॥ २४ ॥ अक्षपादः कुमारश्च ह्युलूको वसुवाहनः ॥ कुणिकश्चैव गर्गश्च

---

१ जटामालयश्चण्डहासः इति पा० । २ भक्तिमाश्रिताः इति पा० । ३ विश्वकेशः इति पा० । ४ विपापः इति पा० । ५ बाष्कलश्च इति पा० । ६ लम्बाक्षो लम्बकेशकः इति पा० । ७ उतथ्य इति पा० । ८ महाकायः इति पा० । ९ लोकाक्षिः कुथुमिस्तथा इति पा० । १० दर्णायनिरिति, दर्भायणिरिति पा० । ११ वत्स एव च इति पा० ।

मित्रको रुरुरेव च ॥ २५ ॥ शिष्या एते महात्मानः सर्वावर्त्तेषु योगिनाम् ॥ विमला ब्रह्मभूयिष्ठा ज्ञानयोगपरायणाः ॥ २६ ॥ कुर्वन्ति चावताराणि ब्राह्मणानां हिताय च ॥ योगेश्वराणामादेशाद्वेदसंस्थापनाय वै ॥ २७ ॥ ये ब्राह्मणाः संस्मरन्ति नमस्यन्ति च सर्वदा ॥ तर्पयन्त्यर्च्चयन्त्येतान् ब्रह्मविद्यामवाप्नुयुः ॥ २८ ॥ इदं वैवस्वतं प्रोक्तमन्तरं विस्तरेण तु ॥ भविष्यति च सावर्णो दक्षसावर्ण एव च ॥ २९ ॥ दशमो ब्रह्मसावर्णो धर्म एकादशः स्मृतः ॥ द्वादशो रुद्रसावर्णो रोच्यनामा त्रयोदशः ॥ ३० ॥ भौत्यश्चतुर्दशः प्रोक्तो भविष्या मनवः क्रमात् ॥ अयं वः कथितो ह्यंशः पूर्वो नारायणेरितः ॥ ३१ ॥ भूतैर्भव्यैर्वर्त्तमानैराख्यानैरुपबृंहितः ॥ यः पठेच्छृणुयाद्वापि श्रावयेद्वा द्विजोत्तमान् ॥ ३२ ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ पठेद्देवालये स्नात्वा नदीतीरेषु चैव हि ॥ ३३ ॥ नारायणं नमस्कृत्य भावेन पुरुषोत्तमम् ॥ नमो देवाधिदेवाय देवानां परमात्मने ॥ पुरुषाय पुराणाय विष्णवे प्रभविष्णवे ॥ ३४ ॥

इति श्रीकूर्मपुराणे पूर्वार्द्धे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥ ॥ इति कूर्मपुराणे पूर्वार्द्धं समाप्तम् ॥

१ सर्वावर्त्तेन इति, सर्वेऽध्येयाः सुयोगिनामिति पा० । २ रोचमानः इति पा० । ३ द्विजोत्तमाः इति पा० । ४ ब्रह्मणा सह मोदते इति पा० । ५ देवादिदेवाय इति पा० । ६ कूर्मरूपिणे इति पा० ।

## ॥ इति श्रीकूर्मपुराणे पूर्वार्द्धं समाप्तम् ॥



॥ श्रीगणेशाय नमः ॥   ॥ अथ कूर्मपुराणे उत्तरार्द्धं प्रारभ्यते ॥ अथेश्वरगीता ॥ ऋषय ऊचुः ॥ भवता कथितः सम्यक् सर्गः स्वायम्भुवः प्रभो[1] ॥ ब्रह्माण्डस्यादि[2]विस्तारो मन्वन्तरविनिश्चयः ॥ १ ॥ तत्रेश्वरेश्वरो देवो वर्णिभिर्धर्मतत्परैः ॥ ज्ञानयोगरतैर्नित्यमाराध्यः कथितस्त्वया ॥ २ ॥ तत्त्वश्चाशेषसंसारदुःखनाशं[3]मनुत्तमम् ॥ ज्ञानं ब्रह्मैकविषयं तेन पश्येम तत्परम् ॥ ३ ॥ त्वं हि नारायणः साक्षात् कृष्णद्वैपायनात्प्रभो ॥ अवाप्ताखिलविज्ञानस्तत्त्वां पृच्छामहे[4] पुनः ॥ ४ ॥ श्रुत्वा मुनीनां तद्वाक्यं कृष्णद्वैपायनात्प्रभुः ॥ सूतः पौराणिकः श्रुत्वा भाषितुं ह्युपचक्रमे ॥ ५ ॥ तथास्मिन्नन्तरे व्यासः कृष्णद्वैपायनः स्वयम् ॥ आजगाम मुनिश्रेष्ठा यत्र सत्रं समासते ॥ ६ ॥ तं दृष्ट्वा वेदविद्वांसङ्कालमेघसमद्युतिम् ॥ व्यासङ्कमलपत्राक्षं प्रणेमुर्द्विजपुङ्गवाः ॥ ७ ॥ पपात दण्डवद्भूमौ दृष्ट्वासौ लोमहर्षणः ॥ प्रणम्य[5] शिरसा भूमौ प्राञ्जलिर्वशगोऽभवत् ॥ ८ ॥ पृष्टास्तेऽनामयं विप्राः शौनकाद्या महामुनिम् ॥ समासृत्यासनं[6] तस्मै तद्योग्यं समकल्पयन् ॥ ९ ॥ अथैतानब्रवीद्वाक्यं पराशरसुतः प्रभुः ॥ कच्चिन्न हानि[7]स्तपसः स्वाध्यायस्य श्रुतस्य च ॥ १० ॥ ततश्च सूतः स्वगुरुं प्रणम्याह महामुनिम् ॥ ज्ञानं तद्ब्रह्मविषयं मुनीनां वक्तुमर्हसि ॥ ११ ॥ इमे हि मुनयः शान्तास्तापसा धर्मतत्पराः ॥ शुश्रूषा जायते चैषां वक्तुमर्हसि तत्त्वतः ॥ १२ ॥ ज्ञानं विमुक्तिदं दिव्यं यन्मे साक्षात्त्वयोदितम् ॥ मुनीनां व्याहृतं पूर्वं विष्णुना कूर्मरूपिणा ॥ १३ ॥ श्रुत्वा सूतस्य वचनं मुनिः सत्यवतीसुतः॥ प्रणम्य शिरसा रुद्रं वचः प्राह सुखावहम् ॥ १४॥ व्यास उवाच ॥ वक्ष्ये देवो महादेवः पृष्टो योगीश्वरैः[8] पुरा ॥ सनत्कुमारप्रमुखैः स स्वयं समभाषत ॥ १५ ॥ सनत्कुमारः सनकस्तथैव च सनंदनः ॥ आङ्गिरा रुद्रसहितो भृगुः परमधर्मवित् ॥ १६ ॥ कणादः कपिलो गर्गो वामदेवो महामुनिः ॥ शुक्रो वसिष्ठो भगवान् सर्वे संयतमानसाः ॥ १७ ॥ परस्परं विचार्यैते संयं[9]माविष्टचेतसः ॥ ततवन्तस्तपो घोरं पुण्ये बदरिकाश्रमे ॥ १८ ॥ अपश्यंस्ते महायोगमृषिधर्मसुतं मुनिम्[10] ॥ नारायणमनाद्यन्तं नरेण

---

१ तत इति, शुभ इति पा० । २ ब्रह्माण्डस्यास्य इति पा० । ३ नाशनमुत्तममिति पा० । ४ अत्र आर्षमात्मनेपदम् । ५ प्रदक्षिणीकृत्य गुरुं प्राञ्जलिः पार्श्वतोऽभवदिति पा० । ६ समाश्वास्यासनमिति पा० । ७ तपसो हानिरिति पा० । ८ योगीति पा० । ९ संशयाविष्टचेतस इति पा० । १० शुचिमिति पा० ।

सहितं तदा ॥ १९ ॥ संस्तूय विविधैः स्तोत्रैः सर्ववेदसमुद्भवैः ॥ प्रणेमुर्भक्तिसंयुक्ता योगिनो योगवित्तमम् ॥ २० ॥ विज्ञाय वाञ्छितं तेषां भगवानपि सर्ववित् ॥ प्राह गम्भीरया वाचा किमर्थं तप्यते तपः ॥ २१ ॥ अब्रुवन् हृष्टमनसो विश्वात्मानं सनातनम् ॥ साक्षान्नारायणं देवमागतं सिद्धिसूचकम् ॥ २२ ॥ वयं संयममापन्नाः[१] सर्वे वै ब्रह्मवादिनः ॥ भवन्तमेकं[२] शरणं प्रपन्नाः पुरुषोत्तमम् ॥ २३ ॥ त्वं वेत्सि परमं गुह्यं सर्वन्तु भगवानृषिः ॥ नारायणः स्वयं साक्षात्पुराणोऽव्यक्तपूरुषः ॥ २४ ॥ न ह्यन्यो विद्यते वेत्ता त्वामृते परमेश्वरम् ॥ स[३] त्वमस्माकमचलं संशयं छेत्तुमर्हसि ॥ २५ ॥ किं कारणमिदं कृत्स्नं को नु संसरते सदा ॥ कश्चिदात्मा च का मुक्तिः संसारः किन्निमित्तकः ॥ २६ ॥ कः संसार[४] इतीशानः को वा सर्वं प्रपश्यति ॥ किं तत्परतरं ब्रह्म सर्वं नो वक्तुमर्हसि ॥ २७ ॥ एवमुक्त्वा तु मुनयः प्रापश्यन् पुरुषोत्तमम् ॥ विहाय तापसं वेषं संस्थितं स्वेन तेजसा ॥ २८ ॥ विभ्राजमानं विमलं प्रभामण्डलमण्डितम् ॥ श्रीवत्सवक्षसं देवं तप्तजाम्बूनदप्रभम् ॥ २९ ॥ शङ्खचक्रगदापाणिं शार्ङ्गहस्तं श्रिया वृतम् ॥ न दृष्टस्तत्क्षणादेव नरस्तस्यैव तेजसा ॥ ३० ॥ तदन्तरे महादेवः शशाङ्काङ्कितशेखरः ॥ प्रसादाभिमुखो रुद्रः प्रादुरासीन्महेश्वरः ॥ ३१ ॥ निरीक्ष्य ते जगन्नाथं त्रिनेत्रं चन्द्रभूषणम् ॥ तुष्टुवुर्हृष्टमनसो भक्त्या तं परमेश्वरम् ॥ ३२ ॥ जयेश्वर महादेव जय भूतपते शिव ॥ जयाशेषमुनीशान तपसाऽभिप्रपूजित ॥ ३३ ॥ सहस्रमूर्त्ते विश्वात्मन् जगद्यन्त्रप्रवर्त्तक ॥ जयानन्त जगज्जन्मत्राणसंहारकारक ॥ ३४ ॥ सहस्रचरणेशान शम्भो योगीन्द्रवन्दित ॥ जयाम्बिकापते देव नमस्ते परमेश्वर ॥ ३५ ॥ संस्तुतो भगवानीशस्त्र्यम्बको भक्तवत्सलः ॥ समालिङ्ग्य हृषीकेशं प्राह गम्भीरया गिरा ॥ ३६ ॥ किमर्थं पुण्डरीकाक्ष मुनीन्द्रा ब्रह्मवादिनः ॥ इमं समागता देशं किन्नु कार्यं मयाच्युत[५] ॥३७॥ आकर्ण्य तस्य तद्वाक्यं देवदेवो जनार्दनः ॥ प्राह देवो महादेवं प्रसादाभिमुखं स्थितम् ॥ ३८ ॥ इमे हि मुनयो देव तापसाः क्षीणकल्मषाः ॥ अभ्यागतानां शरणं सम्यग्दर्शनकांक्षिणाम् ॥ ३९ ॥ यदि प्रसन्नो भगवान्मुनीनां भावितात्मनाम् ॥ सन्निधौ मम तज्ज्ञानं दिव्यं वक्तुमिहार्हसि ॥४०॥

१ संशयमापन्ना इति पा० । २ भवन्तमेव इति पा० । ३ शुश्रूषास्माकमखिलमिति पा० । ४ संसारपतीशान इति पा० । ५ ममाच्युत इति ।

त्वं हि वेत्सि स्वमात्मानं न ह्यन्यो विद्यते शिव॥वद त्वमात्मनात्मानं मुनीन्द्रेभ्यः प्रदर्शय॥४१॥एवमुक्त्वा हृषीकेशः प्रोवाच मुनिपुङ्गवान् ॥ प्रदर्शयन्योगसिद्धिं निरीक्ष्य वृषभध्वजम् ॥४२॥ सन्दर्शनान्[1]महेशस्य शंकरस्याथ शूलिनः ॥कृतार्थं स्वयमात्मानं ज्ञातुमर्हथ तत्त्वतः॥४३॥ द्रष्टुं[2]मर्हथ देवेशं प्रत्यक्षं पुरतः स्थितम्॥ममैव सन्निधाने[3] स यथावद्वक्तुमीश्वरः[4] ॥४४॥ निशम्य विष्णोर्वचनं प्रणम्य वृषभध्वजम्॥सनत्कुमारप्रमुखाः पृच्छन्ति स्म महेश्वरम् ॥४५॥ अथास्मिन्नन्तरे दिव्यमासनं विमलं शिवम् ॥किमप्यचिन्त्यं गगनादीश्वरार्थं समुद्बभौ ॥ ४६ ॥ तत्रासससाद योगात्मा विष्णुना सह विश्वकृत् ॥ तेजसा पूरयन्विश्वं भाति देवो महेश्वरः ॥ ४७ ॥ ततो देवाधिदेवेशं शंकरं ब्रह्मवादिनः ॥ विभ्राजमानं विमले तस्मिन्ददृशुरासने ॥ ४८ ॥ तमासनस्थं भूतानामीशं ददृशिरे किल ॥ यदन्तरा सर्वमेतद्यतोऽभिन्नमिदं जगत् ॥ ४९ ॥ सवासुदेवमीशानमीशं[5] ददृशिरे परम् ॥ प्रोवाच पृष्टो भगवान्मुनीनां परमेश्वरः ॥ ५० ॥ निरीक्ष्य पुण्डरीकाक्षं स्वात्मयोगमनुत्तमम् ॥ तच्छृणुध्वं यथान्यायमुच्यमानं[6] मयानघाः ॥ प्रशान्तमनसः सर्वे विशुद्धं ज्ञानमैश्वरम्[7] ॥ ५१ ॥

इति श्री कूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे प्रथमोऽध्यायः ॥१॥

ईश्वर उवाच ॥ आवच्यमेतद्विज्ञानं मम गुह्यं सनातनम् ॥ यन्न देवा विजानन्ति यतन्तो[8]ऽपि द्विजातयः ॥ १ ॥ इदं ज्ञानं समाश्रित्य ब्राह्मीभूता द्विजोत्तमाः ॥ न संसारं प्रपद्यन्ते पूर्वेऽपि ब्रह्मवादिनः ॥ २ ॥ गुह्याद्गुह्यतमं साक्षाद्गोपनीयं प्रयत्नतः ॥ वक्ष्ये भक्तिमतामद्य युष्माकं ब्रह्मवादिनाम् ॥ ३ ॥ आत्मायं केवलः स्वच्छः शुद्धः सूक्ष्मः[9] सनातनः ॥ अस्ति सर्वान्तरः साक्षाच्चिन्मात्र[10]स्तमसः परः ॥४ ॥ सोऽन्तर्यामी स पुरुषः स प्राणः स महेश्वरः ॥ स कालोऽत्र तदव्यक्तं स च वेद इति श्रुतिः ॥५॥ अस्माद्विजायते विश्वमत्रैव प्रविलीयते ॥ स मायी मायया बद्धः करोति विविधास्तनूः ॥ ६ ॥ न चाप्ययं संसरति न संसारमयः प्रभुः ॥ नायं पृथ्वी न सलिलं न तेजः पवनो नभः ॥७॥

१ सन्दर्शनादुमेशस्य इति पा० । २ द्रष्टुमर्हथ विश्वेशमिति पा० देवेशं पूजयितुमर्हथेत्यर्थः । ३ सन्निधावेव इति पा० । ४ ईश्वरः शक्नोतीत्यर्थः । ५ सवासुदेवमासीनं तमीशं ददृशुः किल इति पा० । ६ याच्यमानमिति पा० । ७ ज्ञानमीश्वरभाषितमिति पा० । ८ यतन्त इत्यार्षम् यतमानाः इति साधु । ९ सुस्थः शान्त इति, शान्तः सूक्ष्म इति पा० । १० चिन्मयस्तामसः इति, तन्मनाः परः इति पा० ।

न प्राणो न मनोऽव्यक्तं न शब्दः स्पर्श एव च ॥ न रूपरसगंधाश्च नाहं कर्ता न वागपि ॥ ८ ॥ न पाणिपादौ नो पायुर्न चोपस्थं द्विजोत्तमाः ॥ नं च कर्ता न भोक्ता वा न च प्रकृतिपूरुषौ ॥ ९ ॥ न माया नैव च प्राणा नं चैव परमार्थतः ॥ यथा प्रकाश तमसोः सम्बन्धो नोपपद्यते ॥ १० ॥ तद्वदैक्यं न सम्बन्धः प्रपञ्चपरमात्मनोः ॥ छायातपौ यथा लोके परस्परविलक्षणौ ॥ ११ ॥ तद्व त्प्रपञ्चपुरुषौ विभिन्नौ परमार्थतः ॥ तथात्मा मलिनः सृष्टो विकारी स्यात्स्वरूपतः ॥ १२ ॥ न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि ॥ पश्यन्ति मुनयो मुक्ताः स्वात्मानं परमार्थतः ॥ १३ ॥ विकारहीनं निर्द्वन्द्वमानन्दात्मानमव्ययम् ॥ अहं कर्ता सुखी दुःखी कृश स्थूलेति या मतिः ॥ १४ ॥ सा चाहङ्कारकर्तृत्वादात्मन्यारोपिता जनैः ॥ वदन्ति वेदविद्वांसः साक्षिणं प्रकृतेः परम् ॥ १५ ॥ भोक्तार मक्षरं बुद्धं सर्वत्र समवस्थितम् ॥ तस्मादज्ञानमूलो हि संसारः सर्वदेहिनाम् ॥ १६ ॥ अज्ञानादन्यथाज्ञानात्तत्त्वं प्रकृतिसङ्गतम् ॥ नित्योदितं स्वयं ज्योतिः सर्वगः पुरुषः परः ॥ १७ ॥ अहंकाराविवेकेन कर्ताहमिति मन्यते ॥ पश्यन्ति ऋषयोऽव्यक्तं नित्यं सदसदा त्मकम् ॥ १८ ॥ प्रधानं पुरुषं बुद्धा कारणं ब्रह्मवादिनः ॥ तेनायं सङ्गतः स्वात्मा कूटस्थोऽपि निरञ्जनः ॥ १९ ॥ स्वात्मानमक्षरं ब्रह्म नावबुद्ध्येत तत्त्वतः ॥ अनात्मन्यात्मविज्ञानं तस्माद्दुःखं तथेतरत् ॥ २० ॥ रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः ॥ कर्मा ण्यस्य महान्दोषः पुण्यापुण्यमिति स्थितिः ॥ २१ ॥ तद्वशादेव सर्वेषां सर्वदेहसमुद्भवः ॥ नित्यं सर्वत्र गुह्यात्मा कूटस्थो दोषवर्जितः ॥ २२ ॥ एकः संतिष्ठते शक्त्या मायया न स्वभावतः ॥ तस्मादद्वैतमेवाहुर्मुनयः परमार्थतः ॥ २३ ॥ भेदोऽव्यक्तस्वभावेन सा च मायात्मसंश्रया ॥ यथा च धूमसम्पर्कान्नाकाशो मलिनो भवेत् ॥ २४ ॥ अन्तःकरणजैर्भावैरात्मा तद्वन्न लिप्यते ॥ यथा स्वप्रभया भाति केवलः स्फटिकोपलैः ॥ २५ ॥ उपाधिहीनो विमलस्तथैवात्मा प्रकाशते ॥ ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ॥ २६ ॥ अर्थस्वरूपमेवान्ये पश्यन्त्यन्ये कुदृष्टयः ॥ कूटस्थो निर्गुणो व्यापी चैतन्यात्मा स्वभावतः ॥ २७ ॥ दृश्यते ह्यर्थरूपेण पुरुषैर्ज्ञानि

१ न कर्ता न च भोक्ता वा इति पा० । २ चैतन्यं परमार्थतः इति पा० । ३ प्रकृतिमिति, प्रकृतिं बुद्धेरिति पा० । ४ तेनात्र सङ्गतो ह्यात्मा इति पा० । ५ सुखमिति पा० । ६ नित्यः सर्वत्रगो ह्यात्मा इति पा० । ७ स भिद्यते इति पा० । ८ स्फटिकोऽमलः इति पा० । ९ अर्थस्वरूपं विज्ञानादिति, मेवाज्ञा इति पा० ।

दृष्टिभिः ॥ यथा स लक्ष्यते रक्तः केवलं स्फाटिको जनैः॥ २८ ॥ रक्तिकाद्युपधानेन तद्वत्परमपूरुषः ॥ तस्मादात्माक्षरः शुद्धो नित्यः सर्वत्रगोऽव्ययः ॥ २९ ॥ उपासितव्यो मन्तव्यः श्रोतव्यश्च मुमुक्षुभिः ॥ यदा मनसि चैतन्यं भाति सर्वत्र सर्वदा ॥ ३० ॥ योगिनः श्रद्धानस्य तदा सम्पद्यते स्वयम् ॥ यदा सर्वाणि भूतानि स्वात्मन्येवाभिपश्यति ॥ ३१ ॥ सर्वभूतेषु चात्मानं ब्रह्म सम्पद्यते तदा ॥ यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ॥ ३२ ॥ एकीभूतः परेणासौ तदा भवति केवलम् ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ॥ ३३ ॥ तदासावमृतीभूतः क्षेमं गच्छति पण्डितः ॥ यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥ ३४ ॥ तत एव च विस्तारं ब्रह्म सम्पद्यते सदा ॥ यदा पश्यति चात्मानं केवलं परमार्थतः ॥ ३५ ॥ मायामात्रं तदा सर्वं जगद्भवति निर्वृतः ॥ ३६ ॥ यदा जन्मजरादुःखव्याधीनामेकभेषजम् ॥ केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः ॥ ३७ ॥ यथा नदीनदा लोके सागरेणैकतां ययुः ॥ तद्वदात्माक्षरेणासौ निष्कलेनैकतां व्रजेत्॥३८॥तस्माद्विज्ञानमेवास्ति न प्रपञ्चो न संस्थितिः॥ अज्ञानेनावृतं लोके विज्ञानं तेन मुह्यति॥३९॥ विज्ञानं निर्मलं सूक्ष्मं निर्विकल्पं तदव्ययम् ॥ अज्ञानमितरत्सर्वं विज्ञानमिति तन्मतम् ॥ ४० ॥ एतद्वः कथितं साङ्ख्यं भाषितं ज्ञानमुत्तमम् ॥ सर्ववेदान्तसारं हि योगस्तत्रैकचित्तता ॥ ४१ ॥ योगात्सञ्जायते ज्ञानं ज्ञानाद्योगः प्रवर्त्तते ॥ योगज्ञानाभियुक्तस्य नावाप्यं विद्यते क्वचित् ॥ ४२ ॥ यदेव योगिनो यान्ति सांख्यैस्तदधिगम्यते ॥ एकं सांख्यञ्च योगञ्च यः पश्यति स तत्त्ववित्॥४३॥ अन्ये हि योगिनो विप्रा ह्यैश्वर्यासक्तचेतसः ॥ मज्जन्ति तत्र तत्रैव ये चान्ये कुण्ठबुद्धयः ॥ ४४ ॥ यत्तत्सर्वगतं दिव्यमैश्वर्यममलं महत् ॥ ज्ञानयोगाभियुक्तस्तु देहान्ते तदवाप्नुयात् ॥ ४५ ॥ एष आत्माहमव्यक्तो मायावी परमेश्वरः ॥ कीर्तितः सर्ववेदेषु सर्वात्मा सर्वतोमुखः ॥ ४६ ॥ सर्वरूपः सर्वरसः सर्वगन्धोऽजरोऽमरः ॥ सर्वतः पाणिपादोऽहमन्तर्यामी सनातनः ॥ ४७ ॥ अपाणिपादो जवनो

१ सर्वत्रगं सदेति पा० । २ योगिनोऽव्यवधानेन इति पा० । ३ अज्ञानमिति तत्सर्वमिति पा० । ४ ज्ञानान्मोक्षः इति पा० । ५ तदधिगम्यते इति, अभिगम्यते इति पा० । ६ सर्वकामः इति पा० । ७ जवनः इति पा० ।

ग्रहीता हृदि संस्थितः ॥ अचक्षुरपि पश्यामि तथाऽकर्णः शृणोम्यहम् ॥ ४८ ॥ वेदाहं सर्वमेवेदं न मां जानाति कश्चन ॥ प्राहुर्महान्तं पुरुषं मामेकं तत्त्वदर्शिनः ॥ ४९ ॥ पश्यन्ति ऋषयो हेतुमात्मनः सूक्ष्मदर्शिनः ॥ निर्गुणामलरूपस्य यदैश्वर्यमनुत्तमम् ॥ ५० ॥ यन्न देवा विजानन्ति मोहिता मम मायया ॥ वक्ष्ये समाहिता यूयं शृणुध्वं ब्रह्मवादिनः ॥५१॥ नाहं प्रशस्तः सर्वस्य मायातीतः स्वभावतः ॥ प्रेरयामि तथापीदं कारणं सूरयो विदुः ॥ ५२ ॥ यैतो गुह्यतमं देहं सर्वगं तत्त्वदर्शिनः ॥ प्रविष्टा मम सायुज्यं लभन्ते योगिनोऽव्ययम् ॥ ५३ ॥ ये हि मायामतिक्रान्ता मम या विश्वरूपिणी ॥ लभन्ते परमं शुद्धं निर्वाणं ते मया सह ॥ ५४ ॥ न तेषां पर्मावृत्तिः कल्पकोटिशतैरपि ॥ प्रसादान्मम योगीन्द्रा एतद्वेदानुशासनम् ॥५५॥ तत्पुत्रशिष्ययोगिभ्यो दातव्यं ब्रह्मवादिभिः॥ मदुक्तमेतद्विज्ञानं सांख्यं योगसमाश्रयम् ॥ ५६ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे द्वितीयोऽध्यायः ॥ २ ॥ ईश्वर उवाच ॥ अव्यक्तादभवत्कालः प्रधानं पुरुषः परः ॥ तेभ्यः सर्वमिदं जातं तस्माद्ब्रह्ममयं जगत् ॥ १ ॥ सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् ॥ सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ २ ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥ सर्वाधारं सदानन्दमव्यक्तं द्वैतवर्जितम् ॥ ३ ॥ सर्वोपमानरहितं प्रमाणातीतगोचरम् ॥ निर्विकल्पं निराभासं सर्वावासं परामृतम् ॥ ४ ॥ अभिन्नं भिन्नसंस्थानं शाश्वतं ध्रुवमव्ययम् ॥ निर्गुणं परमं ज्योतिस्तज्ज्ञानं सूरयो विदुः ॥ ५ ॥ स आत्मा सर्वभूतानां स बाह्याभ्यन्तरः परः ॥ सोऽहं सर्वत्रगः शान्तो ज्ञानात्मा परमेश्वरः ॥ ६ ॥ मया ततमिदं विश्वं जगत्स्थावरजङ्गमम् ॥ ॥ मत्स्थानि सर्वभूतानि यस्तं वेदविदो विदुः ॥ ७ ॥ प्रधानं पुरुषश्चैव तद्वस्तु समुदाहृतम् ॥ तयोरनादिरुद्दिष्टः कालः संयोगजः परः ॥ ८ ॥ त्रयमेतदनाद्यन्तमव्यक्ते समवस्थितम् ॥ तदात्मकं तदन्यत्स्यात्तद्रूपं मामकं विदुः ॥ ९ ॥ महदाद्यं विशेषान्तं सम्प्रसूतेऽखिलं जगत् ॥ या सा प्रकृतिरुद्दिष्टा

१ यत्तदैश्वर्यमुत्तममिति पा० । २ यन्मे इति पा० । ३ तेषां हि वशमापन्ना माया मे इति पा० । ४ पुनरावृत्तिरिति पा० । ५ जगदव्यक्तमूर्त्तिनेति, जगदव्ययमूर्त्तिना इति पा० । ६ तयोरनादिनिर्दिष्टः इति पा० । ७ महदाद्यं विशेषान्तं–महत्तत्त्वादारभ्य विशेषपदार्थपर्यन्तमित्यर्थः । महत् प्रधानं विशेषः वैशेषिकैरभ्युपेतः पदार्थः ।

मोहिनी सर्वदेहिनाम् ॥ १० ॥ पुरुषः प्रकृतिस्थो वै भुंक्ते यः प्राकृतान् गुणान् ॥ अहङ्कारविमुक्तत्वात्प्रोच्यते पञ्चविंशकः ॥ ११ ॥ आद्यो विकारः प्रकृतेर्महानिति च कथ्यते ॥ विज्ञातृशक्तिविज्ञानात् ह्यहङ्कारस्तदुत्थितः ॥ १२ ॥ एक एव महानात्मा सोऽहङ्कारोऽभिधीयते ॥ स जीवः सोऽन्तरात्मेति गीयते तत्त्वचिन्तकैः ॥ १३ ॥ तेन वेदयते सर्वं सुखं दुःखञ्च जन्मसु ॥ स विज्ञानात्मकस्तस्य मनः स्यादुपकारकम् ॥ १४ ॥ तेनापि तन्मयस्तस्मात् संसारः पुरुषस्य तु ॥ स चाविवेकः प्रकृतौ संगात्कालेन सोऽभवत् ॥ १५ ॥ कालः सृजति भूतानि कालः संहरते प्रजाः ॥ सर्वे कालस्य वशगा न कालः कस्यचिद्वशे ॥ १६ ॥ सोऽन्तरा सर्वमेवेदं नियच्छति सनातनः ॥ प्रोच्यते भगवान्प्राणः सर्वज्ञः पुरुषोत्तमः ॥ १७ ॥ सर्वेन्द्रियेभ्यः परमं मन आहुर्मनीषिणः ॥ मनसश्चाप्यहङ्कारमहङ्कारान्महान्परः ॥ १८ ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ पुरुषाद्भगवान् प्राणस्तस्य सर्वमिदं जगत् ॥ १९ ॥ प्राणात्परतरं व्योम व्योमातीतोऽग्निरीश्वरः ॥ सोऽहं ब्रह्माव्ययः शान्तो मायातीतमिदं जगत् ॥ २० ॥ नास्ति मत्तः परं भूतं माञ्च विज्ञाय मुच्यते ॥ नित्यं नास्तीति जगति भूतं स्थावरजङ्गमम् ॥ २१ ॥ ऋते मामेकमव्यक्तं व्योमरूपं महेश्वरम् ॥ सोऽहं सृजामि सकलं संहरामि सदा जगत् ॥ २२ ॥ मायी मायामयो देवः कालेन सह सङ्गतः ॥ मत्सन्निधावेष कालः करोति सकलं जगत् ॥ नियोजयत्यनन्तात्मा ह्येतद्वेदानुशासनम् ॥ २३ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे तृतीयोध्यायः ॥ ३ ॥ ईश्वर उवाच ॥ वक्ष्ये समाहिता यूयं शृणुध्वं ब्रह्मवादिनः ॥ माहात्म्यं देवदेवस्य येन सर्वं प्रवर्त्तते ॥ १ ॥ नाहं तपोभिर्विविधैर्न दानेन न चेज्यया ॥ शक्यो हि पुरुषैर्ज्ञातुमृते भक्तिमनुत्तमाम् ॥ २ ॥ अहं हि सर्वभूतानामन्तस्तिष्ठामि सर्वतः ॥ मां सर्वसाक्षिणं लोको न जानाति मुनीश्वराः ॥ ३ ॥ यस्यान्तरा सर्वमिदं यो हि सर्वान्तकः परः ॥ सोऽहं धाता विधाता च कालोऽग्निर्विश्वतोमुखः ॥ ४ ॥ न मां पश्यन्ति मुनयः सर्वे पितृदिवौकसः ॥ ब्रह्मा च मनवः शक्रो ये चान्ये प्रथितौजसः ॥ ५ ॥ गृणन्ति सततं वेदा मामेकं परमेश्वरम् ॥ यजन्ति विविधैर्यज्ञैर्ब्राह्मणा वैदिकैर्मखैः ॥ ६ ॥

१ ज्ञानात्मा परमेश्वरः इति पा० । २ मामेकमिति पा० । ३ भावानामिति पा० । ४ लोकेऽस्मिन्निति पा० । ५ विविधैरग्निमिति, विविधैरग्नौ इति पा० ।

सर्वे लोका न पश्यन्ति ब्रह्मा लोकपितामहः ॥ ध्यायन्ति योगिनो देवं भूताधिपतिमीश्वरम् ॥ ७ ॥ अहं हि सर्वहविषां भोक्ता चैव फलप्रदः ॥ सर्वदेवतनुर्भूत्वा सर्वात्मा सर्वसंस्तुतः ॥८॥ मां पश्यन्तीह विद्वांसो धार्मिका वेदवादिनः ॥ तेषां सन्निहितो नित्यं ये मां नित्यमुपासते ॥ ९॥ ब्राह्मणाः क्षत्रिया वैश्या धार्मिका मामुपासते ॥ तेषां ददामि तत्स्थानमानन्दं परमम्पदम् ॥१०॥ अन्येऽपि ये स्वधर्मस्थाः शूद्राद्या नीचजातयः ॥ भक्तिमन्तः प्रमुच्यन्ते कालेनापि हि सङ्गताः ॥११॥ मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ॥ आदावेव प्रतिज्ञातं न मे भक्तः प्रणश्यति ॥१२॥ यो वै निन्दति तं मूढो देवदेवं स निन्दति ॥ यो हि पूजयते भक्त्या स पूजयति मां सदा ॥ १३ ॥ पत्रं पुष्पं फलं तोयं मदाराधनकारणात् ॥ यो मे ददाति नियतं स मे भक्तः प्रियो मम ॥ १४ ॥ अहं हि जगतामादौ ब्रह्माणं परमेष्ठिनम् ॥ विदधौ दत्तवान्वेदानशेषानात्मनिःसृतान् ॥ १५ ॥ अहमेव हि सर्वेषां योगिनां गुरुरव्ययः ॥ धार्मिकाणां च गोप्ताहं निहन्ता वेदविद्विषाम् ॥ १६ ॥ अहं हि सर्वसंसारान्मोचको योगिनामिह ॥ संसारहेतुरेवाहं सर्वसंसारवर्जितः ॥ १७ ॥ अहमेव हि संहर्त्ता संस्रष्टा परिपालकः ॥ माया वै मामिका शक्तिर्माया लोकविमोहिनी ॥१८॥ ममैव च परा शक्तिर्या सा विद्येति गीयते ॥ नाशयामि च तां मायां योगिनां हृदि संस्थितः ॥ १९ ॥ अहं हि सर्वशक्तीनां प्रवर्त्तकनिवर्त्तकः ॥ आधारभूतः सर्वासां निधानममृतस्य च ॥२०॥ एका सर्वान्तरा शक्तिः करोति विविधं जगत् ॥ ( नाहं प्रेरियता विप्राः परमं योगमाश्रिताः ॥ ) आस्थाय ब्रह्मणो रूपं मन्मयी मदधिष्ठिता ॥ २१ ॥ अन्या च शक्तिर्विपुला संस्थापयति मे जगत् ॥ भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मयः ॥ २२ ॥ तृतीया महती शक्तिर्निहन्ति सकलं जगत् ॥ तामसी मे समाख्याता कालाख्या रुद्ररूपिणी ॥ २३ ॥ ध्यानेन मां प्रपश्यन्ति केचिज्ज्ञानेन चापरे ॥ अपरे भक्तियोगेन कर्मयोगेन चापरे ॥ २४ ॥ सर्वेषामेव भक्तानामिष्टः प्रियतमो मम ॥ यो हि ज्ञानेन मां नित्यमाराधयति नान्यथा ॥२५॥ अन्ये च हरये भक्ता मदाराधनकारिणः॥ तेऽपि मां प्राप्नुवन्त्येव नावर्त्तन्ते च वै पुनः ॥२६॥ मया ततमिदं

१ नमस्यन्तीति पा० । २ अहमेव हीति पा० ।

कृत्स्नं प्रधानपुरुषात्मकम् ॥ मय्येव संस्थितं चित्तं मया सम्प्रेर्यते जगत् ॥२७॥ नाहं प्रेरयिता विप्राः परमं योगमास्थितः ॥ प्रेरयामि जगत्कृत्स्नमेतद्यो वेद सोऽमृतः ॥ २८ ॥ पश्याम्यशेषमेवेदं वर्त्तमानं स्वभावतः ॥ करोति कालो भगवान्महायोगेश्वरः स्वयम् ॥२९॥ योऽहं सम्प्रोच्यते योगी मायी शास्त्रेषु सूरिभिः ॥ योगीश्वरोऽसौ भगवान्महायोगेश्वरः स्वयम् ॥ ३० ॥ महत्त्वं सर्वसत्त्वानां वरत्वात् परमेष्ठिनः ॥ प्रोच्यते भगवान् ब्रह्मा महाब्रह्ममयोऽमलः ॥ ३१ ॥ यो मामेवं विजानाति महायोगेश्वरेश्वरम् ॥ सोऽविकल्पेन योगेन युज्यते नात्र संशयः ॥ ३२ ॥ सोऽहं प्रेरयिता देवः परमानन्दमाश्रितः ॥ नृत्यामि योगी सततं यस्तद्वेद स योगवित् ॥३३॥ इति गुह्यतमं ज्ञानं सर्ववेदेषु निश्चितम् ॥ प्रसन्नचेतसे देयं धार्मिकायाहिताग्नये ॥ ३४ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे चतुर्थोऽध्यायः ॥४॥ व्यास उवाच ॥ एतावदुक्त्वा भगवान्योगिनां परमेश्वरः ॥ ननर्त्त परमं भावमैश्वरं सम्प्रदर्शयन् ॥ १ ॥ तं ते ददृशुरीशानं तेजसां परमं निधिम् ॥ नृत्यमानं महादेवं विष्णुना गगनेऽमले ॥ २ ॥ यं विदुर्योगतत्त्वज्ञा योगिनो यतमानसाः ॥ तमीशं सर्वभूतानामाकाशे ददृशुः किल ॥ ३ ॥ यस्य मायामयं सर्वं येनेदं प्रेर्यते जगत् ॥ नृत्यमानः स्वयं विप्रैर्विश्वेशः खलु दृश्यते ॥ ४ ॥ यत्पादपंकजं स्मृत्वा पुरुषोऽज्ञानजं भयम् ॥ जहाति नृत्यमानं तं भूतेशं ददृशुः किल ॥५॥ केचिंन्निद्राजितश्वासाः शान्ता भक्तिसमन्विताः ॥ ज्योतिर्म्मयं प्रपश्यन्ति स योगी दृश्यते किल ॥६॥ योऽज्ञानान्मोचयेत् क्षिप्रं प्रसन्नो भक्तवत्सलः ॥ तमेवं मोचनं रुद्रमाकाशे ददृशुः परम् ॥ ७ ॥ सहस्रशिरसं देवं सहस्रचरणाकृतिम् ॥ सहस्रबाहुं जटिलं चन्द्रार्द्धकृतशेखरम् ॥ ८ ॥ वसानं चर्म वैयाघ्रं शूलासक्तमहाकरम् ॥ दण्डपाणिं त्रयीनेत्रं सूर्यसोमाग्निलोचनम् ॥ ९ ॥ ब्रह्माण्डं तेजसा स्वेन सर्वमावृत्य धिष्ठितम् ॥ दंष्ट्राकरालं दुर्द्धर्षं सूर्यकोटिसमप्रभम् ॥ १० ॥ सृजन्तमनलज्वालं दहन्तमखिलं जगत् ॥ नृत्यन्तं ददृशुर्देवं विश्व

१ योगमाश्रितः इति पा० । २ महादेवो महाप्रभुरिति पा० । ३ सर्वतत्त्वानां परत्वादिति पा० । ४ प्रेरयामि जगत्कृत्स्नं यस्तं वेद स वेदविदिति पा० । ५ नृत्यमानमित्यार्षं नृत्यन्तमिति साधु । ६ यं विनिद्रा इति पा० । ७ मोचयतीति मोचनस्तम्, नन्द्यादेरनः । तमेव मोचकमिति पा० । ८ अत्राधेरार्षोऽकारलोपः ।

कर्माणमीश्वरम् ॥ ११ ॥ महादेवं महायोगं देवानामपि दैवतम् ॥ पशूनां पतिमीशानमानन्दं ज्योतिरव्ययम् ॥ १२ ॥ पिनाकिनं विशालाक्षं भेषजं भवरोगिणाम् ॥ कालात्मानं कालकालं देवदेवं महेश्वरम् ॥ १३ ॥ उमापतिं विशालाक्षं योगानन्दमयं परम् ॥ ज्ञानवैराग्यनिलयं ज्ञानयोगं सनातनम् ॥ १४ ॥ शाश्वतैश्वर्यविभवं धर्माधारं दुरासदम् ॥ महेन्द्रोपेन्द्रनमितं महर्षिगणवन्दितम् ॥ १५ ॥ योगिनां हृदि तिष्ठन्तं योगमायासमावृतम् ॥ क्षणेन जगतो योनिं नारायणमनामयम् ॥ १६ ॥ ईश्वरेणैक्यमापन्नमपश्यन् ब्रह्मवादिनः ॥ दृष्ट्वा तदैश्वरं रूपं रुद्रं नारायणात्मकम् । कृतार्थं मेनिरे संतः स्वात्मानं ब्रह्मवादिनः ॥ १७ ॥ सनत्कुमारः सनको भृगुश्च सनातनश्चैव सनन्दनश्च । रैभ्योऽङ्गिरा वामदेवोऽथ शुक्रो महर्षिरत्रिः कपिलो मारीचिः ॥ १८ ॥ दृष्ट्वाथ रुद्रं जगदीशितारं तं पद्मनाभाश्रितवामभागम् ॥ ध्यात्वा हृदिस्थं प्रणिपत्य मूर्ध्ना कृताञ्जलिं स्वेषु शिरःसु भूयः ॥ १९ ॥ ओङ्कारमुच्चार्य विलोक्य देवमन्तःशरीरं निहितं गुहायाम् ॥ समस्तुवन् ब्रह्ममयैर्वचोभिरानन्दपूर्णायि[1]तमानसा[2] वै ॥ २० ॥ मुनय ऊचुः ॥ त्वामेकमीशं पुरुषं पुराणं प्राणेश्वरं रुद्रमनन्तयोगम् ॥ नमाम सर्वे हृदि सन्निविष्टं प्रचेतसं ब्रह्ममयं पवित्रम् ॥ २१ ॥ पश्यन्ति त्वां मुनयो ब्रह्मयोनिं दान्ताः शान्ता विमलं रुक्मवर्णम् ॥ ध्यात्वात्मस्थमचलं[3] स्वे शरीरे कविं परेभ्यः परमं परञ्च ॥ २२ ॥ त्वत्तः प्रसूता जगतः प्रसूतिः सर्वानुभूस्त्वं परमाणुभूतः ॥ अणोरणीयान्महतो महीयांस्त्वामेव सर्वे प्रवदन्ति सन्तः ॥ २३ ॥ हिरण्यगर्भो जगदन्तरात्मा त्वत्तोऽस्ति जातः पुरुषः पुराणः ॥ सञ्जायमानो भवता निसृष्टो यथाविधानं सकलं ससर्ज ॥ २४ ॥ त्वत्तो वेदाः सकलाः संप्रसूतास्त्वय्येवान्ते संस्थितिं ते लभन्ते ॥ पश्यामस्त्वां जगतो हेतुभूतं नृत्यन्तं स्वे हृदये सन्निविष्टम् ॥ २५ ॥ त्वयैवेदं भ्राम्यते ब्रह्मचक्रं मायावी त्वं जगतामेकनाथः ॥ नमामस्त्वां शरणं संप्रपन्ना[4] योगात्मानं नृत्यन्तं दिव्यनृत्यम् ॥ २६ ॥ पश्यामस्त्वां परमाकाशमध्ये नृत्यन्तं ते महिमानं स्मरामः ॥ सर्वात्मानं बहुधा सन्निविष्टं ब्रह्मानन्दं चानुभूयानुभूय ॥ २७ ॥

१ मनीषायामित्यर्थः । २ मानसास्ते इति पा० । ३ ध्यात्वात्मस्थमचलमिति पा० । स्वप्रचलं–स्वेन आत्मना प्रचलतीति तयोक्तम् । ४ प्रपन्नाः इति, प्रकृतेर्गुणाश्च इति पा० । ५ चिन्मयामिति, चित्पतिमिति, रुद्रमनन्तशक्तिमिति पा० ।

ओङ्कारस्ते वाचको मुक्तिबीजं त्वमक्षरं प्रकृतौ गूढरूपम् ॥ तत्त्वां सत्यं प्रवदन्तीह सन्तः स्वयम्प्रभं भवतो यत्प्रभावम् ॥ २८ ॥ स्तुवन्ति त्वां सततं सर्ववेदा नमन्ति त्वामृषयः क्षीणदोषाः ॥ शान्तात्मानः सत्यसन्धं वरिष्ठं विशन्ति त्वां यतयो ब्रह्मनिष्ठाः ॥ २९ ॥ भवो[1] नाशो नादिमान्विश्वरूपो ब्रह्मा विष्णुः परमेष्ठी वरिष्ठः ॥ स्वात्मानन्दमनुभूय विशन्ते स्वयं ज्योतिरचला नित्यमुक्ताः ॥ ३० ॥ एको रुद्रस्त्वं करोषीह विश्वं त्वं पालयस्यखिलं विश्वरूपम् ॥ त्वामेवान्ते निलयं विन्दतीदं नमामस्त्वां शरणं संप्रपन्नाः ॥ ३१ ॥ एको वेदो बहुशाखो ह्यनन्तस्त्वामेवैकं बोधयत्येकरूपम् ॥ वन्द्यं त्वां ये शरणं संप्रपन्ना मा[2]यामेतां ते तरन्तीह विप्राः ॥ ३२ ॥ त्वामेकमाहुः कविमेकरुद्रं ब्रह्मं गृणन्तं हरिमग्निमीशम् ॥ रुद्रं नित्य[3]मनिलं चेकितानं धातारमादित्यमनेकरूपम् ॥ ३३ ॥ त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ॥ त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषोत्तमोऽसि॥ ३४ ॥ त्वमेव विष्णुश्चतुराननस्त्वं त्वमेव रुद्रो भगवानपीशः ॥ त्वं विश्वनाथः प्रकृतिः प्रतिष्ठा सर्वेश्वरस्त्वं परमेश्वरोऽसि ॥ ३५ ॥ त्वामेकमाहुः पुरुषं पुराणमादित्यवर्णं तमसः परस्तात् ॥ चिन्मात्रमव्यक्तमनन्तरूपं खं ब्रह्म शून्यं प्र[5]कृतिर्गुणाश्च॥ ३६ ॥ यदन्तरा सर्वमिदं विभाति यदव्ययं निर्मलमेकरूपम् ॥ किमप्यचिन्त्यं तव रूपमेतत्तदन्तरा यत्प्रतिभाति तत्त्वम् ॥ ३७ ॥ योगेश्वरं भद्रमनन्तशक्तिं परायणं ब्रह्मतनुं पुराणम् ॥ नमाम सर्वे शरणार्थिनस्त्वां प्रसीदभूताधिपते महेश ॥ ३८ ॥ त्वत्पादपद्मस्मरणादशेषसंसारबीजं निलयं प्रयाति ॥ मनो नियम्य प्रणिधाय कायं प्रसादयामो वयमेकमीशम् ॥ ३९ ॥ नमो भवायाथ भवोद्भवाय कालाय सर्वाय हराय तुभ्यम् ॥ नमोऽस्तु रुद्राय कपर्दिने ते न[6]मोऽग्नये देव नमः शिवाय ॥ ४० ॥ ततः स भगवान्प्रीतः कपर्दी वृषवाहनः ॥ संहृत्य परमं रूपं प्रकृतिस्थोऽभवद्भवः ॥ ४१ ॥ ते भवं भूतभव्येशं पूर्ववत्समवस्थितम् ॥ दृष्ट्वा नारायणं देवं विस्मितं वाक्यमब्रुवन् ॥ ४२ ॥ भगवन् भूतभव्येश गोवृषाङ्कितशासन ॥ दृष्ट्वा

---

१ भवानीशो नादिमांस्तेजोराशिरिति पा० । २ तेषां शान्तिः शाश्वती नेतरेषामिति पा० । ३ इन्द्रं मृत्युमनलमिति पा० । ४ विष्णुरिति पा० । ५ प्रकृतिर्गुणश्चेति पा० । ६ नमो महादेव इति पा० ।

ते परमं रूपं निर्वृत्ताः स्मः सनातन ॥ ४३ ॥ भवत्प्रसादादमले परस्मिन्परमेश्वरे ॥ अस्माकं जायते भक्तिस्त्वय्येवाव्यभिचारिणी ॥ ४४ ॥ इदानीं श्रोतुमिच्छामो माहात्म्यं तव शङ्कर ॥ भूयोऽपि चैवं यन्नित्यं याथात्म्यं परमेष्ठिनः ॥ ४५ ॥ स तेषां वाक्यमाकर्ण्य योगिनां योगसिद्धिदः ॥ प्राह गम्भीरया वाचा समालोक्य च माधवम् ॥ ४६ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्यासंवादे पंचमोध्यायः ॥ ५ ॥ ईश्वर उवाच ॥ शृणुध्वमृषयः सर्वे यथावत्परमेष्ठिनः ॥ वक्ष्यामीशस्य माहात्म्यं यत्तद्वेदविदो विदुः ॥ १ ॥ सर्वलोकैकनिर्माता सर्वलोकैकरक्षिता ॥ सर्वलोकैकसंहर्त्ता सर्वात्माहं सनातनः ॥ २ ॥ सर्वेषामेव वस्तूनामन्तर्यामी महेश्वरः ॥ मध्ये चान्तः स्थितं सर्वं नाहं सर्वत्र संस्थितः ॥ ३ ॥ भवद्भिरद्भुतं दृष्टं यत्स्वरूपन्तु मामकम् ॥ ममैषा ह्युपमा विप्रा माया वै दर्शिता मया ॥ ४ ॥ सर्वेषामेव भावानामन्तरं समवस्थितः ॥ प्रेरयामि जगत्कृत्स्नं क्रियाशक्तिरियं मम ॥ ५ ॥ मयेदं चेष्टते विश्वं तद्वै भावानुवर्त्ति मे ॥ सोऽहं कालो जगत्कृत्स्नं प्रेरयामि कलात्मकम् ॥ ६ ॥ एकांशेन जगत्कृत्स्नं करोमि मुनिपुंगवाः ॥ संहराम्येकरूपेण स्थितावस्था ममैव तु ॥ ७ ॥ आदिमध्यान्तनिर्मुक्तो मायातत्त्वप्रवर्त्तकः ॥ क्षोभयामि च सर्गादौ प्रधान पुरुषावुभौ ॥८॥ ताभ्यां सञ्जायते विश्वं संयुक्ताभ्यां परस्परम् ॥ महदादिक्रमेणैव मम तेजो विजृम्भते ॥ ९ ॥ यो हि सर्वजगत्साक्षी कालचक्रप्रवर्त्तकः ॥ हिरण्यगर्भो मार्त्तण्डः सोऽपि मद्देहसम्भवः ॥ १० ॥ तस्मै दिव्यं स्वमैश्वर्यं ज्ञानयोगं सनातनम् ॥ दत्तवानात्मवान्वेदान् कल्पादौ चतुरो द्विजाः ॥ ११ ॥ स मन्नियोगतो देवो ब्रह्मा मद्भावभावितः ॥ दिव्यं तन्मामकैश्वर्यं सर्वदावगतः स्वयम् ॥ १२ ॥ स सर्वलोकनिर्माता मन्नियोगेन सर्ववित् ॥ भूत्वा चतुर्मुखः सर्गं सृजत्येवात्मसंभवः ॥ १३ ॥ योऽपि नारायणोऽनन्तो लोकानां प्रभवोऽव्ययः ॥ ममैव च परा मूर्तिः करोति परिपालनम् ॥ १४ ॥ योऽन्तकः सर्वभूतानां रुद्रः कालात्मकः प्रभुः ॥ मदाज्ञयासौ सततं संह

१ निर्वृत्ताः इति पा० । २ तारयन्नित्यमिति पा० । ३ भूतानामिति पा० । ४ ययेदं चेष्टते विश्वं तत्स्वभावानुवर्तिन इति पा० । ५ दत्तवानात्मजानेवेति पा० । ६ सर्वदा वहतीति, सर्वं वा यच्छति स्वयमिति पा० ।

रिष्याति मे तनुः ॥ १५ ॥ हव्यं वहति देवानां कव्यं कव्याशिनामपि ॥ पाकञ्च कुरुते वह्निः सोऽपि मच्छक्तिनोदितः ॥ १६ ॥ भुक्त माहारजातञ्च पंचते[1] तदहर्निशम् ॥ वैश्वानरोऽग्निर्भगवानीश्वरस्य नियोगतः ॥ १७ ॥ योऽपि सर्वांभसां योनिर्वरुणो देवपुंगवः ॥ सोऽपि सञ्जीवयेत्कृत्स्नमीश्वरस्य नियोगतः ॥ १८ ॥ योऽन्तस्तिष्ठति भूतानां बहिर्देवः प्रभञ्जनः ॥ मदाज्ञयासौ भूतानां शरीराणि बिभर्ति हि ॥ १९ ॥ योऽपि सञ्जीवनो नृणां देवानाममृताकरः ॥ सोमः स मन्नियोगेन नोदितः किल वर्त्तते ॥ २० ॥ यः स्वभासा जगत्कृत्स्नं प्रभासंयाति[2] सर्वशः ॥ सूर्यो वृष्टिं वितनुते स्वोत्रेणैव[3] स्वयंभुवः ॥ २१ ॥ योऽप्यशेषजगच्छास्ता शक्रः सर्वामरेश्वरः ॥ यज्वनां फलदो देवो वर्त्तते स मदाज्ञया ॥ २२ ॥ यः प्रशास्ता ह्यसाधूनां वर्त्तते नियमादिह ॥ यमो वैवस्वतो देवो देवदेवनियोगतः ॥ २३ ॥ योऽपि सर्वधनाध्यक्षो धनानां सम्प्रदायकः ॥ सोऽपीश्वरनियोगेन कुबेरो वर्त्तते सदा ॥ २४ ॥ यः सर्वरक्षसां नाथस्तामसानां[4] फलप्रदः ॥ मन्नियोगादसौ देवो वर्त्तते निर्ऋतिः सदा ॥ २५ ॥ वेतालगणभूतानां स्वामी भोगफलप्रदः ॥ ईशानः किल भक्तानां सोऽपि तिष्ठन्म दाज्ञया ॥ २६ ॥ यो वामदेवोऽङ्गिरसः शिष्यो रुद्रगणाग्रणीः ॥ रक्षको योगिनां नित्यं वर्त्ततेऽसौ मदाज्ञया ॥ २७ ॥ यश्च सर्वजग त्पूज्यो वर्त्तते विघ्ननायकः ॥ विनायको धर्मरतः सोपि मद्वचनात्किल ॥२८॥ योऽपि ब्रह्मविदां श्रेष्ठो देवसेनापतिः प्रभुः ॥ स्कन्दोऽसौ वर्त्तते नित्यं स्वयम्भूर्विधिनोदितः ॥ २९ ॥ ये च प्रजानां पतयो मरीच्याद्या महर्षयः ॥ सृजन्ति विविधं लोकं परस्यैव[5] नियोगतः ॥ ३० ॥ या च श्रीः सर्वभूतानां ददाति विपुलां श्रियम् ॥ पत्नी नारायणस्यासौ वर्त्तते मदनुग्रहात् ॥ ३१ ॥ वाचं ददाति विपुलां या च देवी सरस्वती ॥ सापीश्वरनियोगेन नोदिता संप्रवर्त्तते ॥ ३२ ॥ याशेषपुरुषान् घोरान्नरकात्तारयिष्याति ॥ सावित्री संस्मृता चापि मदाज्ञानुविधायिनी ॥ ३३ ॥ पार्वती परमा देवी ब्रह्मविद्याप्रदायिनी ॥ यापि ध्याता विशेषेण सापि मद्वचनानुगा ॥ ३४ ॥

१ पचत्येतदहर्निशामिति पा० । २ प्रकाशयाति सर्वदा इति पा० । ३ शास्त्रेणैव स्वयंप्रभुरिति पा० । ४ तापसानामिति पा० । ५ यस्यैव निलयो गतः इति पा० स च पाठो न समीचीनः । ६ पूजितेति पा० । ७ देवीति पा० ।

योऽनन्तमहिमानन्तः शेषोऽशेषामरप्रभुः ॥ दधाति शिरसा लोकं सोपि देवनियोगतः ॥ ३५ ॥ योऽग्निः संवर्त्तको नित्यं वडवारूपसंस्थितः ॥ पिबत्यखिलमम्भोधिमीश्वरस्य नियोगतः ॥ ३६ ॥ ये चतुर्दश लोकेऽस्मिन्मनवः प्रथितौजसः ॥ पालयन्ति प्रजाः सर्वास्तेऽपि तस्य नियोगतः ॥ ३७ ॥ आदित्या वसवो रुद्रा मरुतश्च तथाश्विनौ ॥ अन्याश्च देवताः सर्वाः शास्त्रेणैव विनिर्मिताः ॥ ॥ ३८ ॥ गन्धर्वा गरुडाद्याश्च सिद्धाः साध्याश्च चारणाः ॥ यक्षरक्षःपिशाचाश्च स्थिताः सृष्टाः स्वयंभुवा ॥ ३९ ॥ कलाकाष्ठानिमेषाश्च मुहूर्त्ता दिवसाः क्षपाः ॥ ऋतवः पक्षमासाश्च स्थिताः शास्त्रे प्रजापतेः ॥ ४० ॥ युगमन्वन्तराण्येव मम तिष्ठन्ति शासने ॥ पराश्चैव परार्द्धाश्च कालभेदास्तथ परे ॥ ४१ ॥ चतुर्विधानि भूतानि स्थावराणि चराणि च ॥ नियोगादेव वर्त्तंते देवस्य परमात्मनः ॥ ४२ ॥ पातालानि च सर्वाणि भुवनानि च शासनात् ॥ ब्रह्माण्डानि च वर्त्तंते सर्वाण्येव स्वयंभुवः ॥ ४३ ॥ अतीतान्यप्यसंख्यानि ब्रह्माण्डानि ममाज्ञया ॥ प्रवृत्तानि पदार्थौघैः सहितानि समन्ततः ॥ ४४ ॥ ब्रह्माण्डानि भविष्यन्ति सह चात्मभिरात्मगैः ॥ करिष्यंन्ति सदैवाज्ञां परस्य परमात्मनः ॥ ४५ ॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ॥ भूतादिरादिप्रकृतिर्नियोगे मम वर्त्तंते ॥ ४६ ॥ याशेषजगतां योनिर्मोहिनी सर्वदेहिनाम् ॥ माया विवर्त्तते नित्यं सापीश्वरनियोगतः ॥ ४७ ॥ यो वै देहभृतां देवः पुरुषः पठ्यते परः ॥ आत्मासौ वर्त्तते नित्यमीश्वरस्य नियोगतः ॥ ४८ ॥ विधूय मोहकलिलं यया पश्यति तत्पदम् ॥ सापि बुद्धिर्महेशस्य नियोगवशवर्त्तिनी ॥ ४९ ॥ बहुनात्र किमुक्तेन मम शक्त्यात्मकं जगत् ॥ मयैवं प्रेर्यते कृत्स्नं मयेव प्रलयं व्रजेत् ॥ ५० ॥ अहं हि भगवानीशः स्वयं ज्योतिः सनातनः ॥ परमात्मा परं ब्रह्म मत्तो ह्यन्यो न विद्यते ॥ ५१ ॥ इत्येतत्परमं ज्ञानं युष्माकं कथितं मया ॥ ज्ञात्वा विमुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ५२ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे

१ मच्छास्त्रेणैव निष्ठिता इति पा० । २ गरुडा ऋक्षाः इति, गरुडाः पक्षा इति पा० । ३ नियमादेवेति पा० । ४ मयोढानीति, त्वयोढानीति पा० । ५ वस्तुभिरिति पा० । ६ वहिष्यन्तीति पा० । ७ देहभृतां वेदे इति पा० । ८ महेश्वरेति पा० । ९ मय्येव युज्यते इति पा० ।

षष्ठोऽध्यायः ॥ ६ ॥ ईश्वर उवाच ॥ शृणुध्वमृषयः सर्वे प्रभावं परमेष्ठिनः ॥ यं ज्ञात्वा पुरुषो मुक्तो न संसारे पतेत्पुनः ॥ १ ॥ परात्परतरं ब्रह्म शाश्वतं ध्रुवमव्ययम् ॥ नित्यानन्दं निर्विकल्पं तद्धाम परमं मम ॥ २ ॥ अहं ब्रह्मविदां ब्रह्मा स्वयंभूर्विश्वतोमुखः ॥ मायाविनामहं देवः पुराणो हरिरव्ययः ॥ ३ ॥ योगिनामस्म्यहं शम्भुः स्त्रीणां देवी गिरीन्द्रजा ॥ आदित्यानामहं विष्णुर्वसूनामस्मि पावकः ॥ ४ ॥ रुद्राणां शङ्करश्चाहं गरुडः पततामहम् ॥ ऐरावतो गजेन्द्राणां रामः शस्त्रभृतामहम् ॥ ५ ॥ ऋषीणां च वसिष्ठोऽहं देवानाञ्च शतक्रतुः ॥ शिल्पिनां विश्वकर्माहं प्रह्लादः सुरविद्विषाम् ॥ ६ ॥ मुनीनामप्यहं व्यासो गणानाञ्च विनायकः ॥ वीराणां वीरभद्रोऽहं सिद्धानां कपिलो मुनिः ॥ ७ ॥ पर्वतानामहं मेरुर्नक्षत्राणाञ्च चन्द्रमाः ॥ वज्रं प्रहरणानाञ्च व्रतानां सत्यमस्म्यहम् ॥ ८ ॥ अनन्तो भोगिनां देवः सेनानीनाञ्च पावकिः ॥ आश्रमाणां गृहस्थोऽहमीश्वराणां महेश्वरः ॥ ९ ॥ महाकल्पश्च कल्पानां युगानां कृतमस्म्यहम् ॥ कुबेरः सर्वयक्षाणां [3]तृणानाञ्चैव वीरुधः ॥ १० ॥ प्रजापतीनां दक्षोऽहं निर्ऋतिः सर्वरक्षसाम् ॥ ×वायुर्बलवतामस्मि द्वीपानां पुष्करोऽस्म्यहम् ॥ ११ ॥ मृगेन्द्राणाञ्च सिंहोहं यन्त्राणां धनुरेव च ॥ वेदानां सामवेदोहं यजुषां शतरुद्रियम् ॥ १२ ॥ सावित्री सर्वजप्यानां गुह्यानां प्रणवोऽस्म्यहम् ॥ सूक्तानां पौरुषं सूक्तं ज्येष्ठसाम च सामसु ॥ १३ ॥ सर्ववेदार्थविदुषां मनुः स्वायम्भुवोऽस्म्यहम् ॥ ब्रह्मावर्त्तस्तु देशानां क्षेत्राणामविमुक्तकम् ॥ १४ ॥ विद्यानामात्मविद्याहं ज्ञानानाम[4]ैश्वरं परम् ॥ भूतानामस्म्यहं व्योम तत्त्वानां मृत्युरेव च ॥ १५ ॥ पाशानामस्म्यहं माया कालः कलयतामहम् ॥ गतीनां मुक्तिरेवाहं परेषां परमेश्वरः ॥ १६ ॥ यच्चान्यदपि लोकेऽस्मिन् सत्त्वं तेजोबलाधिकम् ॥ तत्सर्वं प्रतिजानीध्वं मम तेजोवि[5]जृम्भितम् ॥ १७ ॥ आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्त्तिनः ॥ तेषां पतिरहं देवः स्मृतः पशुपतिर्बुधैः ॥ १८ ॥ मायापाशेन बध्नामि पशूनेतान् स्वलीलया ॥ मामेव

---

१ परमं ध्रुवमिति, निष्कलं परमिति पा० । २ प्रह्लादोऽस्म्यमरद्विषामिति पा० । ३ गणेशानाञ्च वीरुकः इति पा० । × नाथानां विश्वनाथोहं पुरीणां काशिका पुरी । इति अधिकः लि० पु० । ४ ईश्वरः परमिति पा० । ५ विजृम्भणमिति पा० ।

मोचकं प्राहुः पशूनां वेदवादिनः ॥ १९ ॥ मायापाशेन बद्धानां मोचकोऽन्यो न विद्यते ॥ मामृते परमात्मानं भूताधिपतिमव्ययम् ॥ २० ॥ चतुर्विंशतितत्त्वानि माया कर्म गुणा इति ॥ एते पाशाः पशुपतेः क्लेशाश्च पशुबन्धनाः ॥ २१ ॥ मनो बुद्धिरहङ्कारः खानिलाग्निजलानि भूः ॥ एताः प्रकृतयस्त्वष्टौ विकाराश्च तथापरे ॥ २२ ॥ श्रोत्रं त्वक् चक्षुषी जिह्वा घ्राणश्चैव तु पञ्चमम् ॥ पायूपस्थं करौ पादौ वाक् चैव दशमी मता ॥ २३ ॥ शब्दः स्पर्शश्च रूपश्च रसो गन्धस्तथैव च ॥ त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि च ॥ २४ ॥ चतुर्विंशकमव्यक्तं प्रधानं गुणलक्षणम् ॥ अनादिमध्यानिधनं कारणं जगतः परम् ॥ २५ ॥ सत्त्वं रजस्तमश्चेति गुणत्रयमुदाहृतम् ॥ साम्यावस्थितिमेतेषामव्यक्तां प्रकृतिं विदुः ॥ २६ ॥ सत्त्वं ज्ञानं तमो ज्ञानं राजसं समुदाहृतम् ॥ गुणानां बुद्धिवैषम्याद्वैषम्यं कवयो विदुः ॥ २७ ॥ धर्माधर्माविति प्रोक्तौ पाशौ द्वौ कर्मसंज्ञितौ ॥ मय्यर्पितानि कर्माणि न बन्धाय विमुक्तये ॥ २८ ॥ अविद्यामस्मितां रागं द्वेषं चाभिनिवेशनम् ॥ क्लेशाख्यांस्तान् स्वयं प्राह पाशानात्मनिबन्धनात् ॥ २९ ॥ एतेषामेव पाशानां माया कारणमुच्यते ॥ मूलप्रकृतिरव्यक्ता सा शक्तिर्मयि तिष्ठति ॥ ३० ॥ स एव मूलप्रकृतिः प्रधानं पुरुषोऽपि च ॥ विकारा महदादीनि देवदेवः सनातनः ॥ ३१ ॥ स एव बन्धः स च बन्धकर्त्ता स एव पाशः पशुभृत्स एव ॥ स वेद सर्वं न च तस्य वेत्ता तमाहुराद्यं पुरुषं पुराणम् ॥ ३२ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे सप्तमोऽध्यायः ॥ ७ ॥

ईश्वर उवाच ॥ अन्यद्गुह्यतमं ज्ञानं वक्ष्ये ब्राह्मणपुङ्गवाः ॥ येनासौ तरते जन्तुर्घोरं संसारसागरम् ॥ १ ॥ अयं ब्रह्मा तमः शान्तः शाश्वतो निर्मलोऽव्ययः ॥ एकाकी भगवानुक्तः केवलः परमेश्वरः ॥ २ ॥ मम योनिर्महद्ब्रह्म तत्र गर्भं दधाम्यहम् ॥ मूलमायाभिधानं तं ततो जातमिदं जगत् ॥ ३ ॥ प्रधानं पुरुषो ह्यात्मा महद्भूतादिरेव च ॥ तन्मात्राणि मनोभूतानीन्द्रियाणि च जज्ञिरे ॥ ४ ॥ ततोऽण्डमभवद्धैममर्ककोटिसमप्रभम् ॥ तस्मिञ्जज्ञे महाब्रह्मा मच्छक्त्या चोपबृंहितः ॥ ५ ॥ ये चान्ये बहवो जीवास्तन्मयाः सर्व एव

१ रजोमिश्रमुदाहृतमिति पा० । २ पाशाः पशवः स इति पा० । ३ अहमिति, अहं ब्रह्ममयः इति पा० । ४ महान् भूतादिरिति पा० ।

ते ॥ न मां पश्यन्ति पितरं मायया मम मोहिताः ॥ ६ ॥ यासु योनिषु ताः सर्वाः सम्भवन्तीह मूर्त्तयः ॥ तां मातरं परां योनिं मामेव पितरं विदुः ॥ ७ ॥ यो मामेवं विजानाति बीजिनं पितरं प्रभुम् ॥ स वीरः सर्वलोकेषु न मोहमाधिगच्छति ॥ ८ ॥ ईशानः सर्वविद्यानां भूतानां परमेश्वरः ॥ ओङ्कारमूर्त्तिर्भगवानहं ब्रह्मा प्रजापतिः ॥ ९ ॥ समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥ विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ १० ॥ समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥ न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ ११ ॥ विदित्वा सप्त सूक्ष्माणि षडङ्गं च महेश्वरम् ॥ प्रधानविनियोगज्ञः परं ब्रह्माधिगच्छति ॥ १२ ॥ सर्वज्ञता तृप्तिरनादिबोधः स्वच्छन्दता नित्यमलुप्त शक्तिः ॥ अनन्तशक्तिश्च विभोर्विदित्वा षडाहुरङ्गानि महेश्वरस्य ॥ १३ ॥ तन्मात्राणि मन आत्मा च तानि सूक्ष्माण्याहुः सप्त तत्त्वात्मकानि ॥ या सा हेतुः प्रकृतिः सा प्रधानं बन्धः प्रोक्तो विनयेनापि तेन ॥ १४ ॥ या सा शक्तिः प्रकृतौ लीनरूपा वेदेषूक्ता कारणं ब्रह्मयोनिः ॥ तस्या एकः परमेष्ठी पुरस्तान्माहेश्वरः पुरुषः सत्यरूपः ॥ १५ ॥ ब्रह्मा योगी परमात्मा महीयान् व्योमव्यापी वेदवेद्यः पुराणः ॥ एको रुद्रो मृत्युमव्यक्तमेकं बीजं विश्वं देव एकः स एव ॥ १६ ॥ तमेवैकं प्राहुरन्येऽप्यनेकं त्वामेवात्मा केचिदन्यं तमाहुः ॥ अणोरणीयान्महतो महीयान्महादेवः प्रोच्यते विश्वरूपः ॥ १७ ॥ एवं हि यो वेद गुहाशयं परं प्रभुं पुराणं पुरुषं विश्वरूपम् ॥ हिरण्मयं बुद्धिमतां पराङ्गतिं स बुद्धिमान् बुद्धिमतीत्य तिष्ठति ॥ १८ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे अष्टमोऽध्यायः ॥ ८ ॥ ऋषय ऊचुः ॥ निष्कलो निर्मलो नित्यो निष्क्रियः परमेश्वरः ॥ तन्नो वद महादेव विश्वरूपः कथं भवान् ॥ १ ॥ ईश्वर उवाच ॥ नाहं विश्वो न विश्वञ्च मामृते विद्यते द्विजाः ॥ माया निमित्तमात्रास्ति सा चात्मनि मया श्रिता ॥ २ ॥ अनादिनिधना शक्तिर्माया व्यक्तिसमाश्रया ॥ तन्निमित्तः प्रपञ्चोऽयमव्यक्ताज्जायते खलु ॥ ३ ॥

---

१ तासां माया परा योनिरिति पा० । २ मायामेवमिति पा० । ३ परं पदमिति पा० । ४ स्वतन्त्रता इति पा० । ५ विनियोगोऽपि इति पा० । ६ त्वेकात्मानमिति पा० । ७ वेदविद्धिरिति पा० । ८ परमिति पा० । ९ अबुद्धिमानिति पा० । १० साचास्य कमुपाश्रिता इति पा० । ११ व्यक्तसमाश्रिता इति, व्यक्तसमाश्रया इति पा० । १२ मव्यक्तादभवत् खलु इति पा० ।

अव्यक्तं कारणं प्राहुरानन्दं ज्योतिरक्षरम् ॥ अहमेव परं ब्रह्म मत्तो ह्यन्यन्न विद्यते ॥४॥ तस्मान्मे विश्वरूपत्वं निश्चितं ब्रह्मवादिभिः ॥ एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनम् ॥५॥ अहं तत्परमं ब्रह्म परमात्मा सनातनः ॥ अकारणं द्विजाः प्रोक्ता न दोषो ह्यात्मनस्तथा ॥ ६ ॥ अनन्ताः शक्तयोऽव्यक्ता मायया संस्थिता ध्रुवाः ॥ तस्मिन्दिवि स्थितं नित्यमव्यक्तं भाति केवलम् ॥ ७ ॥ अभिन्नं वक्ष्यते भिन्नं ब्रह्माव्यक्तं सनातनम् ॥ एकया मायया युक्तमनादिनिधनं ध्रुवम् ॥ ८ ॥ पुंसोऽन्याभूद्यथा भूतिरन्यया न तिरोहितम् ॥ अनादि मध्यं तिष्ठन्तं चेष्टते विद्यया किल ॥ ९ ॥ तदेतत्परमव्यक्तं प्रभामण्डलमण्डितम् ॥ तदक्षरं परं ज्योतिस्तद्विष्णोः परमं पदम् ॥ १० ॥ तत्र सर्वमिदं प्रोतमोतं चैवाखिलं जगत् ॥ तदेवेदं जगत्कृत्स्नं तद्विज्ञाय विमुच्यते ॥११॥ यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ॥ आनन्दं ब्रह्मणो विद्वान् बिभेति न कुतश्चन ॥ १२ ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं पुरुषं पुरस्तात् ॥ तं विज्ञाय परिमुच्येत विद्वान्नित्यानन्दी भवति ब्रह्मभूतः ॥ १३ ॥ अस्मात्परं नापरमस्ति किञ्चिद्यज्ज्योतिषां ज्योतिरेकं दिविस्थम् ॥ तदेवात्मानं मन्यमानोऽथ विद्वानात्मानन्दी भवति ब्रह्मभूतः ॥ १४ ॥ तदप्यहं कलिलं गूढदेहं ब्रह्मानन्दममृतं विश्वधामा ॥ वदन्त्येवं ब्राह्मणा ब्रह्मनिष्ठा यत्र गत्वा न निवर्तेत भूयः ॥ १५ ॥ हिरण्मये परमाकाशतत्त्वे यदर्चिषि विप्रतिभातीव तेजः ॥ तद्विज्ञाने परिपश्यन्ति धीरा विभ्राजमानं विमलं व्योमधाम ॥ १६ ॥ ततः परं परिपश्यन्ति धीरा आत्मन्यात्मानमनुभूय साक्षात् ॥ स्वयं प्रभुः परमेष्ठी महीयान् ब्रह्मानन्दी भगवानीश एषः ॥ १७ ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ॥ तमेवैकं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १८ ॥ सर्वायनशिरोग्रीवः सर्वभूतगुहाशयः ॥ सर्वव्यापी स भगवान् तस्मादन्यन्न विद्यते ॥ १९ ॥ इत्येतदैश्वरं ज्ञानमुक्तं वो मुनिपुंगवाः ॥ गोपनीयं विशेषेण योगिनामपि दुर्लभम् ॥ २० ॥ इति श्रीकूर्म० उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिनारदसंवादे नवमोध्यायः ॥ ९ ॥ ईश्वर उवाच ॥ अलिंगमेकमव्यक्तलिंगं ब्रह्मेति निश्चितम् ॥ स्वयं ज्योतिः परं

१ मत्तोऽन्यद्धि इति पा० । २ याभिस्तल्लक्ष्यतेभिन्नामिति पा० । ३ न बिभेति कदाचनेति पा० । ४ तमसः परस्तादिति पा० । ५ यदर्चिषीति पा० । ६ तद्विज्ञानेन इति पा० । ७ भवानीश इति पा० ।

तत्त्वं पूर्वं व्योम्नि व्यवस्तिम् ॥ १ ॥ अव्यक्तं कारणं यत्तदक्षरं परमं पदम् ॥ निर्गुणं सिद्धिविज्ञानं तद्वै पश्यन्ति सूरयः ॥ २ ॥ तन्निष्ठ
स्वान्तसङ्कल्पा नित्यं तद्भावभाविताः ॥ पश्यन्ति तत्परं ब्रह्म यत्तल्लिंगमिति श्रुतिः ॥३॥ अन्यथा न हि मां द्रष्टुं शक्यं वै मुनिपुंगवाः ॥
नहि तद्विद्यते ज्ञानं येन तज्ज्ञायते परम् ॥ ४ ॥ एतत्तत्परमं स्थानं केवलं कवयो विदुः ॥ अज्ञानतिमिरं ज्ञानं यस्मान्मायामयं
जगत् ॥५ ॥ यज्ज्ञानं निर्मलं शुद्धं निर्विकल्पं निरञ्जनम् ॥ ममात्मासौ तदेवैनमिति प्राहुर्विपश्चितः ॥ ६ ॥ येऽप्यनेकं प्रपश्यन्ति तत्परं
परमं पदम् ॥ आश्रिताः परमां निष्ठां बुद्ध्वैक्यं तत्त्वमव्ययम् ॥७॥ ये पुनः परमं तत्त्वमेकं वानेकमीश्वरम् ॥ भक्त्या मां सम्प्रपश्यन्ति
विज्ञेयास्ते तदात्मकाः ॥ ८॥ साक्षादेवं प्रपश्यन्ति स्वात्मानं परमेश्वरम् ॥ नित्यानन्दं निर्विकल्पं सत्यरूपमिति स्थितिः ॥९॥ भजन्ते
परमानन्दं सर्वगं जगदात्मकम् ॥ स्वात्मन्यवस्थिताः शान्ताः परेऽव्यक्तापरस्य तु ॥ १० ॥ एषा विमुक्तिः परमा मम सायुज्यमुत्तमम् ॥
निर्वाणं ब्रह्मणा चैक्यं कैवल्यं कवयो विदुः ॥ ११ ॥ तस्मादनादिमध्यान्तं वस्त्वेकं परमं शिवम् ॥ स ईश्वरो महादेवस्तं विज्ञाय प्रमु
च्यते ॥ १२ ॥ न तत्र सूर्यः प्रतिभातीह चन्द्रो नक्षत्राणां[11] गणो नोत विद्युत् ॥ तद्भासितं ह्यखिलं भाति विश्वमतीव भासममलं तद्वि
भाति ॥१३॥ विश्वोदितं निष्कलं[12] निर्विकल्पं शुद्धं बृहत्[13]परमं यद्विभाति ॥ अत्रान्तरे ब्रह्मविदोऽथ नित्यं पश्यन्ति तत्त्वमचलं यत्स
ईशः ॥ १४॥ नित्यानन्दममृतं सत्यरूपं शुद्धं वदन्ति पुरुषं सर्ववेदाः ॥ प्रणवमिति[14] प्राणविनेशितारं ध्यायन्ति [15]वेदैरिति निश्चि
तार्थाः ॥ १५॥ न भूमिरापो न मनो न वह्निः प्राणोऽनिलो गगनं नोत बुद्धिः॥ न चेतनोऽन्यत्परमाकाशमध्ये विभाति देवः शिव एक
केवलः ॥१६॥ इत्येतदुक्तं परमं रहस्यं ज्ञानं[16]चेदं सर्ववेदेषु गीतम् ॥ जानाति योगी विजनेऽथ देशे युञ्जीत योगं प्रयतो ह्यजस्रम् ॥१७॥

---

१ परे इति पा० । २ शुद्धविज्ञानमिति पा० । ३ तन्निष्ठाः शान्तसङ्कल्पा इति पा० । ४ यतस्तज्जायते इति पा० । ५ ज्ञानमिति पा० । ६ अज्ञानमितरज्ज्ञानमिति पा० । इतरदिति साधु । ७ तदेवेदमिति पा० एनदिति साधु । ८ बुद्ध्वैकमिति पा० । ९ यत्सदात्मकमिति, यत्तदात्मकमिति पा० । १० परव्यक्ते परस्य तु इति पा० । ११ नक्षत्रताराग्तपनश्च विद्युदिति पा० । १२ नित्योदितं सामदामिति पा० । १३ शुभ्रं विशस्तं परममिति पा० । १४ तमोमिति प्रणवेन इति पा० । १५ वेदार्थविनिश्चितार्थमिति पा० । १६ ज्ञानामृतं सर्ववेदेषु गूढमिति पा० । १७ यदेवमिति पा० ।

इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिनारदसंवादे दशमोऽध्यायः ॥ १० ॥ ईश्वर उवाच ॥ अतः परं प्रवक्ष्यामि योगं परमदुर्लभम् ॥ येनात्मानं प्रपश्यन्ति भानुमन्तमिवेश्वरम् ॥ १ ॥ योगाग्निर्दहते क्षिप्रमशेषं पापपञ्जरम् ॥ प्रसन्नं जायते ज्ञानं साक्षान्निर्वाणसिद्धिदम् ॥ २ ॥ योगात्संजायते ज्ञानं ज्ञानाद्योगः प्रवर्त्तते ॥ योगज्ञानाभियुक्तस्य प्रसीदति महेश्वरः ॥ ३ ॥ एककालं द्विकालं वा त्रिकालं नित्यमेव च ॥ ये युञ्जन्ति महायोगं ते विज्ञेया महेश्वराः ॥ ४ ॥ योगस्तु द्विविधो ज्ञेयो ह्यभावः प्रथमो मतः ॥ अपरस्तु महायोगः सर्वयोगोत्तमोत्तमः ॥ ५ ॥ शून्यं सर्वनिराभासं स्वरूपं यत्र चिन्त्यते ॥ अभावयोगः स प्रोक्तो येनात्मानं प्रपश्यति ॥ ६ ॥ यत्र पश्यति चात्मानं नित्यानन्दं निरञ्जनम् ॥ मयैक्यं स मया योगो भाषितः परमः स्वयम् ॥ ७ ॥ ये चान्ये योगिनां योगाः श्रूयन्ते ग्रन्थविस्तरे ॥ सर्वे ते ब्रह्मयोगस्य कलां नार्हन्ति षोडशीम् ॥ ८ ॥ यत्र साक्षात्प्रपश्यन्ति विमुक्ता विश्वमीश्वरम् ॥ सर्वेषामेव योगानां स योगः परमो मतः ॥ ९ ॥ सहस्रशोऽथ बहुशो ये चेश्वरबहिष्कृताः ॥ न ते पश्यन्ति मामेकं योगिनो यतमानसाः ॥ १० ॥ प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा ॥ समाधिश्च मुनिश्रेष्ठा यमश्च नियमासने ॥ ११ ॥ मय्येकचित्तता योगः प्रत्यन्तरनियोगतः ॥ तत्साधनानि चान्यानि युष्माकं कथितानि तु ॥ १२ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥ यमाः संक्षेपतः प्रोक्ताश्चित्तशुद्धिप्रदा नृणाम् ॥ १३ ॥ कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ॥ अक्लेशजननं प्रोक्ता त्वहिंसा परमर्षिभिः ॥ १४ ॥ अहिंसायाः परो धर्मो नास्त्यहिंसापरं सुखम् ॥ विधिना या भवेद्धिंसा त्वहिंसैव प्रकीर्त्तिता ॥ १५ ॥ सत्येन सर्वमाप्नोति सत्ये सर्वं प्रतिष्ठितम् ॥ यथार्थकथनाचारः सत्यं प्रोक्तं द्विजातिभिः ॥ १६ ॥ परद्रव्यापहरणं चौर्यादथ बलेन वा ॥ स्तेयं तस्यानाचरणादस्तेयं धर्मसाधनम् ॥ १७ ॥ कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ॥ सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षते ॥ १८ ॥ द्रव्याणा

१ सश्चयमिति पा० । २ अनुका सुनका इति । ३ महायोगः इति पा० । ४ परमेश्वरः इति पा० । ५ शतशः इति पा० । ६ वृत्त्यंतर इति, वृत्तान्तर इति पा० । ७ सा त्वहिंसैव कीर्त्तिता इति पा० ।

मप्यनादानमापद्यपि तथेच्छया ॥ अपरिग्रहमित्याहुस्तं प्रयत्नेन पालयेत् ॥ १९ ॥ तपः स्वाध्यायसन्तोषौ शौचमीश्वरपूजनम् ॥ समासान्नियमाः प्रोक्ता योगसिद्धिप्रदायिनः ॥२०॥ उपवासपराकादिकृच्छ्रचान्द्रायणादिभिः ॥ शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् ॥ २१ ॥ वेदान्तशतरुद्रीयप्रणवादिजपं बुधाः ॥ सत्त्वसिद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥ २२ ॥ स्वाध्यायस्य त्रयो भेदा वाचिको पांशुमानसाः ॥ उत्तरोत्तरवैशिष्ट्यं प्राहुर्वेदार्थवेदिनः ॥ २३ ॥ यः शब्दबोधजननः परेषां शृण्वतां स्फुटम् ॥ स्वाध्यायो वाचिकः प्रोक्त उपांशोरथ लक्षणम् ॥ २४ ॥ ओष्ठयोः स्पन्दमात्रेण परस्याशब्दबोधकम् ॥ उपांशुरेष निर्दिष्टः साध्वसौ वाचिकाज्जपात् ॥ २५ ॥ यत्पदाक्षरसङ्गत्या परिस्पन्दनवर्जितम् ॥ चिन्तनं सर्वशब्दानां मानसं तज्जपं विदुः॥ २६ ॥ यदृच्छालाभतो वित्तं अलं पुंसो भवेदिति॥ प्राशस्त्यमृषयः प्राहुः सन्तोषं सुखलक्षणम् ॥ २७ ॥ बाह्यमाभ्यन्तरं शौचं द्विधा प्रोक्तं द्विजोत्तमाः ॥ मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिरथान्तरम् ॥ २८ ॥ स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्मभिः ॥ सुनिश्चला शिवे भक्तिरेतदीशस्य पूजनम् ॥ २९ ॥ यमाश्च नियमाः प्रोक्ताः प्राणायामं निबोधत ॥ प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ॥ ३० ॥ उत्तमाधममध्यत्वात्त्रिधायं प्रतिपादितः ॥ य एव द्विविधः प्रोक्तः सगर्भोऽगर्भ एव च ॥ ३१ ॥ मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः ॥ मध्यमः प्राणसंरोधः षट्त्रिंशन्मात्रिकोऽन्तकः ॥ ३२ ॥ यः स्वेदकम्पनोच्छ्वासजनकस्तु यथाक्रमम् ॥ संयोगश्च मनुष्याणामानन्दाद्योत्तमोत्तमः ॥३३॥ सुनफाख्यं हि तं योगं सगर्भविजयं बुधाः॥एतद्धि योगिनां प्राहुः प्राणायामस्य लक्षणम् ॥३४॥सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ॥ त्रिर्जपेदायतप्राणः प्राणायामोऽथ नामतः ॥ ३५ ॥ रेचकः पूरकश्चैव प्राणायामोऽथ कुम्भकः ॥ प्रोच्यते सर्वशास्त्रेषु योगिभिर्यतमानसैः ॥३६॥ रेचको बाह्यनिश्वासः पूरकस्तन्निरोधनः॥साम्येन संस्थितिर्या सा कुम्भकः परिगीयते॥३७॥ इन्द्रियाणां विचरतां विषयेषु स्वभावतः॥निग्रहः प्रोच्यते सद्भिः प्रत्याहारस्तु सत्तमाः ॥३८॥हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्वसु मस्तके॥एवमादिषु देशेषु धारणा चित्तबन्धनम्॥३९॥

१ सहस्रवाचिको जपः इति पा० । २ नित्यमिति पा० । ३ यां निष्ठामिति पा० । ४ मात्रिकोत्तम इति पा० । ५ यः स्वेदकम्पनोत्थान इति पा० । ६ मन्दमध्यममुख्यानामानन्दादुत्तमोत्तमः । सगर्भमाहुः सजपमगर्भविजयं बुधाः इति पा० । ७ एतद्धि योगिनामुक्तमिति पा० । ८ प्राणायामः स उच्यते इति पा० । ९ रेचकोऽनस्त्रनिश्वासादिति पा० ।

देशावस्थितिमालम्ब्य ऊर्द्धं या वृत्तिसन्ततिः ॥ प्रत्यन्तरैरसृष्टा या तद्ध्यानं सूरयो विदुः ॥ ४० ॥ एकाकारः समाधिः स्याद्देशालम्बनवर्जितः ॥ प्रत्ययो ह्यर्थमात्रेण योगशासनमुत्तमम् ॥ ४१ ॥ धारणा द्वादशायामा ध्यानं द्वादश धारणाः ॥ ध्यानं द्वादशकं यावत्समाधिरभिधीयते ॥ ४२ ॥ आसनं स्वस्तिकं प्रोक्तं पद्ममर्द्धासनं तथा ॥ साधनानाञ्च सर्वेषामेतत्साधनमुत्तमम् ॥ ४३ ॥ ऊर्वोरुपरि विप्रेन्द्राः कृत्वा पादतले उभे ॥ समासीनात्मनः पद्ममेतदासनमुत्तमम् ॥ ४४ ॥ उभे कृत्वा पातदले जानूर्वोरन्तरेण हि ॥ समासीनात्मनः प्रोक्तमासनं स्वस्तिकं परम् ॥ ४५ ॥ एकं पाद मथैकस्मिन्विष्टभ्योरसि सत्तमाः ॥ आसीनार्द्धासनमिदं योगसाधनमुत्तमम् ॥ ४६ ॥ अदेशकाले योगस्य दर्शनं न हि विद्यते ॥ अग्न्यभ्यासे जले वापि शुष्कपर्णचये तथा ॥ ४७ ॥ जन्तुव्याप्ते श्मशाने च जीर्णगोष्ठे चतुष्पथे ॥ सशब्दे सभये वापि चैत्यवल्मीकसञ्चये ॥ ४८ ॥ अशुभे दुर्जनाक्रान्ते मशकादिसमन्विते ॥ नाचरेद्देहबाधे वा दौर्मनस्यादिसंभवे ॥ ४९ ॥ सुगुप्ते सुशुभे देशे गुहायां पर्वतस्य च ॥ नद्यास्तीरे पुण्यदेशे देवतायतने तथा ॥ ५० ॥ गृहे वा सुशुभे देशे निर्जने जन्तुवर्जिते ॥ युञ्जीत योगं सततमात्मानं तत्परायणः ॥ ५१ ॥ नमस्कृत्याथ योगीन्द्राञ्छिष्यांश्चैव विनायकम् ॥ गुरुञ्चैव च मां योगी युञ्जीत सुसमाहितः ॥ ५२ ॥ आसनं स्वस्तिकं बद्ध्वा पद्ममर्द्धमथापि वा ॥ नासिकाग्रे समां दृष्टिमीषदुन्मीलितेक्षणः ॥ ५३ ॥ कृत्वाथ निर्भयः शान्तस्त्यक्त्वा मायामयं जगत् ॥ स्वात्मन्यवस्थितं देवं चिन्तयेत्परमेश्वरम् ॥ ५४ ॥ शिखाग्रे द्वादशांगुल्ये कल्पयित्वाथ पङ्कजम् ॥ धर्मकन्दसमुद्भूतं ज्ञाननालं सुशोभनम् ॥ ५५ ॥ ऐश्वर्याष्टदलं श्वेतं परं वैराग्यकर्णिकम् ॥ चिन्तयेत्परमं कोशं कर्णिकायां हिरण्मयम् ॥ ५६ ॥ सर्वशक्तिमयं साक्षाद्यं प्राहुर्दिव्यमव्ययम् ॥ ओङ्कारवाच्यमव्यक्तं रश्मिज्वालासमाकुलम् ॥ ५७ ॥ चिन्तयेत्तत्र विमलं परं ज्योतिर्यदक्षरम् ॥ तस्मिञ्ज्योतिषि विन्यस्य स्वानन्दं मम भेदतः ॥ ५८ ॥ ध्यायीत कोशमध्यस्थमीशं परमकारणम् ॥ तदात्मा सर्वगो भूत्वा न किञ्चिदपि चिन्तयेत् ॥ ५९ ॥ एतद्गुह्यतमं ज्ञानं ध्यानान्तरमथोच्यते ॥ चिन्तयित्वा तु पूर्वोक्तं हृदये पद्ममुत्तमम् ॥ ६० ॥ आत्मानमथ कर्तारं तत्रानलसमत्विषम् ॥ मध्ये वह्नि

१ बुद्धेरिति पा० । २ वृत्यन्तरैरसंसृष्टा इति पा० । ३ साधनेति पा० । ४ समये इति पा० । ५ रम्ये इति पा० । ६ योगीति पा० । ७ मत्परायण इति पा० । ८ जालेति पा० । ९ स्वात्मानं तद्भेदेन इति, स्वात्मानन्दमभेदत इति पा० । १० ध्यायीताकाशेति पा० ध्यायीत-अत्र आत्मनेपदित्वमार्षम् । ११ कर्तारमिति पा० ।

शिखाकारं पुरुषं पञ्चविंशकम् ॥ ६१ ॥ चिंतयेत्परमात्मानं तन्मध्ये गगनं परम् ॥ ओङ्कारबोधितं तत्त्वं शाश्वतं [1]शिवमुच्यते ॥ ६२ ॥ [2]अव्यक्तं प्रकृतौ लीनं परं ज्योतिरनुत्तमम् ॥ तदन्तः परमं तत्त्वमात्माधारं निरञ्जनम् ॥ ६३ ॥ ध्यायीत तन्मयो नित्यमेकरूपं महेश्वरम् ॥ विशोध्य सर्वतत्त्वानि प्रणवेनाथवा पुनः ॥ ६४ ॥ संस्थाप्य मयि चात्मानं निर्मले परमे पदे ॥ प्लावयित्वात्मनो देहं तेनैव ज्ञानवारिणा ॥ ६५ ॥ मदात्मा मन्मना भस्म गृहीत्वा [3]त्वग्निहोत्रिकम् ॥ तेनोद्धूलितसर्वाङ्गमग्निरादित्यमन्त्रतः ॥ ६६ ॥ चिन्तयेत्स्वात्मनीशानं परं ज्योतिःस्वरूपिणम् ॥ एष पाशुपतो योगः पशुपाशविमुक्तये ॥ ६७ ॥ सर्ववेदान्तमार्गो[4]ऽयमत्याश्रममिति श्रुतिः ॥ एतत्परतरं गुह्यं मत्सायुज्यप्रदायकम् ॥६८॥ द्विजातीनां तु कथितं भक्तानां ब्रह्मचारिणाम् ॥ ब्रह्मचर्यमहिंसा च क्षमा शौचं तपो दमः ॥ ६९ ॥ सन्तोषः सत्यमास्तिक्यं व्रताङ्गानि विशेषतः ॥ एकेनाप्यथ हीनेन व्रतमस्य न लुप्यते ॥ ७० ॥ तस्मादात्मगुणोपेतो मद्व्रतं वोढुमर्हति ॥ वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥७१॥ [5]बहवोऽनेन योगेन पूता मद्भावयोगतः ॥ ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥ ७२ ॥ ज्ञानयोगेन मां तस्माद्यजेत परमेश्वरम् ॥ अथवा भक्तियोगेन वैराग्येण परेण तु ॥ ७३ ॥ चेतसा बोधयुक्तेन पूजयेन्मां सदा शुचिः ॥ सर्वकर्माणि संन्यस्य भिक्षाशी निष्परिग्रहः ॥ ७४ ॥ प्राप्नोती मम सायुज्यं गुह्यमेतन्मयोदितम् ॥ अद्वेष्टा सर्वभूतानां मैत्रीकरुण एव च ॥ ७५ ॥ निर्ममो निरहङ्कारो यो मद्भक्तः स मे प्रियः ॥ संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥ ७६ ॥ मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥ ७७ ॥ हर्षामर्षभयोद्वेगैर्मुक्तो यः स हि मे प्रियः ॥ अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥ ७८ ॥ सर्वारम्भपरित्यागी भक्तिमान्यः स मे प्रियः ॥ तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ॥ ७९ ॥ अनिकेतः स्थिरमतिर्मद्भक्तो मामुपैष्यति ॥ सर्वकर्माण्यपि सदा कुर्वाणो मत्परायणः ॥ ८० ॥ मत्प्रसादादवाप्नोति शाश्वतं परमं पदम् ॥ चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥ ८१ ॥ निराशीर्निर्ममो भूत्वा मामेकं शरणं

---

१ शिवमच्युतमिति पा० । २ अनन्तमिति पा० । ३ त्वग्निहोत्रजमिति पा० । ४ स्मारोऽयमिति पा० । ५ बहवो ज्ञानतपसा पूता मद्भावमागताः इति, मद्भावभाविताः इति पा० ।

व्रजेत् ॥ त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ॥ ८२ ॥ कर्मण्यपि प्रवृत्तोऽपि कर्मणा तेन बुध्यते ॥ निराशी यतचित्तात्मा त्यक्तसर्वपरिग्रहः ॥ ८३ ॥ शारीरं केवलं कर्म कुर्वन्नाप्नोति तत्पदम् ॥ यदृच्छालाभतृप्तस्य द्वन्द्वातीतस्य चैव हि ॥ ८४ ॥ कुर्वतो मत्प्रसादार्थं कर्म संसारनाशनम् ॥ मन्मना मन्नमस्कारो मद्याजी मत्परायणः ॥ ८५ ॥ मामुपास्यति योगीशो ज्ञात्वा मां परमेश्वरम् ॥ मामेवाहुः परं ज्योतिर्बोधयन्तः परस्परम् ॥ ८६ ॥ कथयन्तश्च मां नित्यं मम सायुज्यमाप्नुयुः ॥ एवं नित्याभियुक्तानां मायेयं कर्म सात्त्वगम् ॥ ८७ ॥ नाशयामि तमः कृत्स्नं ज्ञानदीपेन भास्वता ॥ मद्बुद्धयो मां सततं पूजयन्तीह ये जनाः ॥ ८८ ॥ तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ये चान्ये भोगकर्मार्था यजन्ते ह्यन्यदेवताः ॥ ८९ ॥ तेषां तदन्तं विज्ञेयं देवतानुगतं फलम् ॥ ये चान्ये देवताभक्ताः पूजयन्तीह देवताः ॥ ९० ॥ मद्भावनासमायुक्ता मुच्यन्ते तेऽपि मानवाः ॥ तस्माद्विनश्वरानन्यांस्त्यक्त्वा देवानशेषतः ॥ ९१ ॥ मामेव संश्रयेदीशं स याति परमं पदम् ॥ त्यक्त्वा पुत्रादिषु स्नेहं निःशोको निष्परिग्रहः ॥ ९२ ॥ यजेच्चामरणाल्लिङ्गं विरक्तः परमेश्वरम् ॥ येऽर्चयन्ति सदा लिङ्गं त्यक्त्वा भोगानशेषतः ॥ ९३ ॥ एकेन जन्मना तेषां ददामि परमं पदम् ॥ परात्मनः सदा लिंगं केवलं रजतप्रभम् ॥ ९४ ॥ ज्ञानात्मकं सर्वगतं योगिनां हृदि संस्थितम् ॥ ये चान्ये नियता भक्ता भावयित्वा विधानतः ॥ ९५ ॥ यत्र क्वचन तल्लिंगमर्चयन्ति महेश्वरम् ॥ जले वा वह्निमध्ये वा व्योम्नि सूर्येऽप्यथान्यतः ॥ ९६ ॥ रत्नादौ भावयित्वेशमर्चयेल्लिंगमैश्वरम् ॥ सर्वलिंगमयं ह्येतत्सर्वं लिंगे प्रतिष्ठितम् ॥ ९७ ॥ तस्माल्लिंगेऽर्चयेदीशं यत्र क्वचन शाश्वतम् ॥ अग्नौ क्रियावतामप्सु व्योम्नि सूर्ये मनीषिणाम् ॥ ९८ ॥ काष्ठादिष्वेव मूर्खाणां हृदि लिंगन्तु योगिनाम् ॥ यद्यनुत्पन्नविज्ञानो विरक्तः प्रीतिसंयुतः ॥ ९९ ॥ यावज्जीवं जपेद्युक्तः प्रणवं ब्रह्मणो वपुः ॥ अथवा शतरुद्रीयं जपेदामरणाद्द्विजः ॥ १०० ॥ एकाकी यतचित्तात्मा स

१ नैव तेन निबध्यते इति पा० । २ जिताचित्तात्मेति पा० । ३ किल्बिषमिति पा० । ४ द्वन्द्वातीतस्य-द्वन्द्वं सुखदुःखशीतोष्णादिद्वन्द्वं तदतीतस्य इत्यर्थः । ५ उपास्ते इति साधु । मामपैष्यतीति पा० । ६ मद्बुद्धयो मां सततमिति पा० । ७ मदीयं कर्म सत्त्वगम् इति पा० । ८ विश्वेश्वरेति पा० । ९ सन्निरञ्जनमिति पा० ।

याति परमं पदम् ॥ वसेच्चामरणाद्विप्रा वाराणस्यां समाहितः ॥ १०१ ॥ सोऽपीश्वरप्रसादेन याति तत्परमम्पदम् ॥ तत्रोत्क्रमणकाले हि सर्वेषामेव देहिनाम् ॥ १०२ ॥ ददाति परमं ज्ञानं येन मुच्येत बन्धनात् ॥ वर्णाश्रमविधिं कृत्स्नं कुर्वाणो मत्परायणः ॥ १०३ ॥ तेनैव जन्मना ज्ञानं लब्ध्वा याति शिवं पदम् ॥ येऽपि तत्र वसन्तीह नीचा वै पापयोनयः ॥ १०४ ॥ सर्वे तरन्ति संसारमीश्वरानुग्रहाद्द्विजाः ॥ किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसाम् ॥ १०५ ॥ धर्मान्समाश्रयेत्तस्मान्मुक्तये सततं द्विजाः ॥ एतद्रहस्यं वेदानां न देयं यस्य कस्यचित् ॥ १०६ ॥ धार्मिकायैव दातव्यं भक्ताय ब्रह्मचारिणे ॥ व्यास उवाच ॥ इत्येतदुक्त्वा भगवान् शाश्वतो योगमुत्तमम् ॥ १०७ ॥ व्याजहार समासीनं नारायणमनामयम् ॥ मयैतद्भाषितं ज्ञानं हितार्थं ब्रह्मवादिनाम् ॥ १०८ ॥ दातव्यं शान्तचित्तेभ्यः शिष्येभ्यो भवता शिवम् ॥ उक्त्वैवमर्थं योगीन्द्रानब्रवीद्भगवानजः ॥ १०९ ॥ हिताय सर्वभक्तानां द्विजातीनां द्विजोत्तमाः ॥ भवन्तोऽपि हि मज्ज्ञानं शिष्याणां विधिपूर्वकम् ॥ ११० ॥ उपदेक्ष्यन्ति भक्तानां सर्वेषां वचनान्मम ॥ अयं नारायणो योऽसावीश्वरो नात्र संशयः ॥ १११ ॥ नान्तरं ये प्रपश्यन्ति तेषां देयमिदं परम् ॥ ममैषा परमा मूर्त्तिर्नारायणसमाह्वया ॥ ११२ ॥ सर्वभूतात्मभूतस्था शान्ता चाक्षरसंस्थिता ॥ येऽन्यथा मां प्रपश्यन्ति लोके भेददृशो जनाः ॥ ११३ ॥ न ते मुक्तिं प्रपश्यन्ति जायन्ते च पुनः पुनः ॥ ये त्वेनं विष्णुमव्यक्तं माञ्च देवं महेश्वरम् ॥ ११४ ॥ एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः ॥ तस्मादनादिनिधनं विष्णुमात्मानमव्ययम् ॥ ११५ ॥ मामेव सम्प्रपश्यध्वं पूजयध्वं तथैव च ॥ येऽन्यथा सम्प्रपश्यन्ति मत्त्वैवं देवतान्तरम् ॥ ११६ ॥ ते यान्ति नरकान् घोरान्नाहं तेषु व्यवस्थितः ॥ मूर्खं वा पण्डितं वापि ब्राह्मणं वा मदाश्रयम् ॥ ११७ ॥ मोचयामि श्वपाकं वा न नारायणनिन्दकम् ॥ तस्मादेष महायोगी मद्भक्तैः पुरुषोत्तमः ॥ ११८ ॥ अर्चनीयो नमस्कार्यो मत्प्रीतिजननाय वै ॥ एवमुक्त्वा वासुदेवमालिंग्य स पिनाकधृक् ॥ ११९ ॥ अन्तर्हितोऽभवत्तेषां सर्वेषामेव पश्यताम् ॥ नारायणोऽपि भगवांस्तापसं वेषमुत्तमम् ॥ १२० ॥ जग्राह योगिनः सर्वांस्त्यक्त्वा वै परमं

१ तत्परमिति पा० । २ नियतमिति पा० । ३ आत्मयोगमनुत्तममिति पा० । ४ योऽहमीश्वरः इति पा० । ५ सम्प्रपश्यतेति साधु । ६ मां प्रपश्यन्तीति पा० ।

वपुः ॥ ज्ञानं भवद्भिरमलं प्रसादात्परमेष्ठिनः ॥ १२१ ॥ साक्षाद्देवमहेशस्य ज्ञानं संसारनाशनम् ॥ १२० ॥ गच्छध्वं विज्वराः सर्वे विज्ञानं परमेष्ठिनः ॥ १२२ ॥ प्रवर्त्तयध्वं शिष्येभ्यो धार्मिकेभ्यो मुनीश्वराः ॥ इदं भक्ताय शान्ताय धार्मिकायाहिताग्नये ॥ १२३ ॥ विज्ञानमैश्वरं देयं ब्राह्मणाय विशेषतः ॥ एवमुक्त्वा स विश्वात्मा योगिनां योगवित्तमः ॥ १२४ ॥ नारायणो महायोगी जगामादर्शनं स्वयम् ॥ ऋषयस्तेऽपि देवेशं नमस्कृत्य महेश्वरम् ॥ १२५ ॥ नारायणश्च भूतादि स्वानि स्थानानि लेभिरे ॥ सनत्कुमारो भगवान् संवर्त्ताय महामुनिः ॥ १२६ ॥ दत्तवानैश्वरं ज्ञानं सोऽपि सत्यत्वमाययौ ॥ सनन्दनोऽपि योगीन्द्रः पुलहाय महर्षये ॥ १२७ ॥ प्रददौ गौतमायाथ पुलहोऽपि प्रजापतिः॥ अङ्गिरा वेदविदुषे भारद्वाजाय दत्तवान् ॥ १२८ ॥ जैगीषव्याय कपिलस्तथा पञ्चशिखाय च ॥ पराशरोऽपि सनकात्पिता मे सर्वतत्त्वदृक् ॥ १२९ ॥ ॥ लेभे तत्परमं ज्ञानं तस्माद्वाल्मीकिराप्तवान् ॥ ममोवाच पुरा देवः सतीदेह भवाङ्गजः ॥ १३० ॥ वामदेवो महायोगी रुद्रः कालपिनाकधृक् ॥ नारायणोऽपि भगवान्देवकीतनयो हरिः ॥ १३१ ॥ अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम् ॥ यदाहं लब्धवान्रुद्राद्वामदेवादनुत्तमम् ॥ १३२ ॥ विशेषाद्गिरिशे भक्तिस्तस्मादारभ्य मेऽभवत् ॥ शरण्यं गिरिशं रुद्रं प्रपन्नोऽहं विशेषतः ॥ १३३ ॥ भूतेशं गिरिशं स्थाणुं देवदेवं त्रिशूलिनम् ॥ भवन्तोऽपि हि तं देवं शम्भुं गोवृषवाहनम् ॥ १३४ ॥ प्रपद्यन्तां सपत्नीकाः सपुत्राः शरणं शिवम् ॥ वर्त्तध्वं तत्प्रसादेन कर्मयोगेन शंकरम् ॥ १३५ ॥ पूजयध्वं महादेवं गोपतिं व्यालभूषणम् ॥ एवमुक्ते पुनस्ते तु शौनकाद्या महेश्वरम् ॥ १३६ ॥ प्रणेमुः शाश्वतं स्थाणुं व्यासं सत्यवतीसुतम् ॥ अब्रुवन् हृष्टमनसः कृष्णद्वैपायनं प्रभुम् ॥ १३७ ॥ साक्षाद्देवं हृषीकेशं शिवं लोकमहेश्वरम् ॥ भवत्प्रसादादचला शरण्ये गोवृषध्वजे ॥ १३८ ॥ इदानीं जायते भक्तिर्या देवैरपि दुर्लभा ॥ कथयस्व मुनिश्रेष्ठ कर्मयोगमनुत्तमम् ॥ १३९ ॥ येनासौ भगवानीशः समाराध्यो मुमुक्षुभिः ॥ त्वत्सन्निधावेव सूतः शृणोतु भगवद्वचः ॥१४०॥ तद्वच्चाखिललोकानां रक्षणं धर्मसंग्रहम् ॥

१ योगमुत्तममिति पा० । २ तेऽपि देवाधिदेवेशमिति पा० । ३ सत्यव्रताय तु इति पा० । ४ पुलस्त्यायेति पा० । ५ किलेति पा० । ६ मुनिमिति । ७ वल्लभेति पा० ।

यदुक्तं देवदेवेन विष्णुना कूर्मरूपिणा ॥१४१॥ पृष्टेन मुनिभिः सर्वं शक्रेणामृतमन्थने॥श्रुत्वा सत्यवतीसूनुः कर्मयोगं सनातनम् ॥४२॥ मुनीनां भाषितं कृत्स्नं प्रोवाच सुसमाहितः ॥ य इमं पठते नित्यं संवादं कृत्तिवाससः ॥ १४३ ॥ सनत्कुमारप्रमुखैः सर्वपापैः प्रमुच्यते ॥ श्रावयेद्वा द्विजान् शुद्धान् ब्रह्मचर्यपरायणान् ॥ १४४ ॥ यो वा विचारयेदर्थं स याति परमाङ्गतिम् ॥ यश्चैतच्छृणुयान्नित्यं भक्तियुक्तो दृढव्रतः ॥ १४५ ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ तस्मात्सर्वप्रयत्नेन पठितव्यो मनीषिभिः ॥ १४६ ॥ श्रोतव्यश्चानुमन्तव्यो विशेषाद्ब्राह्मणैः सदा ॥ १४७ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे एकादशोऽध्यायः ॥ ११ ॥ अथ व्यासगीताकथनम् ॥ व्यास उवाच ॥ शृणुध्वमृषयः सर्वं वक्ष्यमाणं सनातनम् ॥ कर्मयोगं ब्राह्मणानामात्यन्तिकफलप्रदम् ॥ १ ॥ आम्नायसिद्धमखिलं ब्राह्मणानां प्रदर्शितम् ॥ ऋषीणां शृण्वतां पूर्वं मनुराह प्रजापतिः ॥ २ ॥ सर्वपापहरं पुण्यमृषिसङ्घैर्निषेवितम् ॥ समाहितधियो यूयं शृणुध्वं गदतो मम ॥ ३ ॥ कृतोपनयनो वेदानधीयीत द्विजोत्तमाः ॥ गर्भाष्टमेऽष्टमे वाऽब्दे स्वसूत्रोक्तविधानतः ॥ ४ ॥ दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः ॥ भिक्षाचारी ब्रह्मचारी स्वाश्रमे निवसन् सुखम् ॥ ५ ॥ कार्पासमुपवीतार्थं निर्मितं ब्रह्मणा पुरा ॥ ब्राह्मणानां त्रिवृत्सूत्रं कौशं वा वस्त्रमेव वा ॥ ६ ॥ सदोपवीती चैव स्यात्सदा बद्धशिखो द्विजः ॥ अन्यथा यत्कृतं कर्म तद्भवत्ययथाकृतम् ॥ ७ ॥ वसेदविकृतं वासः कार्पासं वा कषायकम् ॥ तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम् ॥८॥ उत्तरन्तु समाख्यातं वासः कृष्णाजिनं शुभम् ॥ अभावे दिव्यमजिनं रौरवं वा विधीयते ॥९॥ उद्धृत्य दक्षिणं बाहुं सव्ये बाहौ समर्पितम् ॥ उपवीतं भवेन्नित्यं निवीतं कण्ठसज्जने ॥ १० ॥ सव्यं बाहुं समुद्धृत्य दक्षिणे तु धृतं द्विजाः ॥ प्राचीनावीतमित्युक्तं पैत्रे कर्मणि योजयेत् ॥११॥ अग्न्यगारे गवां गोष्ठे होमे जप्ये तथैव च ॥ स्वाध्याये भोजने नित्यं ब्राह्मणानाञ्च सन्निधौ॥१२॥

१ श्रोतव्यश्चार्येति पा० । २ ब्रह्मयोगमिति पा० । ३ ब्रह्मणा तूपदर्शितमिति पा० । ४ स्वगृह्योक्तेति पा० । ५ भिक्षाहारो गुरुहितो वीक्षमाणो गुरोर्मुखमिति पा० । ६ सव्यबाहाविति पा० । ७ विधिरेष सनातन इति पा० ।

उपासने गुरूणाञ्च सन्ध्ययोः साधुसंगमे ॥ उपवीती भवेन्नित्यं विधिरेष सनातनः ॥ १३ ॥ मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ॥ कुशेन निर्मिता विप्रा ग्रन्थिनैकेन वा त्रिभिः ॥ १४ ॥ धारयेद्वैल्वपालाशौ दण्डौ केशान्तकौ द्विजः ॥ यज्ञार्हं वृक्षजं वाथ सौम्यमव्रणमेव च ॥ १५ ॥ सायं प्रातर्द्विजः संध्यामुपासीत समाहितः ॥ कामाल्लोभाद्भयान्मोहात्त्यक्त्वैनां पतितो भवेत् ॥ १६ ॥ अग्निकार्यं ततः कुर्यात्सायम्प्रातर्यथाविधि ॥ स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥ १७ ॥ देवताभ्यर्चनं कुर्यात्पुष्पैः पत्रेण चाम्बुना ॥ अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्मतः ॥ १८ ॥ असावहं भो नामेति सम्यक् प्रणतिपूर्वकम् ॥ आयुरारोग्यसान्निध्यं द्रव्यादिपरिवर्जितम् ॥ १९ ॥ आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ॥ अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः ॥ २० ॥ न कुर्याद्योऽभिवादस्य द्विजः प्रत्यभिवादनम् ॥ नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ २१ ॥ विन्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ॥ सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ २२ ॥ लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव वा ॥ आददीत यतो ज्ञानं तं पूर्वमभिवादयेत् ॥ २३ ॥ नोदकं धारयेद्भैक्ष्यं पुष्पाणि समिधं तथा ॥ एवंविधानि चान्यानि न दैवाद्येषु कर्मसु ॥ २४ ॥ ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ॥ वैश्यं क्षेमं समागत्य शूद्रमारोग्यमेव च ॥ २५ ॥ उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ॥ मातुलः श्वशुरश्चैव मातामहपितामहौ ॥ २६ ॥ वर्णज्येष्ठः पितृव्यश्च सर्वे ते गुरवः स्मृताः ॥ माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥ २७ ॥ श्वश्रूः पितामही ज्येष्ठा भ्रातृजाया गुरुस्त्रियः ॥ इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतस्तथा ॥ २८ ॥ अनुवर्त्तनमेतेषां मनोवाक्कायकर्मभिः ॥ गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ॥ २९ ॥ नैतैरुपविशेत्सार्द्धं विवदेतार्थकारणात् ॥ जीवितार्थमपि द्वेषाद्गुरुभिर्नैव भाषणम् ॥ ३० ॥ उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥ गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः ॥ ३१ ॥ तेषामाद्यास्त्रयः

१ मुञ्जाभावे कुशेनाहुरिति पा० । २ प्रसन्नधीरिति पा० । ३ सिद्धार्थमिति, आयुरारोग्यमन्विच्छन्निति पा० । ४ येन वेत्यभिवादस्येति पा० । ५ सव्यस्तपाणिनेति पा० । ६ पुंसोऽत्रेति पा० । ७ धात्री च गुरवः इति पा० । ८ पितृतो द्विजाः इति पा० । ९ विवदेन्नात्र कारणादिति पा० ।

श्रेष्ठास्तेषां माता सुपूजिता ॥ यो भावयति या सूते येन विद्योपदिश्यते ॥ ३२ ॥ ज्येष्ठो भ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः ॥ आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः ॥ ३३ ॥ पूजनीया विशेषेण पञ्चैते भूतिमिच्छता ॥ यावत्पिता च माता च द्वावेतौ निर्वि कारिणौ ॥ ३४ ॥ तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥ पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ॥ ३५ ॥ स पुत्रः सकलं धर्ममाप्नुयात्तेन कर्मणा ॥ नास्ति मातृसमो देवो नास्ति तातसमो गुरुः ॥ ३६ ॥ तयोः प्रत्युपकारो हि न कथञ्चन विद्यते ॥ तयोर्नित्यं प्रियं कुर्यात्कर्मणा मनसा गिरा ॥ ३७ ॥ न ताभ्यामननुज्ञातो धर्ममन्यं समाचरेत् ॥ वर्जयित्वा मुक्तिफलं नित्यं नैमित्तिकं तथा ॥ ३८ ॥ धर्मसारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥ सम्यगाराध्य वक्तारं विसृष्टस्तदनुज्ञया ॥ ३९ ॥ शिष्यो विद्याफलं भुङ्क्ते प्रेत्य वा पूज्यते दिवि ॥ यो भ्रातरं पितृसमं ज्येष्ठं मूर्खोऽवमन्यते ॥ ४० ॥ तेन दोषेण स प्रेत्य निरयं घोरमृच्छति ॥ पुंसां वर्त्मनि तिष्ठेत पूज्यो भर्त्ता च सर्वदा ॥४१॥ अपि मातरि लोकेऽस्मिन्नुपकाराद्धि गौरवम् ॥ ये नरा भर्तृपिण्डार्थं स्वान्प्राणान् सन्त्यजन्ति हि ॥ ४२ ॥ तेषामथाक्षयाँल्लोकान् प्रोवाच भगवान्मनुः ॥ मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ॥ ४३ ॥ असावहमिति ब्रूयुः प्रत्युत्थाय यवीयसः ॥ अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ॥ ४४ ॥ भो भवत्पूर्वकत्वेन अभिभाषेत धर्मवित् ॥ अभिवाद्यश्च पूज्यश्च शिरसा वन्द्य एव च ॥ ४५ ॥ ब्राह्मणः क्षत्रियाद्यैश्च श्रीकामैः सादरं सदा ॥ नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथञ्चन ॥ ४६ ॥ ज्ञानकर्मगुणोपेता ये यजन्ति बहुश्रुताः ॥ ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति श्रुतिः ॥ ४७ ॥ सवर्णेषु सवर्णानां काम्यमेवाभिवादनम् ॥ गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ॥ ४८ ॥ पतिरेव गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः ॥ विद्या कर्म तपो बन्धुर्वित्तं भवति पञ्चमम् ॥ ४९ ॥ मान्यस्थानानि पञ्चाहुः पूर्वं पूर्वं गुरूत्तरात् ॥ एतानि त्रिषु वर्णेषु भूयांसि बलवन्ति च ॥ ५० ॥ यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥ पन्था देयो ब्राह्मणाय स्त्रियै राज्ञे ह्यच

१ मातृसमं दैवमिति पा० । २ समाश्रयेदिति पा० । ३ प्रेत्यानन्देति पा० । ४ चेष्टेतेति पा० । ५ यद्यप्येते इति पा० । ६ पञ्चानामिति पा० ।

क्षुधे ॥ ५१ ॥ वृद्धाय भारभुग्नाय रोगिणे दुर्बलाय च ॥ भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम् ॥ ५२ ॥ निवेद्य गुरवेऽश्नीयाद्वाग्यतस्तदनुज्ञया ॥ भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः ॥ ५३ ॥ भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ॥ ५४ ॥ भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत् ॥ स्वजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥ ५५ ॥ भैक्ष्यस्य चरणं युक्तं पतितादिषु वर्जितम् ॥ वेदयज्ञैरहीनानां प्रपन्नानां स्वकर्मसु ॥ ५६ ॥ ब्रह्मचारी हरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम् ॥ गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ॥ ५७ ॥ अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत् ॥ सर्वं वा विचरेद्ग्रामं पूर्वोक्तानामसम्भवे ॥५८॥ नियम्य प्रयतो वाचं दिशस्त्वनवलोकयन् ॥ समाहृत्य तु तद्भैक्ष्यं पचेदन्नममायया ॥ ५९ ॥ भुञ्जीत प्रयतो नित्यं वाग्यतोऽनन्यमानसः ॥ भैक्ष्येण वर्त्तयेन्नित्यमेकान्नादी भवेद्व्रती ॥ ६० ॥ भैक्ष्येण वृत्तिनो वृत्तिरुपवाससमा स्मृता ॥ पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ॥ ६१ ॥ दृष्ट्वा हृष्येत्प्रसीदेच्च ततो भुञ्जीत वाग्यतः ॥ ६२ ॥ अनारोग्यमनायुष्यमस्वर्ग्यश्चातिभोजनम् ॥ अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥६३॥ प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा ॥ नाद्यादुदङ्मुखो नित्यं विधिरेष सनातनः ॥६४॥ प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत् ॥ ६४ ॥ शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥ ६५ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे द्वादशोऽध्यायः ॥ १२ ॥ व्यास उवाच ॥ भुक्त्वा पीत्वा च सुप्त्वा च स्नात्वा रथ्योपसर्पणे ॥ ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥ १ ॥ रेतोमूत्रपुरीषाणामुत्सर्गेऽयुक्तभाषणे ॥ ष्ठीवित्वाध्ययनारम्भे कासश्वासागमे तथा ॥ २ ॥ चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः ॥ सन्ध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत्पुनः ॥ ३ ॥ चण्डालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभाषणे ॥ उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यश्चापि तथाविधम् ॥ ४ ॥ आचामेदश्रुपाते वा लोहितस्य

१ भग्नायेति, भग्नाय इति पा० । २ शिष्याणामिति, सृष्टानामिति पा० । ३ बाह्यत इति पा० । ४ भैक्ष्यस्याचरणमिति पा० । ५ पतितादिविवर्जितः इति पा० । ६ प्रशस्तानामिति पा० । ७ यावदर्थममायया इति पा० । ८ प्रतिनन्देच्च सर्वशः इति पा० । ९ रथ्यावसर्पणे इति पा० । १० ऽनृतभाषणे इति पा० ।

नथैव च ॥ भोजने सन्ध्ययोः स्नात्वा त्यागे मूत्रपुरीषयोः ॥ ५ ॥ आचान्तोऽप्याचमेत्सुप्त्वा सकृत्सकृदथोऽव्ययः ॥ अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयतमेव च ॥ ६ ॥ स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय च ॥ उपस्पृशेज्जलं वार्द्रन्तस्तृणं वा भूमिमेव च ॥ ७ ॥ केशानां चात्मनः स्पर्शे वाससोऽक्षालितस्य च ॥ अनुष्णाभिरफेनाभिर्विशुद्धाद्भिश्च वाग्यतः ॥८॥ शौचेप्सुः सर्वदाचामेदासीनः प्रागुदङ्मुखः ॥ शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ॥ ९ ॥ अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥ सोपानत्को जलस्थो वा नोष्णीषी चाचमेद्बुधः ॥ १० ॥ न चैव वर्षधाराभिर्हस्तोच्छिष्टे तथा बुधः ॥ नैकहस्तार्पितजलैर्विना सूत्रेण वा पुनः ॥ ११ ॥ न पादुकासनस्थो वा बहिर्जानुकरोऽपि वा ॥ विट्शूद्रादिकरामुक्तैर्न चोच्छिष्टैस्तथैव च ॥ १२ ॥ न चैवाङ्गुलिभिः शस्तं प्रकुर्वन्नान्यमानसः ॥ न वर्णरसदुष्टाभिर्न चैवाप्रचुरोदकैः ॥ १३ ॥ न पाणिक्षुभिताभिर्वा न बहिष्कक्ष एव वा ॥ हृद्गाभिः पूयते विप्रः कण्ठ्याभिः क्षत्रियः शुचिः ॥ १४ ॥ प्राशिताभिस्तथा वैश्यः स्त्रीशूद्रौ स्पर्शतोऽम्भसः ॥ अङ्गुष्ठमूलरेखायां तीर्थं ब्राह्म्यमिहोच्यते ॥ १५ ॥ प्रदेशिन्याश्च यन्मूलं पितृतीर्थमनुत्तमम् ॥ कनिष्ठामूलतः पश्चात्प्राजापत्यं प्रचक्षते ॥ १६ ॥ अङ्गुल्यग्रे स्मृतं दैवं तद्देवार्थं प्रकीर्त्तितम् ॥ मूले वा दैवमादिष्टमाग्नेयं मध्यतः स्मृतम् ॥ १७ ॥ तदेव सौमिकं तीर्थमेवं ज्ञात्वा न मुह्यति ॥ ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥ कायेन वाथ दैवेन चार्थाचान्ते शुचिर्भवेत् ॥ त्रिराचामेदपः पूर्वं ब्राह्मणः प्रयतस्ततः ॥ १९ ॥ संवृताङ्गुष्ठमूलेन मुखं वै समुपस्पृशेत् ॥ अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नेत्रद्वयं ततः ॥ २० ॥ तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ॥ कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् ॥ २१ ॥

१ भोजनेन च सन्ध्यायाः स्नात्वेति पा० । २ दथान्यतः इति पा० । ३ स्त्रीणामथात्मसंस्पर्शे इति पा० । ४ जलं वार्द्रमिति । ५ अदुष्टाभिश्च धर्मतः इति पा० । ६ न तिष्ठन्नोद्धृतोदकैः इति पा० । ७ बहिर्जानुरथापिवा । न जलपत्र हसन्प्रेक्षन् शयानः प्रह्व एवच । नावीक्षिनाक्षिः फेनाद्यैरुपेताभिस्तथापिवा । शूद्रादिविकरैर्मुक्तैर्न क्षाराभिस्तथैवच इति लिं० पु० । अदुष्टाभिश्च धर्मतः इति पा० । ८ न कुर्यान्नान्यमानसः इति पा० । ९ न चैव प्रदरोदकैरिति पा० । १० स्पर्शतोऽन्ततः इति पा० । ११ अंगुष्ठमूलान्तरितरेखा यां ब्राह्ममुच्यते इति पा० । १२ दैवमादिष्टमाग्नेयमिति पा० । १३ पैत्रेण न तु वै द्विजाः इति पा० । १४ त्रिः प्राश्नीयादपः इति पा० ।

संर्वाङ्गुलीभिर्बाहू च हृदयन्तु तलेन न वा ॥ नाभिः शिरश्च सर्वाभिरङ्गुष्ठेनाथ वा द्वयम् ॥ २२ ॥ त्रिः प्राश्नीयात्तदम्भस्तु सुप्रीतास्तेन देवताः ॥ ब्रह्मा विष्णुर्महेशश्च भवन्तीत्यनुशुश्रुम ॥ २३ ॥ गंगा च यमुना चैव प्रीयेते परिमार्ज्जनात् ॥ संस्पृष्टयोर्लोचनयोः प्रीयेते शशिभास्करौ ॥ २४ ॥ नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥ श्रोत्रयोः स्पृष्टयोस्तद्वत्प्रीयेते चानिलानलौ ॥ २५ ॥ संस्पृष्टे हृदये चास्य प्रीयन्ते सर्वदेवताः ॥ मूर्ध्नि संस्पर्शनादेव प्रीतस्तु पुरुषो भवेत् ॥ २६ ॥ नोच्छिष्टं कुर्वते नित्यं विप्रुषोऽङ्गं नयन्ति याः ॥ दन्तान्तर्दन्तलग्नेषु जिह्वोष्ठैरशुचिर्भवेत् ॥ २७ ॥ स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ॥ भूमिकास्ते समाज्ञेया न तैरप्रयतो भवेत् ॥ २८ ॥ मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे ॥ फले मूलेक्षुदण्डे च न दोषं प्राह वै मनुः ॥ २९ ॥ प्रचुरान्नोदपानेषु यद्युच्छिष्टो भवेद्द्विजः ॥ भूमौ निक्षिप्य तद्द्रव्यमाचम्याभ्युक्षिपेत्ततः ॥ ३० ॥ तैजसं वा समादाय यद्युच्छिष्टो भवेद्द्विजः ॥ भूमौ निक्षिप्य तद्द्रव्यमाचम्याहियते तु तत् ॥ ३१ ॥ यद्यमन्त्रं समादाय भवेदुच्छेषणान्वितः ॥ अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥३२॥ वस्त्रादिषु विकल्पः स्यात्तं स्पृष्ट्वा चैवमेव हि ॥ अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ॥ ३३ ॥ कृत्वा मूत्रं पुरीषं वा द्रव्यहस्तो न दुष्यति ॥ निधाय दक्षिणे कर्णे ब्रह्मसूत्रमुदङ्मुखः ॥ ३४ ॥ अह्नि कुर्याच्छकृन्मूत्रं रात्रौ चेद्दक्षिणामुखः ॥ अन्तर्धाय महीं काष्ठैः पत्रैर्लोष्टैस्तृणेन वा ॥ ३५ ॥ प्रावृत्य च शिरः कुर्याद्विण्मूत्रस्य विसर्जनम् ॥ छायाकूपनदीगोष्ठचैत्यान्तःपथि भस्मसु ॥ ३६ ॥ अग्नौ वेश्म श्मशाने च विण्मूत्रे न समाचरेत् ॥ न गोपथे न कृष्टे वा महावृक्षे न शाड्वले ॥ ३७ ॥ न तिष्ठन्वा न निर्वासा न च पर्वत मस्तके ॥ न जीर्णदेवायतने न वल्मीके कदाचन ॥ ३८॥ न ससत्त्वेषु गर्तेषु नागच्छन्वा समाचरेत् ॥ तुषाङ्गारकपालेषु राजमार्गे तथैव च ॥ ३९ ॥ न क्षेत्रे विमले चापि न तीर्थे न चतुष्पथे ॥ नोद्याने न समीपे वा नोषरे न पराशुचौ ॥ ४० ॥ न सोपानत्पादुको वा

१ सर्वासामथ योगेनेति पा॰ । २ स्पृशेद्वै शिरसस्तद्वदंगुष्ठेनाथेति पा॰ । ३ प्रीतास्तेनान्यदेवताः इति पा॰ । ४ द्रव्यहस्त इति पा॰ । ५ माचम्याभ्युक्षयेदिति पा॰ । ६ यदा त्रुचमिति पा॰ । ७ तत्संस्पृश्याचमेदिहेति पा॰ । ८ न गोमये न कुंभे इति पा॰ । ९ गच्छन्वा इति पा॰ ।

गन्ता यानान्तरिक्षगः॥ न चैवाभिमुखं स्त्रीणां गुरुब्राह्मणयोर्न च ॥४१॥ न देवदेवालययोर्नद्यामपि कदाचन ॥ नदीं ज्योतींषि वीक्षित्वा न वार्यभिमुखोऽथ वा ॥ प्रत्यादित्यं प्रत्यनलं प्रतिसोमं तथैव च ॥ ४२ ॥ आहृत्य मृत्तिकां कूलाल्लेपगन्धापकर्षणात् ॥ कुर्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥ ४३ ॥ नाहरेन्मृत्तिकां विप्रः पांशुलान्न च कर्दमान् ॥ न मार्गान्नोषराद्देशाच्छौचोच्छिष्टात्तथैव च ॥ ४४ ॥ न देवायतनात्कूपाद्ग्रामादन्तर्ज्जलात्तथा ॥ उपस्पृशेत्ततो नित्यं पूर्वोक्तेन विधानतः ॥ ४५ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे त्रयोदशोऽध्यायः ॥ १३ ॥ शिष्यब्रह्मचारिणां धर्माः ॥ व्यास उवाच ॥ एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः ॥ आहूतोऽध्ययनं कुर्याद्वीक्षमाणो गुरोर्मुखम् ॥ १ ॥ नित्यमुद्धृतपाणिः स्यात्सन्ध्याचारसमन्वितः ॥ आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ २ ॥ प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ॥ आसीनो न च तिष्ठन्वा उत्तिष्ठन्वा पराङ्मुखः ॥ ३ ॥ न च शय्यासनञ्चास्य सर्वदा गुरुसन्निधौ ॥ गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत् ॥ ४ ॥ नोदाहरेदस्य नाम परोक्षमपि केवलम् ॥ न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ ५ ॥ गुरोर्यत्र प्रतीवादो निन्दा चापि प्रवर्त्तते ॥ कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ ६ ॥ दूरस्थो नार्च्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ॥ न चैवास्योत्तरं ब्रूयात् स्थिते नासीत सन्निधौ ॥ ७ ॥ उदकुम्भं कुशान् पुष्पं समिधोऽस्याहरेत्सदा ॥ मार्जनं लेपनं नित्यमङ्गानां वा समाचरेत् ॥ ८ ॥ नास्य निर्माल्यशयनं पादुकोपानहावपि ॥ आक्रमेदासनं छायामासन्दीं वा कदाचन ॥९॥ साधयेद्दन्तकाष्ठादीन् कृत्यञ्चास्मै निवेदयेत् ॥ अनापृच्छ्य न गन्तव्यं भवेत्प्रियहिते रतः ॥ १० ॥ न पादौ सारयेदस्य सन्निधाने कदाचन ॥ जृम्भाहास्यादिकञ्चैव कण्ठप्रावरणं तथा ॥ ११ ॥

१ न च्छत्री नान्तरिक्षके इति पा० । २ गवामिति पा० । ३ अपामपीति पा० । ४ वीक्ष्येति साधु । ५ ग्रामान्न च जलात्तथेति पा० । ६ उद्यतेति पा० । ७ नासीनो न च भुञ्जानो न तिष्ठन्निति पा० । ८ आक्रमेदासनं चास्य छायादीनीति पा० । आसन्दी–चतुष्पादासनविशेषः । ९ लब्ध्वा चास्मै इति पा० ।

वर्ज्जयेत्सन्निधौ नित्यमंथास्फोटतमं वचः ॥ यथाकालमधीयीत यावन्न विमना गुरुः ॥ १२ ॥ आसीताथ गुरोरुक्ते फलके वा समाहितः ॥ आसने शयने याने नैकास्तिष्ठेत्कदाचन ॥ १३ ॥ धावन्तमनुधावेत्तं गच्छन्तञ्चानुगच्छति ॥ गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ॥ १४ ॥ नासीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥ जितेन्द्रियः स्यात्सततं वश्यात्माऽक्रोधनः शुचिः ॥ १५ ॥ प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥ गन्धमाल्यं रसं भव्यं शुक्लं प्राणिविहिंसनम् ॥ १६ ॥ अभ्यङ्गञ्चाञ्जनोपानच्छत्रधारणमेव च ॥ कामं लोभं भयं निद्रां गीतवादित्रनर्त्तनम् ॥ १७ ॥ द्यूतं जनपरीवादं स्त्रीप्रेक्षालम्भनं तथा ॥ परोपघातं पैशुन्यं प्रयत्नेन विवर्जयेत् ॥ १८ ॥ उदकुम्भं सुमनसो गोशकृन्मृत्तिकां कुशान् ॥ आहरेद्यावदर्थानि भैक्ष्यञ्चाहरहश्चरेत् ॥ १९ ॥ कृतञ्च लवणं सर्वं वर्ज्यं पर्युषितञ्च यत् ॥ अनृत्यदर्शी सततं भवेद्गीतादिनिस्पृहः ॥ २० ॥ नादित्यं वै समीक्षेत न चरेद्दन्तधावनम् ॥ एकान्तमशुचिस्त्रीभिः शूद्रान्त्यैरभिभाषणम् ॥ २१ ॥ गुरुप्रियार्थं सर्वं हि प्रयुञ्जीत न कामतः ॥ मलापकर्षणं स्नानमाचरेद्वै कथञ्चन ॥ २२ ॥ न कुर्यान्मानसं विप्रो गुरोस्त्यागं कदाचन ॥ मोहाद्वा यदि वा लोभात्त्यक्त्वैनं पतितो भवेत् ॥ २३ ॥ लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव च॥ आददीत यतो ज्ञानं न तं द्रुह्येत्कदाचन ॥२४॥ गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ॥ उत्पथं प्रतिपन्नस्य मनुस्त्यागं समब्रवीत् ॥२५॥ गुरोर्गुरौ सन्निहिते गुरुवद्भक्तिमाचरेत् ॥ न चातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥ २६ ॥ विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ॥ प्रतिषेधत्सु चाधर्माद्धितं चोपदिशत्स्वपि ॥ २७ ॥ श्रेयत्सु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ॥ गुरुपुत्रेषु दारेषु गुरोश्चैव स्वबन्धुषु ॥ २८ ॥ बालः संमानयन्मान्यान् शिष्यो वा यज्ञकर्मणि ॥ अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥२९॥ उत्सादनं वै गात्राणां स्नापनोच्छिष्टभोजने ॥ न कुर्याद्गुरुपुत्रस्य पादयोः शौचमेव च ॥३०॥ गुरुवत्परिपूज्याश्च सवर्णा गुरुयोषितः ॥ असवर्णास्तु सम्पूज्याः

१ अवस्फोटनमेव चेति, बाहुस्फोटनमेव चेति पा० । २ आसीताधो गुरोर्गच्छेदिति, आसीताधो गुरोः कूर्चे इति पा० । ३ शुक्लं–धौतधवलदुकूलमित्यर्थः । रसं कन्यां शुक्तमिति पा० । ४ आतर्ज्जनमिति पा० । ५ नाचरेदिति पा० । ६ गुरूच्छिष्टं भेषजार्थमिति पा० । ७ गुरुवद्वृत्तिमिति पा० । ८ जपकर्मणीति पा० ।

प्रत्युत्थानाभिवादनैः ॥ ३१ ॥ अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च ॥ गुरुपत्न्या न कार्याणि केशानाञ्च प्रसाधनम् ॥ ३२ ॥ गुरुपत्नी तु युवती नाभिवाद्येह पादयोः ॥ कुर्वीत वन्दनं भूमा[1]वसावहमिति ब्रुवन् ॥ ३३ ॥ वि[2]प्रोष्य पादग्रहणमन्वहं चाभिवादनम् ॥ गुरुदारेषु सर्वे[3]षु सतां धर्ममनुस्मरन् ॥ ३४ ॥ मातृष्वसा मातुलानी श्वश्रूश्चाथ पितृष्वसा ॥ संपूज्या गुरुपत्नी च समस्ता गुरुभार्यया ॥ ३५ ॥ भ्रातुर्भार्या च संग्राह्या सवर्णाहन्यहन्यपि ॥ विप्रस्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ॥ ३६ ॥ पितुर्भगिन्या मातुश्च ज्यायस्यां च स्वसर्यपि ॥ मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥ ३७ ॥ एवमाचारसंपन्नमात्मवन्तमदाम्भिकम् ॥ वेदमध्यापयेद्धर्मं पुराणाङ्गानि नित्यशः ॥ ३८ ॥ संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्दिशन् ॥ हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः ॥ ३९ ॥ आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ॥ सूक्तार्थदोऽरसः[4] साधुः[5] स्वाध्याय्यादेशधर्मतः ॥ ४० ॥ कृतज्ञश्च तथाद्रोही मेधावी तूपकृ[6]न्नरः ॥ आप्तः प्रियोऽथ विधिवत् षडध्याप्या द्विजातयः ॥४१॥ एतेषु ब्रह्मणो[7] दानमन्यत्र च यथोदितान् ॥ आचम्य संयतो नित्यमधीयीत ह्युदङ्मुखः ॥ ४२ ॥ उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् ॥ अधीष्व भो इति ब्रूयाद्विरामस्त्विति नारभेत् ॥ ४३ ॥ अ[8]नुकूलं समासीनः पवित्रैश्चैव पावितः ॥ प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ॥४४॥ ब्राह्मणः प्रणवं कुर्यादन्ते च विधिवद्द्विजः ॥ कुर्यादध्ययनं नित्यं ब्रह्माञ्जलिकरस्थितः ॥ ४५ ॥ सर्वेषामेव भूतानां वेदश्चक्षुः सनातनम् ॥ अधीयीताप्ययं नित्यं ब्राह्मण्याच्च्यवतेऽन्यथा ॥ ४६ ॥ योऽधीयीत ऋचो नित्यं क्षीराहुत्या सदेवताः ॥ प्रीणाति तर्पयन्त्येनं कामैस्तृप्ताः स[9]दैव हि ॥ ४७ ॥ यजूंष्यधीते नियतं दध्ना प्रीणाति देवताः ॥ सामान्यधीते प्रीणाति घृताहुतिभिरन्वहम् ॥४८॥ अथर्वाङ्गिरसो नित्यं म[10]ध्वा प्रीणाति देवताः ॥ वेदाङ्गा[11]नि पुराणानि मांसैश्च तर्पयेत्सुरान् ॥४९॥ अपां समीपे नि[12]यतो नैत्यिकं विधिमाश्रितः ॥ गायत्रीमप्यधीयीत गत्वारण्यं समाहितः ॥५०॥

---

१ भूम्यामिति पा० । २ विप्रोऽथेति पा० । ३ कुर्वीतेति पा० । ४ अरसः–शृङ्गारादिरसहीनः रागहीन इत्यर्थः । ५ शक्तोऽन्नदोऽर्थदः साधुरिति पा० । ६ शुभकृन्नर इति पा० । ७ ब्राह्मण इति पा० । ८ प्रांजलिश्च समासीनः, प्राक्कूले इति प्राक्कूलं पर्युपासीनः इति पा० । ९ सदेवताः इति पा० । १० मधुना इति पा० । ११ धर्माङ्गानीति पा० । १२ प्रयतः इति पा० ।

सहस्रपरमां देवीं शतमध्यां दशावराम् ॥ गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्त्तितः ॥ ५१ ॥ गायत्रीञ्चैव वेदांस्तु तुलयातोलयत्प्रभुः ॥ एकतश्चतुरो वेदान् गायत्रीञ्च तथैकतः ॥५२॥ ओङ्कारमादितः कृत्वा व्याहृतीस्तदनन्तरम्॥ततोऽधीयीत सावित्री मेकाग्रः श्रद्धयान्वितः ॥ ५३ ॥ पुराकल्पे समुत्पन्ना भूर्भुवः स्वः सनातनाः ॥५४॥ महाव्याहृतयस्तिस्रः सर्वाः शुभनिबर्हणाः ॥५५॥ प्रधानं पुरुषः कालो विष्णुर्ब्रह्मा महेश्वरः [1]॥ सत्त्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः ॥ ५६ ॥ ओङ्कारस्तत्परं ब्रह्म सावित्री स्यात्तदक्षरम् ॥ एष मन्त्रो महायोगः सारात्सार उदाहृतः ॥५७॥ योऽधीतेऽहन्यहन्येतां सावित्रीं वेदमातरम् ॥ विज्ञायार्थं ब्रह्मचारी स याति परमां गतिम् ॥ ५८ ॥ गायत्री वेदजननी गायत्री लोकपावनी ॥ न गायत्र्याः परं जाप्यमेतद्विज्ञाय मुच्यते ॥ ५९ ॥ श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः॥आषाढ्यां प्रोष्ठपद्यां वा वेदोपाकरणं स्मृतम् ॥६०॥ उत्सृज्य ग्रामनगरं मासान्विप्रोर्द्धपञ्चमान्[1] ॥ अधीयीत शुचौ देशे ब्रह्मचारी समाहितः॥६१॥पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजाः॥माघशुक्लस्य वा प्राप्ते पूर्वाह्ने प्रथमेऽहनि ॥६२॥ छन्दसां[2] प्रीणनं कुर्यात् स्वेषु ऋक्षेषु वै द्विजाः ॥ वेदाङ्गानि पुराणानि कृष्णपक्षे च मानवः ॥६३ ॥ इमान्नित्यमनध्यायानधीयानो विवर्जयेत् ॥ अध्यापनं च कुर्वाणो ह्यनध्यायान्विवर्जयेत् ॥ ६४ ॥ कर्णश्रवेऽनिले रात्रौ दिवापांशुसमूहने ॥ विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे ॥ ६५ ॥ आकालिकमनध्यायमेतेष्वाह प्रजापतिः ॥ निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्ज्जने ॥ ६६ ॥ एतानाकालिकान्विद्यादनध्यायानृतावपि ॥ प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने ॥ ६७ ॥ सज्योतिः स्यादनध्यायमनृतौ चात्र दर्शने ॥ नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च ॥ ६८ ॥ धर्मनैपुण्यकामानां पूतिगन्धेन नित्यशः ॥ अन्तःशवगते ग्रामे वृषलस्य च सन्निधौ ॥ ६९ ॥ अनध्यायो भुज्यमाने[3] समवाये जनस्य च ॥ उदके मध्यरात्रे च विण्मूत्रे च विवर्ज्जयेत् ॥ ७० ॥ उच्छिष्टः श्राद्धभुक् चैव मनसापि न

१ विप्रोर्द्धपञ्चमान्-हे विप्राः सन्धिरार्षः । २ छन्दांस्यर्ध्वमथोऽभ्यसेति, छन्दांस्यूर्ध्वमतोऽभ्यस्येच्छुक्लपक्षेषु वै द्विजाः इति पा० । ३ रुद्यमाने इति, नुद्यमाने इति पा० ।

चिन्तयेत् ॥ प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् ॥ ७१ ॥ त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो[1] राहोश्च सूतके ॥ यावदेकोऽनुदिष्टस्य स्नेहो लेपश्च तिष्ठति ॥ ७२ ॥ विप्रस्य विपुले[2] देहे तावद्ब्रह्म न कीर्त्तयेत् ॥ शयानः प्रौढपादश्च कृत्वा वै चावसिक्थकाम् ॥ ७३ ॥ नाधीयीतामिषं जग्ध्वा सूतकाद्यन्नमेव च ॥ नीहारे बाणपाते च सन्ध्ययोरुभयोरपि ॥ ७४ ॥ अमावास्यां चतुर्दश्यां पौर्णमास्यष्टमीषु च ॥ उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ॥ ७५ ॥ अष्टकासु त्र्यहोरात्रमृत्वन्तासु च रात्रिषु ॥ मार्गशीर्षे तथा पौषे माघमासे तथैव च ॥ ७६ ॥ तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षे तु सूरिभिः ॥ श्लेष्मातकस्य च्छायायां शाल्मलेर्मधुकस्य च ॥ ७७ ॥ कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥ समानविद्ये च मृते तथा सब्रह्मचारिणि ॥ ७८ ॥ आचार्ये संस्थिते वापि त्रिरात्रं क्षपणं स्मृतम् ॥ छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्त्तिताः ॥ ७९ ॥ हिंसन्ति राक्षसास्तेषु तस्मादेतान्विसर्ज्जयेत्[3] ॥ नैत्यिके नास्त्यनध्यायः सन्ध्योपासन एव च ॥ ८० ॥ उपाकर्मणि कर्मान्ते[4] होममन्त्रेषु चैव हि ॥ एकामृचमथैकं वा यजुः सामाथ वा पुनः ॥ ८१ ॥ अष्टकाद्यास्वधीयीत मारुते चातिवायति ॥ अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ॥ ८२ ॥ न धर्मशास्त्रेष्वन्येषु पर्वाण्येतानि वर्ज्जयेत् ॥ एष धर्मः समासेन कीर्त्तितो ब्रह्मचारिणाम् ॥ ८३ ॥ ब्रह्मणाभिहितः पूर्वमृषीणां भावितात्मनाम् ॥ योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजाः ॥ ८४ ॥ स संमूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः ॥ न वेदपाठमात्रेण[5] सन्तुष्टो वै द्विजोत्तमाः ॥ ८५ ॥ एवमाचारहीनस्तु पङ्के गौरिव सीदति ॥ योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ॥ ८६ ॥ स चान्धः शूद्रकल्पस्तु पदार्थं न प्रपद्यते ॥ यदि चात्यन्तिकं वासं कर्त्तुमिच्छति वै गुरौ ॥ ८७ ॥ युक्तः परिचरेदेनमाशरीराभिघातनात्[6] ॥ गत्वा वनं वा विधिवज्जुहुयाज्जातवेदसम् ॥ ८८ ॥ अभ्यसेत्स तदा नित्यं ब्रह्मनिष्ठः समाहितः ॥ सावित्रीं शतरुद्रीयं वेदाङ्गानि विशेषतः ॥

---

१ राज्ञः सूतके-राज्ञः पुत्रादिजननाशौचे, राहोः सूतके-राहुग्रहणात् परमकाले इत्यर्थः । २ विदुषः इति पा० । ३ विवर्ज्जयेदिति पा० । ४ होमान्ते इति पा० । ५ पाठमात्राव-सन्नरतु इति पा० । ६ माशरीरविमोक्षणादिति, माशरीरनिपातनादिति पा० ।

अभ्यसेत्सततं युक्तो भस्मस्नानपरायणः ॥८९॥ एतद्विधानं परमं पुराणं वेदागमे सम्यगिहेरितञ्च ॥ पुरा महर्षिप्रवरानुपृष्टः स्वायम्भुवो यन्मनुराह देवः ॥ ९० ॥ एवमीश्वरसमर्पितान्तरो योऽनुतिष्ठति विधिं विधानवित् ॥ मोहजालमपहाय सोऽमृतं याति तत्पदमनामयं शिवम् ॥ ९१ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासू० ब्रह्मचारिधर्मनिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ब्रह्मचारिणां गार्हस्थ्यधर्माः ॥ व्यास उवाच ॥ वेदं वेदौ तथा वेदान्विन्द्याद्वा चतुरो द्विजाः ॥ अधीत्य चाभिगम्यार्थं ततः स्नायाद्द्विजोत्तमाः ॥ १ ॥ गुरवे तु धनं दत्वा स्नायीत तदनुज्ञया ॥ चीर्णव्रतोऽथ युक्तात्मा स शक्तः स्नातुमर्हति ॥ २ ॥ वैणवीं धारयेद्यष्टिमन्तर्वासं तथोत्तरम् ॥ यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम् ॥ ३ ॥ छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ॥ रौक्मे च कुण्डले वेदं व्युप्तकेशनखः शुचिः ॥ ४ ॥ स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं न धारयेत् ॥ अन्यत्र काञ्चनाद्विप्रः न रक्तां बिभृयात्स्रजम् ॥ ५ ॥ शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः ॥ न जीर्णमलवद्वासा भवेद्वै वैभवे सति ॥ ६ ॥ न रक्तमुल्बणञ्चान्यधृतं वासो न कुण्डिकाम् ॥ नोपानहौ स्रजं वाथ पादुके न प्रयोजयेत् ॥ ७ ॥ उपवीतकरान् दर्भान्तथा कृष्णाजिनानि च ॥ नापसव्यं परीदध्याद्वासो न विकृतञ्च यत् ॥ ८ ॥ आहरेद्विधिवद्दारान् सदृशानात्मनः शुभान् ॥ रूपलक्षणसंयुक्तान्योनिदोषविवर्जितान् ॥ ९ ॥ अमातृगोत्रप्रभवामसमानार्षगोत्रजाम् ॥ आहरेद्ब्राह्मणो भार्यां शीलशौचसमन्विताम् ॥ १० ॥ ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायते ॥ वर्जयेत्प्रतिषिद्धानि दिनानि तु प्रयत्नतः ॥ ११ ॥ षष्ट्यष्टमीं पञ्चदशीं द्वादशीं च चतुर्दशीम् ॥ ब्रह्मचारी भवेन्नित्यं ब्राह्मणः संयतेन्द्रियः ॥ १२ ॥ आदधीतावसथ्याग्निं जुहुयाज्जातवेदसम् ॥ व्रतानि स्नातको नित्यं पावनानि च पालयेत् ॥ १३ ॥ वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः ॥ अकुर्वाणः पतत्याशु नरकान्याति भीषणान् ॥ १४ ॥ अभ्यसेत्प्रयतो वेदं महायज्ञांश्च भावयेत् ॥ कुर्याद्गृह्याणि कर्माणि सन्ध्योपासन

---

१ वेदाङ्गांश्चतुरोऽन्यथा इति, साङ्गान्वै चतुरो द्विजः इति पा० । २ स्नायादिति साधु । ३ तीर्णव्रतोऽथ मुक्तात्मा शक्तो वेति, चीर्णे व्रते सुयुक्तात्मा इति पा० । ४ उपवीतमलङ्कारमिति पा० । ५ समानिति पा० । ६ आमन्त्रीति पा० । ७ वर्जयेत्तां प्रयत्नेन प्रतिषिद्धदिनानि तु इति पा० । ८ तद्वज्जन्मत्रयाहनीति पा० ।

मेव च ॥ १५ ॥ सख्यं समाधिकैः कुर्यादर्चयेदीश्वरं सदा ॥ दैवतान्यधिगच्छेत कुर्याद्भार्याविभूषणम् ॥ १६ ॥ न धर्मं ख्यापयेद्विद्वान्न पापं गूहयेदपि ॥ कुर्वीतात्महितं नित्यं सर्वभूतानुकम्पनम् ॥ १७ ॥ वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ॥ वेदेवाग्बुद्धिसारूप्यमाचरे द्विहरेत्सदा ॥ १८ ॥ श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः ॥ तमाचारं निषेवेत नेहेतान्यत्र कर्हिचित् ॥ १९ ॥ येनास्य पितरो याता येन याताः पितामहाः ॥ तेन यायात्सतां मार्गं तेन गच्छन् तरिष्यति ॥ २० ॥ नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतवान् ॥ सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्पते ॥ २१ ॥ सन्ध्यास्नानपरो नित्यं ब्रह्मयज्ञपरायणः ॥ अनसूयी मृदुर्दान्तो गृहस्थः प्रेत्य वर्द्धते ॥ २२ ॥ वीतरागभयक्रोधो लोभमोहविवर्जितः ॥ सावित्रीजापनिरतः श्राद्धकृन्मुच्यते गृही ॥ २३ ॥ मातापित्रोर्हिते युक्तो गोब्राह्मण हिते रतः ॥ दान्तो यज्वा देवभक्तो ब्रह्मलोके महीयते ॥ २४ ॥ त्रिवर्गसेवी सततं देवतानाञ्च पूजनम् ॥ कुर्यादहरहर्नित्यं नमस्येत् प्रयतः सुरान् ॥ २५ ॥ विभागशीलः सततं क्षमायुक्तो दयालुकः ॥ गृहस्थस्तु समाख्यातो न गृहेण गृही भवेत् ॥ २६ ॥ क्षमा दया च विज्ञानं सत्यं चैव दमः शमः ॥ अध्यात्मनिरतज्ञानमेतद्ब्राह्मणलक्षणम् ॥ २७ ॥ एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमाः ॥ यथाशक्ति चरेत्कर्म निन्दितानि विवर्जयेत् ॥ २८ ॥ विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् ॥ गृहस्थो मुच्यते बन्धान्नात्र कार्या विचारणा ॥ २९ ॥ विगर्हातिक्रमाक्षेपहिंसाबन्धवधात्मनाम् ॥ अन्यमन्युसमुत्थानां दोषाणां मर्षणं क्षमा ॥ ३० ॥ स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात् ॥ दयेति मुनयः प्राहुः साक्षाद्धर्मस्य साधनम् ॥ ३१ ॥ चतुर्दशानां विद्यानां धारणं हि यथार्थतः ॥ विज्ञानमिति तद्विद्याद्यत्र धर्मो विवर्द्धते ॥ ३२ ॥ अधीत्य विधिवद्वेदानर्थञ्चैवोपलभ्य तु ॥ धर्मकार्यान्निवृत्तश्चेन्न तद्विज्ञानमिष्यते ॥ ३३ ॥ सत्येन लोकाञ्जयति सत्यं तत्परमं पदम् ॥ यथाभूतप्रवादं तु सत्यमाहुर्मनीषिणः ॥ ३४ ॥ दमः शरीरोपरमः शमः प्रज्ञाप्रसादजः ॥ अध्यात्ममक्षरं विद्याद्यत्र

१ उपेयादीश्वरमिति पा० । २ । देशेति, वेषेति पा० । ३ नित्ययाजीति पा० । ४ शुद्धकृन्मुच्यते गृही इति, श्राद्धं कुर्वन् प्रमुच्यते इति पा० । ५ दाता इति पा० । ६ विचारशीलः इति पा० विभागशीलः-रात्रिन्दिवं विभज्य धर्मार्थकामान्सेवीत्यर्थः । ७ शीलतेति पा० ।

गत्वा न शोचति ॥ ३५ ॥ यया स देवो भगवान्विद्यया वेद्यते परः ॥ साक्षाद्देवो महादेवस्तज्ज्ञानमिति कीर्तितम् ॥ ३६ ॥ तन्निष्ठ स्तत्परो विद्वान्नित्यमक्रोधनः शुचिः ॥ महायज्ञपरो विद्वान्न भवेत्तदनुत्तमम् ॥ ३७ ॥ धर्मस्यायतनं यत्नाच्छरीरं प्रतिपालयेत् ॥ न च देहं विना रुद्रो विद्यते पुरुषैः परः ॥ ३८ ॥ ॥ नित्यधर्मार्थकामेषु युज्येत नियतो द्विजः ॥ न धर्मवर्जितं काममर्थं वा मनसा स्मरेत् ॥ ३९ ॥ सीदन्नपि हि धर्मेण न त्वधर्मं समाचरेत् ॥ धर्मो हि भगवान्देवो गतिः सर्वेषु जन्तुषु ॥ ४० ॥ भूतानां प्रियकारी स्यान्न पर द्रोहकर्मधीः ॥ न वेददेवतानिन्दां कुर्यात्तैश्च न संवदेत् ॥ ४१ ॥ यस्त्विमं नियतं विप्रो धर्माध्यायं पठेच्छुचिः ॥ अध्यापयेच्छ्रावयेद्वा ब्रह्मलोके महीयते ॥ ४२ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे ब्रह्मचारिणां गार्हस्थ्यधर्मनिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ व्यास उवाच ॥ न हिंस्यात्सर्वभूतानि नानृतं वा वदेत्क्वचित् ॥ नाहितं नाप्रियं ब्रूयान्न स्तेनः स्यात्कथञ्चन ॥ १ ॥ तृणं वा यदि वा शाकं मृदं वा जलमेव च ॥ परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते ॥२॥ न राज्ञः प्रति गृह्णीयान्न शूद्रात्पतितादपि ॥ नान्यस्माद्याचकत्वञ्च निन्दिताद्वर्जयेद्बुधः ॥ ३ ॥ नित्यं याचनको न स्यात्पुनस्तत्रैव याचयेत् ॥ प्राणा नपहरत्येष याचकस्तस्य दुर्मतिः ॥ ४ ॥ न देवद्रव्यहारी स्याद्विशेषेण द्विजोत्तमः ॥ ब्रह्मस्वं वा नापहरेदापद्यपि कदाचन ॥ ५ ॥ न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥ देवस्वं चापि यत्नेन सदा परिहरेत्ततः ॥ ६ ॥ पुष्पे शाकोदके काष्ठे तथा मूले तृणे फले ॥ अदत्तादानमस्तेयं मनुः प्राह प्रजापतिः ॥ ७ ॥ गृहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजाः ॥ नैकस्मादेव नियतमननुज्ञाय केवलम् ॥ ८ ॥ तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः ॥ धर्मार्थं केवलं ग्राह्यं ह्यन्यथा पतितो भवेत् ॥ ९ ॥ तिलमुद्गयवादीनां मुष्टिर्ग्राह्या पथि स्थितैः ॥ क्षुधार्तैर्नान्यथा विप्रा धर्मविद्भिरिति स्थितिः ॥ १० ॥ न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ॥ व्रतेन पापं प्रच्छाद्य कुर्वन् स्त्रीशूद्रलम्बनम् ॥ ११ ॥ प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः ॥ छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति ॥ १२ ॥

१ लभ्यते तनुमुत्तमामिति, लभते तत्त्वमुत्तममिति पा० । २ न ॰ ॰ न्यस्मादशक्तश्चेति पा० । ३ पुनस्तं नैवेति पा० । ४ श्रान्तैरिति, स्थितमिति पा० ।

अलिङ्गी लिंगिवेशेन यो वृत्तिमुपजीवति ॥ स लिंगिनां हरेदेनस्तिर्यग्योनौ च जायते ॥ १३ ॥ बैडालव्रतिनः पापा लोके धर्मविना शकाः ॥ सद्यः पतन्ति पापेन कर्मणस्तस्य तत्फलम् ॥ १४ ॥ पाखण्डिनो विकर्मस्थान्वामाचारांस्तथैव च ॥ पञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्चयेत् ॥ १५ ॥ वेदनिन्दारतान् मर्त्यान्देवनिन्दारतांस्तथा ॥ द्विजनिन्दारतांश्चैव मनसापि न चिन्त येत् ॥ १६ ॥ याजनं योनिसम्बन्धं सहवासश्च भाषणम् ॥ कुर्वाणः पतते जन्तुस्तस्माद्यत्नेन वर्जयेत् ॥ १७ ॥ देवद्रोहाद्गुरुद्रोहः कोटि कोटिगुणाधिकः ॥ ज्ञानापवादो नास्तिक्यं तस्मात्कोटिगुणाधिकम् ॥१८॥ गोभिश्च दैवतैर्विप्रैः कृष्या राजोपसेवया ॥ कुलान्यकुलतां यान्ति यानि हीनानि धर्मतः॥१९॥कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ॥ कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ २० ॥ अनृता त्पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात् ॥ अश्रौतधर्माचरणात्क्षिप्रं नश्यति वै कुलम् ॥ २१ ॥ अश्रोत्रियेषु वै दानाद्वृषलेषु तथैव च ॥ विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम् ॥ २२ ॥ नाधार्मिकैर्वृते ग्रामे न व्याधिबहुले भृशम् ॥ न शूद्रराज्ये निवसेन्न पाखण्डजनै र्वृते ॥ २३ ॥ हिमवद्विन्ध्ययोर्मध्ये पूर्वपश्चिमयोः शुभम् ॥ मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेद्द्विजः ॥ २४ ॥ कृष्णो वा यत्र चरति मृगो नित्यं स्वभावतः ॥ पुण्याश्च विश्रुता नद्यस्तत्र वा निवसेद्द्विजः ॥ २५ ॥ अर्द्धक्रोशान्नदीकूलं वर्जयित्वा द्विजोत्तमः ॥ नान्यत्र निवसेत्पुण्यां नान्त्यजग्रामसन्निधौ ॥ २६ ॥ न संवसेच्च पतितैर्न चण्डालैर्न पुक्कसैः ॥ न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥२७॥ एकशय्यासनं पंक्तिर्भाण्डपक्वान्नमिश्रणम् ॥ याजनाध्यापनं योनिस्तथैव सहभोजनम् ॥ २८ ॥ सहाध्यायस्तु दशमः सहयाजनमेव च ॥ एकादशैते निर्दिष्टा दोषाः साङ्कर्यसंज्ञिताः ॥ २९ ॥ समीपे वा व्यवस्थानात्पापं संक्रमते नृणाम् ॥ तस्मात्सर्वप्रयत्नेन संकरं वर्ज्जयेद्बुधः ॥ ३० ॥ एकपंक्त्युपविष्टा ये न स्पृशन्ति परस्परम् ॥ भस्मना कृतमर्यादा न तेषां संकरो भवेत् ॥ ३१ ॥ अग्निना भस्मना चैव सलि लेन विशेषतः ॥ द्वारेण स्तम्भमार्गेण षड्भिः पंक्तिर्विभिद्यते ॥ ३२ ॥ न कुर्याद्दुःखवैराणि विवादं चैव पैशुनम् ॥ परक्षेत्रे गां चरन्तीं

१ चण्डालव्रतिन इति पा०। २ पञ्चरात्रान् पञ्चरात्रनामकग्रन्थानुसारिणो वैष्णवविशेषान् पा०। ३ पाशुपतान्–शैवविशेषान्। ४ एकादश समुद्दिष्टा इति पा०।५ शुष्कवैराणीति पा०।

न चाचक्षति कस्याचित् ॥ ३३ ॥ न संवसेत्सूतकिना न काश्चिन्मर्माणि स्पृशेत् ॥ न सूर्यपरिवेषं वा नेन्द्रचापं शवाग्निकम् ॥ ३४ ॥ परस्मै कथयेद्विद्वाञ्छशिनं वा कदाचन॥ न कुर्याद्बहुभिः सार्द्धं विरोधं वा कदाचन ॥३५॥ आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥ तिथिं पक्षस्य न ब्रूयान्नक्षत्राणि विनिर्दिशेत् ॥ ३६ ॥ नोदक्यामभिभाषेत नाशुचिं वा द्विजोत्तमः ॥ न देवगुरुविप्राणां दीयमानं तु वारयेत् ॥ ३७ ॥ न चात्मानं प्रशंसेद्वा परनिन्दाञ्च वर्जयेत् ॥ वेदनिन्दां देवनिन्दां प्रयत्नेन विवर्जयेत् ॥३८॥ यस्तु देवानृषीन् विप्रान् वेदान्वा निन्दति द्विजः ॥ न तस्य निष्कृतिर्दृष्टा शास्त्रेष्विह मुनीश्वराः ॥ ३९ ॥ निन्दयेद्वै गुरून्देवान्वेदं वा सोपबृंहणम् ॥ कल्पकोटिशतं साग्रं रौरवे पच्यते नरः ॥ ४० ॥ तूष्णीमासीत निन्दायां न ब्रूयात्किञ्चिदुत्तरम् ॥ कर्णौ पिधाय गन्तव्यं न चैतानवलोकयेत् ॥ ४१ ॥ वर्ज्जयेद्वै रहस्यञ्च परेषां गूहयेद्बुधः ॥ विवादं स्वजनैः सार्द्धं न कुर्याद्वै कदाचन ॥ ४२ ॥ न पापं पापिनं ब्रूयादपापं वा द्विजोत्तमाः ॥ स तेन तुल्यदोषः स्यान्मिथ्यादिदोषवान् भवेत् ॥ ४३ ॥ यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् ॥ तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् ॥ ४४ ॥ ब्रह्महत्यासुरापाने स्तेयगुर्वङ्गनागमे॥ दृष्टं विशोधनं सद्भिर्नास्ति मिथ्याभिशंसने ॥४५॥ नेक्षेतोद्यन्तमादित्यं शशिनञ्चानिमित्ततः ॥ नास्तं यातं न वारिस्थं नोपसृष्टं न मध्यगम् ॥ ४६ ॥ तिरोहितं वाससा वा नादर्शान्तरगामिनम् ॥ न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ॥ ४७ ॥ न च मूत्रं पुरीषं वा न च संसृष्टमैथुनम् ॥ नाशुचिः सूर्यसोमादीन् ग्रहान्नालोकयेद्बुधः ॥ ४८ ॥ पतितव्यङ्गचण्डालानुच्छिष्टान्नावलोकयेत् ॥ नाभिभाषेत च परमुच्छिष्टो वावगर्वितः ॥ ४९ ॥ न स्पृशेत्प्रेतसंस्पर्शं न क्रुद्धस्य गुरोर्मुखम्॥ न तैलोदकयोश्छायां न पत्नीं भोजने सति ॥ निर्युक्तबन्धनाङ्गां वा नोन्मत्तं मत्तमेव वा॥५०॥ नाश्नीयात्

१ कथञ्चनेति पा० । २ बन्धुभिस्तथेति पा० । बन्धुभिः सह इति पा० । ३ सोपबृंहणं–उपबृंहणान्वितम् । उपबृंहणं संग्रहेण वर्द्धनम्, संहिताकारेण निबद्धम् । ४ दृष्टं वै शोधनं वृद्धेरिति, वृद्धैरिति पा० । ५ वा संसारादिति पा० । ६ नादर्शाद्यनुगामिनामिति, न दशाद्यनुगामिनमिति पा० । ७ वावगुण्ठितः इति पा० । ८ नामुक्तेति, न मुक्तेति पा० ।

भार्यया सार्द्धं नैनामीक्षेत मेहनीम् ॥ क्षुवन्तीं जृम्भमाणां वा नासनस्थां यथासुखम् ॥ ५१ ॥ नोदके चात्मनो रूपं न कूलं श्वभ्रमेव वा ॥ न लङ्घयेच्च मूत्रं वा नाधितिष्ठेत्कदाचन ॥५२॥ न शूद्राय मतिन्दद्यात्कृशरं पायसं दधि ॥ नोच्छिष्टं वा घृतमधु न च कृष्णाजिनं हविः ॥ ५३ ॥ न चैवास्मै व्रतं दद्यान्न च धर्मं वदेद्बुधः ॥ न च क्रोधवशङ्गच्छेद्द्वेषं रागञ्च वर्ज्जयेत् ॥ ५४ ॥ लोभं दम्भं तथा वर्ज्यं यात्राँविज्ञानकुत्सनम् ॥ मानं मोहं तथा क्रोधं द्वेषञ्च परिवर्जयेत् ॥ ५५ ॥ न कुर्यात्कस्यचित्पीडां सुतं शिष्यञ्च ताडयेत् ॥ न हीना नुपसेवेत न च तीक्ष्णमतीन् क्वचित् ॥ ५६ ॥ नात्मानञ्चावमन्येत दैन्यं यत्नेन वर्ज्जयेत् ॥ न चाशिष्यं न सत्कुर्यान्नात्मानं शंसयेद्बुधः ॥५७॥ न नखैर्विलिखेद्भूमिं गां च संवेशयेन्न हि ॥ न नदीषु नदीं ब्रूयात्पर्वते न च पर्वतान् ॥५८॥ आ वसेत्तेन नैवापि न त्यजेत्सहयायिनम् ॥ नावगाहेदपो नग्नो वह्निश्चापि व्रजेत्पदा ॥ ५९ ॥ शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ॥ न शस्त्रसर्पैः क्रीडेत न स्वानि खानि च स्पृशेत् ॥६०॥ रोमाणि च रहस्यानि नाशिष्टेन सह व्रजेत् ॥ न पाणिपादावग्नौ च चापलानि समाश्रयेत् ॥ ६१ ॥ न शिश्नोदरयोर्नित्यं न च श्रवणयोः क्वचित् ॥ न चाङ्गनखवादं वै कुर्यान्नाञ्जलिना पिबेत् ॥ ६२ ॥ नाभिहन्याज्जलं पद्भ्यां पाणिना वा कदाचन ॥ न शातयेदिष्टकाभिः फलानि सफलानि च ॥ ६३ ॥ न म्लेच्छभाषणं शिक्षेन्नाकर्षेच्च पदासनम् ॥ न भेदनमधिस्फोटं छेदनं वा विलेखनम् ॥ ६४ ॥ कुर्याद्विमर्दनं धीमान्नाकस्मादेव निष्फलम् ॥ नोत्सङ्गे भक्षयेद्भक्ष्यान् वृथाचेष्टाञ्च नाचरेत् ॥ ६५ ॥ न नृत्येदथवा गायेन्न वादित्राणि वादयेत् ॥ न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ॥ ६६ ॥ न लौकिकैः स्तवैर्देवांस्तोषयेद्बेषजैरपि ॥ नाक्षैः क्रीडेन्न धावेत नाप्सु विण्मूत्रमाचरेत् ॥ ६७ ॥ नोच्छिष्टः संविशेन्नित्यं न नग्नः स्नानमाचरेत् ॥ न गच्छन्न पठे

---

१ चाशुचिमिति पा० । २ शुभं वाशुभमेव वेति पा० । ३ मतिमानिति पा० । ४ ईर्ष्यामिति पा० । ५ न विशिष्टानिति, न च शिष्टानिति, न चाशिष्टानिति पा० । ६ नदीस्थितः नदीविषयिकां कथां पर्वतारूढः पर्वतसम्बन्धिनीं कथां तथा नापि प्रस्तूयात् । ७ तेन तादृशेन नद्यां नदीं पर्वते पर्वतं निर्दिशता जनेन सह नैवोत्तरेत् । आवासे भोजनेवापीति पा० । ८ न शिश्नोदरचापल्यमिति पा० । ९ वाक्यजैरपीति, बाह्यजैरपीति पा० ।

द्वापि न चैव स्वाशिरः स्पृशेत् ॥ ६८ ॥ न दन्तैर्नखरोमाणि छिन्द्यात्सुप्तं न बोधयेत् ॥ न बालातपमासेवेत् प्रेतधूमं विवर्जयेत् ॥६९॥ नैकः सुप्याच्छून्यगृहे स्वयं नोपानहौ हरेत् ॥ नाकारणाद्वा निष्ठीवेन्न बाहुभ्यां नदीं तरेत् ॥७०॥ न पादक्षालनं कुर्यात्पादेनैव कदाचन ॥ नाग्नौ प्रतापयेत्पादौ न कांस्ये धावयेद्बुधः ॥ ७१ ॥ नातिप्रसारयेद्देवं ब्राह्मणान् गामथापि वा ॥ वाय्वग्निगुरुविप्रान्वा सूर्यं वा शशिनं प्रति ॥ ७२ ॥ अशुद्धशयनं यानं स्वाध्यायं स्नानभोजनम् ॥ बहिर्निष्क्रमणञ्चैव न कुर्वीत कथञ्चन ॥ ७३ ॥ स्वप्नमध्ययनं यानमुच्चारं भोजनं गतिम् ॥ उभयोः सन्ध्ययोर्नित्यं मध्याह्ने तु विवर्जयेत् ॥ ७४ ॥ न स्पृशेत्पाणिनोच्छिष्टो विप्रो गोब्राह्मणानलान् ॥ न चैवान्नं पदा वापि न देवप्रतिमां स्पृशेत् ॥ ७५ ॥ नाशुद्धोऽग्निं परिचरेन्न देवान् कीर्त्तयेदृषीन् ॥ नावगाहेदगाधाम्बु धारयेन्नाग्निमेकतः ॥७६॥ न वामहस्तेनोद्धृत्य पिबेद्वक्त्रेण वा जलम् ॥ नोत्तरेदनुपस्पृश्य नाप्सु रेतः समुत्सृजेत् ॥ ७७ ॥ अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥ व्यतिक्रमेन्न स्रवन्तीं नाप्सु मैथुनमाचरेत् ॥ ७८ ॥ चैत्यं वृक्षं न वै छिन्द्यान्नाप्सु ष्ठीवनमुत्सृजेत् ॥ नास्थिभस्मकपालानि न केशान्न च कण्टकान् ॥ ओषांगारकरीषं वा नाधितिष्ठेत्कदाचन ॥ ७९ ॥ न चाग्निं लंघयेद्धीमान्नोपदध्यादधः क्वचित् ॥ न चैनं पादतः कुर्यान्मुखेन न धमेद्बुधः ॥ ८० ॥ न कूपमवरोहेत नाचक्षीताशुचिः क्वचित् ॥ अग्नौ न प्रक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा ॥ ८१ ॥ सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत्परान् ॥ अपण्यमथ पण्यं वा विक्रये न प्रयोजयेत् ॥ ८२ ॥ न वह्निं मुखनिश्वासैर्ज्वालयेन्नाशुचिर्बुधः ॥ पुण्यस्नानोदकस्नाने सीमान्तं वा कृषेन्न तु ॥ ८३ ॥ न भिन्द्यात्पूर्वसमयं संत्योपेतं कदाचन ॥ परस्परं पशून् व्यालान् पक्षिणो नावबोधयेत् ॥ ८४ ॥ परबाधां न कुर्वीत जलपानायनादिभिः ॥ कारयित्वा सुकर्माणि कारून् पश्चान्न वर्जयेत् ॥ सायं प्रातर्गृहद्वारान् भिक्षार्थं नावघाटयेत् ॥ ८५ ॥ बहिर्माल्यं बहिर्गन्धं भार्यया सह भोजनम् ॥ विगृह्यवादं कुद्वारप्रवेशं च विवर्ज्जयेत् ॥८६॥

---

१ आसेवेतेति साधु । २ स्नानमिति पा० । ३ चात्मानमिति पा० । ४ धारयेद्वानिमित्ततः इति पा०। ५ चैत्यवृक्षमिति, चत्यवृक्षानिति पा०। ६ माचरेदिति पा०। ७ कूटपण्यमिति, कृतपण्यं चेति पा० । ८ चाग्रसेन्न तु इति पा० । न कृषेत्--नातिक्रम्य गच्छेदित्यर्थः । ९ पूर्वसमयं पूर्वनियमबन्धमित्यर्थः ।१० अभ्युपेतामिति पा०। ११ जलवातातपादिभिरिति पा०।

न खादन् ब्राह्मणस्तिष्ठेन्न जल्पन्न हसन् बुधः ॥ स्वमग्निं नैवं[2] हस्तेन स्पृशेन्नाप्सु चिरं वसेत् ॥ ८७ ॥ न पक्षकेणोपधमेन्न शूर्पेण न पाणिना ॥ मुखेनैव धमेदग्निं मुखादग्निरजायत ॥ ८८ ॥ परस्त्रियं न भाषेत नायाज्यं याजयेद् द्विजः ॥ नैकश्चरेत्सभां विप्रसमवायं च वर्जयेत् ॥ दे[3]वतायतनं गच्छेत्कदाचिन्नाप्रदक्षिणम् ॥ ८९ ॥ न वीजयेद्वा वस्त्रेण न देवायतने स्वपेत् ॥ नैकोऽध्वानं प्रपद्येत नाधार्मिकजनैः सह ॥ ९० ॥ न व्याधिदूषितैर्वापि न शूद्रैः पतितैर्न वा ॥ नोपानद्वर्जितोऽध्वानं जलादिरहितस्तथा ॥ ९१ ॥ न रात्रौ वारिणा सार्द्धं न विना च कमण्डलुम् ॥ नाग्निगोब्राह्मणादीनामन्तरेण व्रजेत्क्वचित् ॥९२ ॥ निवत्स्यन्तीं न वनितामतिक्रामेद्द्विजोत्तमाः ॥ न निन्देद्योगिनः सिद्धान् गुणिनो वा यतींस्तथा ॥ ९३ ॥ देवतायतने प्राज्ञो न देशानां च सन्निधौ ॥ नाक्रामेत्कामतश्छायां ब्राह्मणानां गवामपि ॥ ९४ ॥ स्वां तु नाक्रमयेच्छायां पतिताद्यैर्न रोगिभिः ॥ नाङ्गारभस्मकेशादिष्वधितिष्ठेत्कदाचन ॥ ९५ ॥ वर्जयेन्मार्जनीरेणुं स्नानवस्त्रघटोदकम् ॥ न भक्षयेदभक्ष्याणि नापेयञ्चापिबेद्द्विजाः ॥ ९६ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे गार्हस्थ्यधर्मनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥ भक्ष्याभक्ष्यनिर्णयः ॥ व्यास उवाच ॥ नाद्याच्छूद्रस्य विप्रोऽन्नं मोहाद्वा यदि वान्यतः ॥ स शूद्रयोनिं व्रजति यस्तु भुंक्ते ह्यनापदि ॥ १ ॥ षण्मासान्यो द्विजो भुंक्ते शूद्रस्यान्नं विगर्हितम् ॥ जीवन्नेव भवेच्छूद्रो मृतं एवाभिजायते ॥ २ ॥ ब्राह्मणक्षत्रियविशां शूद्रस्य च मुनीश्वराः ॥ यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात् ॥ ३ ॥ नर्टान्नं नर्त्तकान्नञ्च तक्ष्णोऽन्नं कर्मकारिणः ॥ गणान्नं गणिकान्नञ्च षडन्नानि च वर्जयेत् ॥ ४॥ चक्रोपजीविरजकतस्करध्वजिनां तथा ॥ गन्धर्वलोहकारान्नं सूतकान्नञ्च वर्ज्जयेत् ॥ ५ ॥ कुलालचित्रकर्मान्नं वार्धुषेः पतितस्य च ॥ सुवर्णकारशैलूषव्याधबद्धातुरस्य च ॥ ६ ॥ चिकित्सकस्य चैवान्नं पुंश्चल्या

१ न जपेद्वा इति पा० । २ हस्तेनैकेनेति पा० । ३ न देवायतनं गच्छेत्कदाचिद्वाप्रदक्षिणमिति पा० । ४ व्रतिनोर्वेति पा० । ५ देवतायतनं प्राज्ञो देशानाञ्चैव मन्त्रिणामिति पा० । ६ ब्राह्मणानाञ्च गोरपीति पा० । ७ मृतःश्वाचाभिजायते इति पा० । ८ राजान्नमिति पा० । ९ चर्मकारिण इति पा० । १० पौनर्भवश्च कर्तारभिशस्तस्य चैवहि इति पा० । ११ व्याधितस्यातुरस्यचेति पा० ।

दण्डक[1]स्य च ॥ स्तेननास्तिकयोरन्नं देवतानिन्दकस्य च ॥ ७ ॥ सोमविक्रयिणश्चान्नं श्वपाकस्य विशेषतः ॥ भार्याजितस्य चैवान्नं यस्य चोपपतिर्गृहे ॥ ८ ॥ उच्छिष्टस्य कदर्यस्य तथैवोच्छिष्टभोजिनः ॥ अपंक्त्यन्नञ्च संघान्नं शस्त्रजीवस्य चैव हि ॥ ९ ॥ क्लीबसंन्यासिनश्चान्नं मत्तोन्मत्तस्य चैव हि ॥ भीतस्य रुदितस्यान्नमवक्रुष्टं परिग्रहम्[2] ॥ १० ॥ ब्रह्मद्विषः पापरुचेः श्राद्धान्नं सूतकस्य च ॥ वृथापाकस्य चैवान्नं शठान्नं चतुर[3]स्य च ॥ ११ ॥ अप्रजानान्तु नारीणां भृतक[4]स्य तथैव च ॥ कारुकान्नं विशेषेण शस्त्रविक्रयिण स्तथा ॥ १२ ॥ शौण्डान्नं[5] घातिकान्नं च भिषजामन्नमेव च ॥ विद्धप्रजननस्यान्नं परिवेत्रन्नमेव च ॥ १३ ॥ पुनर्भुवो विशेषेण तथैव दिधिषूपतेः ॥ अवज्ञातं चावधूतं सरोषं विस्मयान्वितम् ॥ १४ ॥ गुरोरपि न भोक्तव्यमन्नं संस्कारवर्जितम् ॥ दुष्कृतं हि मनुष्यस्य सर्वमन्ने व्यवस्थितम् ॥ १५ ॥ यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् ॥ आर्द्धिकः[6] कुलमित्रश्च स्वगोपाल[7]श्च नापितः ॥ १६ ॥ कुशीलवः कुम्भकारः क्षेत्रकर्मक एव च ॥ एते शूद्रेषु भोज्यान्नं दत्त्वा स्वल्पं पणं बुधैः ॥ पायसं स्नेहपक्वं यत् गोरसं चैव सक्तवः ॥ १७ ॥ पिण्याकं चैव तैलं च शूद्राद्ग्राह्यं[8] तथैव च ॥ वृन्ताकं जालिका[9] शाकं कुसुम्भाश्मन्तकं तथा ॥ १८ ॥ पलाण्डुं लसुनं सूक्तं निर्यासं चैव वर्जयेत् ॥ छत्राकं विड्वराहञ्च शेलं पीयूष[10]मेव च ॥ १९ ॥ विलयं सुमुखञ्चैव कवका[11]नि च वर्जयेत् ॥ गृञ्जनं किंशुकं चैव कुक्कुटं[12] च तथैव च ॥ २० ॥ उदुम्बरमलाबुं च जग्ध्वा पतति वै द्विजः ॥ वृथा कृशरसंयावं पायसापूपमेव च ॥ २१ ॥ अनुपाकृतमांसं च देवान्नानि हवींषि च ॥ यवागूं मातुलिङ्गञ्च मत्स्यानप्यनुपाकृतान् ॥ २२ ॥ नीपं कपित्थं प्लक्षं च प्रयत्नेन विवर्जयेत् ॥ पिण्याकं चोद्धृतस्नेहं दिवाधाना[13]स्तथैव च ॥ २३ ॥ रात्रौ च तिलसम्बद्धं प्रयत्नेन दधि त्यजेत् ॥ नाश्नीयात्पयसा तक्रं न बीजान्युपजीवयेत् ॥ २४ ॥

१ दांभिकस्येति पा० । २ परिक्षतमिति, अवक्रुत्रं परिक्षुतमिति पा० । ३ श्वशुरस्येति, शवान्नं भासुरस्य च इति पा० । ४ कृतघ्नस्येति पा० । ५ शौण्डिकान्नमिति पा० । ६ आर्तिजः इति पा० । ७ गोपालो दासनापितौ । एते शूद्रेषु भोज्यान्नं यश्चात्मानं निवेदयेत् इति पा० । ८ शूद्राद्ग्राह्यं द्विजातिभिरिति पा० । ९ नालिकेति पा० । १० पीलूषमेवेति, विड्वराहञ्च शैलं पेयुषमेव च इति, विड्वराहञ्च शैलूषपेयूषमेव च इति पा० । ११ करकाणीति पा० । १२ ककुभञ्चेति पा० । १३ देवधान्यामिति पा० ।

क्रियादुष्टं भावदुष्टमसत्संगं विवर्ज्जयेत् ॥ केशकीटावपन्नं च स्वभूल्लेखं[1] च नित्यशः ॥ २५ ॥ श्वाघ्रातं च पुनः सिद्धं चण्डालावेक्षितं तथा ॥ उदक्यया च पतितैर्गवा चाघ्रातमेव च ॥ २६ ॥ अनर्चितं पर्युषितं पर्याभ्रान्तं च नित्यशः ॥ काककुक्कुटसंस्पृष्टं कृमिभिश्चैव संयुतम् ॥ २७ ॥ मनुष्यैरथवा घ्रातं कुष्ठिना स्पृष्टमेव च ॥ न रजस्वलया दत्तं न पुंश्चल्या सरोषकम्[2] ॥२८॥ मलवद्वाससा[3] चापि परस्यो[4] चोपयोजयेत् ॥ विवत्सायाश्च गोः क्षीरमौष्ट्रं वा निर्दशस्य च ॥ २९ ॥ आविकं सन्धिनीक्षीरमपेयं[5] मनुरब्रवीत् ॥ बलाकं हंसदात्यूहं कलविंकं शुकं तथा ॥ ३० ॥ तथा[6] कुररवल्लूरं जालपादश्च कोकिलम् ॥ चाषांश्च खञ्जरीटांश्च श्येनं गृध्रं तथैव च ॥३१॥ उलूकं चक्रवाकञ्च भासं पारावतं तथा ॥ कपोतं टिट्टिभञ्चैव ग्रामकुक्कुटमेव च ॥३२॥ सिंहं व्याघ्रञ्च मार्जारं श्वानं कुक्कुरमेव च ॥ शृगालं मर्कटं चैव गर्दभञ्च न भक्षयेत् ॥ न भक्षयेत्सर्वमृगान्नान्यांन्वनचरान्[7] द्विजान् ॥ ३३ ॥ जलेचरान् स्थलचरान् प्राणिनश्चेति धारणा ॥ गोधा कूर्मः शशः श्वावित् सल्लकी[8] चेति सत्तमाः ॥ ३४ ॥ भक्ष्याः पञ्चनखा नित्यं मनुराह प्रजापतिः ॥ मत्स्यान् सशल्कान् भुञ्जीयान्मांसं रौरवमेव च ॥ ३५ ॥ निवेद्य देवताभ्यस्तु ब्राह्मणेभ्यस्तु नान्यथा ॥ मयूरन्तित्तिरञ्चैव कपिञ्जलकमेव[9] च ॥ ३६ ॥ वार्ध्रीणसं द्वीपिनञ्च भक्ष्यानाह प्रजापतिः ॥ राजीवान् सिंहतुण्डांश्च[10] तथा पाठीनरोहितौ ॥ ३७ ॥ मत्स्येष्वेते समुद्दिष्टा भक्षणीया मुनीश्वराः ॥ प्रोक्षितं भक्षयेदेषां मांसञ्च द्विजकाम्यया ॥३८॥ यथाविधि नियुक्तं च प्राणानामपि चात्यये ॥ भक्षयेदेव मांसानि शेषभोजी न लिप्यते ॥ ३९॥ औषधार्थमशक्तौ वा नियोगाद्यं न कारयेत् ॥ आमन्त्रितस्तु यः श्राद्धे दैवे वा मांसमुत्सृजेत् ॥ यावन्ति पशुरोमाणि तावतो नरकान् व्रजेत् ॥ ४० ॥ अपेयं वाप्यपेयञ्च तथैवास्पृश्यमेव च ॥ द्विजातीनामनालोच्यं नित्यं मद्यमिति स्थितिः॥४१॥तस्मात्सर्वप्रयत्नेन मद्यं

---

१ सुहल्लेखश्चेति, नभो वारिच नित्यशः इति च पा० ।२ सरोमयेति, सरोषया इति च पा० । ३ परवासोऽथ वर्जयेदिति पा० । ४ चानिर्दशन्तयेति पा० । ५ सन्धिनीक्षीरमपेय- मिति पा० । ६ कुररञ्चवकारश्चेति पा० । ७ पक्षिणो अन्यान्वनेचरानिति पा० ।८ खड्गीती पा० । ९ कपोतञ्च कपिञ्जलमिति पा० । १० शेखरं सिंहतुंडश्चेति पा० ।

निन्द्यञ्च वर्ज्जयेत् ॥ पीत्वा पतितः कर्मभ्यो न सम्भाष्यो भवेद्द्विजैः॥४२॥ भक्षयित्वा ह्यभक्ष्याणि पीत्वापेयान्यपि द्विजः ॥ नाधिकारी भवेत्तावद्यावत्तन्न व्रजत्यधः ॥ ४३ ॥ तस्मात्परिहरेन्नित्यमभक्ष्याणि प्रयत्नतः ॥ आरोप्य याति चैवैको तथा वै याति रौरवम् ॥ ४४ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे भक्ष्याभक्ष्यनिर्णये व्यासगीतासु सप्तदशोऽध्यायः ॥ १७ ॥ ब्राह्मणानां नित्यकर्तव्यकर्माणि ॥ ऋषय ऊचुः॥ अहन्यहनि कर्त्तव्यं ब्राह्मणानां महामुने ॥ तदाचक्ष्वाखिलं कर्म येन मुच्येत बन्धनात्॥१॥ व्यास उवाच ॥ वक्ष्ये समाहिता यूयंशृणुध्वं गदतो मम ॥ अहन्यहनि कर्त्तव्यं ब्राह्मणानां क्रमाद्विधिम् ॥ २ ॥ ब्राह्मे मुहूर्ते तूत्थाय धर्ममर्थञ्च चिन्तयेत् ॥ कायक्लेशञ्च यन्मूलं ध्यायेत मनसेश्वरम् ॥ ३ ॥ उषःकाले च सम्प्राप्ते कृत्वा चावश्यकं बुधः ॥ स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि ॥ ४ ॥प्रातः स्नानेन पूयन्ते येऽपि पापकृतो जनाः ॥ तस्मात्सर्वप्रयत्नेन प्रातः स्नानं समाचरेत् ॥ ५ ॥ प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्॥ ऋषीणामृषिता नित्यं प्रातः स्नानान्न संशयः ॥ ६ ॥ मुखे सुप्तस्य सततं लाला याः संस्रवन्ति हि ॥ ततो नैवाचरेत्कर्म अकृत्वा स्नानमादितः॥७॥अलक्ष्मको जलं किञ्चित् दुःस्वप्नं दुर्विचिन्तितम् ॥ प्रातः स्नानेन पापानि पूयन्ते नात्र संशयः ॥ ८ ॥ अतः स्नानं विना पुंसां प्रभातं कर्म संस्मृतम् ॥ होमे जप्ये विशेषेण तस्मात्स्नानं समाचरेत् ॥९॥ अशक्तावशिरस्कं वा स्नानमस्य विधीयते ॥ आर्द्रेण वाससा वाथ मार्ज्जनं कापिलं स्मृतम् ॥ १० ॥ आयत्ये वै समुत्पन्ने स्नानमेव समाचरेत् ॥ ब्रह्मादीनामथाशक्तौ स्नानान्याहुर्मनीषिणः ॥ ११ ॥ ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च ॥ वारुणं यौगिकं यच्च षोढा स्नानं समासतः ॥ १२ ॥ ब्राह्मं तु मार्ज्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः ॥ आग्नेयं भस्मना पादमस्तकाद्देहधूलनम् ॥ १३ ॥ गवां हि रजसा प्रोक्तं वायव्यं स्नानमुत्तमम् ॥ यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ॥ १४ ॥ वारुणञ्चावगाहस्तु मानसं स्वात्मवेदनम् ॥ योगिनां

१ अपेयानि च विप्रा वै तथा चेद्याति रौरवमिति पा० । २ कायक्लेशं तदुद्भुतामिति पा० । ३ ऋषिभिर्बहुभिश्चीर्णमिति पा० । ४ अलक्ष्मीः कालकर्णी चेति पा० । ५ असामर्थ्ये इति पा० । ६ तद्वदिति पा० ।

स्नानमाख्यातं योगे विश्वातिचिन्तनम् ॥ १५ ॥ आत्मतीर्थमिति ख्यातं सेवितं ब्रह्मवादिभिः ॥ मनःशुद्धिकरं पुंसां नित्यं तत्स्नानमाचरेत् ॥ १६ ॥ शक्तश्चेद्दारुणं विद्वान् प्रायश्चित्ते तथैव च ॥ प्रक्षाल्य दन्तकाष्ठं वै भक्षयित्वा विधानतः ॥ १७ ॥ आचम्य प्रयतो नित्यं स्नानं प्रातः समाचरेत् ॥ मध्याङ्गुलिसमस्थौल्यं द्वादशांगुलसम्मितम् ॥ १८ ॥ सत्वचं दन्तकाष्ठं स्यात्तदग्रेण तु धावयेत् ॥ क्षीरवृक्षसमुद्भूतं मालतीसम्भवं शुभम् ॥ अपामार्गश्च बिल्वश्च करवीरं विशेषतः ॥ १९ ॥ वर्जयित्वा निन्दितानि गृहीत्वैकं यथोदितम् ॥ परिहृत्य दिनं पापं भक्षयेद्वै विधानवित् ॥ २० ॥ नोत्पाटयेद्दन्तकाष्ठं नांङ्गुल्यग्रेण धारयेत् ॥ प्रक्षाल्य भंक्त्वा तज्जह्याच्छुचौ देशे समाहितः ॥ २१ ॥ स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥ आचम्य मन्त्रविन्नित्यं पुनराचम्य वाग्यतः ॥ २२ ॥ सम्मार्ज्य मन्त्रैरात्मानं कुशैः सोदकबिन्दुभिः ॥ आपोहिष्ठाव्याहृतिभिः सावित्र्या वारुणैः शुभैः ॥ २३ ॥ ओङ्कारव्याहृतियुतां गायत्रीं वेदमातरम् ॥ जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः ॥ २४ ॥ प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः ॥ प्राणायामत्रयं कृत्वा ध्यायेत्सन्ध्यामिति स्मृतिः ॥ २५ ॥ या च सन्ध्या जगत्सूतिर्मायातीता हि निष्कला ॥ ऐश्वरी केवला शक्तिस्तत्त्वत्रयसमुद्भवा ॥ २६ ॥ ध्यात्वार्कमण्डलगतां सावित्रीं वै जपेद्बुधः ॥ प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ॥ २७ ॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ यदन्यत्कुरुते किञ्चिन्न तस्य फलमाप्नुयात् ॥ २८ ॥ अनन्यचेतसः शान्ता ब्राह्मणा वेदपारगाः ॥ उपास्य विधिवत् सन्ध्यां प्राप्ताः पूर्वेऽपरां गतिम् ॥ २९ ॥ योऽन्यत्र कुरुते यत्नं धर्मकार्ये द्विजोत्तमः ॥ विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥ ३० ॥ तस्मात्सर्वप्रयत्नेन सन्ध्योपासनमाचरेत् ॥ उपासितो भवेत्तेन देवो योगतनुः परः ॥ ३१ ॥ सहस्रपरमां नित्यं शतमध्यां दशावराम् ॥ सावित्रीं वै जपेद्विद्वान् प्राङ्मुखः प्रयतः स्थितः ॥ ३२ ॥ अथोपतिष्ठेदादित्यमुद्यन्तं वै समाहितः ॥ मन्त्रैस्तु विविधैः

१ योगाद्विष्णुविचिन्तनमिति पा० । २ प्राजापत्यमिति पा० । ३ नांगुल्या धारयेत् क्वचिदिति पा० । ४ प्राक्कूलेषु समासीनः इति पा० । ५ श्रुतिरिति पा० । ६ ऐश्वरी तु परेति पा० ।

सौरैः ऋग्यजुःसामसम्भवैः ॥ ३३ ॥ उपस्थाय महायोगं देवदेवं दिवाकरम् ॥ कुर्वीत प्रणतिं भूमौ मूर्ध्ना तेनैव मन्त्रतः ॥ ३४ ॥ ओं खद्योताय च शान्ताय कारणत्रयहेतवे ॥ निवेदयामि चात्मानं नमस्ते विश्वरूपिणे ॥ ३५ ॥ नमस्ते घृणिने तुभ्यं सूर्याय ब्रह्मरूपिणे ॥ त्वमेव ब्रह्म परममापोज्योतीरसोऽमृतम् ॥ भूर्भुवः स्वस्त्वमोङ्कारः शर्वो रुद्रः सनातनः ॥ ३६ ॥ पुरुषः सन्महोऽन्तस्थं प्रणमामि कपर्दिनम् ॥ त्वमेव विश्वं बहुधा जात यज्जायते च यत् ॥ नमो रुद्राय सूर्याय त्वामहं शरणं गतः ॥ ३७ ॥ प्रचेतसे नमस्तुभ्यं नमो मीढुष्टमाय च ॥ नमो नमस्ते रुद्राय त्वामहं शरणं गतः ॥ हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः ॥ ३८ ॥ अम्बिकापतये तुभ्यमुमायाः पतये नमः ॥ नमोऽस्तु नीलग्रीवाय नमस्तुभ्यं पिनाकिने ॥ ३९ ॥ विलोहिताय भर्गाय सहस्राक्षाय ते नमः ॥ तमोऽपहाय ते नित्यमादित्याय नमोऽस्तु ते ॥ ४० ॥ नमस्ते वज्रहस्ताय त्र्यम्बकाय नमो नमः ॥ प्रपद्ये त्वां विरूपाक्षं महान्तं परमेश्वरम् ॥ ४१ ॥ हिरण्मये गृहे गुप्तमात्मानं सर्वदेहिनाम् ॥ नमस्यामि परं ज्योतिर्ब्रह्माणं त्वां परामृतम् ॥ ४२ ॥ विश्वं पशुपतिं भीमं नरनारीशरीरिणम् ॥ नमः सूर्याय रुद्राय भास्वते परमेष्ठिने ॥ ४३ ॥ उग्राय सर्वतक्षाय त्वां प्रपद्ये सदैव हि ॥ एतद्वै सूर्यहृदयं जप्त्वा स्तवमनुत्तमम् ॥ ४४ ॥ प्रातःकालेऽथ मध्याह्ने नमस्कुर्याद्दिवाकरम् ॥ इदं पुत्राय शिष्याय धार्मिकाय द्विजातये ॥ ४५ ॥ प्रदेयं सूर्यहृदयं ब्रह्मणा तु प्रदर्शितम् ॥ सर्वपापप्रशमनं वेदसारसमुद्भवम् ॥ ब्राह्मणानां हितं पुण्यमृषिसंघैर्निषेवितम् ॥ ४६ ॥ अथागम्य गृहं विप्रः समाचम्य यथाविधि ॥ प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम् ॥ ४७ ॥ ऋत्विक् पुत्रोऽथ पत्नी वा शिष्यो वापि सहोदरः ॥ प्राप्यानुज्ञां विशेषेण ह्यध्वर्युर्वा यथाविधि ॥ ४८ ॥ पवित्रपाणिः पूतात्मा शुक्लाम्बरधरः शुचिः ॥ अनन्यमनसा नित्यं जुहु

---

१ नित्यश्चोति पा० । २ खगोलकायानन्ताय शान्ताय ज्ञानरूपिणे इति पा० । ३ सदसत्सूयते इति पा० । ४ नमो हंसाय ते तुभ्यमिति पा० । ५ बहु इति पा० । ६ दहन्तमिति पा० । ७ परां गतिमिति पा० । ८ सर्वभक्षाय, सर्वलक्षाय इति च पा० । ९ ब्रह्मणस्तु प्रसादतः इति पा० । १० अनन्यमनसो वह्निमिति पा० ।

यात्संयतेन्द्रियः ॥४९॥ विना दर्भेण यत्कर्म विना सूत्रेण वा पुनः ॥ राक्षसं तद्भवेत्सर्वं नामुत्रेह फलप्रदम् ॥५०॥ दैवतानि नमस्कुर्यादुपहारा न्निवेदयेत् ॥ दद्यात्पुष्पादिकं तेषां वृद्धांश्चैवाभिवादयेत् ॥ ५१ ॥ गुरुश्चैवाप्युपासीत हितञ्चास्य समाचरेत् ॥ वेदाभ्यासं ततः कुर्यात्प्रयत्ना च्छक्तितो द्विजः ॥ ५२ ॥ जपेदध्यापयेच्छिष्यान्धारयेद्वै विचारयेत् ॥ अवेक्ष्य तच्च शास्त्राणि धर्मादीनि द्विजोत्तमाः ॥५३॥ वैदिकांश्चैव निगमान्वेदांगानि च सर्वशः ॥ उपेयादीश्वरं वाथ योगक्षेमप्रसिद्धये ॥ ५४ ॥ साधयेद्विविधानर्थान् कुटुम्बार्थे ततो द्विजः ॥ ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ॥ ५५ ॥ पुष्पाक्षतान् कुशतिलान् गोशकृच्छुद्धमेव वा ॥ नदीषु देवखातेषु तडागेषु सरस्सु च ॥ स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥५६॥ परकीयनिपानेषु न स्नायाद्वै कदाचन ॥ पञ्चपिण्डान्समुद्धृत्य स्नायाद्वासम्भवे पुनः ॥५७॥ मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ॥ अधस्तु तिसृभिः कार्यः पादौ षड्भिस्तथैव च ॥ ५८ ॥ मृत्तिका च समुद्दिष्टा सार्द्रामलकमात्रिका ॥ गोमयस्य प्रमाणन्तु तेनाङ्गं लेपयेत्पुनः ॥ ५९ ॥ लेपयित्वा तीरसंस्थं तल्लिङ्गैरेव मन्त्रतः ॥ प्रक्षाल्या चम्य विधिवत्ततः स्नायात्समाहितः ॥ ६० ॥ अभिमन्त्र्य जलं मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः ॥ भावपूतस्तदव्यक्तं धारयेद्विष्णुमव्ययम् ॥ ६१ ॥ आपो नारायणोद्भूतास्ता एवास्यायनं पुनः ॥ तस्मान्नारायणं देवं स्नानकाले स्मरेद्बुधः ॥ ६२ ॥ प्रेक्ष्य सोङ्कारमादित्यं त्रिर्निमज्जेज्जलाशये ॥ ६३ ॥ आँचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ॥ ६४ ॥ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥ त्वं यज्ञस्त्वं वषट्कार आपो ज्योतीरसोऽमृतम् ॥ ६५ ॥ द्रुपदां वा त्रिरभ्यस्येद्व्याहृतिं प्रणवान्विताम् ॥ सावित्रीं वा जपेद्विद्वान्तथा चैवाघमर्षणम् ॥ ६६ ॥ ततः सम्मार्ज्जनं कुर्यात् आपोहिष्ठा मयो भुवः ॥ इदमापः प्रवहतो व्याहृतिभिस्तथैव च ॥ ६७ ॥ तथाभि मन्त्र्य तत्तोयमापो हिष्ठादिभिस्त्रिकैः ॥ अन्तर्जलगतो मग्नो जपेत्त्रिरघमर्षणम् ॥ ६८ ॥ द्रुपदां वाथ सावित्रीं तद्विष्णोः परमं पदम् ॥

---

१ मन्त्रेण यदिति पा० । २ देवसारान्निवेदयेदिति पा० । ३ श्रावयेच्चेति पा० । ४ लेपयेत्ततः इति पा० । ५ तल्लिङ्गैर्नैवेति पा० । ६ ध्यायन्वै विष्णुमिति, धारयन्निति पा० । ७ पुनः पुनस्तथाचामेदिति पा० । ८ हिष्ठादिमन्त्रकैरिति पा० । ९ त्रिपथामिति, त्रिपदामिति पा० ।

आवर्त्तयेच्च प्रणवं देवं वा संस्मरेद्धरिम् ॥ ६९ ॥ द्रुपदादिव यो मन्त्रो यजुर्वेदे प्रतिष्ठितः ॥ अन्तर्जले त्रिरावर्त्य सर्वपापैः प्रमुच्यते ॥ ७० ॥ अपः पाणौ समादाय जप्त्वा वै मार्जने कृते ॥ विन्यस्य मूर्ध्नि तत्तोयं मुच्यते सर्वपातकैः ॥ ७१ ॥ यथाश्वमेधः क्रतुराट् सर्वपापापनोदनः ॥ तथाघमर्षणं प्रोक्तं सर्वपापापनोदनम् ॥ ७२ ॥ अथोपतिष्ठेदादित्यमूर्ध्वं पुष्पाक्षतान्वितम् ॥ प्रक्षिप्यालोकयेद्देव मूर्ध्वं यस्तमसः परः ॥ ७३ ॥ उदुत्यं चित्रमित्येते तच्चक्षुरिति मन्त्रतः ॥ हंसः शुचिषदन्तेन सावित्र्या सविशेषतः ॥ ७४ ॥ अन्यैश्च वैदिकैर्मन्त्रैः सौरैः पापप्रणाशनैः ॥ सावित्रीं वै जपेत्पश्चाज्जपयज्ञः स वै स्मृतः ॥ ७५ ॥ विविधानि पवित्राणि गुह्यविद्यास्तथैव च ॥ शतरुद्रीयं शिरसं सौरान्मन्त्रांश्च सर्वतः ॥ ७६ ॥ प्राक्कूलेषु समासीनः कुशेषु प्राङ्मुखः शुचिः ॥ तिष्ठंश्च वीक्षमाणोऽर्कं जप्यं कुर्यात् समाहितः ॥ ७७ ॥ स्फाटिकेन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ॥ कर्त्तव्या त्वक्षमाला स्यादुत्तरादुत्तमा स्मृता ॥ ७८ ॥ जपकाले न भाषेत व्यंगा न प्रक्षयेद्बुधः ॥ न कंपयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत् ॥ ७९ ॥ गुह्यका राक्षसा सिद्धा हरन्ति प्रसभं यतः ॥ एकान्तेषु शुचौ देशे तस्माज्जप्यं समाचरेत् ॥ ८० ॥ चण्डालाशौचपतितान् दृष्ट्वा चैव पुनर्जपेत् ॥ तैरेव भाषणं कृत्वा स्नात्वा चैव पुनर्जपेत् ॥ ८१ ॥ आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ॥ सौरान्मन्त्रान् शक्तितो वै पावमानीस्तु कामतः ॥ ८२ ॥ यदि स्यात् क्लिन्नवासा वै वारिमध्यं गतोऽपि वा ॥ अन्यथा तु शुचौ भूम्यां दर्भेषु सुसमाहितः ॥ ८३ ॥ प्रदक्षिणं समावृत्य नमस्कृत्य ततः क्षितौ ॥ आचम्य च यथाशास्त्रं भक्त्या स्वाध्यायमाचरेत् ॥ ८४ ॥ ततः सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥ आदावोङ्कारमुच्चार्य नामान्ते तर्पयामि वः ॥ ८५ ॥ देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ॥ तिलोदकैः पितॄन् भक्त्या स्वसूत्रोक्तविधानतः ॥ ८६ ॥ अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥ देवर्षींस्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄन् ॥ यज्ञोपवीती देवानां निवीती ऋषितर्पणे ॥८७॥

१ अथाघमर्षणं सूक्तमिति पा० । २ पुष्पाक्षताञ्जलिमिति, पुष्पान्वितं जलमिति पा० । ३ उद्वयं तमसस्परि इति पा० । ४ शतरुद्रीयमाथर्वशिरः सौरांश्च पा० । ५ तिष्ठंश्चोद्वीक्षमाणोऽर्कमिति पा० । ६ उत्कृष्टा चोत्तरोत्तरा इति पा० । ७ पितृगणान् क्रमादिति पा० । ८ स्वगृह्योक्त इति पा० ।

प्राचीनावीती पित्र्ये तु स्वेन तीर्थेन भावितः ॥ निष्पीड्य स्नानवस्त्रं तु समाचम्य च वाग्यतः ॥ स्वैर्मन्त्रैरर्च्चयेद्देवान् पुष्पैः पत्रैरथाम्बुभिः ॥ ८८ ॥ ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम् ॥ अन्यांश्चाभिमतान्देवान् भक्त्याचारो नरोत्तमः ॥ ८९ ॥ प्रदद्याद्वाथ पुष्पाणि सूक्तेन पौरुषेण तु ॥ आपो वै देवताः सर्वास्तेन सम्यक् समर्च्चिताः ॥ ९० ॥ ध्यात्वा प्रणवपूर्वं वै देवतानि समाहितः ॥ नमस्कारेण पुष्पाणि विन्यसेद्वै पृथक् पृथक् ॥ ९१ ॥ विष्णोराराधनात्पुण्यं विद्यते कर्म वैदिकम् ॥ तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥ ९२ ॥ तद्विष्णोरिति मन्त्रेण सूक्तेन सुसमाहितः ॥ न ताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥ × तदात्मा तन्मनाः शान्तस्तद्विष्णोरिति मन्त्रतः ॥ ९३ ॥ अथवा देवमीशानं भगवन्तं सनातनम् ॥ आराधयेन्महादेवं भावपूतो महेश्वरम् ॥ ९४ ॥ मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ॥ ईशानेनाथवा रुद्रैस्त्र्यम्बकेन समाहितः ॥ ९५ ॥ पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ॥ उक्त्वा नमः शिवायेति मन्त्रेणानेन वा जपेत् ॥ ९६ ॥ नमस्कुर्यान्महादेवं तं मृत्युञ्जयमीश्वरम् ॥ निवेदयीत स्वात्मानं यो ब्रह्माणमितीश्वरम् ॥ ९७ ॥ प्रदक्षिणं द्विजः कुर्यात्पञ्च वर्षाणि वै बुधः ॥ ध्यायीत देवमीशानं व्योममध्यगतं शिवम् ॥ ९८ ॥ अथावलोकयेदर्कं हंसः शुचिषदित्यृचा ॥ कुर्वन् पंच महायज्ञान् गृहं गत्वा समाहितः ॥ ९९ ॥ देवयज्ञं पितृयज्ञं भूतयज्ञं तथैव च ॥ मानुष्यं ब्रह्मयज्ञं च पंच यज्ञान् प्रचक्षते ॥१००॥ यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि ॥ कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत् ॥१॥ अग्नेः पश्चिमतो देशे भूतयज्ञान्त एव च ॥ कुशपुञ्जे समासीनः कुशपाणिः समाहितः ॥२॥ शालाग्नौ लौकिके वाथ जले भूम्यामथापि वा ॥ वैश्वदेवश्च कर्त्तव्यो देवयज्ञः स वै स्मृतः ॥ ३ ॥ यदि स्याल्लौकिके पक्षे ततोऽन्नं तत्र हूयते ॥ शालाग्नौ तत्पचेदन्नं विधिरेष सनातनः ॥ १०४ ॥

---

१ अन्यांश्चापि महादेवान् भक्त्या चाक्रोधनो नर इति पा० । २ सूक्तेन पौरुषेण–पुरुसूक्तेन “ सहस्रशीर्षा पुरुषः ” इत्यादिमन्त्रेण । ३ पुरुषेण तु इति पा० । × निवेदयित्वा चात्मानं विष्णावमिततेजसि इत्यधिकः लि० पु० । ४ ऋतं सत्यमितीश्वरमिति पा० । ५ ध्यायीत–ध्यायेत, आर्षः प्रयोगः । ६ ऋषियज्ञन्तथैव चेति पा० ।

देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत्॥भूतयज्ञः स विज्ञेयो भूतिदः स सर्वदेहिनाम्॥५॥श्वभ्यश्च श्वपचेभ्यश्च पतितादिभ्य एव च॥दद्या द्भूमौ बहिश्चान्नं पक्षिभ्यो द्विजसत्तमाः ॥६॥ सायञ्चान्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् ॥ भूतयज्ञस्त्वयं नित्यं सायम्प्रातर्यथाविधि ॥ ७ ॥ एकन्तु भोजयेद्विप्रं पितॄनुद्दिश्य सन्ततम् ॥ नित्यश्राद्धं तदुच्छिष्टं पितृयज्ञो गतिप्रदः ॥ ८ ॥ उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ॥ वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् ॥ ९ ॥ पूजयेदातिथिं नित्यं नमस्येदर्च्चयेद्विभुम् ॥ मनोवाक्कर्मभिः शान्तः स्वागतं स्वगृहं गतः ॥ १० ॥ अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥ हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ॥ ११ ॥ दद्यादतिथये नित्यं बुध्येत परमेश्वरम् ॥ भिक्षामाहुर्ग्रासमात्रामग्रं तत्स्याच्चतुर्गुणम् ॥ १२ ॥ पुष्कलं हन्तकारन्तु तच्चतुर्गुणमुच्यते ॥ गोदोहकालमात्रं वै प्रतीक्ष्यो ह्यतिथिः स्वयम् ॥ १३ ॥ अभ्यागतान्यथाशक्ति पूजयेदतिथीन्सदा ॥ भिक्षां वै भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥ दद्यादन्नं यथाशक्ति ह्यर्थिभ्यो लोभवर्ज्जितः ॥ १४ ॥ सर्वेषामप्यलाभे हि त्वन्नं गोभ्यो निवेदयेत् ॥ भुञ्जीत बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन् ॥ १५ ॥ अकृत्वा तु द्विजः पञ्च महायज्ञान् द्विजोत्तमाः ॥ भुञ्जीत चेत्स मूढात्मा तिर्यग्योनिं स गच्छति ॥ १६ ॥ वेदाभ्यासोऽन्वहं शक्त्या महायज्ञः क्रियाक्षया ॥ नाशयन्त्याशु पापानि देवताभ्यर्च्चनं तथा ॥ १७ ॥ यो मोहादथवाज्ञानादकृत्वा देवतार्च्चनम् ॥ भुंक्ते स याति नरकं सूकरं नात्र संशयः ॥ १८ ॥ तस्मात्सर्वप्रयत्नेन कृत्वा कर्माणि वै द्विजाः ॥ भुञ्जीत स्वजनैः सार्द्धं स याति परमां गतिम् ॥ १९ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु ब्राह्मणानां नित्यकर्तव्यकर्मनिरूपणं नाम अष्टादशोऽध्यायः ॥१८॥

ब्राह्मणानां नित्यकर्तव्यकर्मसु भोजनादिप्रकारः ॥ व्यास उवाच ॥ प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा ॥ आसीनः स्वासने शुद्धे भूम्यां पादौ निधाय च ॥१॥ आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्य दक्षिणामुखः ॥ श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुंक्ते उदङ्

१ बलिं त्वन्नं पक्षिभ्योऽथ द्विजोत्तमा इति पा० । २ तस्माच्चतुर्गुणमिति, तस्याश्चतुर्गुणमिति पा० । ३ बन्धुभिरिति पा० । ४ मोहादथ बालत्वादकृत्वा इति पा० । ५ शूकरेष्वभिजायते इति पा० ।

मुखः ॥ २॥ पश्चादार्द्रो भोजनं कुर्याद्भूमौ पात्रं निधाय च ॥ उपवासेन तत्तुल्यं मनुराह प्रजापतिः॥ ३ ॥ उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ । आचम्यार्द्राननोऽक्रोधः पश्चादार्द्रो भोजनं चरेत् ॥ ४ ॥ महाव्याहृतिभिस्त्वन्नं परिधायोदकेन तु ॥ अमृतोपस्तरणमसीत्यापो शानक्रियाश्चरेत् ॥ ५ ॥ स्वाहाप्रणवसंयुक्तां प्राणायाद्याहुतिं ततः ॥ अपानाय ततो भुक्त्वा व्यानाय तदनन्तरम् ॥ ६ ॥ उदानाय ततः कुर्यात्समानायेति पञ्चमम् ॥ विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः ॥ ७ ॥ शेषमन्नं यथाकामं भुञ्जीत व्यंजनैर्युतम् ॥ ध्यात्वा तन्म नसा देवानात्मानं वै प्रजापतिम् ॥८॥ अमृतापिधानमसीत्युपरिष्टादपः पिबेत् ॥ आचान्तः पुनराचामेदयंगौरिति मन्त्रतः॥९॥ द्रुपदां वा त्रिरावर्त्य सर्वपापप्रणाशनीम् ॥ प्राणानां ग्रन्थिरसीत्यालभेदुदरं ततः ॥ १० ॥ आचम्यांगुष्ठमात्रेण पादांगुष्ठेन दक्षिणे ॥ निस्रावये द्धस्तजलमूर्द्धहस्तः समाहितः ॥११॥ कृतानुमन्त्रणं कुर्यात्सन्ध्यायामिति मन्त्रतः ॥ अथाक्षरेण स्वात्मानं योजयेद्ब्राह्मणेति हि॥१२॥ सर्वेषामेव योगानामात्मयोगः स्मृतः परः ॥ योऽनेन विधिना कुर्यात्स कविर्ब्राह्मणः स्वयम् ॥ १३ ॥ यज्ञोपवीती भुञ्जीत स्रग्गन्धा लंकृतः शुचिः ॥ सायम्प्रातर्नान्तरा वै सन्ध्यायान्तु विशेषतः ॥ १४ ॥ नाद्यात्सूर्यग्रहात्पूर्वं प्रतिसायं शशिग्रहात् ॥ ग्रहकाले न चाश्नीयात्स्नात्वाश्नीयाद्विमुक्तये ॥ १५ ॥ मुक्ते शशिनि चाश्नीयाद्यदि न स्यान्महानिशा ॥ अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेऽहनि॥१६॥ नाश्नीयात्प्रेक्षमाणानामप्रदाय च दुर्मतिः ॥ यज्ञावशिष्टमद्याद्वा न क्रुद्धो नान्यमानसः ॥ १७ ॥ आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम् ॥ वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम् ॥ १८ ॥ यद्भुङ्क्ते वेष्टितशिरा यच्च भुङ्क्ते उदङ्मुखः ॥ सोपान त्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम् ॥ १९ ॥ नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ॥ न च भिन्नासनगतो न यानसं स्थितोऽपि वा ॥ २० ॥ न भिन्नभाजने चैव न भूम्यां न च पाणिषु ॥ नोच्छिष्टो घृतमादद्यात् न मूर्द्धानं स्पृशेदपि ॥२१॥

गुरुवाक्य

---

१ आपःपानेति पा० । २ यथोक्तश्च इति पा० । ३ देवमात्मानमिति पा० । ४ लभेत हृदयन्तत इति पा० । ५ अथ क्रमेणेति पा० । ६ स याति ब्रह्मणः क्षयमिति पा० । ७ न शयानः स्थितोऽपि वेति, न शय्यान्तः स्थितोऽपि वा इति पा० । ८ आदद्यादिति आर्षः प्रयोगः—आददीत इति साधु पा० ।

न ब्रह्म कीर्त्तयेच्चापि न निःशेषं न भार्यया ॥ नान्धकारे न सन्ध्यायां न च देवालयादिषु ॥२२॥ नैकवस्त्रस्तु भुञ्जीत न यानशयनास्थितः॥ न पादुकानिर्गतोऽथ न हसन्विलपन्नपि ॥ २३ ॥ भुक्त्वा वै सुखमास्थाय तदन्नं परिणामयेत् ॥ इतिहासपुराणाभ्यां वेदार्थानुपबृंहयेत् ॥ २४ ॥ ततः सन्ध्यामुपासीत पूर्वोक्तविधिना शुचिः ॥ आसीनश्च जपेद्देवीं गायत्रीं पश्चिमां प्रति ॥ २५ ॥ न तिष्ठति तु यः पूर्वामास्ते सन्ध्यां तु पश्चिमाम् ॥ स शूद्रेण समो लोके सर्वकर्मविवर्जितः ॥ २६ ॥ हुत्वाग्निं विधिवन्मन्त्रैर्भुक्त्वा यज्ञावशिष्टकम् ॥ सभृत्यबान्धवजनः स्वपेच्छुष्कपदो निशि ॥ २७ ॥ नोत्तराभिमुखः स्वप्यात्पश्चिमाभिमुखो न च ॥ न चाकाशे न नग्नो वा नाशुचिर्नासने क्वचित् ॥ २८ ॥ न शीर्णायान्तु खट्वायां शून्यागारे न चैव हि ॥ नानुवंशे न पालाशे शयने वा कदाचन ॥ २९ ॥ इत्येतदखिलेनोक्तमहन्यहनि वै मया ॥ ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥ ३० ॥ नास्तिक्यादथवालस्याद्ब्राह्मणो न करोति यः ॥ स याति नरकान्घोरान् काकयोनौ च जायते ॥ ३१ ॥ नान्यो विमुक्तये पन्था मुक्त्वाश्रमविधिं स्वकम् ॥ तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥ ३२ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु ब्राह्मणानां नित्यकर्तव्यकर्मसु भोजनादिप्रकारवर्णनं नामोनविंशोऽध्यायः ॥ १९ ॥ अथ श्राद्धकल्पः ॥ व्यास उवाच ॥ अथ श्राद्धममावास्यां प्राप्य कार्यं द्विजोत्तमैः ॥ पिण्डान्वाहार्यकं भक्त्या भुक्तिमुक्तिफलप्रदम् ॥ १ ॥ पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ॥ अपराह्णे द्विजातीनां प्रशस्तेनामिषेण च ॥ २ ॥ प्रतिपत्प्रभृति ह्यन्यास्तिथयः कृष्णपक्षके ॥ चतुर्दशीं वर्जयित्वा प्रशस्ता ह्युत्तरोत्तरम् ॥ ३ ॥ अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ॥ तिस्रस्तास्त्वष्टकाः पुण्या माघी पञ्चदशी तथा ॥ ४ ॥ त्रयोदशी मघायुक्ता वर्षासु च विशेषतः ॥ शस्यपाकश्राद्धकालाः नित्याः प्रोक्ता दिने दिने ॥ ५ ॥ नैमित्तिकन्तु कर्त्तव्यं ग्रहणे चन्द्रसूर्ययोः ॥ बान्धवानां विस्तरेण नारकी स्यादतोऽन्यथा ॥ ६ ॥ काम्यानि चैव श्राद्धानि शस्यन्ते

१ न चाकाशे इति पा० । २ तदर्थोऽनुपबृंहयेदिति पा० । ३ धर्मेति, सर्वकर्मबहिष्कृत इति पा० । ४ नापि वैणे इति पा० । ५ कृत्यतममिति पा० । ६ क्षीणे राजनि क्षययुक्ते चन्द्रे कृष्णपक्षे इत्यर्थः । ७ ह्यपरा यतः इति, ह्युत्तरोत्तरे इति पा० । ८ तिस्रश्चान्वहार्यकामिति पा० । ९ ब्राह्मणानाञ्चमरणे इति, बान्धवानाञ्च मरणे इति पा० ।

ग्रहणादिषु ॥ अयने विषुवे चैव व्यतीपाते त्वनन्तकम् ॥ ७ ॥ संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि ॥ नक्षत्रेषु च सर्वेषु कार्यं काले विशेषतः ॥ ८ ॥ स्वर्गञ्च लभते कृत्वा कृत्तिकासु द्विजोत्तमः ॥ अपत्यमथ रोहिण्यां सौम्ये तु ब्रह्मवर्चसम् ॥ ९ ॥ रौद्राणां कर्मणां सिद्धिमार्द्रायां शौर्यमेव च ॥ पुनर्वसौ तथा भूमिं श्रियं पुष्ये तथैव च ॥ १० ॥ सर्वान्कामांस्तथा सार्प्ये पित्र्ये सौभाग्यमेव च अर्यम्णे तु धनं विन्द्येत् फाल्गुन्यां पापनाशनम् ॥ ११ ॥ ज्ञातिश्रैष्ठ्यं तथा हस्ते चित्रायां च बहून् सुतान् ॥ वाणिज्यसिद्धिं स्वातौ तु विशाखासु सुवर्णकम् ॥ १२ ॥ मैत्रे बहूनि मित्राणि राज्यं शाक्रे तथैव च ॥ मूले कृषिं लभेज्ज्ञानं सिद्धिमाप्ये समुद्रतः ॥ १३ ॥ सर्वान् कामान्वैश्वदेवे श्रैष्ठ्यन्तु श्रवणे पुनः ॥ धनिष्ठायां तथा कामानम्बुपे च परम्बलम् ॥ १४ ॥ अजैकपादे कुप्यं स्यादाहिर्बुध्ने गृहं शुभम् ॥ रेवत्याम्बहवो गावो ह्यश्विन्यान्तुरगांस्तथा ॥ याम्ये तु जीवितन्तु स्याद्यः श्राद्धं सम्प्रयच्छति ॥ १५ ॥ आदित्यवारेऽन्वारोग्यं चन्द्रे सौभाग्यमेव च ॥ कुजे सर्वत्र विजयं सर्वान् कामान् बुधस्य तु ॥ १६ ॥ विद्यामभीष्टान्तु गुरौ धनं वै भार्गवे पुनः ॥ शनैश्चरे लभेदायुः प्रतिपत्सु सुतान् शुभान् ॥ १७ ॥ कन्यका वै द्वितीयायां तृतीयायान्तु विन्दति ॥ पशून् क्षुद्रांश्चतुर्थ्यां वै पञ्चम्यां शोभनान् सुतान् ॥ १८ ॥ षष्ठ्यां द्युतिं कृषिञ्चापि सप्तम्यां च धनं नरः ॥ अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ॥ १९ ॥ स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥ एकादश्यान्तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् ॥ २० ॥ द्वादश्यां जातरूपं च रजतं कुप्यमेव च ॥ ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यान्तु कुप्रजाः ॥ पञ्चदश्यां सर्वकामान् प्राप्नोति श्राद्धदः सदा ॥ २१ ॥ तस्माच्छ्राद्धं न कर्त्तव्यं चतुर्दश्यां द्विजातिभिः ॥ शस्त्रेण तु हतानान्तु श्राद्धं तत्र प्रकल्पयेत् ॥ २२ ॥ द्रव्यब्राह्मणसम्पत्तौ न कालनियमः कृतः ॥ तस्माद्भोगापवर्गार्थं श्राद्धं कुर्युं द्विजातयः ॥ २३ ॥ कर्मारम्भेषु सर्वेषु कुर्यादभ्युदये पुनः ॥ पुत्रजन्मादिषु श्राद्धं पार्वणं पर्वसु स्मृतम् ॥ २४ ॥ अहन्यहनि नित्यं स्यात्काम्यं नैमित्तिकं पुनः ॥ एकोद्दिष्टादि विज्ञेयं द्विधा श्राद्धन्तु पार्वणम् ॥ २५ ॥ एतत्पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम् ॥

१ रौद्राणां सिद्धिमार्द्रायां कर्मणां सौख्यमेव चेति, रोहिण्यां कर्मणां सिद्धिमिति पा० । २ श्रविष्ठायां तथा काम्यं वारुणे इति पा० । ३ वृद्धिश्राद्धन्तु इति पा० ।

यात्रायां षष्ठमाख्यातं तत्प्रयत्नेन पालयेत् ॥ २६ ॥ शुद्धये सप्तमं श्राद्धं ब्रह्मणा परिभाषितम् ॥ दैविकञ्चाष्टमं श्राद्धं यत्कृत्वा मुच्यते भयात् ॥ २७ ॥ सन्ध्यां रात्रौ न कर्त्तव्यं राहोरन्यत्र दर्शनात् ॥ देशानान्तु विशेषेण भवेत्पुण्यमनन्तकम् ॥ २८॥ गंगायामक्षयं श्राद्धं प्रयागेऽमरकण्टके ॥ गायन्ति पितरो गाथां नर्त्तयन्ति मनीषिणः ॥ २९ ॥ एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ॥ तेषान्तु समवेतानां यद्येकोऽपि गयां व्रजेत् ॥३०॥गयां प्राप्यानुषंगेण यदि श्राद्धं समाचरेत्॥तारिताः पितरस्तेन स याति परमाङ्गतिम् ॥ ३१॥ वाराहपर्वते चैव गयायां वै विशेषतः ॥ वाराणस्यां विशेषेण यत्र देवः स्वयं हरः ॥ ३२ ॥ गंगाद्वारे प्रभासे तु बिल्वके नीलपर्वते ॥ कुरुक्षेत्रे च कुब्जाम्रे भृगुतुंगे महालये ॥ ३३ ॥ केदारे फल्गुतीर्थे च नैमिषारण्य एव च॥सरस्वत्यां विशेषेण पुष्करे तु विशेषतः॥३४॥ नर्मदायां कुशावर्त्ते श्रीशैले भद्रकर्णके ॥ वेत्रवत्यां विशाखायां गोदावर्यां विशेषतः ॥ ३५ ॥ एवमादिषु चान्येषु तीर्थेषु पुलिनेषु च ॥ नदीनाञ्चैव तीरेषु तुष्यन्ति पितरः सदा ॥ ३६ ॥ व्रीहिभिश्च यवैर्माषैरद्भिर्मूलफलेन वा ॥ श्यामाकैश्च यवैः काशैर्नीवारैश्च प्रियङ्गुभिः ॥ गोधूमैश्च तिलैर्मुद्गैर्मासं प्रीणयते पितॄन् ॥ ३७ ॥ आम्रान् पाने रतानिक्षून् मृद्वीकांश्च सदाडिमान् ॥ विदांश्वांश्च कुरण्डांश्च श्राद्धकाले प्रदापयेत् ॥३८ ॥ लाजान्मधुयुतान् दद्यात्सक्तून् शर्करया सह॥ दद्याच्छ्राद्धे प्रयत्नेन शृंगाटककशेरुकान् ॥३९॥ द्वौ मासौ मत्स्यमांसने त्रीन्मासान् हरिणेन तु ॥ औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु॥ षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै ॥४०॥ अष्टावेणस्यमांसेन रौरवेण नवैव तु ॥ दशमांसांस्तु तृप्यन्ति वराहमहिषामिषैः ॥ ४१ ॥ शशकूर्मयोर्मांसेन मासानेकादशैव तु ॥ संवत्सरन्तु गव्येन पयसा पायसेन तु ॥ वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ४२ ॥ कालशाकं महाशल्कः खड्गलोहामिषं मधु ॥ आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥ ४३ ॥ क्रीत्वा लब्ध्वा स्वयं वाथ मृतानाहृत्य वै द्विजः ॥ दद्याच्छ्राद्धे प्रयत्नेन तदस्या

१ गाथाः कीर्त्तयन्ति इति पा० । २ फाल्गुनीतीर्थे इति पा० । ३ जैत्रवत्यां विशेषेण इति, विपाशायामिति पा० । ४ शुभैःशाकैरिति पा० । ५ विदारीश्च भरण्डां इति, विदार्यांश्च

क्षयमुच्यते ॥ ४४ ॥ पिप्पली रुचकश्चैव तथा चैव मसूरकम् ॥ कूष्माण्डालाबुवार्त्ताकभूतृणं सरसं तथा ॥४५॥ कुसुम्भपिण्डमूलं वै तन्दुलीयकमेव च ॥ राजमाषांस्तथा क्षीरं माहिषाजं विवर्ज्जयेत् ॥ ४६ ॥ आढक्यः कोविदाराश्च पालक्या मरिचास्तथा ॥ वर्जयेत्सततं यत्नेन श्राद्धकाले द्विजोत्तमः ॥ ४७ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु श्राद्धकल्पे विंशोऽध्यायः ॥ २० ॥ व्यास उवाच ॥ स्नात्वा यथोक्तं सन्तर्प्य पितॄंश्चन्द्रक्षये द्विजः ॥ पिण्डान्वाहार्यकं श्राद्धं कुर्यात्सौम्यमनाः शुचिः ॥ १ ॥ पूर्वमेव समीक्षेत[2] ब्राह्मणं वेदपारगम् ॥ तीर्थं तद्धव्यकव्यानां प्रदा[3]नानाञ्च स स्मृतः ॥ २॥ ये सोमपा विरजसो धर्मज्ञाः शान्तचेतसः ॥ व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः ॥ ३ ॥ पञ्चाग्निरप्यधीयानो यजुर्वेदविदेव च ॥ बह्वृचश्च त्रिसौपर्णस्त्रिमधुर्वा च योऽभवत् ॥ ४ ॥ त्रिणाचिकेतच्छन्दोगो ज्येष्ठसामग एव च ॥ अथर्वशिरसोऽध्येता रुद्राध्यायी विशेषतः ॥५॥ अग्निहोत्रपरो विद्वान्न्यायविच्च षडङ्गवित् ॥ मन्त्रब्राह्मणविच्चैव यश्च स्याद्धर्मपाठकः ॥ ६ ॥ ऋषिव्रती ऋषीकश्च शान्तचेता जितेन्द्रियः ॥ ब्रह्मदेयानुसन्तानो गर्भशुद्धः सहस्रदः ॥ ७ ॥ चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ॥ गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥ ८ ॥ विमुक्तः सर्वतो धीरो ब्रह्मभूतो द्विजोत्तमः ॥ महादेवार्च्चनरतो वैष्णवः पंक्तिपावनः ॥ ९ ॥ अहिंसानिरतो नित्यमप्रतिग्रहणस्तथा ॥ सत्री च दाननिरतो विज्ञेयः पंक्तिपावनः ॥ १० ॥ ( युवानः श्रोत्रियाः स्वस्था महायज्ञपरायणाः ॥ सावित्रीजापनिरता ब्राह्मणाः पंक्तिपावनाः ॥ कुलानां श्रुतवन्तश्च शीलवन्तस्तपस्विनः॥ अग्निचित् स्नातको विप्रो विज्ञेयाः पंक्तिपावनाः ) मातापित्रोर्हिते युक्तः प्रातःस्नायी तथा द्विजः ॥ अध्यात्मविन्मुनिर्दान्तो विज्ञेयः पंक्तिपावनः ॥ ११ ॥ ज्ञाननिष्ठो महायोगी वेदान्तार्थविचिन्तकः ॥ श्रद्धालुः श्राद्धनिरतो ब्राह्मणः पंक्तिपावनः ॥१२ ॥ वेदविद्यारतः स्नातो ब्रह्मचर्यपरः सदा ॥ अथर्वणो मुमुक्षुश्च ब्राह्मणः पंक्तिपावनः ॥१३॥ असमानप्रवरको ह्यसगोत्रस्तथैव च॥ सम्बन्धशून्यो विज्ञेयो ब्राह्मणः पंक्तिपावनः ॥ १४ ॥ भोजयेद्योगिनं शान्तं तत्त्वज्ञानरतं यतः ॥ अभावे नैष्ठिकं दान्तमुपकुर्वाणकं तथा ॥ १५॥ तदलाभे गृहस्थं तु

१ पिप्पलीं क्रमुकश्चैव इति पा० । २ परीक्षेत इति पा० । ३ प्रदाने चातिथिस्मृतः इति पा०। ४ तथा द्वादशवार्षिकः इति पा० । ५ सतृण इति पा० । ६ अलाभे इति पा० ।

मुमुक्षुं सङ्गवर्जितम् ॥ सर्वालाभे साधकं वा गृहस्थमपि भोजयेत् ॥ १६ ॥ प्रकृतेर्गुणतत्त्वज्ञो यस्याश्नाति यतिर्हविः ॥ फलं वेदान्त वित्तस्य सहस्रादतिरिच्यते ॥ १७ ॥ तस्माद्यत्नेन योगीन्द्रमीश्वरज्ञानतत्परम् ॥ भोजयेद्धव्यकव्येषु अलाभादितरान्द्विजान् ॥ १८ ॥ एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ॥ अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥ १९ ॥ मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ॥ दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥ २०॥ न श्राद्धे भोजयेन्मित्रं धनैः कार्योऽस्य संग्रहः ॥ पैशाची दक्षिणा शा हि नेहामुत्र फलप्रदा ॥२१॥ कामं श्राद्धेऽर्चयेन्मित्रं नाभिरूपमपि त्वरिम् ॥ द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥ २२ ॥ ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ॥ तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते ॥ २३ ॥ यथोषरे बीजमुप्त्वा न वप्ता लभते फलम् ॥ तथाऽनृचे हविर्दत्त्वा न दाँनाल्लभते फलम् ॥२४॥ यावतो ग्रसते पिण्डान्हव्यकव्येष्वमन्त्रवित् ॥ तावतो ग्रसते प्रेत्य दीप्ताँन् स्थूलाँस्त्वयोगुडान् ॥२५॥ अपि विद्याकुलैर्युक्ता हीनवृत्ता नराधमाः ॥ यत्रैते भुञ्जते हव्यं तद्भवेदासुरं द्विजाः ॥ २६ ॥ यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ॥ स वै दुर्ब्राह्मणो नार्हः श्राद्धादिषु कदाचन॥२७॥शूँद्रप्रेष्यो भृतो राज्ञो वृषलाँनाञ्च याजकः ॥ वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः ॥२८॥ दत्त्वानुयोगो द्रव्यार्थं पतितान्मनुरब्रवीत् ॥ वेदविक्रयिणो ह्येते श्राद्धादिषु विगर्हिताः ॥ २९ ॥ सुत विक्रयिणो ये तु परपूर्वासमुद्भवाः ॥ असामान्यान् यजन्ते ये पतितास्ते प्रकीर्तिताः ॥ ३० ॥ असंस्कृताध्यापका ये भृत्यर्थेऽध्यापयन्ति ये ॥ अधीयते तथा वेदान् पतितास्ते प्रकीर्त्तिताः ॥ ३१ ॥ वृद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रविदो जनाः ॥ कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥ ३२ ॥ यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः ॥न तस्य तद्भवेच्छ्राद्धं प्रेत्य चेह फलप्रदम् ॥३३॥ अनाश्रमी द्विजो यः स्यादाश्रमी वा निरर्थकः ॥ मिथ्याश्रमी च ते विप्रा विज्ञेयाः पंक्तिदूषकाः ॥ ३४ ॥ दुश्चर्मा कुनखी कुष्ठी श्वित्री च

१ वेदविदां तस्य इति पा० । २ दाता लभते इति पा० । ३ दीप्तानलानयोगुडानिति पा० । ४ शूद्रप्रेष्यो भृतो राज्ञ इति पा० । ५ वृषली ग्रामयाजकः इति पा० । ६ निबन्धकः इति पा० ।

श्यावदन्तकः ॥ विद्धयजननश्चैव स्तेनः क्लीबोऽथ नास्तिकः ॥ ३५ ॥ मद्यपो वृषलीसक्तो वीरहा दिधिषूपतिः ॥ अगारदाही कुण्डाशी सोमविक्रयिणो द्विजाः ॥ ३६ ॥ परिवेत्ता च हिंस्रश्च परिवित्तिर्निराकृतिः ॥ पौनर्भवः कुसीदश्च तथा नक्षत्रदर्शकः ॥ ३७ ॥ गीतवा दित्रशीलश्च व्याधितः काण एव च ॥ हीनाङ्गश्चातिरिक्ताङ्गो ह्यवकीर्णी तथैव च ॥३८॥ अन्नदूषी कुण्डगोलौ अभिशस्तोऽथ देवलः ॥ मित्रध्रुक् पिशुनश्चैव नित्यं भार्यानुवर्त्तितः ॥ ३९ ॥ मातापित्रोर्गुरोस्त्यागी दारत्यागी तथैव च ॥ गोत्रस्पृक् भ्रष्टशौचश्च काण्डस्पृष्ट स्तथैव च ॥ ४० ॥ अनपत्यः कूटसाक्षी याचको रङ्गजीवकः ॥ समुद्रयायी कृतहा तथा समयभेदकः ॥ ४१ ॥ वेदनिन्दारतश्चैव देवनिन्दापरस्तथा ॥ द्विजनिन्दारतश्चैव वर्ज्याः श्राद्धादिकर्मणि ॥ ४२ ॥ कृतघ्नः पिशुनः क्रूरो नास्तिको वेदनिन्दकः ॥ मित्रध्रुक् कुहकश्चैव विशेषात्पंक्तिदूषकः ॥ ४३ ॥ सर्वे पुनरभोज्यान्ना न दानार्हाः स्वकर्मसु ॥ ब्रह्महा चाभिशस्ताश्च वर्जनीयाः प्रयत्नतः॥४४॥ शूद्रान्नरसपुष्टांगः सन्ध्योपासनवर्जितः ॥ महायज्ञविहीनश्च ब्राह्मणः पंक्तिदूषकः ॥ ४५ ॥ अधीतनाशनश्चैव स्नानदानविवर्जितः ॥ तामसो राजसश्चैव ब्राह्मणः पंक्तिदूषकः ॥ ४६ ॥ बहुनात्र किमुक्तेन विहितान् ये न कुर्वते ॥ निन्दितानाचरन्त्येते वर्ज्याः श्राद्धे प्रयत्नतः ॥ ४७ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु श्राद्धकल्पे एकविंशोऽध्यायः ॥ २१ ॥ व्यास उवाच ॥ गोमयेनोदकैर्भूमिं शोधयित्वा समाहितः ॥ सन्निमन्त्र्य द्विजान् सर्वान् साधुभिः सन्निमन्त्रयेत् ॥ १ ॥ श्वो भविष्यति मे श्राद्धं पूर्वेद्युरभिपूज्य च ॥ असम्भवे परेद्युर्वा यथोक्तैर्लक्षणैर्युतान् ॥ २ ॥ तस्य ते पितरः श्रुत्वा श्राद्धकालमुपस्थितम् ॥ अन्योऽन्यं मनसा ध्यात्वा संपतन्ति मनोजवाः ॥ ३ ॥ तैर्ब्राह्मणैः सहाश्नन्ति पितरो ह्यन्तरिक्षगाः ॥ वायुभूतास्तु तिष्ठन्ति भुक्त्वा यान्ति परां गतिम् ॥ ४ ॥ आमन्त्रिताश्च ते विप्राः श्राद्धकाल उपस्थिते ॥ वसेयुर्नियताः सर्वे ब्रह्मचर्यपरायणाः ॥५ ॥ अक्रोधनोऽत्वरोऽमत्तः सत्यवादी समाहितः ॥ भारं

१ गीतवादित्रनिरत इति पा०। २ कान्तादूषीति पा० । ३ कुशाक्षी चक्रबन्दी च याजको रङ्गजीवक इति पा०। ४ तदा नार्हाश्च कर्मसु इति पा०। ५ ब्रह्मभावान्निरस्ताश्चेति पा०। ६ स्नानहोमेति पा० ।

मैथुनमध्वानं श्राद्धकृद्वर्जयेद्ध्रुवम् ॥ ६ ॥ आमन्त्रितो ब्राह्मणो वै योऽन्यस्मै कुरुते क्षणम् ॥ स याति नरकं घोरं सूकरत्वं प्रयाति च ॥ ७ ॥ आमन्त्रयित्वा यो मोहादन्यं चामन्त्रयेद्द्विजः ॥ स तस्मादधिकः पापी विष्ठाकीटोऽभिजायते ॥ ८ ॥ श्राद्धे निमन्त्रितो विप्रो मैथुनं योऽधिगच्छति ॥ ब्रह्महत्यामवाप्नोति तिर्यग्योनौ विधीयते ॥ ९ ॥ निमन्त्रितस्तु यो विप्रो ह्यध्वानं याति दुर्मतिः ॥ भवन्ति पितरस्तस्य तन्मासं पापभोजनाः ॥ १० ॥ निमन्त्रितस्तु यः श्राद्धे कुर्याद्वै कलहं द्विजः ॥ भवन्ति पितरस्तस्य तन्मासं मलभोजनाः ॥ ११ ॥ तस्मान्निमन्त्रितः श्राद्धे नियतात्मा भवेद्द्विजः ॥ अक्रोधनः शौचपरः कर्त्ता चैव जितेन्द्रियः ॥ १२ ॥ श्वोभूते दक्षिणां गत्वा दिशं दर्भान्समाहितः ॥ समूलानाहरेद्वारि दक्षिणाग्रान् सुनिर्मलान् ॥ १३ ॥ दक्षिणाप्रवणं स्निग्धं विभक्तं शुभलक्षणम् ॥ शुचिं देशं विविक्तञ्च गोमयेनोपलेपयेत् ॥ १४ ॥ नदीतीरेषु तीर्थेषु स्वभूमौ चैव नाम्बुषु ॥ विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥ १५ ॥ पारक्ये भूमिभागे तु पितॄणां नैव निर्वपेत् ॥ स्वामिभिस्तद्विहन्येत मोहाद्यत् क्रियते नरैः ॥ १६ ॥ अटव्यः पर्वताः पुण्यास्तीर्थान्यायतनानि च ॥ सर्वाण्यस्वामिकान्याहुर्न ह्येतेषु परिग्रहः ॥ १७ ॥ तिलान्प्रविकिरेत्तत्र सर्वतो बंधयेदजम् ॥ असुरोपहतं श्राद्धं तिलैः शुध्यत्यजेन तु ॥ १८ ॥ ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनमध्यगम् ॥ चोष्यं पेयं संसृतं च यथाशक्ति प्रकल्पयेत् ॥ १९ ॥ ततो निवृत्ते मध्याह्ने लुप्तरोमनखान्द्विजान् ॥ अवगम्य यथामार्गं प्रयच्छेद्दन्तधावनम् ॥ २० ॥ "आसध्वमिति संजल्पन्नासीरन्ते पृथक् पृथक्" तैलमभ्यञ्जनं स्नानं स्नानीयञ्च पृथग्विधम् ॥ पात्रैरौदुम्बरैर्दद्याद्वैश्वदेवत्यपूर्वकम् ॥२१॥ ततः स्नानान्निवृत्तेभ्यः प्रत्युत्थाय कृताञ्जलिः॥ पाद्यमाचमनीयं च संप्रयच्छेद्यथाक्रमम्॥२२॥ये चात्र विश्वदेवानां द्विजाः पूर्वं निमन्त्रिताः॥ प्राङ्मुखान्यासनान्येषां त्रिदर्भोपहतानि च ॥ २३ ॥ दक्षिणामुखमुक्तानि पितॄणामासनानि च ॥ दक्षिणाग्रेषु दर्भेषु प्रोक्षितानि तिलोदकैः ॥ २४ ॥ तेषूपवेशयेदेतानासनं संस्पृ

१ जपमिति पा० । २ परश्चामन्त्रयेद्द्विजमिति पा० । ३ ह्यध्वानमधिगच्छति इति पा० । ४ तिलांस्तु विकिरेत्तत्र सर्वतोप्येव मार्जनम् इति पा० । ५ बन्धयेदजामिति पा० । ६ नानाव्यंजनसंयुतमिति, व्यञ्जनमच्युतमिति, व्यञ्जनव्याश्रितानीति पा० । ७ समृद्धश्चेति पा० । ८ अभिगम्य इति पा० ।

शन्नपि ॥ आसध्वमिति सञ्जल्पन्नासीरंस्ते पृथक् पृथक् ॥ २५ ॥ द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रयश्चोदङ्मुखास्तथा ॥ एकैकं[1] तत्र देवन्तु पितृमातामहेष्वपि॥२६॥सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम् ॥ पंचैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥ २७॥ अपि वा भोजयेदेकं ब्राह्मणं वेदपारगम्॥श्रुतशीलादिसम्पन्नमलक्षणविवर्जितम्॥२८॥उद्धृत्य पात्रे चान्नं तत्सर्वस्मात्प्रकृतात्ततः॥देवतायतने वासौ निवेद्यान्यत्प्रवर्त्तयेत्॥२९॥प्राश्येदन्नं तदग्नौ तु दद्याद्वै ब्रह्मचारिणे ॥ तस्मादेकमपि श्रेष्ठं विद्वांसं भोजयेद्द्विजम्॥३०॥ भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः ॥ उपविष्टस्तु यः श्राद्धे कामं तमपि भोजयेत् ॥३१॥ अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रशस्यते ॥ तस्मात् प्रयत्नाच्छ्राद्धेषु पूज्या ह्यतिथयो द्विजैः ॥ ३२ ॥ आतिथ्यरहिते श्राद्धे भुञ्जते ये द्विजातयः ॥ काकयोनिं व्रजन्त्येते दाता चैव न संशयः ॥ ३३ ॥ हीनाङ्गः पतितः कुष्ठी व्रणी[2]युक्तस्तु नास्तिकः ॥ कुक्कुटः शूकरश्वानौ वर्ज्याः श्राद्धेषु दूरतः ॥ ३४ ॥ बीभत्सुमशुचिं नग्नं मत्तं धूर्तं रजस्वलाम् ॥ नीलकाषायवसनपाषण्डांश्च विवर्जयेत् ॥ ३५ ॥ यत्तत्र क्रियते कर्म पैतृकं ब्राह्मणान्प्रति ॥ तत्सर्वमेव कर्त्तव्यं वैश्वदैवत्यपूर्वकम् ॥ ३६ ॥ यथोपविष्टान् सर्वांस्तानलङ्कुर्याद्विभूषणैः[3] ॥ स्रग्दामभिः शिरोवेष्टैर्धूपवासोऽनुलेपनैः ॥ ३७ ॥ ततस्त्वावाहयेद्देवान् ब्राह्मणानामनुज्ञया ॥ उदङ्मुखो यथान्यायं विश्वेदेवास इत्यचा ॥ ३८ ॥ द्वे पवित्रे गृहीत्वास्य भाजने क्षालिते पुनः ॥ शन्नो देवी जलं क्षिप्त्वा यवोऽसीति यवांस्तथा ॥ ३९ ॥ या दिव्या इति मन्त्रेण हस्ते त्वर्घं विनिक्षिपेत् ॥ प्रदद्याद्गन्धमाल्यानि धूपादीनि च शक्तितः ॥ ४० ॥ अपसव्यं ततः कृत्वा पितॄणां दक्षिणामुखः ॥ आवाहनं ततः कुर्यादुशन्तस्त्वेत्यृचा बुधः ॥ ४१ ॥ आवाह्य तदनुज्ञातो जपेदायन्तुनस्ततः ॥ शन्नो देव्योदकं पात्रे तिलोऽसीति तिलांस्तथा ॥ ४२ ॥ क्षिप्त्वा चार्घं यथापूर्वं दत्त्वा हस्तेषु वा पुनः ॥ संस्रवांश्च ततः सर्वान् पात्रे कुर्यात्समाहितः ॥ ४३ ॥ पितृभ्यः स्थानमेतच्च न्युब्जपात्रं निधापयेत् ॥ अग्नौ करिष्य

१ एकैकं वा भवेत्तत्र देवमातामहेष्वपीति, एकैकं भावयेत्तत्र एवं मातामहेष्वपीति पा० । २ व्रणी पुक्कशनास्तिकौ इति पा० । ३ संस्कुर्याद्भूषणैरपीति पा० ।

न्नादाय पृच्छेदन्नं घृतप्लुतम् ॥ कुरुष्वेत्यभ्यनुज्ञातो जुहुयादुपवीतवित्[1] ॥ ४४ ॥ यज्ञोपवीतिना होमः कर्त्तव्यः कुशपाणिना ॥ प्राचीनावीतिना पित्र्यं वैश्वदेवं तु होमवित् ॥ ४५ ॥ दक्षिणं पातयेज्जानुं देवान् परिचरन्सदा ॥ पितॄणां परिचर्यासु पातयेदितरं तथा ॥ ४६ ॥ सोमाय वै पितृमते स्वधा नम इति ब्रुवन् ॥ अग्नये कव्यवाहनाय स्वधेति जुहुयात्ततः ॥ ४७ ॥ अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ॥ महादेवान्तिके वाथ गोष्ठे वा सुसमाहितः ॥ ४८ ॥ ततस्तैरभ्यनुज्ञातो गत्वा वै दक्षिणां दिशम् ॥ गोमयेनोपलि[2]प्याथ स्थानं कुर्यात्ससैकतम् ॥ ४९ ॥ मण्डलं चतुरस्रं वा दक्षिणाप्रवणं शुभम् ॥ त्रिरुल्लिखेत्तस्य मध्यं दर्भेणैकेन चैव हि ॥५० ॥ ततः संस्तीर्य तत्स्थाने दर्भान्वै दक्षिणाग्रगान् ॥ त्रीन् पिण्डान्निर्वपेत् तत्र हविःशेषात्समाहितः ॥ ५१ ॥ उप्य[3] पिण्डांस्तु तद्धस्तं निमृज्याल्लेपभोजनान् ॥ तेषु दर्भेष्वथाचम्य त्रिराचम्य शनैरसून् ॥ तदन्नं तु नमस्कुर्यात्पितॄनेव च मन्त्रवित् ॥ ५२ ॥ उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ॥ अवजिघ्रेच्च तान् पिण्डान् यथा[4] न्युप्त्वा समाहितः ॥ ५३ ॥ अथ पिण्डाच्च शिष्टान्नं विधिवद्भोजयेद्द्विजान् ॥ मांसान् पूपांश्च विविधाञ्छ्राद्धकल्पांस्तु[5] शोभनान् ॥ ५४ ॥ ( [6]ततोऽन्नमुत्सृजेद्भुक्तेष्वग्रतो विकिरन्भुवि ॥ पृष्ट्वा तदन्नमित्येव तृप्तानाचामयेत्ततः ॥ ५५ ॥ आचान्ताननुजानीयादभितो रम्यतामिति ॥ स्वधास्त्विति च ते ब्रूयुर्ब्राह्मणास्तदनन्तरम् ॥ ५६ ॥ ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ॥ यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजैः ॥५७॥ पित्रे स्वदितमित्येव वाच्यं गोष्ठेषु सुश्रितम् ॥ सम्पन्नमित्यभ्युदये देवे सेवितमित्यपि ॥ ५८ ॥ विसृज्य ब्राह्मणान् तान्वै पितृपूर्वन्तु वाग्यतः ॥ दक्षिणान्दिशमाकांक्षन्याचेतेमान्वरान् पितॄन् ॥ ५९ ॥ दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ श्रद्धा च नो मा विगमद्बहुदेयञ्च नोऽस्त्विति ॥ ६० ॥ पिण्डांस्तु गोऽजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥ मध्यमन्तु ततः पिण्डमद्यात्पत्नी सुतार्थिनी ॥ ६१ ॥ प्रक्षाल्य हस्तावाचम्य ज्ञातिं शेषेण

१ जुहूयादुपवीतवानिति पा॰ । २ उपलिप्योर्वीमिति पा॰ । ३ लुप्तपिण्डांस्तु तं हस्तं विसृज्य लेपभागिनामिति पा॰ । ४ षड्ऋतूंश्च इति पा॰ । ५ दद्यात्कुशरपायसमिति पा॰ ।
६ ( . ) चिन्हमध्यस्थश्लोकाः काचिद्भिन्नतया दृश्यन्ते ।

तोषयेत् ॥ ) सूपंशाकफलानीक्षून् पयो दधि घृतं मधु ॥ ६२ ॥ अन्नञ्चैव यथाकामं विविधं भोज्यपेयकम् ॥ यद्यदिष्टं द्विजेन्द्राणां तत्सर्वं विनिवेदयेत् ॥ ६३ ॥ धान्यांस्तिलांश्च विविधान् शर्करा विविधास्तथा ॥ उष्णमन्नं द्विजातिभ्यो दातव्यं श्रेय इच्छता ॥ अन्यत्र फलमूलेभ्यो पानकेभ्यस्तथैव च ॥ ६४ ॥ न भूमौ पातयेज्जानुं न कुप्येन्नानृतं वदेत् ॥ न पादेन स्पृशेदन्नं न चैवमवधूनयेत् ॥ ६५ ॥ क्रोधेनैव च यद्भुक्तं यद्भुक्तं त्वयथाविधि ॥ यातुधाना विलुम्पन्ति जल्पता चोपपादितम् ॥ ६६ ॥ स्विन्नगात्रो न तिष्ठेत सन्निधौ च द्विजोत्तमाः ॥ न च पश्येत काकादीन् पक्षिणः प्रतिलोमगान् ॥ तद्रूपाः पितरस्तत्र समायान्ति बुभुक्षवः ॥ ६७ ॥ न दद्यात्तत्र हस्तेन प्रत्यक्षं लवणं तथा ॥ न चायसेन पात्रेण न चैवाश्रद्धया पुनः ॥ ६८ ॥ काञ्चनेन तु पात्रेण राजतोदुम्बरेण वा ॥ दत्तमक्षयतां याति खड्गेन च विशेषतः ॥६९॥ पात्रे तु मृण्मये यो वै श्राद्धे वै भोजयेद्द्विजान् ॥ स याति नरकं घोरं भोक्ता चैव पुरोधसः ॥७०॥ न पङ्क्त्यां विषमं दद्यान्न याचेत न दापयेत्॥याचिता दापिता दाता नरकान्याति भीषणान्॥७१॥भुञ्जीरन्नग्रतः श्रेष्ठं न ब्रूयुः प्राकृतान् गुणान् ॥ तावद्धि पितरोऽश्नन्ति यावन्नोक्ता हविर्गुणाः ॥ ७२ ॥ नाग्रासनोपविष्टस्तु भुंजीत प्रथमं द्विजः ॥ बहूनां पश्यतां सोऽन्यः पङ्क्त्या हरति किल्बिषम् ॥ ७३ ॥ न किंचिद्वर्जयेच्छ्राद्धे नियुक्तस्तु द्विजोत्तमः ॥ न मांसस्य निषेधेन न चान्यस्यान्नमीक्षयेत् ॥ ७४ ॥ यो नाश्नाति द्विजो मांसं नियुक्तः पितृकर्मणि ॥ स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥ ७५ ॥ स्वाध्यायाञ्छ्रावयेदेषां धर्मशास्त्राणि चैव हि ॥ इतिहासपुराणानि श्राद्धकल्पांश्च शोभनान् ॥ ७६ ॥ ततोऽन्नमुत्सृजेद्भोक्ता साग्रतो विकिरन्भुवि ॥ पृष्ट्वा स्वदितमित्येवं तृप्तानाचामयेत्ततः ॥७७॥ आचान्ताननुजानीयादभितो रम्यतामिति ॥ स्वधास्त्वित्वति च तं ब्रूयुर्ब्राह्मणास्तदनन्तरम् ॥ ७८॥ ततो भुक्तवतां तेषामन्नशेषं निवेदयेत् ॥ यथा ब्रूयुस्तथा कुर्यादनुज्ञातस्तु तैर्द्विजैः ॥ ७९ ॥ पित्र्ये स्वदित इत्येव वाक्यं गोष्ठेषु सूत्रि

१ पुष्पशाकफलानिक्षूनिति पा० । २.प्रतिषेधयेदिति पा० । ३ च्युताः क्षराः इति पा० । ४ श्राद्धे भोजयते पितॄनिति पा० । ५ दारुणानिति पा० । ६ भुञ्जीरन्वाग्यताः शिष्याः इति पा० ।

तम् ॥ संपन्नामित्यभ्युदये दैवे रोचत इत्यपि ॥८०॥ विसृज्य ब्राह्मणान् स्तुत्वा पितृपूर्वं तु वाग्यतः ॥ दक्षिणां दिशमाकांक्षन्याचेतेमान्
वरान्पितॄन् ॥ ८१ ॥ दातारो नोभिवर्द्धंतां वेदाः संततिरेव च ॥ श्रद्धा च नो माव्यगमद्बहुदेयं च नोस्त्विति ॥ ८२ ॥ पिंडांस्तु गोज
विप्रेभ्यो दद्यादग्नौ जलेपि वा ॥ मध्यमं तु ततः पिंडमद्यात्पत्नी सुतार्थिनी ॥८३॥ प्रक्षाल्य हस्तावाचम्य ज्ञातीन् शेषेण भोजयेत् ॥
ज्ञातिष्वपि चतुर्थेषु स्वान् भृत्यान् भोजयेत्ततः ॥ ८४ ॥ पश्चात्स्वयञ्च पत्नीभिः शेषमन्नं समाचरेत्[1] ॥ नोद्वासयेत तदुच्छिष्टं यावन्ना
स्तङ्गतो रविः ॥ ८५ ॥ ब्रह्मचारी भवेतान्तु दम्पती रजनीन्तु ताम् ॥ दत्त्वा श्राद्धं तथा भुक्त्वा सेवते यस्तु मैथुनम् ॥ ८६ ॥ महा
रौरवमासाद्य कीटयोनिं व्रजेत्पुनः ॥ ८७ ॥ शुचिरक्रोधनः शान्तः सत्यवादी समाहितः ॥ स्वाध्यायञ्च तथाध्वानं कर्त्ता भोक्ता च
वर्जयेत् ॥ ८८ ॥ श्राद्धं भुक्त्वा परश्राद्धे भुञ्जते ये द्विजातयः ॥ महापातकिभिस्तुल्या यान्ति ते नरकान् बहून् ॥ ८९ ॥ एष वो
विहितः सम्यक् श्राद्धकल्पः समासतः ॥ अनेन वर्द्धयेन्नित्यं ब्राह्मणो व्यसनान्वितः ॥ ९० ॥ आमश्राद्धं यदा कुर्याद्विधिज्ञः श्रद्धया
न्वितः ॥ तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत्[2] ॥ ९१ ॥ योऽनेन विधिना श्राद्धं कुर्याद्वै शान्तमानसः[4] ॥ व्यपेतकल्मषो नित्यं
यतीनां वर्त्तयेत्पदम्[5] ॥ ९२ ॥ तस्मात्सर्वप्रयत्नेन श्राद्धं कुर्याद्द्विजोत्तमः ॥ आराधितो भवेदीशस्तेन सम्यक् सनातनः[3] ॥ ९३ ॥ अपि
मूलैः फलैर्वापि प्रकुर्यान्निर्धनो द्विजः ॥ तिलोदकैस्तर्पयित्वा पितॄन् स्नात्वा समाहितः ॥ ९४ ॥ न जीवत्पितृको दद्याद्धोमान्तं वा
विधीयते ॥ येषां वापि पिता दद्यात्तेषाञ्चैके प्रचक्षते ॥ ९५ ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ यो यस्य प्रीयते तस्मै देयं
नान्यस्य तेन तु ॥ ९६ ॥ भोजयेद्वापि जीवन्तं यथाकामन्तु भक्तितः ॥ न जीवन्तमतिक्रम्य ददाति प्रयतः शुचिः ॥ ९७ ॥ द्व्यामुष्या[6]
यणिको दद्याद्बीजिक्षेत्रिकयोः समम् ॥ अधिकारी भवेत्सोऽथ नियोगोत्पादितो यदि ॥ ९८ ॥ अनियुक्तात्सुतो[7] यश्च शुक्रतो जायते

१ समाहरेदिति पा० । २ निखनेच्च इति पा० । ३ सनातनः इति पा० । ४ यतमानसः इति पा० । ५ योगिनामृच्छते पदमिति पा० । ६ भ्रात्रन्तरेण दत्तकत्वेन गृहीतोऽपि स्वपितुर्दायादादिभाक् पुत्रो द्व्यामुष्यायणिकः । अत्र तु क्षेत्रजः । बीजी जन्मदाता, क्षेत्रिकः यस्य क्षेत्रे उत्पन्नः । ७ ऋक्थादर्द्धं समाद्द्यादिति पा० ।

त्विह ॥ प्रदद्याद्बीजिने पिण्डं क्षेत्रिणे तु ततोऽन्यथा ॥ ९९ ॥ द्वौ पिण्डौ निर्वपेत्ताभ्यां क्षेत्रिणे बीजिने तथा ॥ कीर्त्तयेदथ चैवास्मिन्[1] बीजिनं क्षेत्रिगं ततः ॥ मृताहनि तु कर्त्तव्यमेकोद्दिष्टं विधानतः ॥ १०० ॥ अशौचे स्वे परिक्षीणे काम्यं वै कामतः पुनः ॥ पूर्वाह्णे चैव कर्त्तव्यं श्राद्धमभ्युदयार्थिना ॥ १०१ ॥ देववत्सर्वमेव स्यान्नैव कार्यास्तिलैः क्रियाः ॥ दर्भाश्च ऋजवः कार्या युग्मान्वै भोजयेद्द्विजान् ॥ १०२ ॥ नान्दीमुखास्तु पितरः प्रीयन्तामिति वाचयेत् ॥ मातृश्राद्धन्तु पूर्वं स्यात्पितॄणां[2] तदनन्तरम् ॥ १०३ ॥ ततो मातामहानान्तु वृद्धौ श्राद्धत्रयं स्मृतम् ॥ दैवपूर्वं प्रदद्याद्वै न कुर्यादप्रदक्षिणम् ॥ १०४ ॥ प्राङ्मुखो निर्वपेद्विद्वानुपवीती समाहितः ॥ पूर्वं तु मातरः पूज्या भक्त्या वै सगणेश्वराः ॥ १०५ ॥ स्थण्डिलेषु विचित्रेषु प्रतिमासु द्विजातिषु ॥ पुष्पैर्धूपैश्च नैवेद्यैर्भूषणैरपि[3] पूजयेत् ॥ १०६ ॥ पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं द्विजः ॥ अकृत्वा मातृयागन्तु यः श्राद्धन्तु निवेशयेत् ॥ तस्य क्रोधसमाविष्टा हिंसां गच्छन्ति[4] मातरः ॥ १०७ ॥ इतिश्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु श्राद्धकल्पो नाम द्वाविंशोऽध्यायः ॥ २२ ॥ अशौचकल्पः ॥

व्यास उवाच ॥ दशाहं प्राहुराशौचं सपिण्डेषु विधीयते ॥ मृतेषु वापि जातेषु ब्राह्मणानां द्विजोत्तमाः ॥ १ ॥ नित्यानि चैव कर्माणि काम्यानि च विशेषतः ॥ न कुर्याद्विहितं किञ्चित्स्वाध्यायं मनसापि च ॥ २ ॥ शुचीनक्रोधनान्[5] भूम्यान् शालाग्नौ भावयेद्द्विजान् ॥ शुष्कान्नेन फलैर्वापि वैतानान् जुहुयात्तथा ॥ ३ ॥ न स्पृशेयुरिमानन्ये न च तेभ्यः समाहरेत् ॥ चतुर्थे पञ्चमे वाह्नि संस्पर्शः[6] कथितो बुधैः ॥ ४ ॥ सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति ॥ सूतकं सूतिकां चैव वर्जयित्वा नृणां पुनः ॥ ५ ॥ अधीयानस्तथा वेदान् वेदविच्च पिता भवेत् ॥ संस्पृश्याः सर्व एवैते स्नानान्माता दशाहतः ॥ ६ ॥ दशाहं निर्गुणे प्रोक्तमाशौचं वातिनिर्गुणे ॥ एकद्वित्रिगुणैर्युक्तश्चतुस्त्र्येकदिनैः शुचिः ॥ ७ ॥ दशाहादपरं सम्यगधीयीत जुहोति च ॥ चतुर्थे तस्य संस्पर्शं मनुः प्राह प्रजापतिः ॥ ८ ॥ क्रियाहीनस्य मूर्खस्य महारोगिण एव च ॥ यथेष्टाचरणस्येह मरणान्तमशौचकम् ॥ ९ ॥ त्रिरात्रं दशरात्रं वा ब्राह्मणानामशौचकम् ॥ प्राक्संवत्सरात्

१ कीर्त्तयेदथ वैकस्मिन्निति पा० । २ पिण्डानिति पा० । ३ गन्धाद्यैर्भूषणैरपीति पा० । ४ इच्छन्तीति पा० । ५ शुचीनमिथ्यानान्यानिति पा० । ६ वाह्निसंस्पर्शः इति पा०

त्रिरात्रं दशरात्रं ततः परम् ॥ १० ॥ ऊनद्विवार्षिके प्रेते मातापित्रोस्तदिष्यते ॥ (त्रिरात्रेण शुचिस्त्वन्यो यदि ह्यत्यन्तनिर्गुणः ॥ अदन्तजातमरणे पित्रोरेकाहमिष्यत्ते ॥ ) जातदन्ते त्रिरात्रं स्याद्यदि स्यातान्तु निर्गुणौ ॥ ११ ॥ आदन्तजननात्सद्य आचूडादेकरात्रकम् ॥ त्रिरात्रमौपनयनात्[१]सपिण्डानामशौचकम् ॥ १२ ॥ जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः ॥ मातुश्च सूतकं तत्स्यात्पिता स्यात्स्पृश्य एव च ॥ १३ ॥ सदाशौचं सपिण्डानां कर्त्तव्यं सोदरस्य तु ॥ ऊर्द्ध्वं दशाहादेकाहं सोदरो यदि निर्गुणः ॥ १४ ॥ ततोर्द्ध्वं दन्तजननात्सपिण्डानामशौचकम् ॥ एकरात्रं[२] निर्गुणानां चौडादूर्द्ध्वन्त्रिरात्रकम् ॥ १५ ॥ अदन्तजातमरणं सम्भवेद्यदि सत्तमाः ॥ एकरात्रं सपिण्डानां यदि तेऽत्यन्तनिर्गुणाः ॥ १६ ॥ व्रतादेशात्सपिण्डानां गर्भस्रावात्स्वपाततः ॥ ( सर्वेषामेव गुणिनामूर्द्ध्वन्तु विषमः पुनः ॥ अर्वाक् षण्मासतः स्त्रीणां यदि स्याद्गर्भसंस्रवः ॥ तदा माससमैस्तासामशौचं दिवसैः स्मृतम् ॥ तत उर्द्ध्वन्तु पतने स्त्रीणां द्वादशरात्रिकम् ॥ सद्यः शौचं सपिण्डानां गर्भस्रावाच्च धातुतः ॥ ) गर्भच्युतादहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे ॥ यथेष्टाचरणे ज्ञातौ त्रिरात्रमिति निश्चयः ॥ १७ ॥ यदि स्यात्सूतके सूतिर्मरणे वा मृतिर्भवेत् ॥ शेषेणैव भवेच्छुद्धिरहःशेषे त्रिरात्रकम् ॥ १८ ॥ म[४]रणोत्पत्तियोगेन मरणेन समाप्यते ॥ आद्यं वृद्धिमदाशौचं त[५]दा पूर्वेण शुद्ध्यति ॥ १९ ॥ ( तथाच पञ्चमीरात्रिमतीत्य परतो भवेत् ) ॥ देशान्तरगतं श्रुत्वा सूतकं शावमेव च ॥ ता[६]वदप्रयतो मर्त्त्यो यावच्छेषं समाप्यते ॥ २० ॥ अतीते सूतके प्रोक्तं सपिण्डानां त्रिरात्रकम् ॥ ( अथैव मरणे स्नानमूर्द्ध्वं संवत्सराद्यदि ॥ वेदार्थविद्याधीयानो योऽग्निवान्वृत्तिकर्षितः ॥ सद्यः शौचं भवेत्तस्य सर्वावस्थासु सर्वदा ॥ स्त्रीणामसंस्कृतानान्तु प्रदानात्परतः सदा ॥ सपिण्डानां त्रिरात्रं स्यात्संस्कारे भर्त्तुरेव हि ॥ अहस्त्वदत्तकन्यानामशौचं मरणं स्मृतम् ॥ ऊनद्विवर्षामरणे सद्यः शौचमुदाहृतम् ॥ आदन्तात्सोदरे सद्य आचूडादेकरात्रकम् ॥ ) आप्रदानात्त्रिरात्रं स्याद्दशरात्रं ततः परम् ॥ २१ ॥

---

१ प्राक्संस्कारात्त्रिरात्रं स्यात्तस्मादूर्द्ध्वं दशाहकमिति, प्राक्संस्कारात्त्रिरात्रं वै दशरात्रमतः परमिति पा० । २ सपिण्डानामुदाहृतामिति पा० । ३ एकाहं निर्गुणानान्तु इति पा० । ४ मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते इति पा० । ५ ऊर्द्ध्वं चेत्तु न शुद्ध्यति इति पा० । ६ तावत्स्यादशुचिर्विप्रो यावच्छेषः समाप्यते इति पा० ।

मातामहानां मरणे त्रिरात्रं स्यादशौचकम् ॥ एकादशानाञ्च तथा सूतके चैतदेव हि॥२२॥ पक्षिणी योनिसम्बन्धे बान्धवेषु तथैव च ॥ एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणि॥२३॥प्रेते राजनि सज्योतिर्यस्य स्याद्विषये स्थितः॥गृहे मृतासु सर्वासु कन्यासु च त्र्यहं पितुः॥२४॥ परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च ॥ त्रिरात्रं स्यात्तथाचार्यास्वभार्यास्वन्यगासु च ॥ २५॥ आचार्यपुत्रे पत्न्याञ्च अहोरात्रमुदाहृतम्॥ एकाहं स्यादुपाध्याये स्वग्रामे श्रोत्रियेऽपि च ॥ २६ ॥ त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु च ॥ एकाहं चास्ववर्ये स्यादेकरात्रं तदि ष्यते ॥ २७ ॥ त्रिरात्रं श्वश्रूमरणात् श्वशुरे चैतदेव हि ॥ सद्यःशौचं समुद्दिष्टं स्वगोत्रे संस्थिते सति ॥ २८ ॥ शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ॥ वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥ २९॥ क्षत्रविट्शूद्रदायादा ये स्युर्विप्रस्य बान्धवाः ॥ तेषामशौचे विप्रस्य दशाहाच्छुद्धिरिष्यते ॥ ३० ॥ राजन्यवैश्यावप्येवं हीनवर्णासु योनिषु ॥ तमेव शौचं कुर्यातां विशुद्ध्यर्थमसंशयम् ॥ ३१ ॥ सर्वे तूत्तरवर्णानामशौचं कुर्युराहताः ॥ तद्वर्णविधिदृष्टेन स्वन्तु शौचं स्वयोनिषु ॥ ३२ ॥ षड्रात्रं तु त्रिरात्रं स्यादेकरात्रं क्रमेण तु ॥ वैश्यक्षत्रियविप्राणां शूद्रेष्वाशौचमेव च ॥ ३३ ॥ अर्द्धमासोऽथ षड्रात्रं त्रिरात्रं द्विजपुंगवाः ॥ शूद्रक्षत्रियविप्राणां वैश्यस्याशौचमेव च ॥ ३४ ॥ षड्रात्रं वै दशाहश्च विप्राणां वैश्यशूद्रयोः ॥ अशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुङ्गवाः ॥ ३५ ॥ शूद्रविट्क्षत्रियाणान्तु ब्राह्मणस्य तथैव च ॥ दशरात्रेण शुद्धिः स्यादित्याह कमलोपतिः ॥ ३६ ॥ असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ॥ अशित्वा च सहोषित्वा दशरात्रेण शुद्ध्यति ॥ ३७ ॥ यद्यन्नमत्ति तेषान्तु त्रिरात्रेण ततः शुचिः ॥ अन्नदंस्त्वन्नमह्ना तु न च तस्मिन् गृहे वसेत् ॥ ३८ ॥ सोदकेऽथ तदेव स्यान्मातुराप्तेषु बन्धुषु ॥ दशाहेन शवस्पर्शी सपिण्डश्चैव शुद्ध्यति ॥ ३९ ॥ यदि निर्हरति प्रेतं लोभाक्रान्तमानसः ॥ दशाहेन द्विजः शुद्ध्येद्द्वादशाहेन भूमिपः ॥ ४० ॥ अर्द्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति ॥ षड्रात्रेणाथवा सर्वे

१ एकोदकानां मरणे इति, एकोदकानांच तथेति पा० । २ एकाहं च श्वशुर्ये इति, एकाहं वा श्वशुर्ये इति पा० । ३ शौचं कुर्युरनार्चिताः इति पा० । ४ ब्राह्मणे संस्थिते सतीति पा० । ५ कमलोद्भवः इति पा० ।

त्रिरात्रेणाथवा पुनः ॥४१॥ अनाथश्चैव निर्हृत्य ब्राह्मणं धनवर्जितम् ॥ स्नात्वा सम्प्राश्य च घृतं शुध्यन्ति ब्राह्मणादयः ॥४२॥ अपरश्चेत् परं वर्णमपरञ्चापरे यदि ॥ अशौचे संस्पृशेत्स्नेहात्तदाशौचेन शुद्ध्यति ॥ ४३ ॥ प्रेतीभूतं द्विजं विप्रो ह्यनुगच्छेत कामतः ॥ स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥४४॥ एकाहात्क्षत्रिये शुद्धिर्वैश्ये स्याच्च द्व्यहेन तु॥शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः ॥४५॥ अनस्थिसञ्चिते शूद्रे रौति चेद्ब्राह्मणः स्वकैः॥ त्रिरात्रं स्यात्तथा शौचमेकाहं त्वन्यथा स्मृतम् ॥४६॥अस्थिसञ्चयनादर्वागेकाहः क्षत्रवैश्ययोः॥ अन्यथा चैव सज्योतिर्ब्राह्मणे स्नानमेव तु ॥ ४७ ॥ अनस्थिसञ्चिते विप्रो ब्राह्मणो रौति चेत्तदा ॥ स्नानेनैव भवेच्छुद्धिः सचैलेनात्र संशयः ॥४८॥ यस्तैः सहाशनं कुर्याच्छयनादीनि चैव हि ॥ बान्धवो वापरो वापि स दशाहेन शुध्यति ॥४९॥ यस्तेषां सममश्नाति सकृदेवापि कामतः ॥ तदाशौचे निवृत्तेऽसौ स्नानं कृत्वा विशुध्यति ॥ ५० ॥ यावत्तदन्नमश्नाति दुर्भिक्षाभिहतो नरः ॥ तावन्त्यहान्यशौचं स्यात्प्रायश्चित्तं ततश्चरेत् ॥ ५१ ॥ दाहाद्यशौचं कर्त्तव्यं द्विजानामग्निहोत्रिणाम् ॥ सपिण्डानाञ्च मरणे मरणादितरेषु च ॥ ५२ ॥ सपिण्डता च पुरुषे सप्तमे विनिवर्त्तते ॥ समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ ५३ ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ लेपभाजस्त्रयो ज्ञेयाः सापिण्ड्यं सातपौरुषम् ॥ ५४ ॥ अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् ॥ तासान्तु भर्तृसापिण्ड्यं प्राह देवः पितामहः ॥ ५५ ॥ ये चैकजाता बहवो भिन्नयोनय एव च ॥ भिन्नवर्णास्तु सापिण्ड्यं भवेत्तेषां त्रिपूरुषम् ॥ ५६ ॥ कारवः शिल्पिनो वैद्या दासीदासास्तथैव च ॥ दातारो नियमाच्चैव ब्रह्मविद्ब्रह्मचारिणौ ॥ सत्रिणो व्रतिनस्तावत्सद्यःशौचमुदाहृतम् ॥५७॥ राजा चैवाभिषिक्तश्च अन्नसत्रिण एव च ॥ यज्ञे विवाहकाले च दैवयागे तथैव च ॥ सद्यः शौचं समाख्यातं दुर्भिक्षे चाप्युपप्लवे ॥५८॥ डिंबाहवहतानाञ्च सर्पादिमरणेऽपि च ॥ सद्यः शौचं समाख्यातं स्वज्ञातिमरेण तथा ॥ ५९ ॥ अग्निमरुत्प्रपतने वीराध्वन्यप्यनाशके ॥ गोब्राह्मणार्थे संन्यस्ते सद्यःशौचं विधीयते ॥ ६० ॥ नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् ॥ नाशौचं कीर्त्यते सद्भिः पतिते

१ अधरश्चाधर इति पा० । २ दुर्भिक्षोपहतः इति पा० । ३ ततः स्मरेदिति पा० । ४ विद्युता पार्थिवैर्द्विजैरिति पा० । ५ सर्पादिमरणे तथा इति पा० ।

च तथा मृते ॥ ६१ ॥ पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः ॥ नाश्रुपातो न पिण्डो वा कार्यं श्राद्धादिकं क्वचित् ॥ ६२ ॥ व्यापादयेत्तथात्मानं स्वयं योऽग्निविषादिभिः ॥ विहितं तस्य नाशौचं नाग्निर्नाप्युदकादिकम् ॥ ६३ ॥ अथ किञ्चित्प्रमादेन म्रियतेऽ-ग्निविषादिभिः ॥ तस्याशौचं विधातव्यं कार्यञ्चैवोदकादिकम् ॥ ६४ ॥ जाते कुमारे तदहः कामं कुर्यात्प्रतिग्रहम् ॥ हिरण्यधान्य गोवासांस्तिलांश्च गुडसर्पिषा ॥ ६५ ॥ फलानि पुष्पं शाकञ्च लवणं काष्ठमेव च ॥ तक्रं दधि घृतं तैलमौषधं क्षीरमेव च ॥ आशौचिनो गृहाद्ग्राह्यं शुष्कान्नञ्चैव नित्यशः ॥६६॥ आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ॥ अनाहिताग्निर्गृह्येण लौकिकेनेतरो जनः ॥६७॥ देहाभावात्पलाशैस्तु कृत्वा प्रतिकृतिं पुनः ॥ दाहः कार्यो यथान्यायं सपिण्डैः श्रद्धयान्वितैः ॥ ६८ ॥ सकृत्प्रसिञ्चेदुदकं नामगोत्रेण वाग्यतः ॥ दशाहं बान्धवाः श्राद्धं सर्वे चैवं सुसंयताः ॥ ६९ ॥ पिण्डं प्रतिदिनं दद्युः सायं प्रातर्यथाविधि ॥ प्रेताय च गृहद्वारि चतुर्थे भोजयेद्द्विजान् ॥७०॥ द्वितीयेऽहनि कर्त्तव्यं क्षुरकर्म सबान्धवैः ॥ चतुर्थे बान्धवैः सर्वैरस्थ्नां सञ्चयनं भवेत् ॥ पूर्वान्प्रयुञ्जयेद्विप्रान् युग्मान् सुश्रद्धया शुचीन् ॥ ७१ ॥ पंचमे नवमे चैव तथैवैकादशेऽहनि॥ युग्मांश्च भोजयेद्विप्रान्नवश्राद्धन्तु तद्विजाः॥ ७२ ॥ एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः ॥ द्वादशे वाह्नि कर्त्तव्यं नवमेऽप्यथवाहनि ॥ एकं पवित्रमेकोऽर्घः पिंडपात्रं तथैव च ॥ ७३ ॥ एवं मृताह्नि कर्त्तव्यं प्रतिमासन्तु वत्सरम् ॥ सपिण्डीकरणं प्रोक्तं पूर्णे संवत्सरे पुनः ॥ ७४ ॥ कुर्याच्चत्वारि पात्राणि प्रेतादीनां द्विजोत्तमाः ॥ प्रेतार्थं पितृ पात्रेषु पात्रमासेचयेत्ततः ॥ ७५ ॥ ये समाना इति द्वाभ्यां पिण्डानप्येवमेव हि ॥ सपिण्डीकरणश्राद्धं देवपूर्वं विधीयते ॥ ७६ ॥ पितॄ नावाहयेत्तत्र पुनः प्रेतं विनिर्दिशेत् ॥ ये सपिण्डीकृताः प्रेता न तेषां स्युः प्रतिक्रियाः ॥ यस्तु कुर्यात्पृथक् पिण्डं पितृहा सोऽभिजा यते ॥ ७७ ॥ मृते पितरि वै पुत्रः पिंडानब्दं समावसेत् ॥ दद्याच्चान्नं सोदकुम्भं प्रत्यहं प्रेतधर्मतः ॥ ७८ ॥ पार्वणेन विधानेन सांवत्स रिकमिष्यते ॥ प्रतिसंवत्सरं कुर्याद्विधिरेष सनातनः ॥ ७९ ॥ मातापित्रोः सुतैः कार्यम्पिण्डदानादिकं च यत् ॥ पत्नी कुर्यात्सुताभावे

१ चैवार्द्रवाससः इति पा० । २ पूर्वन्तु भोजयेद्विप्रानिति पा० । प्रयुंजयेत्-प्रयोजयेत् आर्षः प्रयोगः । ३ अनिन्द्ये त्वथवाहानि इति पा० । ४ पिण्डमब्दं समाचरेदिति पा० ।

पत्न्यभावे तु सोदरः ॥ ८० ॥ अनेनैव विधानेन जीवः श्राद्धं समाचरेत् ॥ कृत्वा दानादिकं सर्वं श्रद्धायुक्तः समाहितः ॥ ८१ ॥ एष वः कथितः सम्यग्गृहस्थानां क्रियाविधिः ॥ स्त्रीणां भर्तृषु शुश्रूषा धर्मो नान्य इहोच्यते ॥ ८२ ॥ स्वधर्मतत्परा नित्यमीश्वरार्पितमानसाः ॥ प्राप्नुवन्ति[1] परं स्थानं यदुक्तं वेदवादिभिः ॥ ८३ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु श्राद्धकल्पे त्रयोविंशोऽध्यायः ॥ २३ ॥

द्विजानामग्निहोत्रादिकृत्यम् ॥ व्यास उवाच ॥ अग्निहोत्रन्तु जुहुयात्सायम्प्रातर्यथाविधि[2] ॥ दर्शे[3] चैव हि तस्यान्ते नवसस्ये तथैव च ॥ १ ॥ इष्ट्वा[4] चैव यथान्यायमृत्वन्ते च द्विजोऽध्वरैः ॥ पशुना त्वयनस्यान्ते समान्ते सोऽग्निकैर्मखैः ॥ २ ॥ नानिष्ट्वा नवसस्येष्ट्या पशुना वाग्निमान्द्विजः ॥ न चान्नमद्यान्मांसं वा दीर्घमायुर्जिजीविषुः ॥ ३ ॥ नवेनान्नेन चानिष्ट्वा पशुहव्येन चाग्नयः ॥ प्राणानेवात्तु मिच्छन्ति नवान्नामिषगृर्द्धिनः ॥ ४ ॥ सावित्रान्शान्तिहोमांश्च कुर्यात्पर्वसु नित्यशः ॥ पितॄंश्चैवाष्टकाः सर्वे नित्यमन्वष्टकासु च ॥ ५ ॥ एष धर्मः परो नित्यमपधर्मोऽन्य उच्यते ॥ त्रयाणामिह वर्णानां गृहस्थाश्रमवासिनाम् ॥ ६ ॥ नास्तिक्यादथवालस्याद्योऽग्नीन्नाधातु मिच्छति ॥ यजेत वा न यज्ञेन स याति नरकान् बहून् ॥ ७ ॥ ( तामिस्रमन्धतामिस्रं महारौरवरौरवौ ॥ कुम्भीपाकं वैतरणीमसिपत्रवनं तथा ॥ आन्यांश्च नरकान् घोरान् सम्प्राप्नोति सुदुर्मतिः ॥ अन्त्यजानां कुले विप्राः शूद्रयोनौ च जायते ॥ ) तस्मात् सर्वप्रयत्नेन ब्राह्मणो हि विशेषतः ॥ आधायाग्निं विशुद्धात्मा यजेत परमेश्वरम् ॥ ८ ॥ अग्निहोत्रात्परो धर्मो द्विजानां नेह विद्यते ॥ तस्मादाराधयेन्नित्यमग्निहोत्रेण शाश्वतम् ॥ ९ ॥ यस्त्वाधायाग्निमांश्च स्यान्न यष्टुं देवमिच्छति ॥ स संमूढो न सम्भाष्यः किं पुनर्नास्तिको जनः ॥ १० ॥ यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ॥ अधिकं[5] वा भवेद्यस्य स सोमं पातु मर्हति ॥ ११ ॥ एष वै सर्वयज्ञानां सोमः प्रथम इष्यते ॥ सोमेनाराधयेद्देवं सोमलोकमहेश्वरम् ॥ १२ ॥ न सोमयागादधिको महेशारा

१ प्राप्नोति तत्परमिति पा० । २ आद्यन्तेऽहर्निशोः सदा इति, आद्यन्ते ह्यर्निशं सदा इति पा० । ३ दर्शेन चैव पक्षान्ते पौर्णमासेन चैव हि इति, दर्शेन चार्द्धमासान्ते पौर्णमासेन चैव हि इति पा० । ४ सस्यान्ते नवसस्येन तथर्त्वन्ते इति पा० । ५ अधिकं चाथ विद्येत इति पा० ।

धनात्ततः ॥ न सोमो विद्यते तस्मात्सोमेनाभ्यर्चयेत्परम् ॥ १३ ॥ पितामहेन विप्राणामादाय विहितः पशुः ॥ धर्मो विमुक्तये साक्षाच्छ्रौतः स्मार्त्तो भवेत्पुनः ॥ १४ ॥ श्रौतस्त्रेताग्निसम्बन्धात् स्मार्त्तः पूर्वं मयोदितः ॥ श्रेयस्करतमः श्रौतस्तस्माच्छ्रौतं समाचरेत् ॥ १५ ॥ उभावपि हितौ धर्मौ वेदवेदाविनिःसृतौ ॥ शिष्टाचारस्तृतीयः स्याच्छ्रुतिस्मृत्योरभावतः ॥ १६ ॥ धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ॥ ते शिष्टा ब्राह्मणाः प्रोक्ताः नित्यमात्मगुणान्विताः ॥ १७ ॥ तेषामभिमतो यः स्याच्चेतसा नित्यमेव हि ॥ स धर्मः कथितः सद्भिर्नान्येषामिति धारणा ॥ १८ ॥ पुराणं धर्मशास्त्राणि वेदानामुपबृंहणम् ॥ एकस्माद्ब्रह्मविज्ञानं धर्मज्ञानं तथैकतः ॥ १९ ॥ धर्मं जिज्ञासमानानां तत्प्रमाणतरं स्मृतम् ॥ धर्मशास्त्रं पुराणानि [3]ब्रह्मज्ञानेतराश्रमम् ॥ २० ॥ नान्यतो जायते धर्मो ब्राह्मी विद्या च वैदिकी ॥ तस्माद्धर्मं पुराणं च श्रद्धातव्यं मनीषिभिः ॥ २१ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु द्विजानामग्निहोत्रादिकृत्यनिरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ द्विजातीनां वृत्तिः ॥ व्यास उवाच ॥ एष वोऽभिहितः कृत्स्नो गृहस्थाश्रमवासिनः ॥ द्विजातेः परमो धर्मो वर्त्तनानि निबोधत ॥ १ ॥ द्विविधस्तु गृही ज्ञेयः साधकश्चाप्यसाधकः ॥ अध्यापनं याजनं च पूर्वस्याहुः प्रतिग्रहम् ॥ कुसीदकृषिवाणिज्यं प्रकुर्वन्तः स्वयं कृतम् ॥ २ ॥ कृषेरभावे वाणिज्यं तदभावे कुसीदकम् ॥ आपत्कल्पस्त्वयं ज्ञेयः पूर्वोक्तो मुख्य इष्यते ॥ ३ ॥ स्वयं वा कर्षणाकुर्याद्वाणिज्यं वा कुसीदकम् ॥ कष्टा पापीयसी वृत्तिः कुसीदं तद्विवर्ज्जयेत् ॥ ४ ॥ क्षात्रवृत्तिं परां प्राहुर्न स्वयं कृषणं द्विजैः ॥ तस्मात्क्षात्रेण वर्त्तेत वर्त्ततेऽनापदि द्विजः ॥ ५ ॥ तेन चावाप्यजीवंस्तु वैश्यवृत्तिः कृषिं व्रजेत् ॥ न कथंचन कुर्वीत ब्राह्मणः कर्म कर्षणम् ॥ ६ ॥ लब्धलाभः पितॄन्देवान् ब्राह्मणांश्चापि पूजयेत् ॥ ते तृप्तास्तस्य तं दोषं शमयन्ति न संशयः ॥ ७ ॥ देवेभ्यश्च पितृभ्यश्च दद्याद्भागन्तु विंशकम् ॥ त्रिंशद्भागं ब्राह्मणानां कृषिं कुर्वन्न दुष्यति ॥ ८ ॥ वाणिज्ये द्विगुणं दद्यात् कुसीदी

१ आदावभिहितः शुभः इति पा० । २ अलाभतः इति पा० । ३ ब्रह्मज्ञानपरायणा इति पा० धर्मं जिज्ञासमानानामित्यादि श्लोकद्वयं पुस्तके श्लोकत्रयात् प्रागेव दृश्यते ।

त्रिगुणं पुनः ॥ कृषिपाळान्न दोषेण युज्यते नात्र संशयः ॥ ९ ॥ शिलोञ्छं वाप्याददीत गृहस्थः साधकः पुनः ॥ विद्याशिल्पादयस्त्वन्ये बहवो वृत्तिहेतवः ॥ १० ॥ असाधकस्तु यः प्रोक्तो गृहस्थाश्रमसंस्थितः ॥ शिलोञ्छे तस्य कथिते द्वे वृत्ती परमर्षिभिः ॥ ११ ॥ अमृतेनाथवा जीवेन्मृतेनाप्यथवा यदि ॥ अयाचितं स्यादमृतं मृतं भैक्षन्तु याचितम् ॥ १२ ॥ कुशूलधान्यको वा स्यात्कुम्भीधान्यक एव च ॥ त्र्यहिको वापि च भवेदश्वस्तनिक एव च ॥ १३ ॥ चतुर्णामपि वै तेषां द्विजानां गृहमेधिनाम् ॥ श्रेयान्परः परो ज्ञेयो धर्मतो लोकजित्तमः ॥ १४ ॥ षट्कर्मको भवेत्तेषां त्रिभिरन्यः प्रवर्त्तते ॥ द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रेण जीवति ॥ १५ ॥ वर्त्तयंस्तु शिलोञ्छाभ्यामग्निहोत्रपरायणः ॥ इष्टिः पार्वायणान्ता याः केवला निर्वपेत्सदा ॥ १६ ॥ न लोकवृत्तं वर्त्तेत वार्त्तान्ते वृत्तिहेतवे ॥ अजिह्मामशठां शुद्धां जीवेद्ब्राह्मणजीविकाम् ॥ १७ ॥ याचित्वा चार्थसद्भ्योऽन्नं पितॄन्देवांस्तु तोषयेत् ॥ याचयेद्वा शुचीन्दान्तान् तेन तृप्येत् स्वयं ततः ॥ १८ ॥ यस्तु द्रव्यार्जनं कृत्वा गृहस्थस्तोषयेन्न तु ॥ देवान्पितॄंस्तु विधिना शुनां योनिं व्रजत्यधः ॥ १९ ॥ धर्मश्चार्थश्च कामश्च श्रेयो मोक्षश्चतुष्टयम् ॥ धर्माद्विरुद्धः कामः स्याद्ब्राह्मणानान्तु नतरः ॥ २० ॥ योऽर्थो धर्माय नात्मार्थं सोऽर्थो नार्थस्तथेतरः ॥ तस्मादर्थं समासाद्य दद्याद्वै जुहुयाद्द्विजः ॥ २१ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु द्विजातीनां वृत्तिनिरूपणं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥ व्यास उवाच ॥ अथातः सम्प्रवक्ष्यामि दानधर्ममनुत्तमम् ॥ ब्रह्मणाभिहितं पूर्वमृषीणां ब्रह्मवादिनाम् ॥ १ ॥ अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम् ॥ दानमित्यभिनिर्दिष्टं भुक्तिमुक्तिफलप्रदम् ॥ २ ॥ यद्ददाति विशिष्टेभ्यः शिष्टेभ्यः श्रद्धया युतः ॥ तद्विचित्रमहं मन्ये शेषं कस्यापि क्षति ॥ ३ ॥ नित्यं नैमित्तिकं काम्यं त्रिविधं दानमुच्यते ॥ चतुर्थं विमलं प्रोक्तं सर्वदानोत्तमोत्तमम् ॥ ४ ॥ अहन्यहनि यत्किञ्चिद्दीयतेऽनुपकारिणे ॥ अनुद्दिश्य फलं तस्माद्ब्राह्मणाय तु नित्यकम् ॥ ५ ॥

१ शिलोञ्छनमाददीतेति पा० । २ वृत्तिहेतोः कथंचनेति पा० । ३ याचयित्वा शुचिर्दान्तं नच तृप्येदिति पा० । ४ उदिते इति, उदिते शास्त्रोक्ते इत्यर्थः । ५ श्रद्धया परया युत इति पा० ।

यत्तु पापोपशान्त्यर्थं दीयते विदुषाङ्करे ॥ नैमित्तिकन्तदुद्दिष्टं दानं सद्भिरनुष्ठितम् ॥ ६ ॥ अपत्यविजयैश्वर्यस्वर्गार्थं यत्प्रदीयते ॥ दानं तत्काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥ ७ ॥ यदीश्वरप्रीणनार्थं ब्रह्मवित्सु प्रदीयते ॥ चेतसा धर्मयुक्तेन दानं तद्विमलं शिवम् ॥ ८ ॥ दानधर्मं निषेवेत पात्रमासाद्य शक्तितः ॥ उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः ॥ ९ ॥ कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ॥ अन्यथा दीयते यद्धि न तद्दानं फलप्रदम् ॥ १० ॥ श्रोत्रियाय कुलीनाय विनीताय तपस्विने ॥ व्रतस्थाय दरिद्राय यद्देयं भक्तिपूर्वकम् ॥ ११ ॥ यस्तु दद्यान्महीम्भक्त्या ब्राह्मणायाहिताग्नये ॥ स याति परमं स्थानं यत्र गत्वा न शोचति ॥ १२ ॥ इक्षुभिः सन्ततां भूमिं यवगोधूमशालिनीम् ॥ ददाति वेदविदुषे यः स भूयो न जायते ॥१३ ॥ गोचर्ममात्रामपि वा यो भूमिं सम्प्रयच्छति ॥ ब्राह्मणाय दरिद्राय सर्वपापैः प्रमुच्यते ॥ १४ ॥ भूमिदानात्परं दानं विद्यते नेह किञ्चन ॥ अन्नदानन्तेन तुल्यं विद्यादानं ततोऽधिकम् ॥ १५ ॥ यो ब्राह्मणाय शुचये धर्मशीलाय शीलिने ॥ ददाति विद्यां विधिना ब्रह्मलोके महीयते ॥ १६ ॥ दद्यादहरहस्त्वन्नं श्रद्धया ब्रह्मचारिणे ॥ सर्वपापविनिर्मुक्तो ब्राह्मणं स्थानमाप्नुयात् ॥ १७ ॥ गृहस्थायान्नदानेन फलम्प्राप्नोति मानवः ॥ आगमे चास्य दातव्यं दत्वाप्नोति परां गतिम् ॥ १८ ॥ वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान्सप्त पञ्च वा ॥ उपोष्य विधिना शान्ताञ्छुचीन् प्रयतमानसाः ॥१९ ॥ पूजयित्वा तिलैः कृष्णैर्मधुना च विशेषतः ॥ गन्धादिभिः समभ्यर्च्य वाचयेद्वा स्वयं वदेत् ॥ २० ॥ प्रीयतां धर्मराजेति यद्वा मनसि वर्त्तते ॥ यावज्जीवं कृतम्पापं तत्क्षणादेव नश्यति ॥ २१ ॥ कृष्णाजिने तिलान् दत्त्वा हिरण्यं मधुसर्पिषी ॥ ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ २२ ॥ कृतान्नमुदकुम्भञ्च वैशाख्याञ्च विशेषतः ॥ निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥ २३ ॥ सुवर्णतिलयुक्तैस्तु ब्राह्मणान् सप्त पञ्च वा ॥ तर्पयेदुदपात्राणि ब्रह्महत्यां व्यपोहति ॥२४॥ ( माघमासे तु विप्रस्तु द्वादश्यां समुपोषितः ॥ ) शुक्ला

१ सद्भिरनुत्तमामिति पा० । २ भरणाद्देयामिति पा० । ३ वृत्तस्थाय सदाचाराय इत्यर्थः । ४ शान्ताय शुचये धर्मशालिने इति पा० । ५ ब्राह्मणं--ब्रह्मणः सम्बन्धीयमित्यर्थः । स्थानं ब्रह्मलोकमित्यर्थः । ६ यावज्जीवन्त तत्पापमिति पा० ।

म्बरधरः कृष्णैस्तिलैर्हुत्वा हुताशनम् ॥ प्रदद्याद्ब्राह्मणेभ्यस्तु विप्रेभ्यः सुसमाहितः ॥ जन्मप्रभृति यत्पापं सर्वं तरति वै द्विजः ॥२५॥ अमावास्यामनुप्राप्य ब्राह्मणाय तपस्विने ॥ यत्किञ्चिद्देवदेवेशं दद्याद्वोद्दिश्य शङ्करम् ॥२६॥ प्रीयतामीश्वरः सोमो महादेवः सनातनः ॥ सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥ २७ ॥ यस्तु कृष्णचतुर्दश्यां स्नात्वा देवं पिनाकिनम् ॥ आराधयेद्द्विजमुखे न तस्यास्ति पुनर्भवः ॥ २८ ॥ कृष्णाष्टम्यां विशेषेण धार्मिकाय द्विजातये ॥ स्नात्वाभ्यर्च्य यथान्यायं पादप्रक्षालनादिभिः ॥ २९ ॥ प्रीयतां मे महादेवो दद्याद्द्रव्यं स्वकीयकम् ॥ सर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम् ॥ ३० ॥ द्विजैः कृष्णचतुर्दश्यां कृष्णाष्टम्यां विशेषतः ॥ अमावास्यान्तु वै भक्तैः पूजनीयस्त्रिलोचनः ॥ ३१ ॥ एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम् ॥ अर्चयेद्ब्राह्मणमुखे स गच्छेत्परमं पदम् ॥ ३२ ॥ एषा तिथिर्वैष्णवी स्याद्द्वादशी शुक्लपक्षके ॥ तस्यामाराधयेद्देवं प्रयत्नेन जनार्दनम् ॥ ३३ ॥ यत्किञ्चिद्देवमीशानमुद्दिश्य ब्राह्मणे शुचौ ॥ दीयते विष्णवे वापि तदनन्तफलप्रदम् ॥ ३४ ॥ यो हि यां देवतामिच्छेत्समाराधयितुन्नरः ॥ ब्राह्मणान् पूजयेद्विद्वान् स तस्यास्तोषहेतुतः ॥ ३५ ॥ द्विजानां वपुरास्थाय नित्यं तिष्ठन्ति देवताः ॥ पूज्यन्ते ब्राह्मणालाभे प्रतिमादिष्वपि क्वचित् ॥ ३६ ॥ तस्मात्सर्वप्रयत्नेन तत्तत्फलमभीप्सुभिः ॥ द्विजेषु देवता नित्यं पूजनीया विशेषतः ॥ ३७ ॥ विभूतिकामः सततं पूजयेद्वै पुरन्दरम् ॥ ब्रह्मवर्चसकामस्तु ब्रह्माणं ब्रह्मकामुकः ॥ ३८ ॥ आरोग्यकामोऽथ रविं धेनुकामो हुताशनम् ॥ कर्मणां सिद्धिकामस्तु पूजयेद्वै विनायकम् ॥ ३९ ॥ भोगकामस्तु शशिनं बलकामः समीरणम् ॥ मुमुक्षुः सर्वसंसारात्प्रयत्नेनार्च्चयेद्धरिम् ॥ ४० ॥ यस्तु योगं तथा मोक्षमिच्छेत्तज्ज्ञानमैश्वरम् ॥ सोऽर्चयेद्वै विरूपाक्षं प्रयत्नेन महेश्वरम् ॥ ४१ ॥ यो वाञ्छति महायोगात् ज्ञानानि च महेश्वरम् ॥ ते पूजयंति भूतेशं केशवञ्चापि भोगिनः ॥४२॥ वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ॥ तिलप्रदः प्रजामिष्टान्दीपदश्चक्षुरुत्तमम् ॥४३॥ भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ॥ गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥ ४४ ॥ वासोदश्चन्द्रसालोक्यमश्विसालोक्य

१ तिलानेव समाहितः इति पा० । २ प्रयत्नेनेश्वरं हरमिति पा० । ३ ये वाञ्छन्ति महाभागानिति पा० ।

मश्वदः ॥ अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥ ४५ ॥ यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ॥ धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसात्म्यताम् ॥ ४६ ॥ धान्यान्यपि यथाशक्ति विप्रेषु प्रतिपादयेत् ॥ वेदवित्सु विशिष्टेषु प्रेत्य स्वर्गं समश्नुते ॥ ४७ ॥ गवां वा संप्रदानेन सर्वपापैः प्रमुच्यते ॥ इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥४८॥ फलमूलानि शाकानि भोज्यानि विविधानि च ॥ प्रदद्या द्ब्राह्मणेभ्यस्तु मुदा युक्तः स्वयम्भवेत् ॥४९॥ औषधं स्नेहमाहारं रोगिणे रोगशान्तये ॥ ददानो रोगरहितः सुखी दीर्घायुरेव च ॥५०॥ असिपत्रवनं मार्गं क्षुरधारासमन्वितम् ॥ तीव्रतापञ्च तरति छत्रोपानत्प्रदो नरः ॥५१॥ यद्यदिष्टतमं लोके यच्चापि दयितं गृहे ॥ तत्तद्गुणवते देयन्तदेवाक्षयमिच्छता ॥५२॥ अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ॥ संक्रान्त्यादिषु कालेषु दत्तम्भवति चाक्षयम् ॥ ५३ ॥ प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु च ॥ दत्त्वा चाक्षयमाप्नोति नदीषु च वनेषु च ॥ ५४ ॥ दानधर्मात्परो धर्मो भूतानान्नेह विद्यते ॥ तस्मा द्विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः ॥ ५५ ॥ स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये ॥ मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यस्तथा न्वहम् ॥ ५६ ॥ दीयमानन्तु यो मोहाद्गोविप्राग्निसुरेषु च ॥ निवारयति पापात्मा तिर्यग्योनिं व्रजेत्तु सः ॥ ५७ ॥ यस्तु द्रव्यार्ज्जनं कृत्वा नार्च्चयेद्ब्राह्मणान् सुरान् ॥ सर्वस्वमपहृत्यैनं राष्ट्राद्विप्रतिवासयेत् ॥ ५८ ॥ यस्तु दुर्भिक्षवेलायामन्नाद्यं न प्रयच्छति ॥ म्रियमा णेषु सत्त्वेषु ब्राह्मणः स तु गर्हितः ॥ ५९ ॥ तस्मान्न प्रतिगृह्णीयान्न वै देयञ्च तस्य हि ॥ अङ्कयित्वा स्वकाद्राष्ट्रात्तं राजा विप्रवासयेत् ॥ ६० ॥ यस्तु सद्भ्यो ददातीह न द्रव्यं धर्मसाधनम् ॥ स पूर्वाभ्यधिकः पापी नरके पच्यते नरः ॥ ६१ ॥ स्वाध्यायवन्तो ये विप्रा विद्यावन्तो जितेन्द्रियाः ॥ सत्यसंयमसंयुक्तास्तेभ्यो दद्याद्द्विजोत्तमाः ॥ ६२ ॥ सुभुक्तमपि विद्वांसं धार्मिकम्भोजयेद्द्विजम् ॥ न तु मूर्खमवृत्तस्थं दशरात्रमुपोषितम् ॥ ६३ ॥ सन्निकृष्टमतिक्रम्य श्रोत्रियं यः प्रयच्छति ॥ स तेन कर्मणा पापी दहत्यासप्तमं

१ अर्थदाता श्रियश्श्रेष्ठामिति पा० । २ ब्रह्म शाश्वतमिति पा० । ३ पर्णानि पानानीति पा० । ४ राजा राष्ट्रात्प्रवासयेदिति पा० । ५ विप्रेषु ब्रह्महा इति पा० । ६ न तस्मात्प्रतिगृह्णीयुर्न विशेयुश्च ते न हि इति पा० । ७ यश्चासद्भ्यो ददातीह स्वधनं धर्मसाधकमिति पा० । ८ सत्यसंयसंस्थेभ्यो दद्याद्विप्रो द्विजोत्तमः इति पा० ।

कुलम् ॥ ६४ ॥ यदि स्यादधिको विप्रः शीलविद्यादिभिः स्वयम् ॥ तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधिम् ॥६५॥ योऽर्चितं प्रति गृह्णाति ददात्यर्चितमेव वा ॥ तावुभौ गच्छतः स्वर्गं नरकन्तु विपर्यये ॥ ६६ ॥ न वार्यपि प्रयच्छेत नास्तिके हैतुकेऽपि च ॥ पाषण्डेषु च सर्वेषु नावेदविदि धर्मवित् ॥ ६७ ॥ अपूपञ्च हिरण्यञ्च गामश्वं पृथिवीं तिलान् ॥ अविद्वान्प्रतिगृह्णानो भस्मीभवति काष्ठवत् ॥ ६८ ॥ द्विजातिभ्यो धनं लिप्सेत्प्रशस्तेभ्यो द्विजोत्तमः ॥ अपि वा जातिमात्रेभ्यो न तु शूद्रात्कथञ्चन ॥ ६९ ॥ वृत्तिसङ्कोचमन्विच्छेत् नेहेत धनविस्तरम् ॥ धनलोभे प्रसक्तस्तु ब्राह्मण्यादेव हीयते ॥ ७० ॥ वेदानधीत्य सकलान् यज्ञांश्चावाप्य सर्वशः ॥ न तां गतिमवाप्नोति सङ्कोचाद्यामवाप्नुयात् ॥ ७१ ॥ प्रतिग्रहरुचिर्न स्याद्यात्रार्थन्तु धनं हरेत् ॥ स्थित्यर्थादधिकं गृह्णन् ब्राह्मणो यात्यधो गतिम् ॥ ७२ ॥ यस्तु स्याद्याचको नित्यं न स स्वर्गस्य भाजनम् ॥ उद्वेजयति भूतानि यथा चौरस्तथैव सः ॥ ७३ ॥ गुरून् भृत्यांश्चोज्जिहीर्षन् अर्चिष्यन्देवतातिथीन् ॥ सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयन्ततः ॥ ७४ ॥ एवं गृहस्थो युक्तात्मा देवतातिथिपूजकः ॥ वर्त्तमानः संयतात्मा याति तत्परमम्पदम् ॥७५॥ पुत्रे निधाय वा सर्वं गत्वारण्यन्तु तत्त्ववित् ॥ एकाकी विचरेन्नित्यमुदासीनः समाहितः ॥ ७६ ॥ एष वः कथितो धर्मो गृहस्थानां द्विजोत्तमाः ॥ ज्ञात्वा तु तिष्ठेन्नियतं तथानुष्ठापयेद्द्विजान् ॥ ७७ ॥ इति देवमनादिमेकमीशं गृहधर्मेण समर्चयेदजस्रम् ॥ तमतीत्य स सर्वभूतयोनिं प्रकृतिं वै स परं न याति जन्म ॥ ७८ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे व्यासगीतासु षड्विंशोऽध्यायः ॥ २६ ॥ अथ वानप्रस्थाश्रमधर्माः ॥ व्यास उवाच ॥ एवं गृहाश्रमे स्थित्वा द्वितीयं भागमायुषः ॥ वानप्रस्थाश्रमं गच्छेत्सदारः साग्निरेव वा ॥१॥ निक्षिप्य भार्यां पुत्रेषु गच्छेद्वनमथापि वा ॥ दृष्ट्वापत्यस्य चापत्यं जर्जरीकृतविग्रहः ॥ २ ॥ शुक्लपक्षस्य पूर्वाह्णे प्रशस्ते चोत्तरायणे ॥ गत्वारण्यं नियमवांस्तपः कुर्यात्समाहितः ॥ ३॥ फलमूलानि पूतानि नित्यमाहारमाहरेत् ॥ यताहारो भवेत्तेन पूजयेत्पितृदेवताः ॥ ४ ॥ पूजयित्वातिथीन्नित्यं स्नात्वा चाभ्यर्चयेत्सुरान् ॥ गृहादादाय चाश्नीयादष्टौ ग्रासान् समा

१ हैतुके- हेतुमन्विष्यतीतिहैतुकः कुतर्की, श्रद्धाहीनः, तस्मिन् । २ अपि राजन्यवैश्याभ्यामिति पा० । ३ यस्तु याचनकः इति पा० ।

हितः ॥ ५ ॥ जटां वै बिभृयान्नित्यं नखरोमाणि नोत्सृजेत् ॥ स्वाध्यायं सर्वदा कुर्यान्नियच्छेद्वाचमन्यतः ॥६॥ अग्निहोत्रञ्च जुहुयात्पञ्च यज्ञान् समाचरेत् ॥ मुन्यन्नैर्विविधैर्वन्यैः शाकमूलफलेन च ॥ ७ ॥ चीरवासा भवेन्नित्यं स्नाति त्रिषवणं शुचिः ॥ सर्वभूतानुकम्पी स्यात् प्रतिग्रहविवर्जितः ॥ ८ ॥ स दर्शपौर्णमासेन यजेत नियतं द्विजः ॥ ऋक्षेष्वाग्रयणे चैव चातुर्मास्यानि चाहरेत् ॥ ९ ॥ उत्तरायणञ्च[1] क्रमशो दक्षस्यायनमेव च ॥ वासन्तैः शारदैर्मेध्यैर्मुन्यन्नैः स्वयमाहृतैः ॥ १० ॥ पुरोडाशांश्चरूंश्चैव द्विविधं निर्वपेत्पृथक् ॥ देवताभ्यश्च तद्धुत्वा वन्यं मेध्यतरं हविः ॥११॥ शेषं समुपभुञ्जीत लवणञ्च स्वयं कृतम् ॥ वर्जयेन्मधुमांसानि भौमानि कवचानि च ॥१२॥ भूस्तृणं शिशुकञ्चैव श्लेष्मातकफलानि च ॥ न फालकृष्टमश्नीयादुत्सृष्टमपि केनचित् ॥ १३ ॥ न ग्रामजातान्यार्त्तोऽपि पुष्पाणि च फलानि च ॥ श्रावणेनैव विधिना वह्निं परिचरेत्सदा ॥ १४ ॥ न द्रुह्येत्सर्वभूतानि निर्द्वन्द्वो निर्भयो भवेत् ॥ न[2] नक्तञ्चैवमश्नीयात् रात्रौ ध्यानपरो भवेत् ॥ १५ ॥ जितेन्द्रियो जितक्रोधस्तत्त्वज्ञानविचिन्तकः ॥ ब्रह्मचारी भवेन्नित्यं न पत्नीमपि संश्रयेत् ॥ १६ ॥ यस्तु पत्न्या वनं गत्वा मैथुनं कामतश्चरेत् ॥ तद्व्रतं तस्य लुप्येत प्रायश्चित्तीयते द्विजः ॥ १७ ॥ तत्र यो जायते गर्भो न संस्पृश्यो भवेद्द्विजः ॥ न च वेदेऽधिकारोऽस्य तद्वंशेऽप्येवमेव हि ॥ १८ ॥ अधःशयीत नियतं[3] सावित्रीजपतत्परः ॥ शरण्यः सर्वभूतानां संविभागरतः सदा ॥ १९ ॥ परिवादं मृषावादं निद्रालस्यं विवर्जयेत् ॥ एकाग्निरनिकेतः स्यात्प्रोक्षितां भूमिमाश्रयेत् ॥ २० ॥ मृगैः सह चरेद्वा यस्तैः सहैव च संविशेत् ॥ शिलायां वा शर्करायां शयीत सुसमाहितः ॥ २१ ॥ सद्यःप्रक्षालको वा स्यान्माससञ्चयकोऽपि वा ॥ षण्माससनिचयो वा स्यात् समानिचय एव च ॥२२॥ त्यजेदाश्वयुजे मासि संपन्नं[4] पूर्वचिन्तितम् ॥ जीर्णानि चैव वासांसि शाकमूलफलानि च ॥ २३ ॥ दन्तोलूखलिको वा स्यात्कापोतीं वृत्तिमाश्रयेत् ॥ अश्मकुट्टो भवेद्वापि कालपक्वभुगेव च ॥ २४ ॥ नक्तं चान्नं समश्नीयाद्दिवा चाहृत्य शक्तितः ॥ चतुर्थकालिको वा स्यात्स्याद्वा चाष्टमकालिकः ॥ २५ ॥ चान्द्रायणविधानैर्वा शुक्ले

---

१ उत्तरायणश्चन्द्रमस इति पा० । २ न नक्तं किञ्चिदश्नीयादिति पा० । ३ सततमिति पा० । ४ मूलस्वं पूर्वसञ्चितमिति, उत्पन्नं पूर्वसञ्चितमिति पा० ।

कृष्णे च वर्त्तयेत् ॥ पक्षे पक्षे समश्नीयाद्विजांग्रान् कथितान् सकृत् ॥ २६ ॥ पुष्पमूलफलैर्वापि केवलैर्वर्त्तयेत्सदा ॥ स्वाभाविकैः स्वयं शीर्णैर्वैखानसमते स्थितः ॥ २७ ॥ भूमौ वा परिवर्त्तेत तिष्ठेद्वा प्रपदैर्दिनम् ॥ स्थानासनाभ्यां विहरेन्न क्वचिद्धैर्यमुत्सृजेत् ॥ २८ ॥ ग्रीष्मे पंचतपास्तद्वद्वर्षास्वभ्रावकाशकः ॥ आर्द्रवासास्तु हेमन्ते क्रमशो वर्द्धयंस्तपः ॥ २९ ॥ उपस्पृश्य त्रिषवणं पितृदेवांश्च तर्पयेत् ॥ एकपादेन तिष्ठेत मरीचीन्वा पिबेत्तदा ॥ ३० ॥ पंचाग्निर्धूमपो वा स्यादुष्मपः सोमपोऽथवा ॥ पयः पिबेच्छुक्लपक्षे कृष्णपक्षे च गोमयम् ॥ ३१ ॥ शीर्णपर्णाशनो वा स्यात्कृच्छ्रैर्वा वर्त्तयेत्सदा ॥ योगाभ्यासरतश्चैव रुद्राध्यायी भवेत्सदा ॥ ३२ ॥ अथर्वशिरसोऽध्येता वेदान्ताभ्यासतत्परः ॥ यमान् सेवेत सततं नियमांश्चाप्यतन्द्रितः ॥ ३३ ॥ कृष्णाजिनः सोत्तरीयः शुक्लयज्ञोपवीतवान् ॥ अथ चाग्नीन् समारोप्य स्वात्मनि ध्यानतत्परः ॥ ३४ ॥ अनग्निरनिकेतः स्यान्मुनिर्मोक्षपरो भवेत् ॥ तापसेष्वेव विप्रेषु यात्रिकं भैक्ष्यमाहरेत् ॥ ३५ ॥ गृहमेधिषु चान्येषु द्विजेषु वनवासिषु ॥ ग्रामादाहृत्य चाश्नीयादष्टौ ग्रासान्वने वसन् ॥ ३६ ॥ प्रतिगृह्य पुटेनैव पाणिना शकलेन वा ॥ विविधाश्चोपनिषद आत्मसंसिद्धये जपेत् ॥ ३७ ॥ विद्याविशेषान् सावित्रीं रुद्राध्यायं तथैव च ॥ महाप्रस्थानिकं वासौ कुर्यादनशनन्तु वा ॥ अग्निप्रवेशमन्यद्वा ब्रह्मार्पणविधौ स्थितः ॥ ३८ ॥ येन सम्यगिममाश्रमं शिवं संश्रयन्त्यशिवपुञ्जनाशनम् ॥ ते विशन्ति पदमैश्वरं परं यान्ति यत्र गतमस्य संस्थितेः ॥ ३९ ॥ इति श्रीकूर्मपुराणे उपविभागे व्यासगीतासु वानप्रस्थाश्रमधर्मो नाम सप्तविंशोऽध्यायः ॥ २७ ॥ अथ यतिधर्मः ॥ व्यास उवाच ॥ एवं वनाश्रमे स्थित्वा तृतीयं भागमायुषः ॥ चतुर्थमायुषो भागं संन्यासेन नयेत् क्रमात् ॥ १ ॥ अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत् ॥ योगाभ्यासरतः शान्तो ब्रह्मविद्यापरायणः ॥ २ ॥ यदा मनसि सञ्जातं वैतृष्ण्यं सर्ववस्तुषु ॥ तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये ॥ ३ ॥ प्राजापत्यान्निरूप्येष्टिमाग्नेयीमथवा पुनः ॥ दान्तः

१ यवागूं कथितामिति, यवागूः कथिताः इति पा० । २ स्थानाशनाभ्यामिति पा० । ३ उपोष्य त्रिषवणश्चापीति पा० । ४ कृष्णपक्षे तु सोमपः इति पा० । ५ कृच्छ्रैरापद्यते सदेति पा० । ६ करकेणेति, करकेनेति पा० । ७ सम्पन्नामिति पा० ।

पक्वकषायोऽसौ ब्रह्माश्रममुपाश्रयेत् ॥ ४ ॥ ज्ञानसंन्यासिनः केचिद्वेदसंन्यासिनः परे ॥ कर्मसंन्यासिनस्त्वन्ये त्रिविधाः परिकीर्त्तिताः ॥ ५ ॥ यः सर्वसङ्गनिर्मुक्तो निर्द्वन्द्वश्चैव निर्भयः ॥ प्रोच्यते ज्ञानसंन्यासी स्वात्मन्येवं व्यवस्थितः ॥ ६ ॥ वेदमेवाभ्यसेन्नित्यं निर्द्वन्द्वो निष्परिग्रहः ॥ प्रोच्यते वेदसंन्यासी मुमुक्षुर्विजितेन्द्रियः ॥ ७ ॥ यस्त्वग्नीनात्मसात्कृत्वा ब्रह्मार्पणपरो द्विजः ॥ स ज्ञेयः कर्मसंन्यासी महायज्ञपरायणः ॥ ८ ॥ त्रयाणामपि चैतेषां ज्ञानी त्वभ्यधिको मतः ॥ न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः ॥ ९ ॥ निर्ममो निर्भयः शान्तो निर्द्वन्द्वो निष्परिग्रहः ॥ जीर्णकौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः ॥ १० ॥ ब्रह्मचारी मितग्रासी[1] ग्रामा[2]त्त्वन्नं समाहरेत् ॥ अध्यात्ममतिरासीत निरपेक्षो निरामिषः ॥ ११ ॥ आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ नाभिनन्देत[3] मरणं नाभिनन्देत जीवितम् ॥ १२ ॥ कालमेव प्रतीक्षेत निदेशम्भृतको यथा ॥ नाध्येतव्यं न वक्तव्यं श्रोतव्यं न कदाचन ॥ १३ ॥ एवं ज्ञात्वा परो योगी ब्रह्मभूयाय कल्पते ॥ एकवासाथवा[4] विद्वान् कौपीनाच्छादनस्तथा ॥१४॥ मुण्डी शिखी वाथ भवेत्त्रिदण्डी निष्परिग्रहः ॥ काषायवासाः सततन्ध्यानयोगपरायणः ॥ १५ ॥ ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ॥ समः शत्रौ च मित्रे च तथा मानापमानयोः ॥ १६ ॥ भैक्ष्येण वर्त्तयेन्नित्यन्नैकान्नादी भवेत्क्वचित् ॥ यस्तु मोहेन वान्यस्मादेकान्नादी भवेद्यतिः ॥ १७ ॥ न तस्य निष्कृतिः काचिद्धर्मशास्त्रेषु कथ्यते ॥ रागद्वेषविमुक्तात्मा समलोष्टाश्मकाञ्चनः ॥ १८ ॥ प्राणिहिंसानिवृत्तश्च मौनी स्यात्सर्वनिस्पृहः ॥ दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ॥ शास्त्रपूतां वदेद्वाणीं मनःपूतं समाचरेत् ॥ १९ ॥ नैकत्र निवसेद्देशे वर्षाभ्योऽन्यत्र भिक्षुकः ॥ स्नानशौचरतो नित्यं कमण्डलुकरः शुचिः ॥२०॥ ब्रह्मचर्यरतो नित्यं वनवासरतो भवेत् ॥ मोक्षशास्त्रेषु निरतो ब्रह्मचारी जितेन्द्रियः ॥ २१ ॥ दम्भाहङ्कारनिर्मुक्तो निन्दापैशुन्यवर्जितः ॥ आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ॥ २२ ॥ अभ्यसेत्सततं

१ पर्णभोजनः इति पा० । २ ग्रामान्नान्नमिति, ग्रामादन्नं समाहरेदिति पा० । ३ नाभिनन्देत इति आर्षमात्मनेपदम् । ४ एकवासाथवा इत्यत्र सन्धिरार्षः, एकवासाः अथवा इति पदच्छेदः ।

वेदं प्रणवाख्यं सनातनम् ॥ स्नात्वाचम्य विधानेन शुचिर्देवालयादिषु ॥ २३ ॥ यज्ञोपवीती शान्तात्मा कुशपाणिः समाहितः ॥ धौत काषायवसनो भस्मच्छन्नतनूरुहः ॥२४॥ अधियज्ञं ब्रह्म जपेदाधिदैविकमेव वा ॥ आध्यात्मिकं च सततं वेदान्ताभिहितं च यत् ॥२५॥ पुत्रेषु चाथ निवसन् ब्रह्मचारी यतिर्मुनिः ॥ वेदमेवाभ्यसेन्नित्यं स याति परमाङ्गतिम् ॥२६॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यं तपः परम् ॥ क्षमा दया च सन्तोषो व्रतान्यस्य विशेषतः ॥२७॥ वेदान्तज्ञाननिष्ठो वा पञ्चयज्ञान् समाहितः ॥ ज्ञानध्यानसमायुक्तो भिक्षार्थं नैव तेन हि ॥ २८ ॥ होममन्त्राञ्जपेन्नित्यं[1] काले काले समाहितः ॥ स्वाध्यायश्चान्वहं कुर्यात्सावित्रीं सन्ध्ययोर्जपेत् ॥ २९ ॥ ततो ध्यायीत[2] तं देवमेकान्ते परमेश्वरम् ॥ एकान्ते वर्जयेन्नित्यं कामं क्रोधं परिग्रहम् ॥३०॥ एकवासा द्विवासा वा शिखी यज्ञोपवीतवान् ॥ कमण्डलुकरो विद्वान् त्रिदण्डी याति तत्परम् ॥३१॥ इति श्रीकूर्मपुराणे उत्तरार्धे व्यासगीतासु यतिधर्मेऽष्टाविंशोऽध्यायः ॥२८॥ पुनर्यतिधर्माः ॥

व्यास उवाच ॥ एवं स्वाश्रमनिष्ठानां यतीनां नियतात्मनाम् ॥ भैक्ष्यणे वर्त्तनं प्रोक्तं फलमूलैरथापि वा ॥ १ ॥ एककालं चरेद्भैक्षं न प्रसज्येत विस्तरे ॥ भैक्ष्यप्रसक्तो हि यतिर्विषयेष्वपि सज्जति ॥ २ ॥ सप्तागारांश्चरेद्भैक्षमलाभे तु पुनश्चरेत् ॥ प्रक्षाल्य पात्रे भुञ्जीत[3] अद्भिः प्रक्षालयेत्पुनः ॥ ३ ॥ अथवाऽन्यदुपादाय पात्रे भुञ्जीत नित्यशः ॥ भुक्त्वा तत्संमृजेत्पात्रं यात्रामात्रमलोलुपः ॥ ४ ॥ विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ॥ वृत्ते शरावसम्पाते भिक्षां नित्यं यतिश्चरेत् ॥ ५ ॥ गोदोहमात्रं तिष्ठेत कालम्भिक्षुरधोमुखः ॥ भिक्षेत्युक्त्वा सकृत्तूष्णीमश्नीयाद्वाग्यतः शुचिः ॥ ६ ॥ प्रक्षाल्य पाणी पादौ च समाचम्य यथाविधि ॥ आदित्ये दर्शयित्वान्नं भुञ्जीत प्राङ्मुखः शुचिः ॥७॥ हुत्वा प्राणाहुतीः पञ्च ग्रासानष्टौ समाहितः ॥ आचम्य देवं ब्रह्माणं ध्यायीत परमेश्वरम् ॥८॥ अलाबुं दारुपात्रं च मृण्मयं वैणवं ततः ॥ चत्वार्येतानि पात्राणि मनुराह प्रजापतिः ॥ ९ ॥ प्राग्रात्रे पररात्रे च मध्यरात्रे तथैव च ॥ सन्ध्यास्वग्निविशेषेण चिन्तयेन्नित्यमीश्वरम् ॥१०॥ कृत्वा हृत्पद्मनिलये विश्वाख्यं विश्वसम्भवम् ॥ आत्मानं सर्वभूतानां परस्तात्तमसः स्थितम् ॥ ११ ॥

१ होमकाले इति पा० । २ ध्यायीत सततं देवमिति (आत्मनेपदमार्षं) इति पा० । ३ भुञ्जीयादद्भिः प्रक्षालयेत्तु तदिति पा० ।

सर्वस्याधा[1]रभूतानामानन्दं ज्योतिरव्ययम् ॥ प्रधानपुरुषातीतमाका[2]शकुहरं शिवम् ॥ १२ ॥ तदन्तः सर्वभावानामीश्वरं ब्रह्मरूपिणम् ॥ ध्यायेदनादिमध्यान्तमानन्दादिगुणालयम् ॥ १३ ॥ महान्तं पुरुषं ब्रह्म ब्रह्माणं सत्यमव्ययम् ॥ तरुणादित्यसंकाशं महेशं विश्व[3]रूपिणम् ॥ १४ ॥ ओङ्का[4]रेणाथ चात्मानं संस्थाप्य परमात्मनि ॥ आकाशे देवमीशानं ध्यायीताकाशमध्यगम् ॥ १५ ॥ कारणं सर्वभावाना मानन्दैकसमाश्रयम् ॥ पुराणं पुरुषं शुभ्रं ध्यायन्मुच्येत बन्धनात् ॥ १६ ॥ यद्वा गुहायां प्रकृतं जगत्संमोहनालये ॥ विचिन्त्य परमं व्योम सर्वभूतैककारणम् ॥ १७ ॥ जीवनं सर्वभूतानां यत्र लोकः प्रलीयते ॥ आनन्दं ब्रह्मणः सूक्ष्मं यत्पश्यन्ति मुमुक्षवः ॥ १८ ॥ तन्मध्ये निहितं ब्रह्म केवलं ज्ञानलक्षणम् ॥ अनन्तं सत्यमीशानं विचिन्त्यासीत संयतः ॥१९॥ गुह्याद्गुह्यतमं ज्ञानं यतीनामेतदीरितम्॥ योऽनुतिष्ठेन्महेशेन सोऽश्नुते योगमैश्वरम् ॥ २० ॥ तस्माद्ध्यानरतो नित्यमात्मविद्यापरायणः ॥ ज्ञानं समाश्रयेद्ब्राह्मं येन मुच्येत बन्धनात् ॥ २१ ॥ गत्वा पृथक् स्वमात्मानं सर्वस्मादेव केवलम् ॥ आनन्दमजरं ज्ञानं ध्यायीत च पुनः परम् ॥ २२ ॥ यस्माद्भवन्ति भूतानि यद्गत्वा नेह जायते ॥ स तस्मादीश्वरो देवः पर[5]स्माद्योऽधितिष्ठति ॥ २३ ॥ यदन्तरे तद्गमनं शाश्वतं शिवमुच्यते ॥ यदाहुस्त त्परो यः स्यात्स देवस्तु महेश्वरः ॥२४ ॥ व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च ॥ एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते ॥ २५॥ उपेत्य तु स्त्रियं कामात्कृ[6]च्छ्रं संयतमानसः ॥ प्राणायामसमायुक्तः कुर्यात्सान्तपनं शुचिः ॥ २६ ॥ ततश्चरेत नियमात् कृच्छ्रं संयत मानसः ॥ पुनराश्रममागम्य चरेद्भिक्षुरतन्द्रितः ॥ २७ ॥ न नर्मयुक्तमनृतं हिनस्तीति मनीषिणः ॥ तथापि च न कर्त्तव्यं प्रसंगो ह्येष दारुणः ॥ २८ ॥ एकरात्रोपवासश्च प्राणायामशतं तथा ॥ [7]कर्त्तव्यं यतिना धर्मलिप्सुना वरमव्ययम् ॥ २९ ॥ [8]गंतेनापि न कार्यन्ते न

---

१ आधारमव्यक्तमिति पा० । २ आकाशं दहनं शिवमिति पा० । ३ विश्वकारिणमिति पा० । ४ ओङ्कारान्तेऽथ इति पा० । ५ परस्ताद्योऽधितिष्ठतीति, परस्ताद्यो विवस्वत इति पा० । ६ प्रायश्चित्तं समाहितः इति पा० । ७ उक्त्वा नूनं प्रकर्त्तव्यं यतिना धर्मलिप्सुना इति पा० । ८ परमापद्गतेनापि न कार्यं स्तेयमन्यत इति, अत्यन्तापन्नहतेनापि न ...तेयमन्यतः इति पा० ।

कार्यं स्तेयमन्यतः ॥ स्तेयादभ्यधिकः कश्चिन्नास्त्यधर्म इति स्मृतिः ॥ ३० ॥ हिंसा चैषा परा दिष्टा या चात्मज्ञाननाशिका ॥ यदेत द्द्रविणं नाम प्राणा ह्येते बहिश्चराः ॥ ३१ ॥ स तस्य हरति प्राणान्यो यस्य हरते धनम् ॥ एवं कृत्वा सुदुष्टात्मा भिन्नवृत्तो व्रताहतः ॥ भूयो निर्वेदमापन्नश्चरेच्चान्द्रायणव्रतम् ॥ ३२ ॥ विधिना शास्त्रदृष्टेन संवत्सरमिति श्रुतिः ॥ भूयो निर्वेदमापन्नश्चरेद्भिक्षुरतन्द्रितः ॥ ३३ ॥ अकस्मादेव हिंसान्तु यदि भिक्षुः समाचरेत् ॥ कुर्यात्कृच्छ्रातिकृच्छ्रन्तु चांद्रायणमथापि वा ॥ ३४ ॥ स्कन्नमिन्द्रियदौर्बल्यात् स्त्रियं दृष्ट्वा यतिर्यदि ॥ तेन धारयितव्या वै प्राणायामास्तु षोडश ॥ ३५ ॥ दिवा स्कन्ने त्रिरात्रं स्यात्प्राणायामशतं तथा ॥ एकांते मधुमांसे च नवश्राद्धे तथैव च ॥ प्रत्यक्षलवणे प्रोक्तं प्राजापत्यं विशोधनम् ॥ ३६ ॥ ध्याननिष्ठस्य सततं नश्यते सर्वपातकम् ॥ तस्मान्महेश्वरं ज्ञात्वा तद्ध्यानपरमो भवेत्[1] ॥ ३७ ॥ यद्ब्रह्म परमं ज्योतिः प्रतिष्ठाक्षरमव्ययम् ॥ योऽन्तरा परमं ब्रह्म स विज्ञेयो महेश्वरः ॥ ३८ ॥ एष देवो महादेवः केवलः परमः शिवः ॥ तदेवाक्षरमद्वैतं तदादित्यांतरं परम् ॥ ३९ ॥ यस्मान्महीयसो देवः स्वधाम्नि ज्ञान संस्थिते ॥ आत्मयोगाह्वये तत्त्वे महादेवस्ततः स्मृतः ॥ ४० ॥ नान्यं देवं महादेवाद्व्यतिरिक्तं प्रपश्यति ॥ तमेवात्मान मात्मेति यः स याति परमं पदम् ॥ ४१ ॥ मन्यन्ते ये स्वमात्मानं विभिन्नं परमेश्वरात् ॥ न ते पश्यन्ति तं देवं वृथा तेषां परिश्रमः ॥ ४२ ॥[2] एकं ब्रह्म परं ब्रह्म ज्ञेयं तत्तत्त्वमव्ययम् ॥ स देवस्तु मदादेवो नैतद्विज्ञाय बाध्यते ॥ ४३ ॥ तस्माद्यजेत नियतं यतिः संयतमानसः ॥ ज्ञानयोगरतः शान्तो महादेवपरायणः ॥ ४४ ॥ एष वः कथितो विप्रा यतीनामाश्रमः शुभः ॥ पितामहेन विभुना मुनीनां पूर्वमीरितम् ॥ ४५ ॥ नात्र[3] शिष्यस्य योगिभ्यो दद्यादिदमनुत्तमम् ॥ ज्ञानं स्वयंभुना प्रोक्तं यतिधर्माश्रयं शिवम् ॥ ४६ ॥ इति यतिनियमानामेतदुक्तं विधानं पशुपतिपरितोषे यद्भवेदेकहेतुः ॥ न भवति पुनरेषामुद्भवो वा विनाशः प्रणिहितमनसा ये नित्यमेवाचरन्ति ॥ ४७ ॥ इति श्रीकूर्मपुराणे उत्तरार्धे व्यासगीतासु यतिधर्मो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

१ ध्यात्वा तस्य ध्यानरतो भवेदिति पा० । २ एकमेव परं ब्रह्मेति पा० । ३ नापुत्रशिष्येति, स पुत्रशिष्येति पा० ।

प्रायश्चित्तविधिः ॥ व्यास उवाच ॥ अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभम् ॥ हिताय सर्वविप्राणां[1] दोषाणामपनुत्तये ॥ १ ॥ अकृत्वा विहितं कर्म कृत्वा निन्दितमेव च ॥ दोषमाप्नोति पुरुषः प्रायश्चित्तं विशोधनम् ॥ २ ॥ प्रायश्चित्तमकृत्वा तु न तिष्ठेद्ब्राह्मणः क्वचित् ॥ यद्ब्रूयुर्ब्राह्मणाः शान्ता विद्वांसस्तत्समाचरेत् ॥ ३ ॥ वेदार्थवित्तमः शान्तो धर्मकामोऽग्निमान्द्विजः॥ स एव स्यात्परो धर्मो यमेकोऽपि व्यवस्यति ॥ ४ ॥ अनाहिताग्नयो विप्रास्त्रयो वेदार्थपारगाः ॥ यद्ब्रूयुर्धर्मकामास्ते तज्ज्ञेयं[2] धर्मसाधनम् ॥ ९ ॥ अनेकधर्मशास्त्रज्ञा ऊहापोहविशारदाः॥ वेदाध्ययनसम्पन्नाः सप्तैते परिकीर्त्तिताः ॥ ६ ॥ मीमांसाज्ञानतत्त्वज्ञा वेदान्तकुशला द्विजाः॥ एकविंशतिविख्याताः प्रायश्चित्तं वदन्ति वै ॥ ७ ॥ ब्रह्महा मद्यपः स्तेनो गुरुतल्पग एव च ॥ महापातकिनस्त्वेते यश्चैतैः सह संविशेत् ॥ ८ ॥ संवत्सरन्तु पतितैः संसर्गं कुरुते तु यः ॥ यानशय्यासनैर्नित्यं जानन्वै पतितो भवेत् ॥ ९ ॥ याजनं योनिसम्बन्धं तथैवाध्यापनं[3] द्विजः ॥ सद्यः[4] कृत्वा पतत्येव सह भोजनमेव च ॥ १० ॥ अविज्ञायाथ यो मोहात्कुर्यादध्यापनं द्विजः ॥ संवत्सरेण पतति सहाध्ययनमेव च ॥ ११ ॥ ब्रह्महा द्वादशाब्दानि कुटिं कृत्वा वने वसेत् ॥ भैक्षमात्म[5]विशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ॥ १२॥ ब्राह्मणावसथान् सर्वान् देवागाराणि वर्जयेत् ॥ विनिन्दन् स्वयमात्मानं ब्राह्मणं तञ्च संस्मरन् ॥ १३ ॥ असङ्कल्पितयोग्यानि सप्तागाराणि संविशेत् ॥ विधूमे शनकैर्नित्यं व्यङ्गारे भुक्तवज्जने ॥ १४ ॥ एककालं चरेद्भैक्षं दोषं विख्यापयन्नृणाम् ॥ वन्यमूलफलैर्वापि वर्त्तयेद्व[6] समाश्रितः ॥ १९ ॥ कपालपाणिः खट्वाङ्गी ब्रह्मचर्यपरायणः ॥ पूर्णे तु द्वादशे वर्षे ब्रह्महत्यां व्यपोहति ॥ १६ ॥ अकामतः कृते पापे प्रायश्चित्तमिदं शुभम् ॥ कामतो मरणाच्छुद्धिर्ज्ञेया नान्येन केनचित् ॥१७॥ कुर्यादनशनं वाथ भृगोः पतनमेव वा ॥ ज्वलन्तं वा विशेदग्निं जलं वा प्रविशेत्स्वयम् ॥१८ ॥ ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान् परित्यजेत् ॥ ब्रह्महत्यापनोदार्थमन्तरा वा मृतस्य तु ॥१९॥ दीर्घामयाविनं विप्रं कृत्वानामयमेव

---

१ सर्वलोकानामिति पा० । २ तज्ज्ञानं धर्मशासनं, तत्क्षमं धर्मसाधनमिति पा० । ३ तथैवाध्ययनमिति पा० । ४ कृत्वा सद्यः पतेज्ज्ञानादिति पा० । ९ भिक्षेदात्मविशुद्ध्यर्थमिति, भैक्ष्यायात्मविशुद्ध्यर्थमिति पा० । ६ वर्जयेद्वैर्यमाश्रितः इति, वर्त्तयेद्वैर्यमाश्रितः इति पा० ।

वा ॥ दत्त्वा चान्नं सुविदुषे ब्रह्महत्या व्यपोहति ॥ २० ॥ अश्वमेधावभृथके स्नात्वा वै शुध्यते द्विजः ॥ सर्वस्वं वा वेदविदे ब्राह्मणाय प्रदाय च ॥ २१ ॥ सरस्वत्यास्त्वरुणया सङ्गमे लोकविश्रुते ॥ शुध्येत्त्रिषवणस्नानात्त्रिरात्रोपोषितो द्विजः ॥ २२ ॥ गत्वा रामेश्वरं पुण्यं स्नात्वा चैव महोदधौ ॥ ब्रह्मचर्यादिभिर्युक्तो दृष्ट्वा रुद्रं विमोचयेत् ॥ २३ ॥ कपालमोचनं नाम तीर्थं देवस्य शूलिनः ॥ स्नात्वाभ्यर्च्य पितॄन् देवान् ब्रह्महत्यां व्यपोहति ॥ २४ ॥ यत्र देवाधिदेवेन भैरवेणामितौजसा ॥ कपालं स्थापितं पूर्वं ब्रह्मणः परमेष्ठिनः ॥ २५ ॥ समभ्यर्च्य महादेवं तत्र भैरवरूपिणम् ॥ तर्पयित्वा पितॄन् स्नात्वा मुच्यते ब्रह्महत्यया ॥ २६ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे ब्रह्महत्या प्रायश्चित्तवर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥ ब्रह्मणः कपालस्थापनम् ॥ ऋषय ऊचुः ॥ कथं देवेन रुद्रेण शङ्करेणातितेजसा ॥ कपालं ब्रह्मणः पूर्वं स्थापितं देहजं भुवि ॥१॥ सूत उवाच ॥ शृणुध्वमृषयः पुण्यां कथां पापप्रणाशिनीम् ॥ माहात्म्यं देवदेवस्य महादेवस्य धीमतः ॥ २ ॥ पुरा पितामहं देवं मेरुशृङ्गे महर्षयः ॥ प्रोचुः प्रणम्य लोकादिं किमेकं तत्त्वमव्ययम् ॥ ३ ॥ स मायया महेशस्य मोहितो लोकसम्भवः ॥ अविज्ञाय परम्भावं स्वात्मानं प्राह धर्षिणम् ॥ ४ ॥ अहं धाता जगद्योनिः स्वयम्भूरेक ईश्वरः ॥ अनादि मत्परं ब्रह्म मामभ्यर्च्य विमुच्यते ॥ ५ ॥ अहं हि सर्वदेवानां प्रवर्त्तकनिवर्त्तकः ॥ न विद्यते चाभ्यधिको मत्तो लोकेषु कश्चन ॥ ६ ॥ तस्यैवं मन्यमानस्य जज्ञे नारायणांशजः ॥ प्रोवाच प्रहसन्वाक्यं रोषितोऽयं त्रिलोचनः ॥७॥ किं कारणमिदं ब्रह्मन्वर्त्तते तव साम्प्रतम् ॥ अज्ञानयोगयुक्तस्य न त्वेतत्त्वयि विद्यते ॥८॥ अहं कर्त्तादिलोकानां जज्ञे नारायणात्प्रभोः ॥ न मामृतेऽस्य जगतो जीवनं सर्वथा क्वचित् ॥९॥ अहमेव परं ज्योतिरहमेव परा गतिः ॥ मत्प्रेरितेन भवता सृष्टं भुवनमण्डलम् ॥१०॥ एवं विवदतोर्मोहात्परस्परजयैषिणोः॥ आजग्मुर्यत्र तौ देवौ वेदाश्चत्वार एव हि ॥११॥ अन्वीक्ष्य देवं ब्रह्माणं यज्ञात्मानञ्च संस्थितम्॥ प्रोचुः संविग्नहृदया याथात्म्यं परमेष्ठिनः॥ १२॥

१ कृत्वा चान्नमिति पा० । २ भैरवेण हतौजसा इति पा० । ३ सुविज्ञाय परं भावं प्राह देवर्षिणां तदा इति पा० । ४ अहं जातो जगद्योनिः स्वयम्भूरेक ईश्वर इति पा० । ५ रोषताम्रविलोचनः इति, रोषवान् रविलोचनं इति पा० । ६ न त्वेतदुचितं तवेति, न वै तदुचितं तवेति पा० ।

ऋग्वेद उवाच ॥ यस्यान्तःस्थानि भूतानि यस्मात्सर्वं प्रवर्त्तते ॥ यदाहुस्तत्परन्तत्त्वं स देवः स्यान्महेश्वरः ॥ १३ ॥ यजुर्वेद उवाच ॥ यो यज्ञैरखिलैरीशो योगेन च समर्च्यते ॥ यमाहुरीश्वरं देवं स देवः स्यात्पिनाकधृक् ॥ १४ ॥ सामवेद उवाच ॥ येनेदम्भ्राम्यते विश्वं यदाकाशान्तरं शिवम् ॥ योगिभिर्विद्यते तत्त्वं महादेवः स शङ्करः ॥ १५ ॥ अथर्ववेद उवाच ॥ यम्प्रपश्यन्ति देवेशं यजन्ते यतयः परम् ॥ महेशं पुरुषं रुद्रं स देवो भगवान् भवः ॥ १६ ॥ एवं स भगवान् ब्रह्मा वेदानामीरितं शुभम् ॥ श्रुत्वा विहस्य विश्वात्मा तत श्चाह विमोहितः ॥ १७ ॥ कथं तत्परमं ब्रह्म सर्वसङ्गविवर्जितम् ॥ रमते भार्यया सार्द्धं प्रमथैश्चातिगर्वितैः ॥ १८ ॥ इतीरितेऽथ भगवान् प्रणवात्मा सनातनः ॥ अमूर्त्तो मूर्त्तिमान् भूत्वा वचः प्राह पितामहम् ॥ १९ ॥ प्रणव उवाच ॥ न ह्येष भगवानीशः स्वात्मनो व्यतिरिक्तया ॥ कदाचिद्रमते रुद्रस्तादृशो हि महेश्वरः ॥ अयं स भगवानीशः स्वयंज्योतिः सनातनः ॥ २० ॥ स्वानन्दभूता कथिता देवी आगन्तुका शिवा ॥ २१ ॥ इत्येवमुक्तेऽपि तदा यज्ञमूर्त्तेरजस्य च ॥ नाज्ञानमगमन्नाशमीश्वरस्यैव मायया ॥ २२ ॥ तदन्तरे महाज्योतिर्विरिञ्चो विश्वभावनः ॥ प्रादर्शयदद्भुतं दिव्यं पूरयन् गगनान्तरम् ॥ २३ ॥ तन्मध्यसंस्थितञ्ज्योतिर्मण्डलं तेजसो ज्ज्वलम् ॥ व्योममध्यगतं दिव्यं प्रादुरासीद्द्विजोत्तमाः ॥ २४ ॥ स दृष्ट्वा वदनं दिव्यमूर्ध्नि लोकपितामहः ॥ तैजसं मण्डलं घोरमलोक यदनिन्दितम् ॥ २५ ॥ प्रजज्वालातिकोपेन ब्रह्मणः पञ्चमं शिरः ॥ क्षणादपश्यत्स महान् पुरुषो नीललोहितः ॥ २६ ॥ त्रिशूल पिङ्गलो देवो नागयज्ञोपवीतवान् ॥ तं प्राह भगवान् ब्रह्मा शङ्करं नीललोहितम् ॥ २७ ॥ ज्ञानाय पूर्वं भवतो ललाटादद्य शंकरम् ॥ प्रादुर्भूतं महेशानं मामतः शरणं व्रज ॥ २८ ॥ श्रुत्वा सगर्ववचनं पद्मयोनेरथेश्वरः ॥ प्राहिणोत्पुरुषं कालं भैरवं लोकदाहकम् ॥ २९ ॥ स कृत्वा सुमहद्युद्धं ब्रह्मणा कालभैरवः ॥ प्रचकर्त्तास्य वदनं विरिञ्चस्याथ पञ्चमम् ॥ ३० ॥ निकृत्तवदनो देवो ब्रह्मा देवेन शम्भुना ॥ ममार चेशो योगेन जीवितं प्राप विश्वधृक् ॥ ३१ ॥ अथान्वपश्यदीशानं मण्डलान्तरसंस्थितम् ॥ समासीनं महादेव्या महादेवं

१ तन्मध्यसंस्थं विमलं मण्डलमिति पा० । २ जानामि भगवान् पूर्वमिति, जानामि पूर्वं भगवन्निति पा० । ३ अथान्वपश्यद्गिरिशमिति पा० ।

सनातनम् ॥ ३२ ॥ भुजङ्गराजवलयं चन्द्रावयवभूषणम् ॥ कोटिसूर्यप्रतीकाशजटाजूटविराजितम् ॥३३ ॥ शार्दूलचर्मवसनं दिव्यमाला समन्वितम् ॥ त्रिशूलपाणिं दुष्प्रेक्ष्यं योगिनं भूतिभूषणम् ॥ ३४ ॥ यमन्तरा योगनिष्ठाः प्रपश्यन्ति हृदीश्वरम् ॥ तमादिमेकं ब्रह्माणं महादेवं ददर्श ह ॥३५॥ यस्य सा परमा देवी शक्तिराकाशसंज्ञिता ॥ सोऽनन्तैश्वर्ययोगात्मा महेशो दृश्यते किल ॥ ३६ ॥ यस्याशेषजगद्बीजं विलयं याति मोहनम् ॥ सकृत्प्रणाममात्रेण स रुद्रः खलु दृश्यते ॥ ३७ ॥ येऽथ नाचारनिरतास्तद्भक्ताश्चैव केवलम् ॥ विमोचयति लोकात्मा नायको दृश्यते किल॥ ३८ ॥ यस्य ब्रह्मादयो देवा ऋषयो ब्रह्मवादिनः ॥ अर्चयन्ति सदा लिंगं स शिवः खलु दृश्यते ॥ ३९ ॥ यस्याशेषजगत्सूतिर्विज्ञानतनुरीश्वरः ॥ न मुञ्चति सदा पार्श्वं शंकरोऽसौ च दृश्यते ॥ ४० ॥ विद्या सहायो भगवान्यस्यासौ मण्डलान्तरम् ॥ हिरण्यगर्भपुत्रोऽसौ ईश्वरो दृश्यते परः ॥ ४१ ॥ पुष्पं वा यदि वा पत्रं यत्पादयुगले जलम् ॥ दत्त्वा तरति संसारं रुद्रोऽसौ दृश्यते किल ॥ ४२ ॥ तत्सन्निधाने सकलं नियच्छति सनातनः ॥ कालं किल नियोगात्मा कालः कालो हि दृश्यते ॥४३॥ जीवनं सर्वलोकानां त्रिलोकस्यैव भूषणम् ॥ सोमः स दृश्यते देवः सोमो यस्य विभूषणम् ॥४४ ॥ देव्या सह सदा साक्षाद्यस्य योगस्वभावतः ॥ गीयते परमा मुक्तिर्महादेवः स दृश्यते ॥ ४५ ॥ योगिनो योगतत्त्वज्ञा वियोगाभिमुखोऽनिशम् ॥ योगं ध्यायन्ति देव्यासौ स योगी दृश्यते किल ॥ ४६ ॥ सोऽनुवीक्ष्य महादेवं महादेव्या सनातनम् ॥ वरासने समासीनमवाप परमां स्मृतिम् ॥ ४७ ॥ लब्ध्वा माहेश्वरीं दिव्यां संस्मृतिं भगवानजः ॥ तोषयामास वरदं सोमं सोमार्द्धभूषणम् ॥ ४८ ॥ ब्रह्मोवाच ॥ नमो देवाय महते महादेव्यै नमो नमः ॥ नमः शिवाय शान्ताय शिवायै सततं नमः ॥ ४९ ॥ ओं नमो ब्रह्मणे तुभ्यं विद्यायै ते नमो नमः ॥ महेशाय नमस्तुभ्यं मूलप्रकृतये नमः ॥ ५० ॥ नमो विज्ञानदेहाय चिन्तायै ते नमो नमः ॥ नमोऽस्तु कालकालाय ईश्वरायै नमो नमः ॥ ५१ ॥ नमो नमोऽस्तु रुद्राय रुद्राण्यै ते नमो नमः ॥ नमो नमस्ते कालाय मायायै ते नमो नमः ॥ ५२ ॥ नियन्त्रे सर्वकार्याणां क्षोभिकायै नमो नमः ॥ नमोस्तु

१ मूलप्रकृतये तुभ्यं महेशाय नमो नमः इति, नमोमूलप्रकृतये महेशाय नमोनम इति पा० । २ नमस्ते कालकालय मायै ते नमोनमः इति पा० ।

ते प्रकृतये नमो नारायणाय च ॥ ५३ ॥ योगदाय नमस्तुभ्यं योगिनां गुरवे नमः ॥ नमः संसारवासाय[1] संसारोत्पत्तये नमः ॥ ५४ ॥ नित्यानन्दाय विभवे नमोऽस्त्वानन्दमूर्त्तये ॥ नमः कार्यविहीनाय विश्वप्रकृतये नमः ॥ ५५ ॥ ओंकार मूर्त्तये तुभ्यं तदन्तःसंस्थिताय च ॥ नमस्ते व्योमसंस्थाय व्योमशक्त्यै नमो नमः ॥ ५६ ॥ इति सोमाष्टकेनेशं प्रणिपत्य पितामहः ॥ पपात दण्डवद्भूमौ गृणन्वै शतरुद्रियम् ॥ ५७ ॥ अथ देवो महादेवः जगतार्त्तिहरो हरः ॥ प्रोवाचोत्थाप्य हस्ताभ्यां प्रीतोऽस्मि तव साम्प्रतम् ॥ ५८ ॥ दत्वास्मै परमं योगमैश्वर्यमतुलं महत् ॥ प्रोवाचाग्रस्थितं[2] रुद्रं नीललोहितमीश्वरम् ॥ ५९ ॥ एष ब्रह्मास्य जगतः संपूज्यः प्रथमः स्थितः ॥ आत्मना रक्षणीयस्ते गुणज्येष्ठः पिता तव ॥ ६० ॥ ॥ अयं पुराणः पुरुषो न हन्तव्य स्त्वयानघ ॥ स योगैश्वर्यमाहात्म्यान्मामेव शरणङ्गतः ॥ ६१ ॥ अयञ्च[3] यज्ञो गर्वोऽसौ सगर्वो भवतानघ ॥ शासितव्यो विरिञ्चस्य धारणीयं शिरस्त्वया ॥ ६२ ॥ ब्रह्महत्यापनोदार्थं व्रतं लोके प्रदर्शयन् ॥ चरस्व सततं भिक्षां संस्थापय सुरद्विजान् ॥ ६३ ॥ इत्येत दुक्त्वा वचनं भगवान् परमेश्वरम् ॥ स्थानं स्वाभाविकं दिव्यं ययौ तत्परमम्पदम् ॥ ६४ ॥ ततः स भगवानीशः कपर्दी नीललोहितः ॥ ग्राहयामास वदनं ब्रह्मणः कालभैरवम् ॥ ६५ ॥ चर त्वं पापनाशार्थं व्रतं लोके हितावहम् ॥ कपालहस्तो भगवान् भिक्षां गृह्णातु सर्वतः ॥ ६६ ॥ उक्त्वैवं प्राहिणोत्कन्यां ब्रह्महत्येति विश्रुताम् ॥ दंष्ट्राकरालवदनां ज्वालामालाविभूषणाम् ॥ ६७ ॥ यावद्वाराणसीं दिव्यां पुरीमेष गमिष्यति ॥ तावद्विभीषणाकारा[4] ह्यनुगच्छ त्रिशूलिनम् ॥ ६८ ॥ एवमाभाष्य कालाग्निं प्राह लोकमहेश्वरम् ॥ अटस्व लोकानखिलान् भैक्षार्थी मन्नियोगतः ॥ ६९ ॥ यदा द्रक्ष्यसि देवेशं नारायणमनामयम् ॥ तदासौ वक्ष्यति स्पष्टमुपायं पाप शोधनम् ॥ ७० ॥ स देवदेवतावाक्यमाकर्ण्य भगवान् हरः ॥ कपालपाणिर्विश्वात्मा चचार भुवनत्रयम् ॥ ७१ ॥ आस्थाय विकृतं

---

१ संसारनाशाय इति पा० । २ प्रोवाचान्ते स्थितं देवमिति, प्रोवाचाग्रेस्थितं रुद्रमिति, प्रोवाचाग्रस्थितमिति पा० । ३ अयञ्च यज्ञो भगवान् सङ्गत इति, अयञ्च यज्ञे इति पा० । ४ तावत्त्वं भीषणे कालमनुगच्छ त्रिलोचनमिति, भीषणं कालमनुच्छस्व शूलिनमिति पा० ।

वेषं दीप्यमानं स्वतेजसा ॥ श्रीमत्पवित्रं रुचिरं लोचनत्रयसंयुतम् ॥ ७२ ॥ सहस्रसूर्यप्रतिमं सिद्धैः प्रमथपुङ्गवैः ॥ भाति कालाग्निनयनो महादेवः समावृतः ॥ ७३ ॥ पीत्वा तदमृतं दिव्यमानन्दम्परमेष्ठिनः ॥ लीलाविलासबहुलो लोकानागच्छतीश्वरः ॥ ७४ ॥ तन्दृष्ट्वा कालवदनं शङ्करं कालभैरवम् ॥ रूपलावण्यसम्पन्नं नारीकुलमगादनु ॥ ७५ ॥ गायन्ति गीतैर्विविधैर्नृत्यन्ति पुरतः प्रभोः ॥ सस्मितं प्रेक्ष्य वदनञ्चक्रुर्भ्रूभङ्गमेव च ॥ ७६ ॥ स देवदानवादीनां देशानभ्येत्य शूलधृक् ॥ जगाम विष्णोर्भुवनं यत्रास्ते पुरुषोत्तमः ॥ ७७ ॥ सम्प्राप्य दिव्यभवनं शङ्करो लोकशंकरः ॥ सहैव भूतप्रवरैः प्रवेष्टुमुपचक्रमे ॥ ७८ ॥ अविज्ञाय परं भावं दिव्यं तत्पारमेश्वरम् ॥ न्यवारयत्त्रिशूलांकं द्वारपालो महाबलः ॥ ७९ ॥ शङ्खचक्रगदापाणिः पीतवासा महाभुजः ॥ विष्वक्सेन इति ख्यातो विष्णोरंशसमुद्भवः ॥ ८० ॥ ( अथ तं शंकरगणं युयुधे विष्णुसंभवः ॥ भीषणो भैरवादेशात्कालवेग इति स्मृतः ॥ ) विजित्य तं कालवेगं क्रोधसंरक्तलोचनः ॥ दुद्रावाभिमुखं रुद्रं चिक्षेप च सुदर्शनम् ॥ ८१॥ अथ देवो महादेवस्त्रिपुरारिस्त्रिशूलभृत् ॥ तमापतन्तं सावज्ञमालोकयदमित्रजित् ॥ ८२ ॥ तदन्तरे महद्भूतं युगान्तदहनोपमम् ॥ शूलेनोरसि निर्भिद्य पातयामास तं भुवि ॥ ८३॥ स शूलाभिहतोऽत्यर्थं त्यक्त्वा स्वम्परमं बलम् ॥ तत्याज जीवितं दृष्ट्वा मृत्युं व्याधिहता इव ॥ ८४ ॥ निहत्य विष्णुपुरुषं सार्द्धं प्रमथपुङ्गवैः ॥ विवेश चान्तरगृहं समादाय कलेवरम् ॥ ८५ ॥ वीक्ष्य तं जगतो हेतुमीश्वरं भगवान्हरिः ॥ शिरां ललाटात्सम्भिद्य रक्तधारामपातयत् ॥ ८६ ॥ गृहाण भिक्षां भगवन् मदीयाममितद्युते ॥ न विद्यतेऽन्या ह्युचिता तव त्रिपुरमर्दन ॥ ८७ ॥ न सम्पूर्णं कपालं तद्ब्रह्मणः परमेष्ठिनः ॥ दिव्यं वर्षसहस्रं तु सा च धारा प्रवाहिता ॥ ८८ ॥ अथाब्रवीत्कालरुद्रं हरिर्नारायणः प्रभुः ॥ संस्तूय विविधैर्भावैर्बहुमानपुरःसरम् ॥ ८९ ॥ किमर्थमेतद्वदनं ब्रह्मणो भवता धृतम् ॥ प्रोवाच वृत्तमखिलं देवदेवो महेश्वरः ॥ ९० ॥ समाहूय हृषीकेशो ब्रह्महत्यामथाच्युतः ॥ प्रार्थयामास भगवान्विमुञ्चेति त्रिशूलिनम् ॥ ९१ ॥ न तत्याजाथ सा पार्श्वं व्याहृतापि मुरारिणा ॥ चिरं ध्यात्वा जगद्योनिं

१ कोटिसूर्यप्रतीकाशैः प्रमथैश्चातिगर्वितैरिति पा० । २ लोकानां गतिरीश्वर इति पा० । ३ निरीक्ष्य भवनं दिव्यमिति पा० । ४ संस्तूय वैदिकैर्मन्त्रैरिति पा० ।

शङ्करं प्राह सर्ववित् ॥ ९२ ॥ व्रजस्व दिव्यां भगवन्पुरीं वाराणसीं शुभाम् ॥ यत्राखिलजगद्दोषात्क्षिप्रन्नाशयतीश्वरः ॥ ९३ ॥ ततः सर्वाणि भूतानि तीर्थान्यायतनानि च ॥ जगाम लीलया देवो लोकानां हितकाम्यया ॥ ९४ ॥ संस्तूयमानः प्रमथैर्महायोगैरितस्ततः ॥ नृत्यमानो महायोगी हस्तन्यस्तकलेवरः ॥ ९५ ॥ तमभ्यधावद्भगवान्हरिर्नारायणः प्रभुः ॥ समास्थाय परं रूपं नृत्यदर्शनलालसः ॥ ९६ ॥ निरीक्षमाणो गोविन्दं वृषेन्द्रांकितशासनः ॥ सस्मयोऽनन्तयोगात्मा नृत्यति स्म पुनः पुनः ॥ ९७ ॥ अनु चानुचरो रुद्रं स हरिर्धर्मवाहनः ॥ भेजे महादेवपुरीं वाराणसीति विश्रुताम् ॥ ९८ ॥ प्रविष्टमात्रे विश्वेशे ब्रह्महत्या कपर्दिनि ॥ हाहेत्युक्त्वा सनादं वै पातालं प्राप दुःखिता ॥ ९९ ॥ प्रविश्य परमं स्थानं कपालं ब्रह्मणो हरः ॥ गणानामग्रतो देवः स्थापयामास शंकरः ॥ १०० ॥ स्थापयित्वा महादेवो ददौ तच्च कलेवरम् ॥ उक्त्वा सजीवमस्त्विति विष्णवेऽसौ घृणानिधिः ॥ १०१ ॥ ये स्मरन्ति ममाजस्रं कापालं वेषमुत्तमम् ॥ तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम् ॥ १०२ ॥ आगम्य तीर्थप्रवरे स्नानं कृत्वा विधानतः ॥ तर्पयित्वा पितॄन्देवान्मुच्यते ब्रह्महत्यया ॥ १०३ ॥ अशाश्वतं जगज्ज्ञात्वा व्रजध्वं परमां पुरीम् ॥ देहान्ते तत्परं ज्ञानं ददाति परमम्पदम् ॥ १०४ ॥ इतीदमुक्त्वा भगवान् समालिङ्ग्य जनार्दनम् ॥ सहैव प्रमथेशानैः क्षणादन्तरधीयत ॥ १०५ ॥ स लब्ध्वा भगवान्कृष्णो विष्वक्सेनं त्रिशूलिनः ॥ स्वन्देशमगमत्तूष्णीं गृहीत्वा परमं वपुः ॥ १०६ ॥ एतद्वः कथितं पुण्यं महापातकनाशनम् ॥ कपालमोचनन्तीर्थं स्थाणोः प्रियकरं शुभम् ॥ १०७ ॥ य इमं पठतेऽध्यायं ब्राह्मणानां समीपतः ॥ मानसैर्वाचिकैः पापैः कायिकैश्च प्रमुच्यते ॥ १०८ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे कपालमोचनमाहात्म्यं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥ पुनः प्रायश्चित्तप्रकरणम् ॥ व्यास उवाच ॥ सुरापस्तु सुरां तप्तामग्निवर्णां पिबेत्तदा ॥ निर्दग्धकायः स तया मुच्यते च द्विजोत्तमः ॥ १ ॥

१ अथास्थायापरं रूपं रुद्रं दर्शनलालसमिति पा० । २ अथ सानुचरो देवः ससहायः सवाहन इति, अथ सानुचरो रुद्रः स हरिर्धर्मवाहन इति पा० । ३ येऽस्मिन्स्थाने वसन्ति वै इति पा० । ४ तया स काये निर्दग्धे मुच्यते तु द्विजोत्तमा इति पा० ।

गोमूत्रमग्निवर्णं वा गोशकृद्रसमेव वा ॥ पयो घृतं जलं वाथ मुच्यते पातकात्ततः ॥ २ ॥ जलार्द्रवासाः प्रयतो ध्यात्वा नारायणं हरिम् ॥
ब्रह्महत्याव्रतश्चाथ चरेत्पापप्रशान्तये ॥३॥ सुवर्णस्तेयकृद्विप्रो राजानमभिगम्य तु ॥ स्वकर्म ख्यापयन्ब्रूयान्मा भवाननुशास्त्विति॥४॥
गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् ॥ वधे तु शुद्ध्यते स्तेनो ब्राह्मणस्तपसाथवा ॥ ५ ॥ स्कन्धेनादाय मुसलं लगुडं वापि खादि
रम् ॥ शक्तिश्चादाय तीक्ष्णाग्रामायसं दण्डमेव वा ॥ ६ ॥ राजा तेन च गन्तव्यो मुक्तकेशेन धावता ॥ आचक्षाणेन तत्पापमेतत्कर्मास्मि
शाधि माम् ॥ ७ ॥ शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ॥ अशासित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषम् ॥८॥ [1]तपसा
पनोतुमिच्छंस्तु सुवर्णस्तेयजं मलम् ॥ चीरवासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥ ९ ॥ स्नात्वाश्वमेधावभृथे पूतः स्यादथवा द्विजः ॥
प्रदद्याद्वाथ विप्रेभ्यः स्वात्मतुल्यं हिरण्यकम् ॥ १० ॥ चरेद्वा वत्सरं कृच्छ्रं ब्रह्मचर्यपरायणः ॥ ब्राह्मणः स्वर्णहारी तु तत्पापस्यापनु
त्तये ॥ ११ ॥ गुरोर्भार्यां समारुह्य ब्राह्मणः काममोहितः ॥ अवगूहेत्स्त्रियं तप्तां दीप्तां कार्ष्णायसीं कृताम् ॥ १२ ॥ स्वयं वा शिश्न
वृषणावुत्कृत्याधाय चाञ्जलौ ॥ [2]अभिगच्छेद्दक्षिणाशामानिपातादजिह्मगः ॥ १३ ॥ गुर्वङ्गनागमः शुद्ध्यै चरेद्ब्रह्महणो व्रतम् ॥ शाखां वा
कण्टकोपेतां परिष्वज्याथ वत्सरम् ॥ १४ ॥ अधःशयीत नियतो मुच्यते गुरुतल्पगः ॥ कृच्छ्रं वाब्दं चरेद्विप्रश्चीरवासाः समाहितः
॥ १५ ॥ अश्वमेधावभृथके स्नात्वा वा शुद्ध्यते द्विजः ॥ कालेऽष्टमे वा भुञ्जानो ब्रह्मचारी सदा व्रती ॥१६ ॥ स्थानाशनाभ्यां विहरं
स्त्रिरह्नोऽभ्युपयन्नतः ॥ अधःशायी त्रिभिर्वर्षैस्तद्व्यपोहति पातकम् ॥ १७ ॥ चान्द्रायणानि वा कुर्यात्पञ्च चत्वारि वा पुनः ॥
पतितैः संप्रयुक्तात्मा अथ वक्ष्यामि निष्कृतिम् ॥ १८ ॥ पतितेन तु संसर्गं यो येन कुरुते द्विजः ॥ स [3]तत्पापापनोदार्थं तस्यैव व्रत
माचरेत् ॥१९॥ तप्तकृच्छ्रञ्चरेद्वाथ संवत्सरमतन्द्रितः ॥ षाण्मासिके तु संसर्गे प्रायश्चित्तार्थमाचरेत् ॥ २० ॥ एभिर्व्रतैरपोहन्ति महा
पातकिनो मलम् ॥ पुण्यतीर्थाभिगमनात्पृथिव्यां वाथ निष्कृतिः ॥ २१ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमम् ॥ कृत्वा तैश्चापि

१ तपसापनयेत् यस्तु इति पा० । २ आतिष्ठेद्दक्षिणामशामिति, प्रतिष्ठत् इति साधु पा० । ३ तत्पापापनाशार्थमिति पा० ।

संसर्गी ब्राह्मणः कामचारतः ॥ २२ ॥ कुर्यादनशनं विप्रः पुनस्तत्तीर्थे समाहितः ॥ ज्वलन्तं वा विशेदग्निं ध्यात्वा देवं कपर्दिनम् ॥ २३ ॥ न ह्यन्या निष्कृतिर्दृष्टा मुनिभिर्धर्मवादिभिः ॥ तस्मात्पुण्येषु तीर्थेषु दहन्वापि स्वदेहकम् ॥ २४ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे द्वात्रिंशोऽध्यायः ॥ ३२ ॥ पुनः प्रायश्चित्तकथनम् ॥ व्यास उवाच ॥ गत्वा दुहितरं विप्रः स्वसारं वा स्नुषामपि ॥ प्रविशेज्ज्वलनन्दीप्तं मतिपूर्वमिति स्थितिः ॥ १ ॥ मातृष्वसां[1] मातुलानीं तथैव च पितृष्वसाम्[2] ॥ भागिनेयीं समारुह्य कुर्यात्कृच्छ्रातिकृच्छ्रकौ ॥ २ ॥ चान्द्रायणञ्च कुर्वीत तस्य पापस्य शान्तये ॥ ध्यायन्देवं जगद्योनिमनादिनिधनं हरिम् ॥ ३ ॥ भ्रातृभार्यां समारुह्य कुर्यात्तत्पाप शान्तये ॥ चान्द्रायणानि चत्वारि पञ्च वा सुसमाहितः ॥ ४ ॥ पितृष्वस्रेयीं[3] गत्वा तु स्वस्रीयां मातुरेव च ॥ मातुलस्य सुतां वापि गत्वा चान्द्रायणं चरेत् ॥ ५ ॥ सखिभार्यां समारुह्य गत्वा श्यालीं तथैव च ॥ अहोरात्रोषितो भूत्वा ततः कृच्छ्रं समाचरेत् ॥ ६ ॥ उदक्या गमने विप्रस्त्रिरात्रेण विशुध्यति ॥ चाण्डालीगमने चैव तप्तकृच्छ्रत्रयं विदुः ॥ ७ ॥ शुद्धिः सान्तपनेन स्यान्नान्यथा निष्कृतिः स्मृता ॥ मातृगोत्रां समारुह्य समानप्रवरां तथा ॥ ८ ॥ चान्द्रायणेन शुध्येत प्रयतात्मा समाहितः ॥ ब्राह्मणो ब्राह्मणीङ्गत्वा कृच्छ्रमेकं समाचरेत् ॥ ९ ॥ कन्यकान्दूषयित्वा तु चरेच्चान्द्रायणव्रतम् ॥ अमानुषीषु पुरुष उदक्यायामयोनिषु ॥ १० ॥ रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनं चरेत् ॥ वार्द्धिकीगमने विप्रस्त्रिरात्रेण विशुद्ध्यति ॥ ११ ॥ गवि मैथुनमासेव्य चरेच्चान्द्रायणव्रतम् ॥ वेश्यायां मैथुनं कृत्वा प्राजापत्यं चरेद्द्विजः ॥१२॥ पतितां च स्त्रियङ्गत्वा त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥ पुल्कसीगमने चैव कृच्छ्रं चान्द्रायणं चरेत् ॥१३॥ नटीं शैलूषकीं चैव रजकीं वेणुजीविनीम् ॥ गत्वा चान्द्रायणङ्कुर्यात्तथा चर्मोपजीविनीम् ॥ १४ ॥ ब्रह्मचारी स्त्रियङ्गच्छेत्कथञ्चित्काममोहितः ॥ सप्तागारं चरेद्भैक्षं वसित्वा गर्दभाजिनम् ॥१५॥ उपस्पृशेत्त्रिषवणं स्वपापं परिकीर्त्तयन् ॥ संवत्सरेण चैकेन तस्मात्पापात् प्रमुच्यते ॥ १६ ॥ ब्रह्महत्याव्रतश्चापि[4] षण्मासान्विचरन्यमी ॥ मुच्यते ह्यवकीर्णी तु ब्राह्मणानुमते स्थितः ॥ १७ ॥

---

१ मातृष्वसारमिति साधु। २ पितृष्वसारमिति साधु। ३ पितृष्वसेयां चत्वारिपञ्च वा मातुरेव च इति पा०। ४ ब्रह्महत्याव्रतं वापि षण्मासानाचरेद्यतिः इति पा०।

सप्तरात्रमकृत्वा तु भैक्षचर्याग्निपूजनम् ॥ रेतसश्च समुत्सर्गे प्रायश्चित्तं समाचरेत् ॥ १८ ॥ ओंकारपूर्विकाभिस्तु महाव्याहृतिभिः सदा ॥ संवत्सरन्तु भुञ्जानो नक्तं भिक्षाशनः शुचिः ॥ १९ ॥ सावित्रीञ्च जपेन्नित्यं सत्वरः क्रोधवर्जितः ॥ नदीतीरेषु तीर्थेषु तस्मात् पापाद्विमुच्यते ॥ २० ॥ हत्वा तु क्षत्रियं विप्रः कुर्याद्ब्रह्महणो व्रतम् ॥ अकामतो वै षण्मासान्दद्यात्पञ्चशतङ्गवाम् ॥ २१ ॥ अब्दं चरेद्ध्यानयुतो वनवासी समाहितः ॥ प्राजापत्यं सान्तपनं तप्तकृच्छ्रन्तु वा स्वयम् ॥ २२ ॥ प्रमादात्कामतो वैश्यं कुर्यात्संवत्सरत्रयम् ॥ गोसहस्रन्तु पादन्तु प्रदद्याद्ब्रह्मणो व्रतम् ॥ २३ ॥ कृच्छ्रातिकृच्छ्रौ वा कुर्याच्चान्द्रायणमथापि वा ॥ संवत्सरं व्रतं कुर्याच्छूद्रं हत्वा प्रमादतः ॥ २४ ॥ गोसहस्रार्द्धपादञ्च दद्यात्तत्पापशान्तये ॥ अष्टौ वर्षाणि वा त्रीणि कुर्याद् ब्रह्महणो व्रतम् ॥ हत्वा तु क्षत्रियं वैश्यं शूद्रं चैव यथाक्रमम् ॥ २५ ॥ निहत्य ब्राह्मणीं विप्रस्त्वष्टवर्षं व्रतञ्चरेत् ॥ राजन्यां वर्षषट्कं तु वैश्यां संवत्सरत्रयम् ॥ २६ ॥ वत्सरेण विशुद्धचेत शूद्रीं हत्वा द्विजोत्तमः ॥ वैश्यां हत्वा द्विजातिस्तु किञ्चिद्दद्याद्विजातये ॥ २७ ॥ अन्त्यजानां वधे चैव कुर्याच्चान्द्रायणं व्रतम् ॥ पराकेणाथवा शुद्धिरित्याह भगवानजः ॥ २८ ॥ मण्डूकं नकुलङ्काकं बिडालं खरमूषकौ ॥ श्वानं हत्वा द्विजः कुर्यात्षोडशांशं महाव्रतम् ॥ २९ ॥ पयः पिबेत्त्रिरात्रन्तु श्वानं हत्वा ह्यतन्द्रितः ॥ मार्ज्जारं वाथ नकुलं योजनञ्चाध्वनो व्रजेत् ॥ ३० ॥ कृच्छ्रं द्वादशरात्रन्तु कुर्यादश्ववधे द्विजः ॥ अर्च्चां कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः ॥ ३१ ॥ पलालभारकं षण्ढे सीसकञ्चैकमाषकम् ॥ घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरे ॥ ३२ ॥ शुकं द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ॥ हत्वा हंसं बलाकाञ्च बकं बर्हिणमेव च ॥ ३३ ॥ वानरं श्येनभासञ्च स्पर्शयेद्ब्राह्मणाय गाम् ॥ क्रव्यादांस्तु मृगान्हत्वा धेनुन्दद्यात्पयस्विनीम् ॥ ३४ ॥ अक्रव्यादान्वत्सतरीमुष्ट्रं हत्वा तु कृष्णलम् ॥ किञ्चिद्देयन्तु विप्राय दद्यादस्थिमतां वधे ॥ ३५ ॥ अनस्थनाञ्चैव हिंसायां प्राणायामेन शुध्यति ॥ फलदानान्तु वृक्षाणां

१ जपेच्चैव नित्यं क्रोधं विवर्जयेदिति पा० । २ दद्याद्ब्रह्महणो व्रतीति पा० ।

छेदने जप्यमृक्शतम् ॥ ३६ ॥ गुल्मवल्लीलतानान्तु पुष्पितानाञ्च वीरुधाम् ॥ अण्डजानां च सर्वेषां स्वेदजानां च सर्वशः ॥ ३७ ॥ फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनम् ॥ हस्तिनाञ्च वधे दृष्टं तप्तकृच्छ्रं विशोधनम् ॥ ३८ ॥ चान्द्रायणं पराकं वा गां हत्वा तु प्रमादतः ॥ मतिपूर्ववधे चास्याः प्रायश्चित्तं न विद्यते ॥ ३९ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे प्रायश्चित्तनिरूपणे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

तदेव ॥ व्यास उवाच ॥ मनुष्याणान्तु हरणं कृत्वा स्त्रीणां गृहस्य च ॥ वापीकूपजलानाञ्च शुद्ध्येच्चांद्रायणेन तु ॥ १ ॥ द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मनः ॥ चरेत्सांतपनं कृच्छ्रं तन्निर्यात्यात्मशुद्धये ॥२॥ धान्यान्नधनचौर्यन्तु कृत्वा कामाद्द्विजोत्तमः ॥ स्वजातीयगृहादेव कृच्छ्राद्धेन विशुध्यति ॥ ३ ॥ भक्ष्यभोज्योपहरणे यानशय्यासनस्य च ॥ पुष्पमूलफलानाञ्च पंचगव्यं विशोधनम् ॥ ४ ॥ तृणकाष्ठद्रुमाणां च शुष्कान्नस्य गुडस्य च ॥ चैलचर्मामिषाणां च त्रिरात्रं स्यादभोजनम् ॥ ५ ॥ मणिमुक्ताप्रवालानां ताम्रस्य रजतस्य च ॥ अयस्कांतोपलानाञ्च द्वादशाहं कणाशनम् ॥ ६ ॥ कांर्पासस्यैव हरणे द्विशफैकशफस्यच ॥ पुष्पगन्धौषधीनाञ्च पिबेच्चैव त्र्यहं पयः ॥ ७ ॥ नरमांसाशनं कृत्वा चान्द्रायणमथाचरेत् ॥ काकञ्चैव तथा श्वानञ्जग्ध्वा हस्तिनमेव वा ॥ ८ ॥ वराहं कुक्कुटं वाथ तप्तकृच्छ्रेण शुध्यति ॥ क्रव्यादानाञ्च मांसानि पुरीषं मूत्रमेव वा ॥ ९ ॥ गोगोमायुकपीनां च तदेव व्रतमाचरेत् ॥ शिशुमारन्तथा चाषं मत्स्यमांसं तथैव च ॥ १० ॥ उपोष्य द्वादशाहञ्च कूष्माण्डैर्जुहुयाद्घृतम् ॥ नकुलोलूकमार्जाराञ्जग्ध्वा सान्तपनं चरेत् ॥ ११ ॥ श्वापदोष्ट्रखराञ्जग्ध्वा तप्तकृच्छ्रेण शुध्यति ॥ प्रकुर्याच्चैव संस्कारं पूर्वेण विधिनैव तु ॥ १२ ॥ बकं चैव बलाकाञ्च हंसकारण्डवांस्तथा ॥ चक्रवाकप्लवं जग्ध्वा द्वादशाहमभोजनम् ॥ १३ ॥ कपोतटिट्टिभांश्चैव शुकं सारसमेव च ॥ उलूकं जालपादञ्च जग्ध्वाप्येतद्व्रतञ्चरेत् ॥ १४ ॥ शिशुमारं तथा चाषं मत्स्यमांसं तथैव च ॥ जग्ध्वा चैव कटाहारमेतदेव व्रतं चरेत् ॥ १५ ॥ कोकिलं चैव मत्स्यादान्मण्डूकं भुजगन्तथा ॥

१ अण्डजानाञ्च सत्वानामिति, अन्नजानान्तु सत्त्वानामिति पा० । २ राजसानाञ्चेति, अण्डजानान्तु सर्वश इति पा० । ३ कार्पासकीटजोर्णानामिति, कार्पासक्षौमवस्त्राणामिति पा० । ४ व्रतवच्चैनेति पा० ।

गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति ॥१६॥ जलेचरांश्च जलजान्प्रणुदानथ विष्किरान् ॥ रक्तपादांस्तथा जग्ध्वा सप्ताहं चैतदाचरेत् ॥ १७ ॥ शुनो मांसं शुष्कमांसमात्मार्थं च तथा कृतम् ॥ भुक्त्वा मासं चरेदेतत्तत्पापस्यापनुत्तये ॥१८॥ वृन्ताकं भूस्तृणे शिग्रुं कुटकं[1] चटकं तथा ॥ प्राजापत्यं चरेज्जग्ध्वा खड्गं कुम्भीकमेव च ॥ १९ ॥ पलाण्डुं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ॥ नालिकां तण्डुलीयं च प्राजापत्येन शुध्यति ॥ २० ॥ अश्मान्तकं तथा पोतं तप्तकृच्छ्रेण शुध्यति ॥ प्राजापत्येन शुद्धिः स्यात्कुसुम्भस्य च भक्षणे ॥ २१ ॥ अलाबुङ्किंशुकञ्चैव भुक्त्वाप्येतद्व्रतञ्चरेत् ॥ एतेषाञ्च विकाराणि पीत्वा मोहेन वा पुनः ॥ २२ ॥ गोमूत्रयावकाहारः स[2]प्तरात्रेण शुध्यति ॥ उदुम्बरञ्च कामेन तप्तकृच्छ्रेण शुध्यति ॥ भुक्त्वा चैव नवश्राद्धे मृतके सूतके तथा ॥ २३ ॥ चान्द्रायणेन शुद्ध्येत ब्राह्मणः सुसमाहितः॥ यस्याग्नौ हूयते नित्यमन्नस्याग्रं न दीयते ॥ २४ ॥ चांद्रायणञ्चरेत्सम्यक् तस्यान्नप्राशने द्विजः ॥ अभोज्यान्नन्तु सर्वेषां भुक्त्वा चान्नमुपस्कृतम् ॥ २५ ॥ अन्तावसायिनाञ्चैव तप्तकृच्छ्रेण शुद्ध्यति ॥ चण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणञ्चरेत् ॥ २६ ॥ बुद्धिपूर्वन्तु कृच्छ्राब्दं पुनः संस्कारमेव च ॥ अ[3]सुरामद्यपानेन कुर्याच्चान्द्रायणव्रतम् ॥ २७ ॥ अभोज्यान्नन्तु भुक्त्वा च प्राजापत्येन शुध्यति ॥ विण्मूत्रप्राशनं कृत्वा रेतसश्चैतदाचरेत् ॥ २८ ॥ अनादिष्टे तु चैकाहं सर्वत्र तु यथार्थतः ॥ विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः ॥ २९ ॥ प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणं चरेत् ॥ अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ॥ ३० ॥ पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ क्रव्यादां पक्षिणां चैव प्राश्यमूत्रपुरीषकम् ॥ ३१ ॥ महासांतपनं मोहात्तथा कुर्याद्द्विजोत्तमः ॥ भासमण्डूककुररे विष्किरे कृच्छ्रमाचरेत् ॥ ३२ ॥ प्राजापत्येन शुद्ध्येत ब्राह्मणोच्छिष्टभोजने ॥ क्षत्रिये तप्तकृच्छ्रं स्याद्वैश्ये चैवातिकृच्छ्रकम् ॥३३ ॥ शूद्रोच्छिष्टन्द्विजो भुक्त्वा कुर्याच्चान्द्रायणव्रतम् ॥ सुरा[4]या भाण्डके वारि पीत्वा चान्द्रायणञ्चरेत् ॥ ३४ ॥ समुच्छिष्टं द्विजो भुक्त्वा त्रिरात्रेण विशुध्यति ॥ गोमूत्रयावकाहारः पीतशेषञ्च वा गवाम् ॥ ३५ ॥ अपो

१ कुटकं कवकं तथेति, कुभाण्डं करकं तथेति पा० । २ मासेनैव विशुद्धयतीति पा० । ३ असुरामद्यपानेन–सुराभिन्नं मद्यं पीत्वेत्यर्थः । ४ सुराभाण्डोदरे इति पा० ।

मूत्रपुरीषाद्यैर्दूषिताः प्राशयेद्यदि ॥ तदा सान्तपनं कृच्छ्रं व्रतं पापविशोधनम् ॥३६॥ चाण्डालकूपे भाण्डेषु यदि ज्ञानात्पिबेज्जलम् ॥ चरेत्सांतपनं कृच्छ्रं ब्राह्मणः पापशोधनम् ॥ ३७॥ चाण्डालेन तु संस्पृष्टं पीत्वा वारि द्विजोत्तमः ॥ त्रिरात्रव्रतमुख्येन पञ्चगव्येन शुध्यति ॥ ३८ ॥ महापातकिसंस्पर्शे भुक्त्वा स्नात्वा द्विजो यदि ॥ बुद्धिपूर्वं यदा मोहात्ततकृच्छ्रं समाचरेत् ॥ ३९ ॥ स्पृष्ट्वा महापातकिनं चण्डालञ्च रजस्वलाम् ॥ प्रमादाद्भोजनं कृत्वा त्रिरात्रेण विशुध्यति ॥ ४० ॥ स्नानार्हो यदि भुञ्जीत ह्यहोरात्रेण शुध्यति ॥ बुद्धिपूर्वं तु कृच्छ्रेण भगवानाह पद्मजः ॥ ४१ ॥ भुक्त्वा पर्युषितादीनि गवादिप्रतिदूषिताः ॥ भुक्त्वोपवासङ्कुर्वीत कृच्छ्रपादमथापि वा ॥ ४२ ॥ संवत्सरान्ते कृच्छ्रं तु चरेद्विप्रः पुनः पुनः ॥ अज्ञानभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥ ४३ ॥ व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च ॥ अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्विशुध्यति ॥ ४४ ॥ ब्राह्मणादिहतानां तु कृत्वा दाहादिकं द्विजः ॥ गोमूत्रयावकाहारः प्राजापत्येन शुध्यति ॥ ४५ ॥ तैलाभ्यक्तोऽथ वान्तो वा कुर्यान्मूत्रपुरीषके ॥ अहोरात्रेण शुद्ध्येत श्मश्रुकर्मणि मैथुने ॥ ४६ ॥ एकाहेन विहायाग्निं परिहाप्य द्विजोत्तमः ॥ त्रिरात्रेण विशुद्ध्येत त्रिरात्रात्षडहः परम् ॥ ४७ ॥ दशाहं द्वादशाहं वा परिहाप्यं प्रमादतः ॥ कृच्छ्रं चांद्रायणं कुर्यात्तत्पापस्योपशांतये ॥४८॥ पतितादद्रव्यमादाय तदुत्सर्गेण शुध्यति ॥ चरेच्च विधिना कृच्छ्रमित्याह भगवान्मनुः ॥४९॥ अनाशकान्निवृत्तास्तु प्रव्रज्यावसितास्तथा ॥ चरेयुस्त्रीणि कृच्छ्राणि त्रीणि चांद्रायणानि च ॥ ५० ॥ पुनश्च जातकर्मादिसंस्कारैः संस्कृता द्विजाः ॥ शुद्ध्येयुस्तद्व्रतं सम्यक्चरेयुर्धर्मदर्शिनः ॥ ५१ ॥ अनुपासितसन्ध्यस्तु तदहर्यावके भवेत् ॥ अनश्नन् संयतमना रात्रौ चेद्रात्रिमेव हि ॥ ५२ ॥ अकृत्वा समिदाधानं शुचिः स्नात्वा समाहितः ॥ गायत्र्यष्टसहस्रस्य जप्यं कुर्याद्विशुद्धये ॥ ५३ ॥ उपवासी चरेत्सन्ध्यां गृहस्थो हि प्रमादतः ॥ स्नात्वा विशुद्धयते सद्यः परिश्रांतश्च संयतः ॥ ५४ ॥ वेदोदितानि नित्यानि कर्माणि च

१ पापविनाशनमिति पा० । २ त्रिरात्रेण विशुध्येत पञ्चगव्येन चैव हीति पा० । ३ बुद्धिपूर्वन्तु मूढात्मा ततकृच्छ्रमिति पा० । ४ दाहादिकाः क्रिया इति पा० । ५ परिवार्यं इति पा० । ६ पापस्यापनुत्तये इति पा० । ७ चरेत्सान्तपनमिति पा० ।

विलोप्य तु ॥ स्नातको व्रतलोपं तु कृत्वा चोपवसेद्दिनम् ॥ ५५ ॥ संवत्सरं चरेत्कृच्छ्रमन्योत्सादी द्विजोत्तमः ॥ चांद्रायणं चरेद्व्रात्यो गोप्रदानेन शुद्ध्यति ॥ ५६ ॥ नास्तिक्यं यदि कुर्वीत प्राजापत्यं चरेद्द्विजः ॥ देवद्रोहं गुरुद्रोहं तप्तकृच्छ्रेण शुद्ध्यति ॥ ५७ ॥ उष्ट्रयानं समारुह्य खरयानं च कामतः ॥ त्रिरात्रेण विशुद्ध्येच्च नग्नो वा प्रविशेज्जलम् ॥ ५८ ॥ षष्ठान्नकालता[1] मासं संहिताजप एव च ॥ होमाश्च शाकला[2] नित्यं अपाङ्क्तानां विशोधनम् ॥ ५९ ॥ नीलं रक्तं वसित्वा च ब्राह्मणो वस्त्रमेव हि ॥ अहोरात्रोषितः स्नातः पंचगव्येन शुद्ध्यति ॥ ६० ॥ वेदधर्मपुराणानां चण्डालस्य तु भाषणे ॥ चांद्रायणेन शुद्धिः स्यान्न ह्यन्या तस्य निष्कृतिः ॥ ६१ ॥ उद्बन्धनादिनिहतं संस्पृश्य ब्राह्मणं क्वचित् ॥ चांद्रायणेन शुद्धिः स्यात्प्राजापत्येन वा पुनः ॥ ६२ ॥ उच्छिष्टो यद्यनाचांतश्चाण्डालादीन् स्पृशेद्द्विजः ॥ प्रमादाद्वै जपेत्स्नात्वा गायत्र्यष्टसहस्रकम् ॥ ६३ ॥ द्रुपदानां शतं वापि ब्रह्मचारी समाहितः ॥ त्रिरात्रोपोषितः सम्यक् पंचगव्येन शुद्ध्यति॥६४॥चाण्डालपतितादींस्तु कामाद्यः संस्पृशेद्द्विजः ॥ उच्छिष्टस्तत्र कुर्वीत प्राजापत्यं विशुद्धये॥६५॥ चाण्डालसूतकिशवांस्तथा नारीं रजस्वलाम् ॥ स्पृष्ट्वा स्नायाद्विशुद्ध्यर्थं तत्स्पृष्टपतितांस्तथा ॥ ६६ ॥ चाण्डालसूतकिशवैः संस्पृष्टं संस्पृशेद्यदि ॥ ततः स्नात्वाथ आचम्य जपं कुर्यात्समाहितः ॥ ६७ ॥ तत्स्पृष्टस्पर्शिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः ॥ स्नात्वाचामेद्विशुद्ध्यर्थं प्राह देवः पितामहः ॥ ६८ ॥ भुञ्जानस्य तु विप्रस्य कदाचित्संस्पृशेद्यदि ॥ कृत्वा शौचं ततः स्नायादुपोष्य जुहुयाद्व्रतम् ॥ ६९ ॥ चाण्डालं तु शवं स्पृष्ट्वा कृच्छ्रं कुर्याद्विशुद्ध्यति ॥ स्पृष्ट्वाऽभ्यक्तस्त्वसंस्पृश्य अहोरात्रेण शुद्ध्यति ॥ ७० ॥ सुरां स्पृष्ट्वा द्विजः कुर्यात्प्राणायामत्रयं शुचिः ॥ पलाण्डुं लशुनञ्चैव घृतं प्राश्य ततः शुचिः ॥ ७१ ॥ ब्राह्मणस्तु शुना दष्टस्त्र्यहं सायं पयः पिबेत् ॥ नाभेरूर्द्धन्तु दष्टस्य तदेव द्विगुणं भवेत् ॥ ७२ ॥ स्यादेतात्त्रिगुणं बाह्वोर्मूर्ध्नि च स्याच्चतुर्गुणम् ॥ स्नात्वा जपेद्वा सावित्रीं श्वभिर्दष्टो द्विजोत्तमः ॥ ७३ ॥ अनिर्वर्त्त्य महायज्ञान्यो भुंक्ते तु द्विजोत्तमः ॥ अनातुरः सति धने कृच्छ्रार्द्धेन स शुद्ध्यति[3] ॥ ७४ ॥ आहिताग्निरुपस्थानं न कुर्याद्यस्तु

१ षष्ठान्नकालता अष्टभागविभक्तस्य दिनस्य षष्ठे भागे भोजनशीलता इत्यर्थः । षष्ठान्नकर्षितामिति पा० ।२ शाकलाः शाकलप्रोक्तविधिना सम्पादिताः।३ विनश्यतीति पा० ।

पर्वणि ॥ ऋतौ न गच्छेद्भार्यां वा सोऽपि कृच्छ्रार्द्धमाचरेत् ॥ ७५॥ विनाद्भिरप्सु नाप्यार्त्तः शरीरं सन्निवेश्य च ॥ सचैलो जलमाप्लुत्य गामालभ्य विशुध्यति ॥ ७६ ॥ बुद्धिपूर्वन्त्वभ्युदिते जपेदन्तर्जले द्विजः ॥ गायत्र्यष्टसहस्रं तु त्र्यहं चोपवसेद्द्विजः ॥ ७७ ॥ अनुगम्येच्छया शूद्रं प्रेतीभूतं द्विजोत्तमः ॥ गायत्र्यष्टसहस्रञ्च जपं कुर्यान्नदीषु च ॥ ७८ ॥ कृत्वा तु शपथं विप्रो विप्रस्यावधसंयुतम् ॥ स चैव यावकान्नेन कुर्याच्चान्द्रायणं व्रतम् ॥ ७९ ॥ पङ्क्तौ विषमदानन्तु कृत्वा कृच्छ्रेण शुध्यति ॥ छायां श्वपाकस्यारुह्य स्नात्वा सम्प्राशयेद्घृतम् ॥ ८० ॥ ईक्षेदादित्यमशुचिर्दृष्ट्वाग्निं चन्द्रमेव वा ॥ मानुषंचास्थि संस्पृश्य स्नानं कृत्वा विशुद्ध्यति ॥ ८१ ॥ कृत्वा तु मिथ्याध्ययनं चरेद्भैक्षन्तु वत्सरम् ॥ कृतघ्नो ब्राह्मणगृहे पंचसंवत्सरव्रती ॥८२॥ हुंकारं ब्राह्मणस्योक्त्वा त्वंकारं च गरीयसः ॥ स्नात्वा नाश्नन्नहःशेषं प्रणिपत्य प्रसादयेत् ॥८३॥ ताडयित्वा तृणेनापि कण्ठं बद्ध्वाथ वाससा ॥ विवादे चापि निर्जित्य प्रणिपत्य प्रसादयेत् ॥८४ ॥ अवगूर्य चरत्कृच्छ्रमतिकृच्छ्रं निपातने ॥ कृच्छ्रातिकृच्छ्रौ कुर्वीत विप्रस्योत्पाद्य शोणितम् ॥८५॥ गुरोराक्रोशमनृतं कुर्यात्कृत्वा विशोधनम् ॥ एकरात्रं निराहारः तत्पापस्यापनुत्तये ॥८६॥ देवर्षीणामभिमुखं ष्ठीवनाक्रोशने कृते ॥ उल्मुकेन दहेज्जिह्वां दातव्यं च हिरण्यकम् ॥८७॥ देवोद्यानेषु यः कुर्यान्मूत्रोच्चारं सकृद्द्विजः ॥ छिन्द्याच्छिश्नं विशुध्यर्थं चरेच्चान्द्रायणं व्रतम् ॥ ८८ ॥ देवतायतने मूत्रं कृत्वा मोहाद्द्विजोत्तमः ॥ शिश्नस्योत्कर्त्तनं कृत्वा चान्द्रायणमथाचरेत् ॥ ८९ ॥ देवतानामृषीणां च देवानां चैव कुत्सनम् ॥ कृत्वा सम्यक् प्रकुर्वीत प्राजापत्यं द्विजोत्तमः ॥ ९० ॥ तैस्तु सम्भाषणं कृत्वा स्नात्वा देवं समर्चयेत् ॥ दृष्ट्वा वीक्षेत भास्वन्तं स्मृत्वा विश्वेश्वरं स्मरेत् ॥ ९१ ॥ यः सर्वभूताधिपतिं विश्वेशानं विनिन्दति ॥ न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि ॥ ९२ ॥ चान्द्रायणं चरेत्पूर्वं कृच्छ्रं चैवातिकृच्छ्रकम् ॥ प्रपन्नः शरणं देवं तस्मात्पापाद्विमुच्यते ॥ ९३ ॥ सर्वस्वदानं विधिवत्सर्वपापविशोधनम् ॥ चान्द्रायणं च विधिना कृच्छ्रं चैवाति

१ चोपवसेद्व्रतीति पा० । २ विप्रस्य वधसंयुतमिति पा० । ३ पङ्क्त्यामिति पा० । पंक्त्याविषमदानम्-एकपंक्तिस्थितेभ्यो भोजनं कुर्वद्भ्यो ब्राह्मणेभ्यो विसदृशदानं परिवेषणमित्यर्थः । ४ ईक्षेदित्यार्षम् ईक्षेत इति साधु । ५ एकरात्रं त्रिरात्रं वेति पा० ।

कृच्छ्रकम् ॥ ९४ ॥ पुण्यक्षेत्राभिगमनं सर्वपापविशोधनम् ॥ अमावास्यां तिथिं प्राप्य यः समाराधयेद्भवम् ॥ ९५ ॥ ब्राह्मणान् पूज यित्वा तु सर्वपापैः प्रमुच्यते ॥ ९६ ॥ कृष्णाष्टम्यां महादेवं तथा कृष्णचतुर्दशीम् ॥ सम्पूज्य ब्राह्मणमुखे सर्वपापैः प्रमुच्यते ॥ ९७ ॥ त्रयोदश्यां तथा रात्रौ सोपहारं त्रिलोचनम् ॥ दृष्ट्वेशं प्रथमे यामे मुच्यते सर्वपातकैः ॥ ९८ ॥ उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः ॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥ ९९ ॥ वैवस्वताय कालाय सर्वप्राणहराय च ॥ प्रत्येकं तिलसंयुक्तान्दद्यात्सप्तोदकाञ्जलीन् ॥ १०० ॥ स्नात्वा दद्याच्च पूर्वाह्णे मुच्यते सर्वपातकैः ॥ ब्रह्मचर्यमधःशय्या उपवासो द्विजार्चनम् ॥ १०१ ॥ व्रतेष्वेतेषु कुर्वीत शान्तः संयतमानसः ॥ अमावास्यायां ब्रह्माणं समुद्दिश्य पितामहम् ॥ १०२ ॥ ब्राह्मणांस्त्रीन्समभ्यर्च्य मुच्यते सर्वपातकैः ॥ षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ॥ १०३ ॥ सप्तम्यामर्चयेद्भानुं मुच्यते सर्वपातकैः ॥ भरण्यां च चतुर्थ्यां च शनैश्चरदिने यमम् ॥ १०४ ॥ पूजयेत्सप्तजन्मोत्थैर्मुच्यते पातकैर्नरः ॥ एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ॥ १०५ ॥ द्वादश्यां शुक्लपक्षस्य महापापैः प्रमु च्यते ॥ तपो जपस्तीर्थसेवा देवब्राह्मणपूजनम् ॥ १०६ ॥ ग्रहणादिषु कालेषु महापातकशोधनम् ॥ यः सर्वपापयुक्तोऽपि पुण्यतीर्थेषु मानवः ॥ १०७ ॥ नियमेन त्यजेत्प्राणान्मुच्यते सर्वपातकैः ॥ ब्रह्मघ्नं वा कृतघ्नं वा महापातकदूषितम् ॥ १०८ ॥ भर्तारमुद्धरेन्नारी प्रविष्टा सह पावकम् ॥ एतदेव परं स्त्रीणां प्रायश्चित्तं विदुर्बुधाः ॥ १०९ ॥ पतिव्रता तु या नारी भर्तृशुश्रूषणे रता ॥ न तस्या विद्यते पापमिहलोके परत्र च ॥ ११० ॥ ( सर्वपापविनिर्मुक्ता नास्ति कार्या विचारणा ॥ पातिव्रत्यसमायुक्ता भर्तृशुश्रूषणोत्सुका ॥ न यास्तु पातकं तस्यामिहलोके परत्र च ॥ ) पतिव्रता धर्मरता भद्राण्येव लभेत्सदा ॥ नास्याः पराभवं कर्तुं शक्नोतीह जनः कश्चित् ॥ १११ ॥ यथा रामस्य सुभगा सीता त्रैलोक्यविश्रुता ॥ पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ॥ ११२ ॥

१ विशोधनम् । देवताभ्यर्चनं नृणामशेषाघविनाशनमिति पा० । २ सर्वप्रहरणायच । औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोदरायचित्राय चित्रगुप्ताय वै नमः । इति पा० । ३ महापातकिनं नरमिति पा० ।

रामस्य भार्यां सुभंगां[1] रावणो राक्षसेश्वरः ॥ सीतां विशालनयनां चकमे कालनोदितः ॥ ११३ ॥ गृहीत्वा मायया वेषं चरन्तीं विजने वने ॥ समाहर्त्तुं मतिं चक्रे तापसः किल कामिनीम् ॥ ११४ ॥ विज्ञाय सा च तद्भावं स्मृत्वा दाशरथिं पतिम् ॥ जगाम शरणं वह्निमावसथ्यं शुचिस्मितः ॥ ११५ ॥ उपतस्थे महायोगं सर्वलोकविदाहकम्[2] ॥ कृतांजली रामपत्नी साक्षात्पतिमिवाच्युतम् ॥ ११६ ॥ नमस्यामि महायोगं कृशानुं[3] गह्वरं परम् ॥ दाहकं सर्वभूतानामीशानं कालरूपिणम् ॥११७ ॥ प्रपद्ये पावकं देवं शाश्वतं विश्वरूपिणम् ॥ योगिनं कृत्तिवसनं भूतेशं परमम्पदम् ॥ ११८ ॥ आत्मानं दीप्तवपुषं सर्वभूतहृदि स्थितम् ॥ तं प्रपद्ये जगन्मूर्तिं प्रभवं सर्वतेजसाम् ॥ महायोगीश्वरं वह्निमादित्यं परमेष्ठिनम् ॥११९॥ प्रपद्ये शरणं रुद्रं महाग्रासं त्रिशूलिनम् ॥ कालाग्निं योगिनामीशं भोगमोक्षफलप्रदम् ॥१२०॥ प्रपद्ये त्वां विरूपाक्षं भूर्भुवःस्वःस्वरूपिणम् ॥ हिरण्मये गृहे गुप्तं महान्तममितौजसम् ॥ १२१ ॥ वैश्वानरं प्रपद्येऽहं सर्वभूतेष्ववस्थितम् ॥ हव्यकव्यवहं देवं प्रपद्ये वह्निमीश्वरम् ॥ १२२ ॥ प्रपद्ये तत्परं तत्त्वं वरेण्यं सवितुः शिवम् स्वर्गमाग्निं[4] परं ज्योतिः स्वाक्षयं हव्यवाहनम् ॥ १२३ ॥ इति वह्न्यष्टकं जप्त्वा रामपत्नी यशस्विनी ॥ [5]ध्यायन्ती मनसा तस्थौ राममुन्मीलितेक्षणा ॥ १२४ ॥ अथावसथ्याद्भगवान्हव्यवाहो महेश्वरः ॥ आविरासीत्सुदीप्तात्मा तेजसा निर्दहन्निव ॥ १२५ ॥ सृष्ट्वा मायामयीं सीतां स रावणवधेच्छया ॥ सीतामादाय रामेष्टां पावकोऽन्तरधीयत ॥ १२६ ॥ तां दृष्ट्वा तादृशीं सीतां रावणो राक्षसेश्वरः ॥ समादाय ययौ लङ्कां सागरान्तरसंस्थिताम् ॥ १२७ ॥ कृत्वा तु रावणवधं रामो लक्ष्मणसंयुतः ॥ समादायाभवत्सीतां शङ्काकुलितमानसः ॥ १२८ ॥ सा प्रत्ययाय भूतानां सीता मायामयी पुनः ॥ विवेश पावकं क्षिप्रं ददाह ज्वलनोऽपि ताम् ॥ १२९ ॥ दग्ध्वा मायामयीं सीतां भगवानुष्णदीधितिः ॥ रामायादर्शयत्सीतां पावकोऽभूत्सुरप्रियः ॥१३०॥ प्रगृह्य भर्तुश्चरणौ कराभ्यां सा सुमध्यमा॥

---

१ त्रिमलाभिति पा० । २ सर्वदोषविनाशनमिति, सर्वदोषविदाहकमिति, सर्वरोगविनाशनमिति पा० । ३ कृतान्तं गह्वरं परमिति, कृत्वा नगहरं परमिति पा० । ४ भागमाग्निमिति, भार्गवाग्निमिति पा० । ५ धर्मिष्ठामिति पा० । ६ तामसीमिति पा० ।

चकार प्रणतिं भूमौ रामाय जनकात्मजा ॥ १३१ ॥ दृष्ट्वा हृष्टमाना रामो विस्मयाकुललोचनः ॥ प्रणम्य वह्निं शिरसा तोषयामास राघवः॥ १३२ ॥ उवाच वह्निं भगवान् किमेषा वरवर्णिनी ॥ दग्धा भगवता पूर्वं दृष्टा मत्पार्श्वमागता ॥ १३३ ॥ तमाह देवो लोकानां दाहको हव्यवाहनः ॥ यथावृत्तं दाशरथिं भूतानामेव सन्निधौ ॥ १३४ ॥ इयं सा परमा साध्वी पार्वतीव प्रिया तव ॥ आराध्य लब्ध्वा तपसा देव्याश्चात्यन्तवल्लभा ॥ १३५ ॥ भर्तुः शुश्रूषणोपेता सुशीलेयं पतिव्रता ॥ भवानीवेश्वरे गुप्ता माया रावणकामिता ॥ १३६ ॥ या नीता राक्षसेशेन सीता भगवती हृता ॥ मया मायामयी सृष्टा रावणस्य वधेच्छया ॥ १३७ ॥ तदर्थं भवता दृष्टो रावणो राक्षसेश्वरः ॥ मायोपसंहृता चैव हतो लोकविनाशनः ॥ १३८ ॥ गृहाण चैतां विमलां जानकीं वचनान्मम ॥ पश्य नारायणं देवं स्वात्मानं प्रभवाव्ययम् ॥ १३९ ॥ इत्युक्त्वा भगवांश्चण्डो विश्वार्चिर्विश्वतोमुखः ॥ मानितो राघवेणाग्निर्भूतैश्चान्तरधीयत ॥ १४० ॥ एतत्पतिव्रतानां वै माहात्म्यं कथितं मया ॥ स्त्रीणां सर्वाघशमनं प्रायश्चित्तमिदं स्मृतम् ॥ १४१ ॥ अशेषपापसंयुक्तः पुरुषोऽपि सुसंयुतः ॥ स्वदेहं पुण्यतीर्थेषु त्यक्त्वा मुच्येत किल्बिषात् ॥ १४२ ॥ पृथिव्यां सर्वतीर्थेषु स्नात्वा पुण्येषु वा द्विजः ॥ मुच्यते पातकैः सर्वैः सञ्चितैरपि पूरुषः ॥१४३॥ व्यास उवाच ॥ इत्येष मानवो धर्मो युष्माकं कथितो मया॥ महेशाराधनार्थाय ज्ञानयोगश्च शाश्वतः॥ १४४॥ योगेन विधिना युक्तो ज्ञानयोगं समाचरेत् ॥ स पश्यति महादेवं नान्यः कल्पशतैरपि ॥१४५॥ स्थापयेद्यः परं धर्मं ज्ञानं तत्पारमेश्वरम् ॥ न तस्मादधिको लोके स योगी परमो मतः ॥ १४६ ॥ यः संस्थापयितुं शक्तो न कुर्यान्मोहितो जनः ॥ स योगयुक्तोऽपि मुनिर्नात्यर्थं भगवत्प्रियः ॥ १४७ ॥ तस्मात्सदैव दातव्यं ब्राह्मणेषु विशेषतः ॥ धर्मयुक्तेषु शान्तेषु श्रद्धया चान्वितेषु वै ॥ १४८ ॥ यः पठेद्भवतां नित्यं संवादं मम चैव हि ॥ सर्वपापविनिर्मुक्तो गच्छेत[2] परमाङ्गतिम् ॥१४९॥ श्राद्धे वा दैविके कार्ये ब्राह्मणानां च सन्निधौ ॥ पठेत[3] नित्यं

१ इत्थं सा मिथिलेशेन पार्वतीं रुद्रवल्लभामिति पा० । २ गच्छेत इत्यार्षमात्मनेपदम् । गच्छेत्स इति, स गच्छेदिति पा० । ३ पठेत इत्यार्षमात्मनेपदम् ।

सुमनाः श्रोतव्यं च द्विजातिभिः ॥१६०॥ योऽर्थं विचार्य युक्तात्मा श्रावयेद्वा[1] द्विजान् शुचीन् ॥ स दोषकंचुकं त्यक्त्वा याति देवं महेश्वरम् ॥१६१॥ एतावदुक्त्वा भगवान्व्यासः सत्यवतीसुतः ॥ समाश्वास्य मुनीन्[2]सूतं जगाम च यथागतम् ॥ १६२ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे चतुस्त्रिंशोऽध्यायः॥३४॥अथ तीर्थप्रकरणम्॥ ऋषय ऊचुः ॥ तीर्थानि यानि लोकेऽस्मिन्विश्रुतानि महान्त्यपि॥तानि त्वं कथयास्माकं रोमहर्षण साम्प्रतम्॥१॥रोमहर्षण उवाच॥शृणुध्वं कथयिष्येऽहं तीर्थानि विविधानि च॥कथितानि पुराणेषु मुनिभिर्ब्रह्मवादिभिः॥२॥ यत्र स्नानञ्जपो होमः श्राद्धदानादिकं कृतम्॥एकैकशो मुनिश्रेष्ठाः पुनात्यासप्तमं कुलम् ॥३॥ पंचयोजनविस्तीर्णं ब्रह्मणः परमेष्ठिनः॥प्रयागं प्रथितं तीर्थं यस्य माहात्म्यमीरितम्॥४॥अन्यच्च तीर्थप्रवरं कुरूणां देववन्दितम्॥ऋषीणामाश्रमैर्जुष्टं सर्वपापवि[3]शोधनम् ॥५॥तत्र स्नात्वा विशुद्धात्मा दम्भमात्सर्यवर्ज्जितः ॥ ददाति यत्किञ्चिदपि पुनात्युभयतः कुलम् ॥ ६ ॥ परं गुह्यं गयातीर्थं पितॄणाञ्चातिदुर्ल्लभम् ॥ कृत्वा पिण्डप्रदानन्तु न भूयो जायते नरः ॥ ७ ॥ सकृद्गयाभिगमनं कृत्वा पिण्डं ददाति यः ॥ तारि[4]ताः पितरस्तेन यास्यन्ति परमाङ्गतिम् ॥ ८ ॥ तत्र लोकहितार्थाय रुद्रेण परमात्मना ॥ शिलातले पदं न्यस्तं तत्र पितॄन्प्रसादयेत् ॥ ९ ॥ गयाभिगमनं कर्त्तुं यः शक्तो नाधिगच्छति ॥ शोचन्ति पितरस्तं वै वृथा तस्य परिश्रमः ॥ १० ॥ गायन्ति पितरो गाथाः कीर्त्तयन्ति महर्षयः ॥ गयां यास्यति यः कश्चित्सोऽस्मान्सन्तारयिष्यति ॥ ११ ॥ यदि स्यात्पातकोपेतः स्वधर्मपरिवर्ज्जितः ॥ गयां यास्यति यः कश्चित् सोऽस्मान्सन्तारयिष्यति ॥ १२ ॥ एष्टव्या बहवः पुत्राः शील[5]वन्तो गुणान्विताः॥ तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत् ॥ १३ ॥ तस्मात्सर्वप्रयत्नेन ब्राह्मणस्तु विशेषतः ॥ प्रदद्याद्विधिवत्पिण्डान् गयाङ्गत्वा समाहितः ॥ १४ ॥ धन्यास्तु खलु ते मर्त्या गयायां पिण्डदायिनः ॥ कुलान्युभयतः सप्त समुद्धृत्याप्नुयुः परम् ॥ १५ ॥ अन्यच्च तीर्थप्रवरं सिद्धावासमुदाहृतम् ॥ प्रभासमिति विख्यातं

---

1 श्रावयेद्ब्राह्मणानिति, श्रावयेद्वै इति पा० । 2 मुनीन् सर्वानिति पा० । 3 प्रणाशनमिति पा० । 4 पितरस्तारितास्तेनेति पा० । 5 बलवन्त इति पा० ।

यत्रास्ते भगवान्भवः ॥ १६ ॥ तंत्र स्नानं ततः श्राद्धं ब्राह्मणानाञ्च पूजनम् ॥ कृत्वा लोकमवाप्नोति ब्राह्मणोऽक्षय्यमुत्तमम् ॥ १७ ॥ तीर्थंत्रैयम्बकं नाम सर्वदेवनमस्कृतम् ॥ पूजयित्वा तत्र रुद्रं ज्योतिष्टोमफलं लभेत् ॥ १८ ॥ सुवर्णाक्षं महादेवं समभ्यर्च्य कपर्दिनम् ॥ ब्राह्मणान् पूजयित्वा च गाणपत्यं लभेत सः ॥ १९ ॥ सोमेश्वरं तीर्थवरं रुद्रस्य परमेष्ठिनः ॥ सर्वव्याधिहरं पुण्यं रुद्रसालोक्य कारणम् ॥ २० ॥ तीर्थानां परमं तीर्थं विजयं नाम शोभनम् ॥ तत्र लिङ्गं महेशस्य विजयं नाम विश्रुतम् ॥२१॥ षण्मासनियताहारो ब्रह्मचारी समाहितः॥ उषित्वा तत्र विप्रेन्द्रा यास्यन्ति परमम्पदम् ॥ २२ ॥ अन्यच्च तीर्थप्रवरं पूर्वदेशेषु शोभनम् ॥ एकान्तं देवदेवस्य गाणपत्यफलप्रदम् ॥ २३ ॥ दत्त्वात्र शिवभक्तानां किञ्चिच्छश्वन्महीं शुभाम् ॥ सार्वभौमो भवेद्राजा मुमुक्षुर्मोक्षमाप्नुयात् ॥ २४ ॥ महानदीजलं पुण्यं सर्वपापविनाशनम् ॥ ग्रहणे तदुपस्पृश्य मुच्यते सर्वपातकैः॥ २५ ॥ अन्या च विरजा नाम नदी त्रैलोक्यविश्रुता ॥ तस्यां स्नात्वा नरो विप्रो ब्रह्मलोके महीयते ॥ २६ ॥ तीर्थं नारायणस्यान्यन्नाम्ना तु पुरुषोत्तमम् ॥ तत्र नारायणः श्रीमानास्ते परमपूरुषः ॥ २७ ॥ पूजयित्वा परं विष्णुं स्नात्वा तत्र द्विजोत्तमः ॥ ब्राह्मणान्पूजयित्वा तु विष्णुलोकमवाप्नुयात् ॥ २८ ॥ तीर्थानां परमं तीर्थं गोकर्णं नाम विश्रुतम् ॥ सर्वपापहरं शम्भोर्निवासः परमेष्ठिनः ॥ २९ ॥ दृष्ट्वा लिङ्गं तु देवस्य गोकर्णं परमुत्तमम् ॥ ईप्सितांल्लभते कामान्रुद्रस्य दयितो भवेत् ॥ ३० ॥ उत्तरं चापि गोकर्णं लिंगं देवस्य शूलिनः ॥ महादेवं चार्चयित्वा शिवसायुज्य माप्नुयात् ॥ ३१ ॥ तत्र देवो महादेवः स्थाणुरित्यभिविश्रुतः ॥ तं दृष्ट्वा सर्वपापेभ्यस्तत्क्षणान्मुच्यते नरः ॥३२॥ अन्यत्कुब्जाश्रमम्पुण्यं स्थानं विष्णोर्महात्मनः ॥ संपूज्य पुरुषं विष्णुं श्वेतद्वीपे महीयते ॥ ३३ ॥ यत्र नारायणो देवो रुद्रेण त्रिपुरारिणा ॥ कृत्वा यज्ञस्य मथनं दक्षस्य तु विसर्जितः ॥ ३४ ॥ समन्ताद्योजनं क्षेत्रं सिद्धर्षिगणसेवितम् ॥ पुण्यमायतनं विष्णोस्तत्रास्ते पुरुषोत्तमः ॥ ३५ ॥

१ तत्र स्नानन्तु यः इति, तत्र स्नानं तपः श्राद्धमिति पा० । २ लभेत इति साधु । ३ सुपर्णाक्षमिति पा० । ४ रुद्रसायुज्येति पा० । ५ प्रयास्यन्तिपरम्पदमिति पा० । ६ समुपस्पृश्येति पा० । ७ गोकर्णेश्वरमुत्तमामिति पा० । ८ मुच्यते तत्क्षणादिति पा० । ९ अन्यत् कुब्जाम्रमतुलमिति, अन्यद्वै परमं स्थानं विष्णोर्यच्च महात्मन इति पा० ।

अन्यत्कोकामुखे विष्णोस्तीर्थमद्भुतकर्मणः ॥ [1]मुक्तोऽत्र पातकैर्मर्त्त्यो विष्णुसारूप्यमाप्नुयात् ॥ ३६ ॥ शालिग्रामं महातीर्थं विष्णोः प्रीतिविवर्द्धनम् ॥ प्राणांस्तत्र नरस्त्यक्त्वा हृषीकेशं प्रपश्यति ॥ ३७ ॥ अश्वतीर्थमिति ख्यातं सिद्धावासं सुशोभनम् ॥ आस्ते हयशिरा नित्यं तत्र नारायणः स्वयम् ॥ ३८ ॥ तीर्थं त्रैलोक्यविख्यातं सिद्धावासं सुशोभनम् ॥ तत्रास्ति पुण्यदं तीर्थं ब्रह्मणः परमेष्ठिनः ॥ ३९ ॥ पुष्करं सर्वपापघ्नं मृतानां ब्रह्मलोकदम् ॥ मनसा संस्मरेद्यस्तु पुष्करं वै द्विजोत्तमः ॥ ४० ॥ पूयते पातकैः सर्वैः शक्रेण सह मोदते ॥ तत्र देवाः स गन्धर्वाः सयक्षोरगराक्षसाः ॥ ४१ ॥ उपासते सिद्धसङ्घा ब्रह्माणं पद्मसम्भवम् ॥ तत्र स्नात्वा व्रजेच्छुद्धो ब्रह्माणं परमेष्ठिनम् ॥ ४२ ॥ पूजयित्वा द्विजवरं ब्रह्माणं सम्प्रपश्यति ॥ तत्राभिगम्य देवेशं पुरुहूतमनिन्दितम् ॥ ४३ ॥ तद्रूपो[2] जायते मर्त्यः सर्वान् कामानवाप्नुयात्[3] ॥ सप्तसारस्वतन्तीर्थं[4] ब्रह्माद्यैः सेवितं परम् ॥ ४४ ॥ पूजयित्वा तत्र रुद्रमश्वमेधफलं भवेत् ॥ यत्र मङ्कणको रुद्रं प्रपन्नं परमेश्वरम् ॥ ४५ ॥ आराधयामास शिवं तपसा गोवृषध्वजम् ॥ प्रजज्वालाथ तपसा मुनिर्मंकणकस्तदा ॥ ४६ ॥ ननर्त हर्षवेगेन ज्ञात्वा रुद्रं समागतम् ॥ तं प्राह भगवान्रुद्रः किमर्थं नर्त्तितं त्वया ॥ ४७ ॥ दृष्ट्वापि देवमीशानं नृत्यति स्म पुनः पुनः ॥ सोऽन्वीक्ष्य भगवानीशः सगर्वं गर्वशान्तये ॥ ४८ ॥ स्वकं देहं विदार्यास्मै भस्मराशिमदर्शयत् ॥ पश्येमं मच्छरीरोत्थं भस्मराशिं द्विजोत्तम ॥ ४९ ॥ माहात्म्यमेतत्तपसस्त्वादृशोऽन्योऽपि विद्यते ॥ यत्सगर्वं हि भवता नर्त्तितं मुनिपुंगव ॥ ५० ॥ न युक्तं तापसस्यैतत्त्वत्तोऽप्यत्राभ्यधिको ह्यहम् ॥ इत्याभाष्य मुनिश्रेष्ठं स रुद्रोऽखिलविश्वदृक् ॥ ५१ ॥ आस्थाय परमं भावं ननर्त्त जगतो हरः ॥ सहस्रशीर्षा भूत्वा स सहस्राक्षः सहस्रपात् ॥ ५२ ॥ दंष्ट्राकरालवदनो ज्वालामाली भयंकरः ॥ सोऽन्वपश्यदथेशस्य पार्श्वे तस्य त्रिशूलिनः ॥ ५३ ॥ विशाललोचनामेकां देवीं चारुविलासिनीम् ॥ सूर्या

१ मृतोऽत्र पातकैर्मुक्तः इति, च्युतोऽत्र पातकैर्मर्त्य इति पा० । २ सद्यः इति, सुरूपो जायते मर्त्यं इति पा० । ३ कामान् समश्नुते इति पा० । ४ सप्तगोदावरन्तीर्थमिति पा० । ५ पंचाक्षरपरायण इति पा० । ६ त्वत्तोऽप्यत्राधिकोह्ययमिति पा० । ७ आस्थाय स्वं परमिति पा० । ८ शाश्वतस्येति पा० ।

युतसमाकारां प्रसन्नवदनां शिवाम् ॥ ५४ ॥ सस्मितं प्रेक्ष्य विश्वेशन्तिष्ठन्तममितद्युतिम् ॥ दृष्ट्वा संत्रस्तहृदयो वेपमानो मुनीश्वरः ॥ ५५ ॥ ननाम शिरसा रुद्रं रुद्राध्यायजपन्वशी ॥ प्रसन्नो भगवानीशस्त्र्यम्बको भक्तवत्सलः ॥ ५६ ॥ पूर्ववेषं स जग्राह देवी चान्तर्हिताभवत् ॥ आलिङ्ग्य भक्तं प्रणतं देवदेवः स्वयं शिवः ॥ ५७ ॥ न भेतव्यं त्वया वत्स प्राह किन्ते ददाम्यहम् ॥ प्रणम्य मूर्ध्ना गिरिशं हरं त्रिपुरसूदनम् ॥ ५८ ॥ विज्ञापयामास तदा हृष्टः प्रष्टुमना मुनिः ॥ नमोऽस्तु ते महादेव महेश्वर नमोऽस्तु ते ॥ ५९ ॥ किमेतद्भगवद्रूपं सुघोरं विश्वतोमुखम् ॥ का च सा भगवत्पार्श्वे राजमाना व्यवस्थिता ॥ ६० ॥ अन्तर्हिते च सहसा सर्वमिच्छामि वेदितुम् ॥ इत्युक्ते व्याजहारेशस्तदा मंकणकं हरः ॥ ६१ ॥ महेशः स्वात्मनो योगं देवीं च त्रिपुरानलः ॥ अहं सहस्रनयनः सर्वात्मा सर्वतोमुखः ॥ ६२ ॥ दाहकः सर्वपाशानां[2] कालः कालकरो हरः ॥ मयैव प्रेर्यते कृत्स्नं चेतनाचेतनात्मकम् ॥ ६३ ॥ सोऽन्तर्यामी[3] स पुरुषो ह्यहं वै पुरुषोत्तमः ॥ तस्य सा परमा माया प्रकृतिस्त्रिगुणात्मिका ॥ ६४ ॥ प्रोच्यते मुनिभिः शक्तिर्जगद्योनिः सनातनी ॥ स एष मायया विश्वं व्यामोहयति विश्वकृत् ॥ ६५ ॥ नारायणः परोऽव्यक्तो मायारूप इति श्रुतिः ॥ एवमेतज्जगत्सर्वं सर्वदा स्थापयाम्यहम् ॥ ६६ ॥ योजयामि प्रकृत्याहं पुरुषं पंचविंशकम् ॥ तथा वै संगतो देवः कूटस्थः सर्वगोऽमलः ॥ ६७ ॥ सृजत्यशेषमेवेदं स्वमूर्तेः प्रकृतेरजः ॥ स देवो भगवान्ब्रह्मा विश्वरूपः पितामहः ॥ ६८ ॥ तवैतत्कथितं सम्यक्स्रष्टृत्वं परमात्मनः ॥ एकोऽहं भगवान्कालो ह्यनादिश्चान्तकृद्विभुः ॥ ६९ ॥ समास्थाय परं भावं प्रोक्तो रुद्रो मनीषिभिः ॥ ममैव सा परा शक्तिर्देवी विद्येति विश्रुता ॥७०॥ दृष्टो हि भवता नूनं विद्यादेहः स्वयं ततः ॥ एवमेतानि तत्त्वानि प्रधानपुरुषेश्वरः ॥७१॥ विष्णुर्ब्रह्मा च भगवान्रुद्रः काल इति श्रुतिः ॥ त्रयमेतदनाद्यन्तं ब्रह्मण्येव व्यवस्थितम् ॥७२॥ तदात्मकं तदव्यक्तं तदक्षरमिति श्रुतिः ॥ आत्मानन्दपरं[5] तत्त्वं चिन्मात्रं[6] परमम्पदम् ॥७३॥

१ समप्रख्यामिति पा० । २ सर्वपापानामिति पा० । ३ सोऽन्तर्यामीशपुरुषः इति पा० । ४ विश्वरूपधरः प्रभुरिति पा० । ५ आत्मानन्दं परमिति, आत्मानन्दः इति पा० । ६ चिन्मयामिति पा० ।

आकाशं निष्कलं ब्रह्म तस्मादन्यन्न विद्यते ॥ एवं विज्ञाय भवता भक्तियोगाश्रयेण तु ॥ ७४ ॥ सम्पूज्यो वन्दनीयोऽहं ततस्तं पश्यसीश्वरम् ॥ एतावदुक्त्वा भगवाञ्जगामादर्शनं हरः ॥ ७५ ॥ तत्रैव भक्तियोगेन रुद्रमाराधयन्मुनिः ॥ एतत्पवित्रमतुलं तीर्थं ब्रह्मर्षिसेवितम् ॥ संसेव्य ब्राह्मणो विद्वान्मुच्यते सर्वपातकैः ॥ ७६ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

सूत उवाच ॥ अन्यत्पवित्रं विपुलं तीर्थं त्रैलोक्यविश्रुतम् ॥ रुद्रकोटिरिति ख्यातं रुद्रस्य परमेष्ठिनः ॥ १ ॥ पुरा पुण्यतमे काले देवदर्शनतत्पराः ॥ कोटिब्रह्मर्षयो दान्तास्तं देशमगमन्परम् ॥ २ ॥ अहं द्रक्ष्यामि गिरिशं पूर्वमेव पिनाकिनम् ॥ अन्योऽन्यं भक्तियुक्तानां विवादोऽभून्महान् किल ॥ ३ ॥ तेषां भक्तिं तदा दृष्ट्वा गिरिशो योगिनां गुरुः ॥ कोटिरूपोऽभवद्रुद्रो रुद्रकोटिस्ततोऽभवत् ॥ ४ ॥ ते स्म सर्वे महादेवं हरं गिरिगुहाशयम् ॥ अपश्यन् पार्वतीनाथं हृष्टपुष्टधियोऽभवन् ॥ ५ ॥ अनाद्यन्तं महादेवं पूर्वमेवाहमीश्वरम् ॥ दृष्टवानिति भक्त्या ते रुद्रन्यस्तधियोऽभवन् ॥ ६ ॥ अथान्तरिक्षे विमलम्पश्यन्ति स्म महत्तरम् ॥ ज्योतिस्तत्रैव ते सर्वेऽभिलषन्तः परम्पदम् ॥ ७ ॥ यतः स देवोऽध्युषितस्तीर्थं पुण्यतमं शुभम् ॥ दृष्ट्वा रुद्रान्समभ्यर्च्य रुद्रसामीप्यमाप्नुयुः ॥ ८ ॥ अन्यच्च तीर्थप्रवरं नाम्ना मधुवनं शुभम् ॥ तत्र गत्वा नियमवानिन्द्रस्यार्द्धासनं लभेत् ॥ ९ ॥ अथान्या पद्मनगरी देशः पुण्यतमः शुभः ॥ तत्र गत्वा पितॄन्पूज्य कुलानां तारयेच्छतम् ॥ १० ॥ कालञ्जरं महातीर्थं रुद्रलोके महेश्वरः ॥ कालंजरं भजन्देवं तत्र भक्तप्रियो हरः ॥ ११ ॥ श्वेतो नाम शिवे भक्तो राजर्षिप्रवरः पुरा ॥ तदाशीस्तन्नमस्कारैः पूजयामास शूलिनम् ॥ १२ ॥ संस्थाप्य विधिना रुद्रं भक्तियोगपुरःसरः ॥ जजाप रुद्रमनिशं तत्र संन्यस्तमानसः ॥ १३ ॥ सितं कार्ष्णाजिनं दीप्तं शूलमादाय भीषणम् ॥ नेतुमभ्यागतो देशं स राजा यत्र तिष्ठति ॥ १४ ॥ वीक्ष्य राजा भयाविष्टः शूलहस्तं समागतम् ॥ कालं कालकरं घोरं भीषणं चण्डदीपितम् ॥ १५ ॥ उभाभ्यामथ हस्ताभ्यां

---

१ पश्य शाश्वतमिति पा० । २ व्याघातो जायते न हीति, व्याघातो जायते किलेति पा० । ३ कोटिशः सुषुवे रुद्रानिति, पा० । ४ ततः स्मृतः इति पा० । ५ अपश्यन्तः इति, अमन्यन्त इति पा० । ६ एतत् स्वदेशाध्युषितं तीर्थमिति, एतत्सदेवाध्युषितमिति पा० । ७ पुष्पनगरीति पा० ।

स्पृष्ट्वासौ लिङ्गमुत्तमम्। ननाम शिरसा रुद्रं जजाप शतरुद्रियम्। १६। जपन्तमाह राजानं नमन्तं मनसा भवम्। एह्येहीति पुरःस्थित्वा कृतान्तः प्रहसन्निव ॥ १७ ॥ तमुवाच भयाविष्टो राजा रुद्रपरायणः ॥ एकमीशार्चनरतं विहायान्यान्निषूदय ॥ १८ ॥ इत्युक्तवन्तं भगवानब्रवीद्भीतमानसम् ॥ रुद्रार्चनरतो वान्यो मद्वशे को न तिष्ठति ॥१९॥ एवमुक्त्वा स राजानं कालो लोकप्रकालनः ॥ बबन्ध पाशै राजापि जजाप शतरुद्रियम् ॥ २० ॥ अथांतरिक्षे विपुलं दीप्यमानं तेजोराशिं भूतभर्तुः पुराणम् ॥ ज्वालामालासंवृतं व्याप्य विश्वं प्रादुर्भूतं संस्थितं सन्ददर्श॥२१॥तन्मध्येऽसौ पुरुषं रुक्मवर्णं देव्या देवं चन्द्रलेखोज्ज्वलाङ्गम्॥तेजोरूपं पश्यति स्मातिहृष्टो मेने चात्मानमप्यागच्छतीति ॥ २२ ॥ आगच्छन्तं नातिदूरेति दृष्ट्वा कालो रुद्रं देवदेव्या महेशम् ॥ व्यपेतभीरखिलेशैकनाथं राजर्षिस्तन्नेतुमभ्याजगाम ॥ २३ ॥ आलोक्यासौ भगवानुग्रकर्मा देवो रुद्रो भूतभर्त्ता पुराणः ॥ एवं भक्तं सत्वरं मां स्मरन्तं देहीतीमं कालरूपं ममेति ॥ २४ ॥ श्रुत्वा वाक्यं गोपते रुद्रभावः कालात्मासौ मन्यमानः स्वभावम् ॥ बद्ध्वा भक्तं पुनरेवाथ पाशै रुद्रो रौद्रं चाभिदुद्राव वेगात् ॥ २५ ॥ प्रेक्ष्यायान्तं शैलपुत्रीमथेशः सोऽन्वीक्ष्यान्ते विश्वमायाविधिज्ञः ॥ सावज्ञं वै वामपादेन कालं त्वेतस्यैनं पश्यतो व्याजघान ॥ २६ ॥ ममार सोऽतिभीषणो महेशपादघातितः ॥ विराजते सहोमया महेश्वरः पिनाकधृक् ॥ २७ ॥ निरीक्ष्य देवमीश्वरं प्रहृष्टमानसो हरम् ॥ ननाम वै तमव्ययं स राजपुङ्गवस्तदा ॥ २८ ॥ नमो भवाय हेतवे हराय विश्वशम्भवे ॥ नमः शिवाय धीमते नमोऽपवर्गदायिने ॥ २९ ॥ नमो नमो नमो नमो महाविभूतये नमः ॥ विभागहीनरूपिणे नमो नराधिपाय ते ॥ ३० ॥ नमोऽस्तु ते गणेश्वर प्रपन्नदुःखशासन ॥ अनादिनित्य भूतये वराहशृङ्गधारिणे ॥ ३१ ॥ नमो वृषध्वजाय ते कपालमालिने नमः ॥ नमो महानगाय ते शिवाय शङ्कराय ते ॥ ३२ ॥ अथानुगृह्य शंकरः प्रणामतत्परं नृपम् ॥ स्वगाणपत्यमव्ययं स्वरूपतामथो ददौ ॥ ३३ ॥ सहोमया सपार्षदः

१ मेने चास्मन्नाथ आगच्छतीति इति, मेने चात्मानमथागच्छतीति इति पा०। २ अखिलस्यैकनाथमिति पा०। ३ रराज देवतापतिः सहोमयेति, रराज देवता शिवः सहोमया इति पा०।

सराजपुंगवो हरः ॥ मुनीशासिद्धवन्दितः क्षणाददृश्यतामगात् ॥ २४ ॥ काले महेशनिहते[1] लोकनाथः पितामहः ॥ अयाचत वरं रुद्रं सजीवोऽयं भवत्विति[2] ॥ २५ ॥ नास्ति कश्चिदपीशान दोषलेशो वृषध्वज ॥ कृतान्तस्यैव भविता तत्कार्ये विनियोजितः ॥ २६ ॥ स देवदेववचनाद्देवदेवेश्वरो हरः ॥ तथास्त्वित्याह विश्वात्मा सोऽपि तादृग्विधोऽभवत् ॥२७॥ इत्येतत्परमं तीर्थं कालञ्जरमिति श्रुतम् ॥ गत्वाभ्यर्च्य महादेवं गाणपत्यं स विन्दति॥३८॥इति श्रीकूर्मपुराणे उत्तरार्द्धे कालवधे षट्त्रिंशोऽध्यायः॥३६॥ सूत उवाच ॥ इदमन्यत्परं स्थानं गुह्याद्गुह्यतरं महत् ॥ महादेवस्य देवस्य महालयं इति श्रुतम् ॥१॥ तत्र देवादिदेवेन रुद्रेण त्रिपुरारिणा ॥ शिलातले पदं न्यस्तं नास्तिकानां निदर्शनम् ॥२॥ तत्र पाशुपताः शान्ता भस्मोद्धूलितविग्रहाः ॥ उपासते महादेवं वेदाध्ययनतत्पराः ॥३॥ स्नात्वा तत्र पदं शार्वं दृष्ट्वा भक्तिपुरःसरम् ॥ नमस्कृत्वाथ[3] शिरसा रुद्रसामीप्यमाप्नुयात्[4] ॥४॥ अन्यच्च देवदेवस्य स्थानं शम्भोर्महात्मनः ॥ केदारमिति विख्यातं सिद्धानामालयं शुभम् ॥५॥ तत्र स्नात्वा महादेवमभ्यर्च्य वृषकेतनम् ॥ पीत्वा चैवोदकं शुद्धं गाणपत्यमवाप्नुयात् ॥६॥ श्राद्ध दानादिकं कृत्वा ह्यक्षयं लभते फलम् ॥ द्विजातिप्रवरैर्जुष्टं योगिभिर्जितमानसैः॥७॥तीर्थं प्लक्षावतरणं सर्वपापविनाशनम् ॥ तत्राभ्यर्च्य श्रीनिवासं विष्णुलोके महीयते ॥ ८ ॥ अन्यच्च मगधारण्यं सर्वलोकगतिप्रदम् ॥ अक्षयं विन्दते स्वर्गं तत्र गत्वा द्विजोत्तमः ॥ ९ ॥ तीर्थं कनखलं पुण्यं महापातकनाशनम् ॥ यत्र देवेन रुद्रेण यज्ञो दक्षस्य नाशितः ॥ १० ॥ तत्र गंगामुपस्पृश्य शुचिर्भावसमन्वितः ॥ मुच्यते सर्वपापैस्तु ब्रह्मलोके वसेन्नरः[5] ॥ ११ ॥ महातीर्थमिति ख्यातं पुण्यं नारायणप्रियम् ॥ तत्राभ्यर्च्य हृषीकेशं श्वेतद्वीपं स गच्छति ॥ १२ ॥ अन्यच्च तीर्थप्रवरं नाम्ना श्रीपर्वतं शुभम् ॥ अत्र प्राणान्परित्यज्य रुद्रस्य दयितो भवेत् ॥ १३॥ तत्र सन्निहितो रुद्रो देव्या सह महेश्वरः ॥ स्नानपिण्डादिकं तत्र दत्तमक्षय्यमुत्तमम् ॥ १४ ॥ गोदावरी नदी पुण्या सर्वपापप्रणाशिनी ॥ तत्र

१ महेशाभिहते इति पा० । २ आर्षोऽयं प्रयोगः । ३ नमस्कृत्य इति साधु । ४ सारूप्यमिति पा० । ५ ब्रह्मलोके लभेन्मृतः इति, ब्रह्म लोकं व्रजेन्नर इति पा० ।

स्नात्वा पितॄन्देवांस्तर्पयित्वा यथाविधि ॥ १५ ॥ सर्वपापविशुद्धात्मा गोसहस्रफलं लभेत् ॥ पवित्रसलिला पुण्या कावेरी विपुला नदी ॥ १६ ॥ तस्यां स्नात्वोदकं कृत्वा मुच्यते सर्वपातकैः ॥ त्रिरात्रोपोषितेनाथ एकरात्रोषितेन वा ॥ १७ ॥ द्विजातीनान्तु कथितं तीर्थानामिह सेवनम् ॥ यस्य वाङ्मनसी शुद्धे हस्तपादौ च संस्थितौ ॥ १८ ॥ अलोलुपो ब्रह्मचारी तीर्थानां फलमाप्नुयात् ॥ स्वामितीर्थं महातीर्थं त्रिषु लोकेषु विश्रुतम् ॥ १९ ॥ तत्र सन्निहितो नित्यं स्कन्दोऽमरनमस्कृतः ॥ स्नात्वा कुमारधारायां कृत्वा देवादितर्पणम् ॥ २० ॥ आराध्य षण्मुखं देवं स्कन्देन सह मोदते ॥ नदी त्रैलोक्यविख्याता ताम्रपर्णीति नामतः ॥ २१ ॥ तत्र स्नात्वा पितॄन्भक्त्या तर्पयित्वा यथाविधि ॥ पापकर्तॄनपि पितॄंस्तारयेन्नात्र संशयः ॥ २२ ॥ चन्द्रतीर्थमिति ख्यातं कावेर्याः प्रभवेऽक्षयम् ॥ तीर्थं तत्र भवेद्दत्तं मृतानां सद्गतिप्रदम् ॥ २३ ॥ विन्ध्यपादे प्रपश्यन्ति देवदेवं सदाशिवम् ॥ भक्ता ये ते न पश्यन्ति यमस्य वदनं द्विजाः ॥ २४ ॥ देविकायां वृषो नाम तीर्थं सिद्धनिषेवितम् ॥ तत्र स्नात्वोदकं कृत्वा योगसिद्धिश्च विन्दति ॥ २५ ॥ दशाश्वमेधिकं तीर्थं सर्वपापविनाशकम् ॥ दशानामश्वमेधानां तत्राप्नोति फलं नरः ॥ २६ ॥ पुण्डरीकं तथा तीर्थं ब्राह्मणैरुपशोभितम् ॥ तत्राभिगम्य युक्तात्मा पुण्डरीकफलं लभेत् ॥ २७ ॥ तीर्थेभ्यः परमं तीर्थं ब्रह्मतीर्थमिति स्मृतम् ॥ ब्रह्माणमर्चयित्वात्र ब्रह्मलोके महीयते ॥ २८ ॥ सरस्वत्या विनशनं प्लक्षप्रस्रवणं शुभम् ॥ व्यासतीर्थमिति ख्यातं मैनाकश्च नगोत्तमः ॥ २९ ॥ यमुनाप्रभवश्चैव सर्वपापविनाशनः ॥ पितॄणां दुहिता देवी गन्धकालीति विश्रुता ॥ ३० ॥ तस्यां स्नात्वा दिवं याति मृतो जातिस्मरो भवेत् ॥ कुबेरतुङ्गं पापघ्नं सिद्धचारणसेवितम् ॥ ३१ ॥ प्राणांस्तत्र परित्यज्य कुबेरानुचरो भवेत् ॥ उमातुङ्गमिति ख्यातं यत्र सा रुद्रवल्लभा ॥३२॥ तत्राभ्यर्च्य महादेवीं गोसहस्रफलं लभेत् ॥ भृगुतुङ्गे तपस्तप्तं श्राद्धं दानं तथा कृतम् ॥३३॥ कुलान्युभयतः सप्त पुनातीति मतिर्मम ॥ काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम् ॥ ३४ ॥ तत्र श्राद्धानि देयानि नित्यं पापक्षयेच्छया ॥ दशा

१ आर्षोयं प्रयोगः। लभेत इति साधु। २ उदकं कृत्वा–उदकार्यं पितृतर्पणं कृत्वा इत्यर्थः। ३ कावेर्याश्च भवक्षयमिति पा०।४ स्वर्गतिर्ध्रुवा इति पा०। ४ उत्तमाङ्गमितीति पा०।

र्णायां तथा दानं श्राद्धं होमं तपो जपः ॥ ३५ ॥ अक्षयश्चाव्ययश्चैव कृतं भवति सर्वदा ॥ तीर्थं द्विजातिभिर्जुष्टं नाम्ना वै कुरुजांगलम् ॥ ३६ ॥ दत्त्वा तु दानं विधिवद्ब्रह्मलोके महीयते ॥ वैतरण्यां महातीर्थे स्वर्णवेद्यां तथैव च ॥ ३७ ॥ धर्मपृष्ठे च शिरसि ब्रह्मणः परमे शुभे ॥ भरतस्याश्रमे पुण्ये पुण्ये गृध्रवने शुभे॥ ३८॥ महाह्रदे च कौशिक्यां दत्तं भवति चाक्षयम् ॥ मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥ ३९॥ हिताय सर्वभूतानां नास्तिकानां निदर्शनम् ॥ अल्पेनापि तु कालेन नरो धर्मपरायणः ॥ ४०॥ पाप्मानमुत्सृजत्याशु जीर्णां त्वचमिवोरगः ॥ नाम्ना कनकनन्देति तीर्थं त्रैलोक्यविश्रुतम् ॥ ४१ ॥ उदीच्यां ब्रह्मपृष्ठस्य ब्रह्मर्षिगणसेवितम् ॥ तत्र स्नात्वा दिवं यान्ति सशरीरा द्विजातयः ॥ ४२ ॥ दत्तं वापि सदा श्राद्धमक्षयं समुदाहृतम् ॥ ऋणैस्त्रिभिर्नरः स्नात्वा मुच्यते क्षीणकल्मषः ॥ ४३॥ मानसे सरसि स्नात्वा शक्रस्यार्द्धासनं लभेत्॥ उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ ४४॥ तस्मान्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ॥ स कामान् लभते दिव्यान्मोक्षोपायश्च विन्दति ॥ ४५ ॥ पर्वतो हिमवान्नाम नानाधातुविभूषितः ॥ योजनानां सहस्राणि साशीतिस्त्वायतो गिरिः ॥ ४६ ॥ सिद्धचारणसंकीर्णो देवर्षिगणसेवितः ॥ तत्र पुष्करिणी रम्या सुषुम्ना नाम नामतः ॥ ४७ ॥ तत्र गत्वा द्विजो विद्वान्ब्रह्महत्यां विमुञ्चति ॥ श्राद्धं भवति चाक्षय्यं तत्र दत्तं महोदयम् ॥ ४८ ॥ तारयेच्च पितॄन्सम्यग्दश पूर्वान्दशापरान् ॥ सर्वत्र हिमवान् पुण्यो गंगा पुण्या समंततः ॥ ४९॥ नद्यः समुद्रगाः पुण्याः समुद्रश्च विशेषतः ॥ बदर्याश्रममासाद्य मुच्यते सर्वकिल्बिषात् ॥ ५०॥ तत्र नारायणो देवो नरेणास्ते सनातनः ॥ अक्षयं तत्र दानं स्याच्छ्राद्धदानादिकञ्च यत् ॥ ५१ ॥ महादेवप्रियं तीर्थं पावनं तद्विशेषतः॥ तारयेच्च पितॄन्सर्वान्दत्वा श्राद्धं समाहितः ॥ ५२ ॥ देवदारुवनं पुण्यं सिद्धगन्धर्वसेवितम् ॥ महता देवदेवेन तत्र दत्तं महेश्वरम् ॥ ५३ ॥ मोहयित्वा मुनीन्सर्वान्समस्तैः सम्प्रपूजितः ॥ प्रसन्नो भगवानीशो मुनीन्द्रान् प्राह भावितान् ॥ ५४ ॥ इहाश्रमवरे रम्ये निवसिष्यथ

---

१ दत्तं भवति नान्यथा इति पा० । २ स्वर्णवत्यामिति, स्वर्णनद्यामिति पा० । ३ क्षेत्रे श्राद्धवटे इति, पुण्ये श्राद्धवटे इति पा० । ४ मुञ्जपृष्ठस्येति, मुण्डपृष्ठस्येति पा० । ५ घोरकल्मषः इति पा० । ६ अनुत्तमाम्–नास्ति उत्तमा यस्याः सा अनुत्तमा ताम् सर्वोत्कृष्टामित्यर्थः । ७ जप्ता वापि तथाविधमिति पा० । ८ निवत्स्यथेति साधु ।

सर्वदा ॥ मद्भावनासमायुक्तास्ततः सिद्धिमवाप्स्यथ ॥ ५५ ॥ यत्र मामर्चयन्तीह लोके धर्मपरायणाः ॥ तेषां ददामि परमं गाणपत्यं हि शाश्वतम् ॥ ५६ ॥ अत्र नित्यं वसिष्यामि सह नारायणेन तु ॥ प्राणानिह नरस्त्यक्त्वा न भूयो जन्म चाप्नुयात् ॥ ५७ ॥ संस्मरन्ति च ये तीर्थं देशान्तरगता जनाः ॥ तेषाञ्च सर्वपापानि नाशयामि द्विजोत्तमाः ॥५८॥ श्राद्धं दानं तपो होमः पिण्डनिर्वपणं तथा ॥ ध्यानं जपश्च नियमः सर्वमत्राक्षयं कृतम् ॥५९॥ तस्मात्सर्वप्रयत्नेन द्रष्टव्यं हि द्विजातिभिः ॥ देवदारुवनं पुण्यं महादेवनिषेवितम् ॥ ६० ॥ यत्रेश्वरो महादेवो विष्णुर्वा पुरुषोत्तमः ॥ तत्र सन्निहिता गंगा तीर्थान्यायतनानि च ॥६१॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे तीर्थवर्णनं नाम सप्तत्रिंशोऽध्यायः॥३७॥ देवदारुवनप्रवेशः॥ ऋषय ऊचुः॥ कथं दारुवनम्प्राप्तो भगवान्गोवृषध्वजः॥ मोहयामास विप्रेन्द्रान्सूत तद्वक्तुमर्हसि ॥१॥ सूत उवाच॥ पुरा दारुवने रम्ये देवसिद्धनिषेविते॥ सपुत्रदारतनयास्तपश्चेरुः सहस्रशः ॥२॥ प्रवृत्तं विविधं कर्म प्रकुर्वाणा यथाविधि ॥ यजन्ति विविधैर्यज्ञैस्तपन्ति च महर्षयः ॥ ३ ॥ तेषां प्रवृत्तिविन्यस्तचेतसामथ शूलभृत् ॥ व्याख्यापयन्सदा दोषं ययौ दारुवनं हरः ॥४॥ कृत्वा विश्वगुरुं विष्णु पार्श्वे देवो महेश्वरः ॥ ययौ निवृत्तविज्ञानस्थापनार्थञ्च शङ्करः ॥५ ॥ आस्थाय विपुलञ्चैष जनं विंशतिवत्सरम् ॥ लीलालसो महाबाहुः पीनांगश्चारुलोचनः ॥ ६ ॥ चामीकरवपुः श्रीमान्पूर्णचन्द्रनिभाननः ॥ मत्तमातंगगमनो दिग्वासा जगदीश्वरः ॥ ७ ॥ जातरूपमयीं मालां सर्वरत्नैरलंकृताम् ॥ दधानो भगवानीशः समागच्छति सस्मितः ॥ ८ ॥ योऽनन्तः पुरुषो योनिर्लोकानामव्ययो हरिः ॥ स्त्रीवेषं विष्णुरास्थाय सोऽनुगच्छति शूलिनम् ॥ ९ ॥ सम्पूर्णचन्द्रवदनं पीनोन्नतपयोधरम् ॥ शुचिस्मितं सुप्रसन्नं रणन्नूपुरकद्वयम् ॥ १० ॥ सुपीतवसनं दिव्यं श्यामलं चारुलोचनम् ॥ उदारहंसगमनं विलासि सुमनोहरम् ॥ ११ ॥ एवं स भगवानीशो देवदारुवनं हरः ॥ चचार हरिणा सार्द्धं मायया मोहयञ्जगत् ॥ १२ ॥ दृष्ट्वा चरन्तं विश्वेशं तत्र तत्र पिनाकिनम् ॥

१ विन्दतीति पा० । २ दारुवनेदेवः इति पा० । ३ वक्तुमिहार्हसीति, नस्तं वक्तुमिहार्हसीति पा० । ४ ख्यापयन् स महादेव इति, ख्यातवान् सुमहद्दोषमिति पा० । आस्थाय विपुलं वेषमूनविंशतिवत्सरमिति, वेषं गूढमिति पा० । ५ कुशेशयमयीमिति पा० । ६ दधार हंसचलनमिति पा० । ७ हारिणाक्षीणामिति पा० ।

मायया मोहिता नार्यो देवदेवं समन्वयुः ॥ १३ ॥ विस्रस्ताभरणाः सर्वास्त्यक्त्वा लज्जां पतिव्रताः ॥ सहैव तेन कामार्त्ता विलासिन्यश्चरन्ति हि ॥ १४ ॥ ऋषीणां पुत्रका येस्युर्युवानो जितमानसाः ॥ अन्वा[2]गमन्हृषीकेशं सर्वे कामप्रपीडिताः ॥ १५ ॥ गा[3]यन्ति नृत्यन्ति विलासयुक्ता नारीगणा नायकमेकमीशम् ॥ दृष्ट्वा सपत्नीकमतीवकान्तमिष्टं तथालिङ्गितमाचरन्ति ॥ १६ ॥ ते [4]संनिपत्य स्मितमाचरन्ति गायन्ति गीतानि मुनीशपुत्राः ॥ आलोक्य पद्मापतिमादिदेवं शुभांगमन्ये विचरन्ति तेन ॥ १७ ॥ आशामथैकामपि वासुदेवो मायी मुरारिर्मनासि प्रविष्टः ॥ [5]करोति भोगान्मनासि प्रवृत्तिं मायानुभूयन्त इतीव सम्यक् ॥ १८ ॥ विभाति विश्वंभ[6]रविश्वनाथः समाधवस्त्रीगणसान्निविष्टः ॥ अशे[7]षंशक्त्या समयं निविष्टो यथैकशक्त्या सह देवदेवः ॥ १९ ॥ करोति [8]नित्यं परमं प्रधानं तदा विरूढः पुनरेव भूयः ॥ ययौ समारुह्य हरिः स्वभावं त[9]मीदृशं नाम तमादिदेवम् ॥ २० ॥ दृष्ट्वा नारीकुलं रुद्रं पुत्रानपि च केशवम् ॥ मोहयन्तं मुनिश्रेष्ठाः कोपं सन्दाधिरे भृशम् ॥ २१ ॥ अतीवं[10]परुषं वाक्यं प्रोचुर्देवं कपर्दिनम् ॥ शेपुश्च विविधै[11]र्वाक्यैर्मायया तस्य मोहिताः ॥ २२ ॥ तपांसि तेषां सर्वेषां प्रत्याहन्यन्त शंकरे ॥ यथादित्यप्रतीकाशे तारका नभासि स्थिताः ॥ २३ ॥ ॥ तं भं[12]त्स्यं तपसा विप्राः समेत्य वृषभध्वजम् ॥ को भवानिति देवेशं पृच्छन्ति स्म विमोहिताः ॥ २४ ॥ सोऽब्रवीद्भगवानीशस्तपश्चर्तुमिहागतः ॥ इदानीं भार्यया देशं भवद्भिरिह सुव्रताः ॥ २५ ॥ तस्य ते वाक्यमाकर्ण्य भृग्वाद्या मुनिपुङ्गवाः ॥ ऊचुर्गृहीत्वा वसनं त्यक्त्वा भार्यां तपश्चर ॥ २६ ॥ अथोवाच विहस्येशः पिनाकी नीललोहितः ॥ सम्प्रेक्ष्य जगतां योनिं पार्श्वस्थञ्च जनार्दनम् ॥ २७ ॥ कथं भवद्भिरुदितं स्वभार्यापोषणोत्सुकैः ॥ त्यक्तव्या मम भार्येति धर्मज्ञैः शान्तमानसैः ॥ २८ ॥ ऋषय ऊचुः ॥

१ मोहितात्मानः इति पा० । २ अन्वगच्छन् हृषीकेशमिति पा० । ३ यं गोपातिं नित्यविलासबाह्या इति पा० । ४ वदन्ति मोहस्मितमाचरन्ति पार्श्वे निपेतुः स्मितमाचरन्तीति पा० । ५ करोति भोगान्मनासिप्रविष्टः, करोति भावं मनसापि वृत्तिमिति पा० । ६ भूतभर्त्ता इति, विश्वात्मकभूतभर्त्ता इति पा० । ७ अशेषपंक्त्यासनसन्निविष्ट इति पा० । ८ नृत्यं परमप्रभावामिति पा० । ९ तदीशिवृत्तामृतमादिदेवः इति पा० । १० अतीवासदृशं वाक्यं प्रोचुर्देवकपर्दिनमिति पा० । ११ पापैर्वाविधैरिति, शापैर्वाविधैरिति पा० । १२ भर्त्स्येति आर्षः प्रयोगः । भर्त्सयित्वेति साधु ।

व्यभिचाररता भार्याः सन्त्याज्याः पतिनेरिताः ॥ अस्माभिर्भक्ताः[1] सुभगा नेदृशास्त्यागमर्हति ॥ २९ ॥ महादेव उवाच ॥ न कदाचिदियं विप्रा मनसाप्यन्यमिच्छति ॥ नाहमेनामपि तथा विमुञ्चामि कदाचन ॥ ३० ॥ ऋषय ऊचुः ॥ दृष्ट्वा व्यभिचरन्तीह ह्यस्माभिः पुरुषाधम ॥ उक्तं ह्यसत्यं भवता गम्यतां क्षिप्रमेव हि ॥ ३१ ॥ एवमुक्तो महादेवः सत्यमेव मयेरितम् ॥ भवतां[2] प्रतिभा ह्येषा त्यक्त्वासौ विचचार ह ॥ ३२ ॥ सोऽगच्छद्धरिणा सार्द्धं मुनीन्द्रस्य महात्मनः ॥ वसिष्ठस्याश्रमं पुण्यं भिक्षार्थी परमेश्वरः ॥ ३३ ॥ दृष्ट्वा समागतं देवं भिक्षमाणमरुन्धती ॥ वसिष्ठस्य प्रिया भक्त्या प्रत्युद्गम्य ननाम तम् ॥ ३४ ॥ प्रक्षाल्य पादौ विमलं दत्त्वा चासनमुत्तमम् ॥ सम्प्रेक्ष्य शिथिलं गात्रमभिघातहतं द्विजैः ॥ सन्धयामास भैषज्यैर्विषण्णवदना सती ॥ ३५ ॥ चकार महतीं पूजां प्रार्थयामास भार्यया ॥ को भवान्कुत आयातः किमाचारो भवानिति ॥ उच्यतामाह भगवान्सिद्धानां प्रवरो ह्यहम् ॥ ३६ ॥ यदेतन्मण्डलं शुभ्रं भाति ब्रह्ममयं सदा ॥ एषैव देवता मह्यं धारयामि सदैव तु ॥ ३७ ॥ इत्युक्त्वा प्रययौ श्रीमाननुगृह्य पतिव्रताम् ॥ ताडयांचक्रिरे दण्डैर्लोष्टिभिर्मुष्टिभिर्द्विजाः ॥ ३८ ॥ दृष्ट्वा चरन्तं गिरिशं नग्नं विकृतिलक्षणम् ॥ प्रोचुरेतद्भवल्लिंगमुत्पाटय[3] सुदुर्मतेः ॥ ३९ ॥ तानब्रवीन्महायोगी करिष्यामीति शंकरः ॥ युष्माकं मामके लिंगे यदि द्वेषोऽभिजायते ॥ ४० ॥ उक्त्वा तूत्पाटयामास भगवान्भगनेत्रहा ॥ नापश्यंस्तत्क्षणादीशं केशवं लिंगमेव च ॥ ४१ ॥ तदोत्पाता बभूवुर्हि लोकानां भयशंसिनः ॥ न राजते सहस्रांशुश्चचाल पृथिवी पुनः ॥ निष्प्रभाश्च ग्रहाः सर्वे चुक्षुभे च महोदधिः ॥ ४२ ॥ अपश्यच्चानुसूयात्रेः स्वप्नं भार्या पतिव्रता ॥ कथयामास विप्राणां भयादाकुलितेन्द्रिया[4] ॥ ४३ ॥ तेजसा भासयन्कृत्स्नं नारायणसहायवान् ॥ भिक्षमाणः शिवो नूनं दृष्टोऽस्माकं गृहेष्विति ॥ ४४ ॥ तस्या वचनमाकर्ण्य शङ्कमाना महर्षयः ॥ सर्वे जग्मुर्महायोगं ब्रह्माणं विश्वसम्भवम् ॥ ४५ ॥

१ नास्माभिरेषा सुभगा तादृशी त्यागमर्हतीति पा० । २ भवतां प्रतिभाषेणात्युक्तोऽसौ विचचार ह इति पा० । ३ प्रोचुरेतद्भवाँल्लिङ्गमुत्पाटयतु दुर्मतिरिति, सुदुर्मते इति पा० । ४ आकुलितेक्षणा इति पा० ।

उपास्यमानममलैर्योगिभिर्ब्रह्मवित्तमैः ॥ चतुर्वेदैर्मूर्त्तिमद्भिः सावित्र्या सहितं प्रभुम् ॥ ४६ ॥ आसीनमासने रम्ये नानाश्चर्यसमन्विते ॥ प्रभासहस्रकलिले ज्ञानैश्वर्यादिसंयुते॥४७॥विभ्राजमानं वपुषा सस्मितं शुभ्रलोचनम् ॥ चतुर्मुखं महाबाहुं छन्दोमयमजं परम् ॥ ४८ ॥ विलोक्य देववपुषं प्रसन्नवदनं शुचिम् ॥ शिरोभिर्द्धरणीं गत्वा तोषयामासु रीश्वरम् ॥ ४९ ॥ तान्प्रसन्नमना देवश्चतुर्मूर्तिश्चतुर्मुखः ॥ व्याजहार मुनिश्रेष्ठाः किमागमनकारणम् ॥ ५० ॥ तत्तस्य वृत्तमखिलं ब्रह्मणः परमात्मनः ॥ ज्ञापयांचक्रिरे सर्वे कृत्वा शिरसि चांजलिम् ॥ ५१ ॥ ऋषय ऊचुः ॥ कश्चिद्दारुवनं पुण्यं पुरुषोऽतीवशोभनः ॥ भार्यया चारुसर्वाङ्गया प्रविष्टो नग्न एव हि ॥ ५२ ॥ मोहयामास वपुषा नारीणां कुलमीश्वरः ॥ कन्यकानां प्रियो यस्तु दूषयामास पुत्रकान् ॥ ५३ ॥ अस्माभिर्विविधाः शापाः प्रदत्तास्ते पराहताः ॥ ताडितोऽस्माभिरत्यर्थं लिंगं तु विनिपातितम् ॥ ५४ ॥ अन्तर्हितश्च भगवान्सभार्यो लिंगमेव च ॥ उत्पाताश्चाभवन् घोराः सर्वभूतभयंकराः ॥ ५५ ॥ क एव पुरुषो देव भीताः स्मः पुरुषोत्तम ॥ भवन्तमेव शरणं प्रपन्ना वयमच्युत ॥ ५६ ॥ त्वं हि वेत्सि जगत्यस्मिन्यत्किञ्चिदिह चेष्टितम् ॥ अनुग्रहेण युक्तेन तदस्माननुपालय ॥ ५७ ॥ विज्ञापितो मुनिगणैर्विश्वात्मा कमलोद्भवः ॥ ध्यात्वा देवं त्रिशूलांकं कृताञ्जलिरभाषत ॥ ५८ ॥ ब्रह्मोवाच ॥ हा कष्टं भवतामद्य जातं सर्वार्थनाशनम् ॥ धिग्बलं धिक् तपश्चर्या मिथ्यैव भवतामिह ॥५९॥ संप्राप्य पुण्यसंस्कारान्निधीनां परमं निधिम् ॥ उपेक्षितं वृथाचारैर्भवद्भिरिह मोहितैः ॥ ६० ॥ कांक्षन्ते योगिनो नित्यं यतन्तो यतयो निधिम् ॥ यमेव तं समासाद्य हा भवद्भिरुपेक्षितम् ॥ ६१ ॥ यजन्ति यज्ञैर्विविधैर्यत्प्राप्तेर्वेदवादिनः ॥ महानिधिं समासाद्य हा भवद्भिरुपेक्षितम् ॥ ६२ ॥ यंमर्चयित्वा सततं विश्वेशत्वमिदं मम ॥ स देवोपेक्षितो दृष्ट्वा निधानं भाग्य

१ वाताः प्रवृत्ताश्चेति पा० । २ भुविनिपातितम् इति पा० । ३ पुण्यसंस्थानां विधीनामिति पा० । ४ कांक्षन्तीति साधु । ५ यतमाना इति साधु । ६ तमासाद्याक्षयं देवमैश्वर्यमखिलं ध्रुवमिति पा० । ७ यं समासाद्यदेवानामैश्वर्यमखिलं जगत् । तमासाद्याक्षयनिधिं हा भवद्भिरुपेक्षितम् । यत्समापत्तिजनितं विश्वेशत्वमिदंमम । तद्देवोपेक्षितं दृष्ट्वा निधानं भाग्यवर्जितैः इति लि० पु० । यं समासाद्य जनितमिति पा० ।

वर्जिताः ॥ ६३ ॥ यस्मिन्समाहितं दिव्यमैश्वर्यं यत्तदव्ययम् ॥ तमासाद्य निधिं ब्रह्म हा भवद्भिर्वृथाकृतम् ॥ ६४ ॥ एष देवो महादेवो विज्ञेयस्तु
महेश्वरः ॥ न तस्य परमं किञ्चित्पदं समभिगम्यते ॥ ६५ ॥ देवतानामृषीणां वा पितॄणाञ्चापि शाश्वतः ॥ सहस्रयुगपर्यन्ते प्रलये सर्वदेहि
नाम् ॥ ६६ ॥ संहरत्येष भगवान्कालो भूत्वा महेश्वरः ॥ एष चैव प्रजाः सर्वाः सृजत्येष स्वतेजसा ॥ ६७ ॥ एष चक्री चक्रवर्ती
श्रीवत्सकृतलक्षणः ॥ योगी कृतयुगे देवस्त्रेतायां यज्ञ एव च ॥ द्वापरे भगवान्कालो धर्मकेतुः कलौ युगे ॥ ६८ ॥ रुद्रस्य मूर्त्तयस्तिस्रो
याभिर्विश्वमिदं ततम् ॥ तमो ह्यग्नी रजो ब्रह्मा सत्त्वं विष्णुरिति स्मृतिः ॥ ६९ ॥ मूर्त्तिरन्या स्मृता चास्य दिग्वासा च शिवा
ध्रुवा ॥ यत्र तिष्ठति तद्ब्रह्म योगेन तु समन्वितम् ॥ ७० ॥ या चास्य पार्श्वगा भार्या भवद्भिरभिभाषिता ॥ स हि नारायणो देवः पर
मात्मा सनातनः ॥ ७१ ॥ तस्मात्सर्वमिदं जातं तत्रैव च लयं व्रजेत् ॥ स एष मोचयेत्कृत्स्नं स एष च परा गतिः ॥ ७२ ॥ सहस्रशीर्षा
पुरुषः सहस्राक्षः सहस्रपात् ॥ एकशृंगो महानात्मा नारायण इति श्रुतिः ॥ ७३ ॥ रेतोऽस्य गर्भो भगवानापो माया तनुः प्रभुः ॥
स्तूयते विविधैर्मन्त्रैर्ब्राह्मणैर्मोक्षकांक्षिभिः ॥ ७४ ॥ संहृत्य सकलं विश्वं कल्पांते पुरुषोत्तमः ॥ शेते योगामृतं पीत्वा यत्र विष्णोः परं
पदम् ॥ ७५ ॥ न जायते न म्रियते वर्द्धते न च विश्वसृक् ॥ मूलप्रकृतिरव्यक्ता गीयते वैदिकैरजः ॥ ७६ ॥ ततो निशायां वृत्तायां सिसृक्षु
रखिलं जगत् ॥ अजनाभौ तु तद्बीजं क्षिपत्येष महेश्वरः ॥ ७७ ॥ तं मां वित्त महात्मानं ब्रह्माणं विश्वतोमुखम् ॥ महांतं पुरुषं विश्व
मपां गर्भमनुत्तमम् ॥ ७८ ॥ न तं जानीत जनकं मोहितास्तस्य मायया ॥ देवदेवं महादेवं भूतानामीश्वरं हरम् ॥ ७९ ॥ एष देवो
महादेवो ह्यनादिर्भगवान्हरः ॥ विष्णुना सह संयुक्तः करोति विकरोति च ॥ ८० ॥ न तस्य विद्यते कार्यं न तस्माद्विद्यते परम् ॥ स वेदान्
प्रददौ पूर्वं योगमायातनुर्मम ॥ ८१ ॥ स मायी मायया सर्वं करोति विकरोति च ॥ तमेव मुक्तये ज्ञात्वा व्रजध्वं शरणं शिवम् ॥ ८२ ॥

१ भवद्भिरभिवीक्षिता इति पा० । २ पुराणोऽष्टाक्षरो हरिः । चतुर्वेदश्चतुर्मूर्तिस्त्रिमूर्तिस्त्रिगुणः परः । एकमूर्तिरमेयात्मा नारायण इति श्रुतिः इति लिं० पु० । ३ तद्विष्णोः परमं पदमिति पा० । ४ व्रजेत शरणं भवमिति पा० ।

इतीरिता भगवता मरीचिप्रमुखा विभुम्॥ प्रणम्य देवं ब्रह्माणं पृच्छन्ति स्म समाहिताः॥८३॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे अष्टत्रिंशोऽध्यायः॥ ३८ ॥ मुनय ऊचुः ॥ कथं पश्येम तं देवं पुनरेव पिनाकिनम् ॥ ब्रूहि विश्वामरेशान त्राता त्वं शरणैषिणाम्॥१॥ ब्रह्मोवाच ॥ यद्दृष्टं भवता तस्य लिङ्गं भुवि निपातितम् ॥ तल्लिङ्गानुकृतीशस्य कृत्वा लिंगमनुत्तमम् ॥ २ ॥ पूजयध्वं सपत्नीकाः सादरं पुत्रसंयुताः ॥ वैदिकैरेव नियमैर्विविधैर्ब्रह्मचारिणः॥३॥संस्थाप्य शांकरैर्मन्त्रैर्ऋग्यजुःसामसंभवैः॥ तपः परं समास्थाय गृणन्तः शतरुद्रियम् ॥ ४ ॥ समाहिताः पूजयध्वं सपुत्राः सह बन्धुभिः ॥ सर्वे प्राञ्जलयो भूत्वा शूलपाणिं प्रपद्यथ ॥५॥ततो द्रक्ष्यथ देवेशं दुर्दर्शमकृतात्मभिः॥ यं दृष्ट्वा सर्वमज्ञानमधर्मश्च प्रणश्यति ॥६॥ ततः प्रणम्य वरदं ब्रह्माणममितौजसम् ॥ जग्मुः संहृष्टमनसो देवदारुवनं पुनः ॥ ७ ॥ आराधयितुमारब्धा ब्रह्मणा कथितं यथा॥ अजानन्तः परं भावं वीतरागा विमत्सराः॥८॥ स्थण्डिलेषु विचित्रेषु पर्वतानां गुहासु च॥ नदीनाञ्च विविक्तेषु पुलिनेषु शुभेषु च॥९॥शैवालभोजनाः केचित्केचिदन्तर्जलेशयाः ॥ केचिदभ्रावकाशास्तु पादांगुष्ठे ह्यधिष्ठिताः ॥ १० ॥ दन्तोऽलूखलिनस्त्वन्ये ह्यश्मकुट्टास्तथा परे ॥ शाकपर्णाशनाः केचित्संप्रक्षाला मरीचिपाः ॥ ११ ॥ वृक्षमूलनिकेताश्च शिलाशय्यास्तथापरे ॥ कालं नयन्ति तपसा पूजयन्तो महेश्वरम् ॥ १२ ॥ ततस्तेषां प्रसादार्थं प्रपन्नार्त्तिहरो हरः ॥ चकार भगवान्बुद्धिं बोधयन्वृषभध्वजः ॥ १३ ॥ देवः कृतयुगे ह्यस्मिञ्छृंगे हिमवतः शुभे ॥ देवदारुवनं प्राप्तः प्रसन्नः परमेश्वरः ॥ १४ ॥ भस्मपाण्डुरदिग्धांगो नग्नो विकृतलक्षणः ॥ उल्मूकव्यग्रहस्तश्च रक्तपिंगललोचनः ॥ १५ ॥ क्वचिच्च हसते रौद्रं क्वचिद्गायति विस्मितः ॥ क्वचिन्नृत्यति शृङ्गारी क्वचिद्रौति मुहुर्मुहुः ॥१६॥ आश्रमे ह्यटते भिक्षुर्याचते च पुनः पुनः ॥ मायां कृत्वात्मनो रूपं देवस्तद्वनमागतः ॥ १७ ॥ कृत्वा गिरिसुतां गौरीं पार्श्वे देवः पिनाकधृक् ॥ सा च पूर्ववदेवेशी देवदारुवनं गता ॥१८॥ दृष्ट्वा समागतं देवं देव्या सह कपर्दिनम्॥ प्रणेमुः शिर सा

१ सुदुःखिताः इति पा० । २ लिङ्गन्तु विनिपातितमिति पा० । ३ शैवानां भाजनमिति पा० । ४ केचिदभ्रावकाशास्तु इति पा० । ५ शाकपत्राशिन इति पा० । ६ प्रबोधाय वृषध्वजः इति, बोधयंस्तान् वृषध्वज इति पा० । ७ एवं कृतयुगे ह्यस्मिन् मृगोहिमवतः सुतेति पा० ।

भूमौ तोषयामासुरीश्वरम् ॥ १९॥ वैदिकैर्विविधैर्मन्त्रैस्तोत्रैर्माहेश्वरैः शुभैः ॥ अथर्वशिरसा चान्ये रुद्राद्यैरर्च्चयन्भवम् ॥२०॥ नमो देवाधिदेवाय महादेवाय ते नमः ॥ त्र्यम्बकाय नमस्तुभ्यं त्रिशूलवरधारिणे ॥ २१॥ नमो दिग्वाससे तुभ्यं विकृताय पिनाकिने ॥ सर्वप्रणतदेवाय स्वयमप्रणतात्मने ॥ २२॥ अन्तकान्तकृते तुभ्यं सर्वसंहरणाय च ॥ नमोऽस्तु नृत्यशीलाय नमो भैरवरूपिणे ॥२३॥ नरनारीशरीराय योगिनां गुरवे नमः ॥ नमो दान्ताय शांताय तापसाय हराय च ॥ २४ ॥ विभीषणाय रुद्राय नमस्ते कृत्तिवाससे ॥ नमस्ते लेलिहानाय श्रीकण्ठाय च ते नमः ॥ २५ ॥ अघोरघोररूपाय वामदेवाय वै नमः ॥ नमः कनकमालाय देव्याः प्रियकराय च ॥ २६ ॥ गङ्गासलिलधाराय शंभवे परमेष्ठिने ॥ नमो योगाधिपतये भूताधिपतये नमः ॥२७॥ प्राणाय च नमस्तुभ्यं नमो भस्मांगधारिणे॥ नमस्ते हव्यवाहाय दंष्ट्रिणे हव्यरेतसे ॥२८॥ ब्रह्मणश्च शिरोहर्त्रे नमस्ते कालरूपिणे ॥ आगतिं त न जानीमो गतिं नैव च नैव च ॥२९॥ विश्वेश्वर महादेव योऽसि सोऽसि नमोस्तु ते ॥ नमः प्रमथनाथाय दात्रे च शुभसंपदाम् ॥ ३० ॥ कपालपाणये तुभ्यं नमो जुष्टतमाय ते ॥ नमः कनकपिङ्गाय वारिलिंगाय ते नमः ॥ ३१ ॥ नमो वह्न्यर्कलिंगाय ज्ञानलिंगाय ते नमः ॥ नमो भुजंगहाराय कर्णिकारप्रियाय च ॥ किरीटिने कुण्डलिने कालकालाय ते नमः॥३२॥ महादेव महादेव देवदेव त्रिलोचन ॥ क्षम्यतां यत्कृतं मोहात्त्वमेव शरणं हि नः॥३३॥ चरितानि विचित्राणि गुह्यानि गहनानि च ॥ ब्रह्मादीनाञ्च सर्वेषां दुर्विज्ञेयो हि शंकरः ॥ ३४ ॥ अज्ञानाद्यदि वा ज्ञानात्किञ्चिद्यत्कुरुते नरः ॥ तत्सर्वं भगवानेव कुरुते योगमायया ॥ ३५ ॥ एवं स्तुत्वा महादेवं प्रविष्टैरंतरात्मभिः ॥ ऊचुः प्रणम्य गिरिशं पश्यामस्त्वां यथा पुरा ॥ ३६ ॥ तेषां संस्तवमाकर्ण्य सोमः सोमविभूषणः ॥ स्वयमेव परं रूपं दर्शयामास शंकरः ॥ ३७ ॥ तं ते दृष्ट्वाथ गिरिशं देव्या सह पिनाकिनम् ॥ यथापूर्वं स्थिता विप्राः प्रणेमुर्हृष्टमानसाः ॥ ३८ ॥ ततस्ते मुनयः सर्वे संस्तूय च महेश्वरम् ॥

१ ब्रह्माधिपतये इति पा० । २ विश्वेश्वर महादेव योगिकोऽसि नमोऽस्तुते इति पा० । ३ नमो देव महादेव महादेव त्रिलोचन इति पा० । ४ संस्तवं सम्यक् स्तवमित्यर्थः । अत्र संस्तवशब्दः न परिचयार्थकः ।

भृग्वंगिरा वसिष्ठस्तु विश्वामित्रस्तथैव च ॥ ३९ ॥ गौतमोऽत्रिः सुकेशश्च पुलस्त्यः पुलहः क्रतुः ॥ मरीचिः कश्यपश्चापि संवर्त्तकमहातपाः ॥ प्रणम्य देवदेवेशमिदं वचनमब्रुवन् ॥ ४० ॥ कथं त्वां देवदेवेश कर्मयोगेन वा प्रभो ॥ ज्ञानेन वाथ योगेन पूजयामः सदैव हि ॥ ४१ ॥ केन वा देव मार्गेण संपूज्यो भगवानिह ॥ किं तत्सेव्यमसेव्यं वा सर्वमेतद्ब्रवीहि नः ॥ ४२ ॥ श्रीशिव उवाच ॥ एतद्वः संप्रवक्ष्यामि गूढं गहनमुत्तमम् ॥ ब्रह्मणा कथितं पूर्वं महादेवे महर्षयः ॥ ४३ ॥ सांख्ययोगाद्द्विधा ज्ञेयं पुरुषाणां हि साधनम् ॥ योगेन सहितं सांख्यं पुरुषाणां विमुक्तिदम् ॥ ४४ ॥ न केवलं हि योगेन दृश्यते पुरुषः परः ॥ ज्ञानन्तु केवलं सम्यगपवर्गफलप्रदम् ॥ ४५ ॥ भवंतः केवलं योगं समाश्रित्य विमुक्तये ॥ विहाय सांख्यं विमलमकुर्वत परिश्रमम् ॥ ४६ ॥ एतस्मात्कारणाद्विप्रा नृणां केवलंकर्मणाम् ॥ आगतोऽहमिमं देशं ज्ञापयन्मोहसंभवम् ॥ ४७ ॥ तस्माद्भवद्भिर्विमलं ज्ञानं कैवल्यसाधनम् ॥ ज्ञातव्यं हि प्रयत्नेन श्रोतव्यं दृश्यमेव च ॥ ४८ ॥ एकः सर्वत्रगो ह्यात्मा केवलश्चितिमात्रकः ॥ आनन्दो निर्मलो नित्य एतद्वै सांख्यदर्शनम् ॥ ४९ ॥ एतदेव परं ज्ञानमथ मोक्षोऽनुगीयते ॥ एतत्कैवल्यममलं ब्रह्मभावश्च वर्णितः ॥ ५० ॥ आश्रित्य चैतत्परमं तन्निष्ठास्तत्परायणाः ॥ पश्यन्ति मां महात्मानो यतयो विश्वमीश्वरम् ॥ ५१ ॥ एतत्तत्परमं ज्ञानं केवलं सन्निरञ्जनम् ॥ अहं हि वेद्यो भगवान्मम मूर्त्तिरियं शिवा ॥ ५२ ॥ बहूनि साधनानीह सिद्धये कथितानि तु ॥ तेषामभ्यधिकं ज्ञानं मामकं द्विजपुङ्गवाः ॥ ५३ ॥ ज्ञानयोगरताः शान्ता मामेव शरणं गताः ॥ ये हि मां भस्मनि रता ध्यायन्ति सततं हृदि ॥ ५४ ॥ मद्भक्तितत्परा नित्यं यतयः क्षीणकल्मषाः ॥ नाशयाम्यचिरात्तेषां घोरं संसारगह्वरम् ॥ ५५ ॥ निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम् ॥ गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥ ५६ ॥ प्रशान्तः संयतमना भस्मोद्धूलितविग्रहः ॥ ब्रह्मचर्यरतो नग्नो व्रतं पाशुपतं

---

१ भृग्वङ्गिराः-भृगुणा सहित अङ्गिराः । २ केवलनेति, न केवलं वियोगेनेति पा० । ३ केवलधर्मिणामिति पा० । ४ ब्रह्मभावं स्तुवन्त्यत इति पा० । ५ भक्तिनिरता इति पा० । ६ मद्भक्तिपरमा इति पा० । ७ संसारसागरमिति पा० । ८ यत्नात्पाशुपतं परमिति पा० ।

चरेत् ॥ ५७ ॥ यद्वा कौपीनवसनः स्यांदेकवसनो मुनिः ॥ वेदाभ्यासरतो विद्वान्ध्यायेत्पशुपतिं शिवम् ॥ ५८ ॥ एष पाशुपतो योगः सेवनीयो मुमुक्षुभिः ॥ तस्मिन्स्थितैस्तु पठितं निष्कामैरिति हि श्रुतम् ॥५९॥ वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥ बहवोऽनेन योगेन पूता मद्भावमागताः ॥ ६० ॥ अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनानि तु ॥ वेदवादविरुद्धानि मयैव कथितानि तु ॥६१॥ वामं पाशुपतं सोमं लाकुरं चैव भैरवम् ॥ असेव्यमेतत्कथितं वेदबाह्यं तथेतरम् ॥ ६२ ॥ वेदमूर्त्तिरहं विप्रा नान्यशास्त्रार्थवेदिभिः ॥ ज्ञायते मत्स्वरूपं तु मुक्त्वा देवं सनातनम् ॥ ६३ ॥ स्थापयध्वमिदं मार्गं पूजयध्वं महेश्वरम् ॥ ततोऽचिराद्वरं ज्ञानमुत्पत्स्यति न संशयः ॥ ६४ ॥ मयि भक्तिश्च विपुला भवतामस्तु सत्तमाः ॥ ध्यानमात्रं हि सान्निध्यं दास्यामि मुनिसत्तमाः ॥ ६५ ॥ इत्युक्त्वा भगवान्सोमस्तत्रैवान्तर्हितोऽभवत् ॥ तेऽपि दारुवने स्थितश्च ह्यर्चयन्ति स्म शङ्करम् ॥६६॥ ब्रह्मचर्यरताः शान्ता ज्ञानयोगपरायणाः ॥ समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः ॥ ६७ ॥ विचक्रिरे बहून्वादान्स्वात्मज्ञानसमाश्रयान् ॥ किमस्य जगतो मूलमात्मा चास्माकमेव हि ॥६८॥ कोऽपि स्यात्सर्वभावानां हेतुरीश्वर एव च॥ इत्येवं मन्यमानानां ध्यानमार्गावलम्बिनाम् ॥ आविरासीन्महादेवी ततो गिरिवरात्मजा ॥ ६९ ॥ कोटिसूर्यप्रतीकाशा ज्वालामालासमावृता ॥ स्वभाभिर्निर्मलाभिः सा पूरयन्ती नभस्तलम् ॥ ७० ॥ तामन्वपश्याद्गिरिजाममेयां ज्वालासहस्रान्तरसन्निविष्टाम् ॥ प्रणेमुरेतामखिलेशपत्नीं जानन्ति चैतत्परमस्य बीजम् ॥७१॥ अस्माकमेषा परमस्य पत्नी गतिस्तथात्मा गगनाभिधाना ॥ पश्यन्त्यथात्मानमिदं च कृत्स्नं तस्यामथैते मुनयः प्रहृष्टाः ॥ ७२ ॥ निरीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम् ॥ पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम् ॥ ७३ ॥ आलोक्य देवीमथ देवमीशं प्रणेमुरानन्दमवापुरग्र्यम् ॥ ज्ञानं तदीशं भगवत्प्रसादादाविर्बभौ जन्मविनाशहेतु ॥ ७४ ॥ इयं या सा जगतो योनिरेका सर्वात्मिका सर्वनियामिका च ॥ माहेश्वरी शक्तिरनादिसिद्धा व्योमाभिधाना दिवि राजतीव ॥ ७५॥ अस्यां महान् परमेष्ठी परस्तान्महेश्वरः शिव

१ स्याद्वा दिग्वसनो मुनिरिति पा० । २ भस्मच्छन्नैर्हि सततमिति पा० । ३ उत्पत्स्यते इति साधु । ४ तत्रैवान्तरधीयत इति पा० । ५ मुनयश्च विप्रा इति पा० ।

एकः स रुद्रः ॥ चकार विश्वं परशक्तिनिष्ठं मायामथारुह्य च देवदेवः॥ ७६ ॥ एको देवः सर्वभूतेषु गूढो मायी रुद्रः सकलो निष्कलश्च ॥ स एव देवी न च तद्विभिन्नमेतज्ज्ञात्वा ह्यमृतत्वं व्रजन्ति ॥ ७७ ॥ अन्तर्हितोऽभूद्भगवान्महेशो देव्या तया सह देवाधिदेवः ॥ आराधयन्ति स्म तमादिदेवं वनौकसस्ते पुनरेव रुद्रम् ॥७८॥ एतद्वः कथितं सर्वं देवदेवस्य चेष्टितम् ॥ देवदारुवने पूर्वं पुराणे यन्मया श्रुतम् ॥ ७९ ॥ यः पठेच्छृणुयान्नित्यं मुच्यते सर्वपातकैः ॥ श्रावयेद्वा[1] द्विजाञ्छान्तान्स याति परमां गतिम् ॥८०॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे देवदारुवनप्रवेशो नाम ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥ सूत उवाच ॥ एषा पुण्यतमा देवी देवगन्धर्वसेविता ॥ नर्मदा लोकविख्याता तीर्थानामुत्तमा नदी ॥ १ ॥ तस्याः शृणुध्वं माहात्म्यं मार्कण्डेयेन भाषितम् ॥ युधिष्ठिराय तु शुभं सर्वपापप्रणाशनम् ॥ २ ॥ युधिष्ठिर उवाच ॥ श्रुतास्ते विविधा धर्मास्तत्प्रसादान्महामुने ॥ माहात्म्यं च प्रयागस्य तीर्थानि विविधानि च ॥ ३ ॥ नर्मदा सर्वतीर्थानां मुख्या हि भवतेरिता ॥ तस्यास्त्विदानीं माहात्म्यं वक्तुमर्हसि सत्तम ॥ ४ ॥ मार्कण्डेय उवाच ॥ नर्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता ॥ तारयेत्सर्वभूतानि स्थावराणि[2] चराणि च ॥ ५ ॥ नर्मदायास्तु माहात्म्यं पुराणे यन्मया श्रुतम् ॥ इदानीं तत्प्रवक्ष्यामि शृणुष्वैकमना[3]ः शुभम् ॥ ६ ॥ पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती ॥ ग्रामे वा यदि वारण्ये पुण्या सर्वत्र नर्मदा ॥७॥ त्रिभिः सारस्वतं तोयं सप्ताहाद्[4]यामुनं जलम् ॥ सद्यः पुनाति गांगेयं दर्शनादेव नार्मदम् ॥ ८ ॥ कलिंगदेशपश्चार्द्धे पर्वतेऽमरकण्टके ॥ पुण्यां[5] त्रिषु त्रिलोकेषु रमणीया मनोरमा ॥९॥ सदेवासुरगन्धर्वा ऋषयश्च तपोधनाः॥ तपस्तप्त्वा तुं राजेन्द्र सिद्धिं तु परमां गताः॥ १० ॥ तत्र स्नात्वा नरो राजन्नियमस्थो जितेन्द्रियः ॥ उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ ११ ॥ योजनानां शतं साग्रं श्रूयते सरिदुत्तमा ॥ विस्तारेण तु राजेन्द्र योजनद्वयमायता ॥ १२ ॥ षष्टितीर्थसहस्राणि षष्टिकोटयस्तथैव च ॥ पर्वतस्य समन्तात्तु तिष्ठन्त्यमर

---

१ श्रावयित्वा द्विजान् भक्तान् प्रयाति परमां गतिमिति पा० । २ स्थापनानि च नर्मदेति पा० । ३ शृणु इति साधु । ४ सप्ताहेन तु यामुनमिति पा० । ५ पुण्याशु त्रिषु लोकेष्विति, पुण्या च त्रिषु लोकेषु इति पा० ।

कण्टके ॥ १३ ॥ ब्रह्मचारी शुचिर्भूत्वा जितक्रोधो जितेन्द्रियः ॥ सर्वहिंसानिवृत्तस्तु सर्वभूतहिते रतः ॥ १४ ॥ एवं शुद्धसमाचारो यस्तु प्राणान्परित्यजेत् ॥ तस्य पुण्यफलं राजञ्छृणुष्वावहितोऽनघ ॥ १५ ॥ शतं वर्षसहस्राणि स्वर्गे मोदंति[1] पाण्डव ॥ अप्सरोगणसंकीर्णो दिव्यस्त्रीपरिवारितः ॥ १६ ॥ दिव्यगन्धानुलिप्तश्च दिव्यपुष्पोपशोभितः ॥ क्रीडते दिव्यलोके[2] तु विबुधैः सह मोदते ॥ १७ ॥ ततः स्वर्गात्परिभ्रष्टो राजा भवति धार्मिकः ॥ गृहं तु लभतेऽसौ वै नानारत्नसमन्वितम् ॥ १८ ॥ स्तम्भैर्मणिमयैर्दिव्यैर्वज्रवैदूर्यभूषितम् ॥ आलेख्यवाहनैः शुभ्रैर्दासीशि[3]तसमान्वितम् ॥ १९ ॥ राजराजेश्वरः श्रीमान्सर्वस्त्रीजनवल्लभः ॥ जीवेद्वर्षशतं साग्रं तत्र भोगसमन्वितः ॥ २० ॥ अग्नि[4]प्रवेशेऽथ जले वाथवानशने कृते ॥ अनिवर्त्तिका[5] गतिस्तस्य पवनस्याम्बरे यथा ॥ २१ ॥ पश्चिमे पर्वततटे सर्वपाप विनाशनः ॥ ह्रदो जलेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥ २२ ॥ तत्र पिण्डप्रदानेन सन्ध्योपासनकर्मणा ॥ दशवर्षसहस्राणि तर्पिताः स्युर्न संशयः ॥ २३ ॥ दक्षिणे नर्मदाकूले कपिलाख्या महानदी ॥ सरलार्जुनसञ्छन्ना नातिदूरे व्यवस्थिता ॥ २४ ॥ सा तु पुण्या महाभागा त्रिषु लोकेषु विश्रुता ॥ तत्र कोटिशतं साग्रं तीर्थानान्तु युधिष्ठिर ॥ २५ ॥ तस्मिंस्तीर्थे तु ये वृक्षाः पतिताः कालपर्य यात् ॥ नर्मदातोयसंस्पृष्टास्ते यान्ति परमां गतिम् ॥ २६ ॥ द्वितीया तु महाभागा विशल्यकरणी शुभा ॥ तत्र तीर्थे नरः स्नात्वा विशल्यो भवति क्षणात् ॥ २७ ॥ कपिला च विशल्या च श्रूयते सरिदुत्तमे ॥ ईश्वरेण पुरा प्रोक्ते लोकानां हितकाम्यया ॥ २८ ॥ अनाशकन्तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ सर्वपापविशुद्धात्मा रुद्रलोके स गच्छति ॥ २९ ॥ तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् ॥ ये वसन्त्युत्तरे कूले रुद्रलोके वसन्ति ते[6] ॥ ३० ॥ सरस्वत्याञ्च गंगायां नर्मदायां युधिष्ठिर ॥ समं स्नानञ्च दानं च यथा मे शंकरोऽब्रवीत् ॥ ३१ ॥ परित्यजति यः प्राणान्पर्वतेऽमरकण्टके ॥ वर्षकोटिशतं साग्रं रुद्रलोके महीयते ॥ ३२ ॥ नर्मदायां जलं पुण्यं फेनोर्मि

१ मोदते इति साधु । २ देवलोके तु दैवतैरिति पा० । ३ दासीदाससमन्वितमिति पा० । ४ अथ वह्निप्रवेशे तु कुले वानाशके कृते इति पा० आशो भोजनमेव आशाकः, न आशाकः अनाशकस्तस्मिन् प्रायोपवेशनेइत्यर्थः । ५ अनिवर्त्तिका अपुनरावर्त्तिनीत्यर्थः । ६ राजसत्तमेति पा० ।

सफलीकृतम् ॥ पवित्रं शिरसा धृत्वा सर्वपापैः प्रमुच्यते ॥ ३३ ॥ नर्मदा सर्वतः पुण्या ब्रह्महत्यापहारिणी ॥ अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥ ३४ ॥ जालेश्वरं तीर्थवरं सर्वपापप्रणाशनम् ॥ तत्र गत्वा नियमवान्सर्वकामांल्लभेन्नरः ॥ ३५ ॥ चन्द्रसूर्योपरागे च गत्वा ह्यमरकण्टकम् ॥ अश्वमेधाद्दशगुणं पुण्यमाप्नोति मानवः ॥ ३६ ॥ एष पुण्यो गिरिवरो देवगन्धर्वसेवितः ॥ नानाद्रुमलताकीर्णो नानापुष्पोपशोभितः ॥ ३७॥ तत्र सन्निहितो राजन्देव्या सह महेश्वरः ॥ ब्रह्मा विष्णुस्तथा रुद्रो विद्याधरगणैः सह ॥ ३८ ॥ प्रदक्षिणं तु यः कुर्यात्पर्वतेऽमरकण्टके ॥ पौण्डरीकस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३९ ॥ कावेरी नाम विख्याता नदी कल्मषनाशिनी ॥ तत्र स्नात्वा महादेवमर्चयेद्वृषभध्वजम् ॥ संगमे नर्मदायास्तु रुद्रलोके महीयते॥४०॥इति श्रीकूर्मपुराणे उत्तरार्द्धे मार्कण्डेययुधिष्ठिरसंवादे नर्मदामाहात्म्यं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥ मार्कण्डेय उवाच ॥ नर्मदा सरितां श्रेष्ठा सर्वपापविनाशिनी ॥ मुनिभिः कथिता पूर्वमीश्वरेण स्वयम्भुना ॥ १ ॥ मुनिभिः संस्तुता ह्येषा नर्मदा प्रवरा नदी ॥ रुद्रगात्राद्विनिष्क्रान्ता लोकानां हितकाम्यया ॥ २ ॥ सर्वपापहरा नित्यं सर्वदेवनमस्कृता ॥ संस्तुता देवगन्धर्वैरप्सरोभिस्तथैव च ॥ ३ ॥ उत्तरे चैव कूले च तीर्थं त्रैलोक्यविश्रुते ॥ नाम्ना भद्रेश्वरं पुण्यं सर्वपापहरं शुभम् ॥ ४ ॥ तत्र स्नात्वा नरो राजन्दैवतैः सह मोदते ॥ ततो गच्छेत राजेन्द्र विमलेश्वरमुत्तमम् ॥ ५ ॥ तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ततोऽङ्गारकेश्वरं गच्छेन्नियतो नियतायनः ॥ ६ ॥ सर्वपापविशुद्धात्मा रुद्रलोके महीयते ॥ ततो गच्छेत राजेन्द्र केदारं नाम पुण्यदम् ॥ ७ ॥ तत्र स्नात्वोदकं पीत्वा सर्वान्कामानवाप्नुयात् ॥ निष्कलेशन्ततो गच्छेत्सर्वपापविनाशनम्॥८॥तत्र स्नात्वा महाराज रुद्रलोके महीयते॥ततो गच्छेत राजेन्द्र बाणतीर्थमनुत्तमम्॥९॥ तत्र प्राणान्परित्यज्य रुद्रलोकमवाप्नुयात् ॥ ततः पुष्करिणीं गच्छेत्स्नानं तत्र समाचरेत् ॥१०॥ तत्र स्नात्वा नरो राजन् सिंहासनपतिर्भवेत् ॥ शक्रतीर्थं ततो गच्छेत्कूले चैव तु दक्षिणे ॥११॥ स्नातमात्रो नरस्तत्र इन्द्रस्यार्द्धासनं लभेत् ॥ ततो गच्छेत राजेन्द्र शूलभेद

१ समलंकृतमिति, बहुलंकृतमिति पा० । २ नागश्चामरकङ्कटमिति पा० । ३ विपुलेति पा० । ४ रुद्रलोके महीयते इति पा० । ५ तीर्थमाम्रातकेश्वरमिति पा० ।

इति श्रुतिः ॥ १२ ॥ तत्र स्नात्वा च पीत्वा च गोसहस्रफलं लभेत् ॥ उपोष्य रजनीमेकां स्नानं कृत्वा यथाविधि ॥ १३ ॥ आराधयेन्महायोगं देवेदेवं नरोऽमलः ॥ गोसहस्रफलं प्राप्य विष्णुलोकं स गच्छति ॥१४॥ ऋषितीर्थं ततो गत्वा सर्वपापहरं नृणाम् ॥स्नातमात्रो नरस्तत्र शिवलोके महीयते ॥ १५ ॥ नारदस्य तु तत्रैव तीर्थं परमशोभनम् ॥ स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥ १६ ॥ यत्र तप्तं तपः पूर्वं नारदेन सुरर्षिणा ॥ प्रीतस्तस्य ददौ योगं देवदेवो महेश्वरः ॥ १७ ॥ ब्रह्मणा निर्मितं लिंगं ब्रह्मेश्वरमिति श्रुतम् ॥ यत्र स्नात्वा नरो राजन्ब्रह्मलोके महीयते ॥ १८ ॥ ऋणतीर्थं ततो गच्छेदृणान्मुच्येन्नरो ध्रुवम् ॥ वटेश्वरं ततो गच्छेत्पर्याप्तं जन्मनः फलम् ॥ १९ ॥ भीमेश्वरं ततो गच्छेत्सर्वव्याधिविनाशनम् ॥ स्नातमात्रो नरस्तत्र सर्वदुःखैः प्रमुच्यते ॥ २० ॥ ततो गच्छेत राजेन्द्र पिंगलेश्वरमुत्तमम् ॥ अहोरात्रोपवासेन त्रिरात्रफलमाप्नुयात् ॥ २१ ॥ तस्मिंस्तीर्थे तु राजेन्द्र कपिलां यः प्रयच्छति ॥ यावन्ति तस्या रोमाणि तत्प्रसूतिकुलेषु च ॥ २२ ॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ यस्तु प्राणपरित्यागं कुर्यात्तत्र नराधिप ॥ २३ ॥ अक्षयं मोदते कालं यावच्चन्द्रदिवाकरौ ॥ नर्मदातटमाश्रित्य ये च तिष्ठन्ति मानवाः ॥ २४ ॥ ते मृताः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ततो दीप्तेश्वरं गच्छेद्व्यासतीर्थं तपोवनम् ॥ २५ ॥ निवर्त्तिता पुरा तत्र व्यासभीता महानदी ॥ हुंकारिता तु व्यासेन तत्क्षणेन ततो गता ॥ २६ ॥ प्रदक्षिणन्तु यः कुर्यात्तस्मिंस्तीर्थे युधिष्ठिर ॥ प्रीतस्तत्र भवेद्व्यासो वाञ्छितं लभते फलम् ॥ २७ ॥ ततो गच्छेत राजेन्द्र इक्षुनद्यास्तु संगमम् ॥ त्रैलोक्यविश्रुतं पुण्यं तत्र सन्निहितः शिवः ॥ २८ ॥ तत्र स्नात्वा नरो राजन् गाणपत्यमवाप्नुयात् ॥ ऋणतीर्थं ततो गच्छेत्स ऋणान्मुच्यते ध्रुवम् ॥ २९ ॥ आजन्मनः कृतं पापं स्नातस्तत्र व्यपोहति ॥ तत्र देवाः सगन्धर्वा भर्गात्मजमनुत्तमम् ॥ ३० ॥ उपासते महात्मानं स्कन्दं शक्तिधरं प्रभुम् ॥ ततो गच्छेदांगिरसं स्नानं तत्र समाचरेत् ॥ ३१ ॥ गोसहस्रफलं

---

१ तत्र स्नात्वार्चयेद्देवं गोसहस्रफलं लभेदिति पा० । २ देवं नारायणं हरिमिति पा० । ३ ततो गच्छेत राजेन्द्र संप्राप्तमिति पा० । ४ दक्षिणेनेति पा० । ५ रुद्रलोके महीयते इति पा० । ६ तत्र स्नात्वा नरो राज्यं लभते नात्र संशय इति, लभेत् पुण्यं स चोत्तममिति पा० ।

प्राप्य रुद्रलोकं स गच्छति ॥ आङ्गिरा यत्र देवेशं ब्रह्मपुत्रो वृषध्वजम् ॥ ३२ ॥ तपसाराध्य विश्वेशं लब्धवान्योगमुत्तमम् ॥ कुश तीर्थं ततो गच्छेत्सर्वपापप्रणाशनम् ॥ ३३ ॥ तत्र स्नानं प्रकुर्वीत अश्वमेधफलं लभेत् ॥ कोटितीर्थं ततो गच्छेत्सर्वपापप्रणाशनम् ॥ ३४ ॥ आजन्मनः कृतं पापं स्नातस्तत्र व्यपोहति ॥ चन्द्रभागां ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ३५ ॥ स्नातमात्रो नरस्तत्र सोम लोके महीयते ॥ नर्मदादक्षिणे कूले सङ्गमेश्वरमुत्तमम् ॥ ३६ ॥ तत्र स्नात्वा नरो राजन्सर्वयज्ञफलं लभेत् ॥ नर्मदाया उदक्कूले तीर्थं परमशोभनम् ॥ ३७ ॥ आदित्यायतनं रम्यमीश्वरेण तु भाषितम् ॥ तत्र स्नात्वा तु राजेन्द्र दत्त्वा दानन्तु शक्तितः ॥ ३८ ॥ तस्य तीर्थप्रभावेण लभते[१]चाक्षयम्फलम् ॥ दरिद्रा व्याधिता ये तु ये तु दुष्कृतकर्मिणः ॥३९॥ मुच्यन्ते सर्वपापेभ्यः सूर्यलोकं प्रयान्ति च॥ मातृतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ४० ॥ स्नातमात्रो नरस्तत्र स्वर्गलोकमवाप्नुयात् ॥ ततः पश्चिमतो गच्छेन्मरुतालय मुत्तमम् ॥ ४१ ॥ तत्र[२]स्नात्वा तु राजेन्द्र शुचिर्भूत्वा समाहितः ॥ काञ्चनञ्च यतेर्दद्याद्यथाविभवविस्तरम् ॥ ४२ ॥ पुष्पकेण विमानेन वायुलोकं स गच्छति ॥ ततो गच्छेत्त राजेन्द्र अहल्यातीर्थमुत्तमम् ॥ स्नानमात्रादप्सरोभिर्मोदते कालमुत्तमम्[३] ॥ ४३ ॥ चैत्रमासे तु सम्प्राप्ते शुक्लपक्षे त्रयोदशी ॥ कामदेवदिने तस्मिन्नहल्यां पूजयेत्ततः ॥ ४४ ॥ यत्र तत्र समुत्पन्नो नरो[४]ऽत्यर्थप्रियो भवेत् ॥ स्त्रीवल्लभो भवेच्छ्रीमान्कामदेव इवापरः ॥ ४५ ॥ सरिद्वरां[५] समासाद्य तीर्थं शक्रस्य विश्रुतम् ॥ स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥४६॥ सोमतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र सर्वपापैः प्रमुच्यते ॥ ४७ ॥ सोमग्रहे तु राजेन्द्र पापक्षयकरं भवेत् ॥ त्रैलोक्यविश्रुतं राजन्सोमतीर्थं महाफलम् ॥ ४८ ॥ यस्तु चान्द्रायणङ्कुर्यात्तत्र तीर्थे समाहितः ॥ सर्वपापविशुद्धात्मा सोमलोकं स गच्छति ॥ ४९ ॥ अग्निप्रवेशं यः कुर्यात्सोमतीर्थे नराधिप ॥ जले चानशनं वापि नासौ मर्त्यो हि जायते ॥ ५० ॥ स्तम्भतीर्थं[६] ततो

---

१ मरुदालयमिति पा० । २ द्विजाय काञ्चनं दद्यादिति पा० । ३ कालमक्षयमिति पा० । ४ वरस्तत्र प्रियो भवेदिति, नरस्तत्र प्रियो भवेदिति पा० । ५ अयोध्यान्तु इति पा० । ६ शुम्भतीर्थमिति पा० ।

गच्छेत्स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र सोमलोके महीयते ॥ ५१ ॥ ततो गच्छेत राजेन्द्र विष्णुतीर्थमनुत्तमम् ॥ योधीपुर[1]मिति ख्यातं विष्णुस्थानमनुत्तमम् ॥ ५२ ॥ असुरा योधितास्तत्र वासुदेवेन कोटिशः ॥ तत्र तीर्थं समुत्पन्नं विष्णुश्रीको भवेदिह ॥ ५३ ॥ अहोरात्रोपवासेन ब्रह्महत्यां व्यपोहति ॥ नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ॥ ५४ ॥ कामतीर्थमिति ख्यातं यत्र कामोऽर्चयद्धरिम् ॥ तस्मिंस्तीर्थे नरः स्नात्वा उपवासपरायणः ॥ ५५ ॥ कुसुमायुधरूपेण रुद्रलोके महीयते ॥ ततो गच्छेत राजेन्द्र ब्रह्मतीर्थमनुत्तमम् ॥ ५६ ॥ उमाहकमिति[2] ख्यातं तत्र सन्तर्पयेत्पितॄन् ॥ पौर्णमास्याममावास्यां श्राद्धङ्कुर्याद्यथाविधि ॥ ५७ ॥ गजरूपा शिला तत्र तोयमध्ये व्यवस्थिता ॥ तस्मिंस्तु दापयेत्पिण्डान्वैशाखे[3] तु समाहितः ॥ ५८ ॥ स्नात्वा समाहितमना दम्भमात्सर्यवर्जितः ॥ तृप्यन्ति पितरस्तस्य यावत्तिष्ठति मेदिनी ॥ ५९ ॥ विश्वेश्वरं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र गाणपत्यपदं लभेत् ॥ ६० ॥ ततो गच्छेत राजेन्द्र लिङ्गो[4] यत्र जनार्दनः ॥ तत्र स्नात्वा नरो भक्त्या विष्णुलोके महीयते ॥ ६१ ॥ यत्र नारायणो देवो मुनीनां भावितात्मनाम् ॥ स्वात्मानं दर्शयामास लिंगं तत्परमं पदम् ॥ ६२ ॥ अकोल्लन्तु ततो गच्छेत्सर्वपापविनाशनम् ॥ स्नानं दानञ्च तत्रैव ब्राह्मणानाञ्च भोजनम् ॥ ६३ ॥ पिण्डप्रदानञ्च कृतं प्रेत्यानन्तफलप्रदम् ॥ त्रियम्बकेन तोयेन यश्चरुं श्रपयेद्द्विजः ॥ ६४ ॥ अकोल्लमूले दद्याच्च पिण्डांश्चैव यथाविधि ॥ तारिताः पितरस्तेन तृप्यन्त्याचन्द्रतारकम् ॥ ६५ ॥ ततो गच्छेत राजेन्द्र तापसेश्वरमुत्तमम् ॥ तत्र स्नात्वा तु राजेन्द्र प्राप्नुयात्तपसः फलम् ॥६६॥ शुक्लतीर्थं ततो गच्छेत्सर्वपापविनाशनम् ॥ नास्ति तेन समन्तीर्थं नर्मदायां युधिष्ठिर ॥ ६७ ॥ दर्शनात्स्पर्शनात्तस्य स्नानाद्दानात्तपोजपात् ॥ होमाच्चैवोपवासाच्च शुक्लतीर्थे[5] महत्फलम् ॥६८॥ योजनन्तत्स्मृतं क्षेत्रं देवगन्धर्वसेवितम् ॥ शुक्लतीर्थमिति ख्यातं सर्वपापविना

१ योधनीपुरमाख्यातमिति, योधनापुरमाख्यातमिति पा० । २ अमोघमिति विख्यातामिति पा० । ३ वैशाख्यान्तु विशेषतः इति पा० । ४ लिङ्गमस्यास्तीति लिङ्गः लिङ्गरूपीत्यर्थः । अर्शआदित्वादच् । लिङ्गे इति पा० । ५ शुक्रतीर्थे इति पा० ।

शनम् ॥ ६९ ॥ पादपाग्रेण दृष्टेन ब्रह्महत्यां व्यपोहति ॥ देव्या सह सदा भर्गस्तत्र तिष्ठति शङ्करः ॥ ७० ॥ कृष्णपक्षे चतुर्दश्यां वैशाखे मासि सुव्रत ॥ लोकात्स्वकाद्विनिष्क्रम्य तत्र सन्निहितो हरः ॥ ७१ ॥ देवदानवगन्धर्वाः सिद्धविद्याधरास्तथा ॥ गणाश्चा प्सरसो नागास्तत्र तिष्ठन्ति पुङ्गवाः ॥ ७२ ॥ रञ्जितं हि यथा वस्त्रं शुक्लं भवति वारिणा ॥ आजन्मजनितं पापं शुक्लतीर्थे व्यपोहति ॥७३॥ स्नानं दानं तपः श्राद्धमनन्तं तत्र दृश्यते ॥७४॥ शुक्लतीर्थात्परं तीर्थं न भविष्यति पावनम् ॥ पूर्वे वयसि कर्माणि कृत्वा पापानि मानवः ॥ अहोरात्रोपवासेन शुक्लतीर्थे व्यपोहति ॥ ७५ ॥ कार्त्तिकस्य तु मासस्य कृष्णपक्षे चतुर्दशी ॥ घृतेन स्नापयेद्देवमुपोष्य परमेश्वरम् ॥ ७६ ॥ एकविंशत्कुलोपेतो न च्यवेदीश्वरालयात्[1] ॥ तपसा ब्रह्मचर्येण यज्ञैर्दानेन वा पुनः ॥ ७७ ॥ न तां गतिमवाप्नोति शुक्लतीर्थे तु यां लभेत् ॥ शुक्लतीर्थं महातीर्थमृषिसिद्धनिषेवितम् ॥७८॥ तत्र स्नात्वा नरो राजन्पुनर्जन्म न विन्दति[2] ॥ अयने वा चतुर्दश्यां संक्रान्तौ विषुवे तथा ॥ ७९ ॥ स्नात्वा तु सोपवासः सन्विजितात्मा[3] समाहितः ॥ दानं दद्याद्यथाशक्ति प्रीयेतां हरिशङ्करौ ॥ ८० ॥ एतत्तीर्थप्रभावेण सर्वं भवति चाक्षयम् ॥ अनाथं दुर्गतं विप्रं नाथवन्तमथापि वा ॥ ८१ ॥ उद्वाहयाति यस्तीर्थे तस्य पुण्य फलं शृणु ॥ यावत्तद्रोमसंख्या तु तत्प्रसूतिकुलेषु च ॥८२॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते॥ ततो गच्छेत राजेन्द्र यमतीर्थमनुत्तमम् ॥८३॥ कृष्णपक्षे चतुर्दश्यां माघमासे युधिष्ठिर॥ स्नानं कृत्वा नक्तभोजी न पश्येद्योनिसङ्कटम् ॥८४॥ ततो गच्छेत राजेन्द्र एरण्डी तीर्थमुत्तमम् ॥ संगमे तु नरः स्नात्वा उपवासपरायणः ॥ ८५ ॥ ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिताः ॥ एरण्डीसङ्गमे स्नात्वा भक्तिभावात्तु रञ्जितः ॥ ८६ ॥ मृत्तिकां शिरसि स्थाप्य[4] अवगाह्य च तज्जलम् ॥ नर्मदोदकसंमिश्रं मुच्यते सर्वकिल्बिषैः ॥ ८७ ॥ ततो गच्छेत राजेन्द्र तीर्थङ्कल्लोलकेश्वरम् ॥ गंगावतरते तत्र दिने[5] पुण्ये न संशयः ॥ ८८ ॥ तत्र स्नात्वा च पीत्वा च दत्त्वा चैव यथाविधि ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोके[6] महीयते॥८९॥नन्दितीर्थं ततो गच्छेत्तत्र स्नानं समाचरेत्॥ प्रीयते तत्र नन्दीशः सोमलोके महीयते ॥९०॥

---

१ च्यवेदैश्वरात्पदादिति पा० । २ विद्यते इति पा० । ३ निर्जितात्मा इति पा० । ४ स्थापयित्वा इति साधु । ५ स्थाने इति पा० । ६ रुद्रलोके इति पा० ।

ततो गच्छेत राजेन्द्र तीर्थं त्वनरकं शुभम् ॥ तत्र स्नात्वा नरो राजन्नरकं नैव पश्यति ॥ ९१ ॥ तस्मिंस्तीर्थे तु राजेन्द्र स्वान्यस्थीनि विनिक्षिपेत् ॥ रूपवाञ्जायते लोके धनभोगसमन्वितः ॥ ९२ ॥ ततो गच्छेत राजेन्द्र कपिलातीर्थमुत्तमम् ॥ तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥९३ ॥ ज्येष्ठमासे तु सम्प्राप्ते चतुर्दश्यां विशेषतः ॥ तत्रोपोष्य नरो भक्त्या दत्त्वा दीपं घृतेन तु ॥ ९४ ॥ घृतेन स्नापयेद्रुद्रं तंतो वै श्रीफलं लभेत् ॥ घण्टाभरणसंयुक्तां कपिलां वै प्रदापयेत् ॥ ९५ ॥ सर्वाभरणसंयुक्तः सर्वदेवनमस्कृतः ॥ शिवतुल्यबलो भूत्वा शिववत्क्रीडते सदा ॥ ९६ ॥ अङ्गारकदिने प्राप्ते चतुर्थ्यान्तु विशेषतः ॥ स्नापयित्वा शिवं दद्याद्ब्राह्मणेभ्यस्तु भोजनम् ॥ ९७ ॥ सर्वदेवसमायुक्तो विमाने सर्वकामिके ॥ गत्वा शक्रस्य भवनं शक्रेण सह मोदते ॥ ९८ ॥ ततः स्वर्गात्परिभ्रष्टो धृतिमान्भोगवान्भवेत् ॥ अङ्गारकनवम्यान्तु अमावास्यां तथैव च ॥ ९९ ॥ स्नापयेत्तत्र यत्नेन रूपवान्सुभगो भवेत् ॥ ततो गच्छेत राजेन्द्र गणेश्वरमनुत्तमम् ॥१००॥ श्रावणे मासि सम्प्राप्ते कृष्णपक्षे चतुर्दशी ॥ स्नातमात्रो नरस्तत्र रुद्रलोके महीयते ॥१०१॥ पितॄणां तर्पणं कृत्वा मुच्यते स ऋणत्रयात् ॥ गङ्गेश्वरसमीपे तु गंगावदनमुत्तमम् ॥ १०२ ॥ अकामो वा सकामो वा तत्र स्नात्वा तु मानवः ॥ आजन्मजनितैः पापैर्मुच्यते नात्र संशयः ॥ १०३ ॥ तस्य वै पश्चिमे भागे समीपे नातिदूरतः ॥ दशाश्वमेधिकं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ १०४ ॥ उपोष्य रजनीमेकां मासि भाद्रपदे शुभे ॥ अमावास्यां हरं स्नाप्य पूजयेद्गोवृषध्वजम् ॥ १०५ ॥ काञ्चनेन विमानेन किङ्किणीजालमालिना ॥ गत्वा रुद्रपुरं रम्यं रुद्रेण सह मोदते ॥ १०६ ॥ सर्वत्र सर्वदिवसे स्नानं तत्र समाचरेत् ॥ पितॄणां तर्पणं कृत्वा चाश्वमेधफलं लभेत् ॥ १०७ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे नर्मदामाहात्म्ये एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ मार्कण्डेय उवाच ॥ ततो गच्छेत राजेन्द्र भृगुतीर्थमनुत्तमम् ॥ तत्र देवो भृगुः पूर्वं रुद्रमाराधयत्पुरा ॥ १ ॥ दर्शनात्तस्य देवस्य सद्यः पापात्प्रमुच्यते ॥ एतत्क्षेत्रं

---

१ सघृतं श्रीफलं दहेदिति, सघृतं गुग्गुलं दहेदिति पा० । २ सर्वपापविनिर्मुक्तः इति पा० । ३ सर्वभोगसमायुक्तः इति पा० । ४ अमावास्यां नरः स्नात्वा पूजयेद्वृषभध्वजमिति, स्नापयेद्वृषभध्वजमिति पा० । स्नापयित्वा इति साधु । ५ यत्र देवं भृगुर्भर्गमिति, यत्र देवं भृगुः पूर्वमिति पा० ।

सुविपुलं सर्वपापप्रणाशनम् ॥ २ ॥ तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ उपानहौ तथा युग्मं देयमन्नञ्च काञ्चनम् ॥ ३ ॥ भोजनं च यथाशक्ति तस्याप्यक्षयमुच्यते ॥ क्षरन्ति सर्वदानानि यज्ञदानं तपः क्रिया ॥ ४ ॥ अक्षयं तत्तपस्तप्तं भृगुतीर्थे युधिष्ठिर ॥ तस्यैव तपसोग्रेण रुद्रेण त्रिपुरारिणा ॥ ५ ॥ सान्निध्यं तत्र कथितं भृगुतीर्थे युधिष्ठिर ॥ ततो गच्छेत राजेन्द्र गौतमेश्वरमुत्तमम् ॥ ६ ॥ यत्राराध्य त्रिशूलाङ्कं गौतमः सिद्धिमाप्तवान् ॥ तत्र स्नात्वा नरो राजन्नुपवासपरायणः ॥ ७ ॥ कांचनेन विमानेन ब्रह्मलोके महीयते ॥ वृषोत्सर्गं ततो गच्छेच्छाश्वतं पदमाप्नुयात् ॥ ८ ॥ न जानन्ति नरा मूढा विष्णोर्मायाविमोहिताः ॥ धौतपापं ततो गच्छेद्धौतं यत्र वृषेण तु ॥ ९ ॥ नर्मदायां स्थितं राजन्सर्वपातकनाशनम् ॥ तत्र तीर्थे नरः स्नात्वा ब्रह्महत्यां व्यपोहति ॥ १० ॥ तत्र तीर्थे तु राजेन्द्र प्राणत्यागं करोति यः ॥ चतुर्भुजस्त्रिनेत्रश्च हरतुल्यबलो भवेत् ॥ ११ ॥ वसेत्कल्पायुतं साग्रं शिवतुल्यपराक्रमः ॥ कालेन महता जातः पृथिव्यामेकराड् भवेत् ॥ १२ ॥ ततो गच्छेत राजेन्द्र हंसतीर्थमनुत्तमम् ॥ तत्र स्नात्वा नरो राजन्ब्रह्मलोके महीयते ॥ १३ ॥ ततो गच्छेत राजेन्द्र यत्र सिद्धो जनार्दनः ॥ वराहतीर्थमाख्यातं विष्णुलोकगतिप्रदम् ॥ १४ ॥ ततो गच्छेत राजेन्द्र चन्द्रतीर्थमनुत्तमम् ॥ पौर्णमास्यां विशेषेण स्नानं तत्र समाचरेत् ॥ १५ ॥ स्नातमात्रो नरस्तत्र पृथिव्यामेकराड् भवेत् ॥ देवतीर्थं ततो गच्छेत्सर्वतीर्थनमस्कृतम् ॥ १६ ॥ तत्र स्नात्वा च राजेन्द्र दैवतैः सह मोदते ॥ ततो गच्छेत राजेन्द्र शङ्खितीर्थमनुत्तमम् ॥ १७ ॥ यत्तत्र दीयते दानं सर्वं कोटिगुणं भवेत् ॥ ततो गच्छेत राजेन्द्र तीर्थं पैतामहं शुभम् ॥ १८ ॥ यत्तत्र दीयते श्राद्धं सर्वं तस्याक्षयं भवेत् ॥ सावित्रीतीर्थमासाद्य यस्तु प्राणान्परित्यजेत् ॥ १९ ॥ विधूय सर्वपापानि ब्रह्मलोके महीयते ॥ मनोहरन्तु तत्रैव तीर्थं परमशोभनम् ॥ २० ॥ तत्र स्नात्वा नरो राजन्रुद्रलोके महीयते ॥ ततो गच्छेत राजेन्द्र कन्यातीर्थमनुत्तमम् ॥ २१ ॥ स्नात्वा तत्र नरो राजन्सर्वपापैः प्रमुच्यते ॥

१ तदस्याक्षयमुच्यते इति पा० । २ न क्षरेच्च तपस्तप्तमिति पा० । ३ शाश्वतीं गतिमाप्नुयादिति पा० । ४ हंसतीर्थमनुत्तमामिति पा० । ५ चन्द्रलोके महीयते इति पा० । ६ तत्तदस्याक्षयं भवेदिति पा० । ७ पैतामहं शुभमिति पा० ।

शुक्लपक्षे तृतीयायां स्नानमात्रं समाचरेत् ॥ २२ ॥ स्नातमात्रो नरस्तत्र पृथिव्यामेकराड् भवेत् ॥ सर्गबिन्दुं ततो गच्छेत्तीर्थं देवनमस्कृतम् ॥ २३ ॥ तत्र स्नात्वा नरो राजन्दुर्गतिं वै न पश्यति ॥ अप्सरेशं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ २४ ॥ क्रीडते नाकलोकस्थो ह्यप्सरोभिः स मोदते ॥ ततो गच्छेत राजेन्द्र भार[1]भूतिमनुत्तमम् ॥ २५ ॥ [2]उपोषितो यजेतेशं रुद्रलोके महीयते ॥ अस्मिंस्तीर्थे मृतो राजन्गाणपत्यमवाप्नुयात् ॥ २६ ॥ कार्त्तिके मासि देवेशमर्चयेत्पार्वतीपतिम् ॥ अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ २७ ॥ वृषभं यः प्रयच्छेत तत्र कुन्देन्दु[3]सप्रभम् ॥ वृषयुक्तेन यानेन रुद्रलोकं स गच्छति ॥ २८ ॥ एतत्तीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ॥ स[4]र्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥ २९ ॥ जलप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ हंसयुक्तेन यानेन स्वर्गलोकं स गच्छति ॥ ३० ॥ एरण्डया नर्मदायास्तु सङ्गमं लोकविश्रुतम् ॥ तच्च तीर्थं महापुण्यं सर्वपापप्रणाशनम् ॥ ३१ ॥ उपवासकृतो भूत्वा नित्यं व्रतपरायणः ॥ तत्र स्नात्वा तु राजेन्द्र मुच्यते ब्रह्महत्यया ॥ ३२ ॥ ततो गच्छेत राजेन्द्र नर्मदोदधिसङ्गमम् ॥ जमदग्निमिति ख्यातं सिद्धो यत्र जनार्दनः ॥ ३३ ॥ तत्र स्नात्वा नरो राजन्नर्मदोदधिसंगमे ॥ त्रिगुणश्चाश्वमेधस्य फलं प्राप्नोति मानवः ॥ ३४ ॥ ततो गच्छेत राजेन्द्र पिंगलेश्वरमुत्तमम् ॥ तत्र स्नात्वा नरो राजन्ब्रह्म[6]लोके महीयते ॥ ३५ ॥ तत्रोपवासं यः कृत्वा पश्येत विमले[5]श्वरम् ॥ सप्तजन्मकृतं पापं हित्वा याति शिवालयम् ॥ ३६ ॥ ततो गच्छेत राजेन्द्र अलि[7]तीर्थमनुत्तमम् ॥ उपोष्य रजनीमेकां नियतो नियताशनः ॥ ३७ ॥ अस्य तीर्थस्य माहात्म्यान्मुच्यते ब्रह्महत्यया ॥ एतानि तव संक्षेपात्प्राधान्यात्कथितानि च ॥ ३८ ॥ न शक्या विस्तराद्वक्तुं संख्या तीर्थेषु पाण्डव ॥ एषा पवित्रा विपुला नदी त्रैलोक्यविश्रुता ॥ ३९ ॥ नर्मदा सरितां श्रेष्ठा महादेवस्य वल्लभा ॥ मनसा संस्मरेद्यस्तु नर्मदां वै युधिष्ठिर ॥ ४० ॥ चान्द्रायण[8]शतं साग्रं लभते नात्र संशयः ॥ अश्रद्दधानाः

१ भारभूतिजमुत्तमिति पा० । २ उपोषितोऽर्चयित्वेशमिति पा० । ३ सन्निभमिति, सुप्रभमिति पा० । ४ सर्वपापविशुद्धात्मा इति पा० । ५ विमलेश्वरमुत्तममिति पा० । ६ रुद्रलोके इति पा० । ७ अलिकातीर्थमुत्तममिति, अलकातीर्थमुत्तममिति पा० । ८ जीववर्षशतमिति पा० ।

पुरुषा नास्तिक्यं घोरमाश्रिताः ॥ ४१ ॥ पतन्ति नरके घोर इत्याह परमेश्वरः ॥ नर्मदां सेवते नित्यं स्वयं देवो महेश्वरः ॥ तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥ ४२ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे नर्मदामाहात्म्ये द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ सूत उवाच ॥ इदं त्रैलोक्यविख्यातं तीर्थं नैमिषमुत्तमम् ॥ महादेवप्रियतरं महापातकनाशनम् ॥ १ ॥ महादेवं दिदृक्षूणामृषीणां परमेष्ठिना ॥ ब्रह्मणा निर्मितं स्थानं तपस्तप्तुं द्विजोत्तमाः ॥ २ ॥ मरीचयोऽत्र ये विप्रा वसिष्ठाः क्रतवस्तथा ॥ भृगवोऽङ्गिरसः पूर्वं ब्रह्माणं कमलोद्भवम् ॥ ३ ॥ समेत्य सर्ववरदं चतुर्मूर्त्तिं चतुर्मुखम् ॥ पृच्छन्ति प्रणिपत्यैनं विश्वकर्माणमव्ययम् ॥ ४ ॥ षट्कुलीया ऊचुः ॥ भगवन्देवमीशानं तमेवैकं कपर्दिनम् ॥ केनोपायेन पश्यामो ब्रूहि देव नमस्तव ॥ ५ ॥ ब्रह्मोवाच ॥ सत्रं सहस्रमासध्वं वाङ्मनोदोषवर्जिताः ॥ देशञ्च वः प्रवक्ष्यामि यस्मिन्देशे चरिष्यथ ॥ ६ ॥ मुक्त्वा मनोमयं चक्रं संस्पृष्ट्वा तानुवाच ह ॥ क्षिप्तमेतन्मया चक्रमनुव्रजत मा चिरम् ॥ ७ ॥ यत्रास्य नेमिः शीर्येत स देशस्तपसः शुभः ॥ ततो मुमोच तच्चक्रं ते च तत्समनुव्रजन् ॥ ८ ॥ तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्यत ॥ नैमिषं तत् स्मृतं नाम्ना पुण्यं सर्वत्र पूजितम् ॥ ९ ॥ सिद्धचारणसंपूर्णं यक्षगन्धर्वसेवितम् ॥ स्थानं भगवतः शंभोरेतन्नैमिषमुत्तमम् ॥ १० ॥ अत्र देवाः सगन्धर्वाः सयक्षोरगराक्षसाः ॥ तपस्तप्त्वा पुरा देवा लेभिरे प्रवरान्वरान् ॥ ११ ॥ इमं देशं समाश्रित्य षट्कुलीयाः समाहिताः ॥ सत्रेणाराध्य देवेशं दृष्टवन्तो महेश्वरम् ॥ १२ ॥ अन्नदानं तपस्तप्तं श्राद्धयागादिकञ्च यत् ॥ एकैकं नाशयेत्पापं सप्तजन्मकृतं तथा ॥ १३ ॥ अत्र पूर्वं स भगवानृषीणां सत्रमासताम् ॥ स वै प्रोवाच ब्रह्माण्डं पुराणं ब्रह्मभावितम् ॥ १४ ॥ अत्र देवो महादेवो रुद्राण्या किल विश्वदृक् ॥ रमतेऽद्यापि भगवान्प्रमथैः परिवारितः ॥ १५ ॥ अत्र प्राणान् परित्यज्य नियमेन द्विजातयः ॥ ब्रह्मलोकं गमिष्यन्ति यत्र गत्वा न जायते ॥ १६ ॥ अन्यच्च तीर्थप्रवरं जाप्येश्वरमितिश्रुतम् ॥ जजाप

---

१ पुरा देवमिति पा० । २ मारीचयोऽथ ये विप्रा वासिष्ठा ध्रुवतस्तथा इति पा० । ३ विश्वकर्माणमच्युतामिति पा० । ४ संस्पृश्य इति साधु । ५ स देशः पुरुषर्षभाः इति पा० । ६ श्राद्धं जप्यादिकमिति पा० । ७ जप्येश्वरमनुत्तमामिति पा० ।

रुद्रमनिशं यत्र नन्दी महागणः ॥ १७ ॥ प्रीतस्तस्य महादेवो देव्या सह पिनाकधृक् ॥ ददावात्मसमानत्वं मृत्युवञ्चनमेव च ॥ १८॥ अभूदृषिः स धर्मात्मा शिलादो नाम धर्मवित् ॥ आराधयन्महादेवं प्रसादार्थं वृषध्वजम् ॥ १९ ॥ तस्य वर्षसहस्रान्ते तप्यमानस्य विश्वधृक् ॥ शर्वः सोमो गणवृतो वरदोऽस्मीत्यभाषत ॥ २० ॥ स वव्रे वरमीशानं वरेण्यं गिरिजापतिम् ॥ अयोनिजं मृत्युहीनं याचे पुत्रं त्वया समम् ॥ २१ ॥ तथास्त्वित्याह भगवान्देव्या सह महेश्वरः ॥ पश्यतस्तस्य विप्रर्षेरन्तर्द्धानं गतो हरः ॥ २२ ॥ ततो युयोज तां भूमिं शिलादो धर्मवित्तमः ॥ चकर्ष लांगलेनोर्वीं भित्वाऽदृश्यत शोभनः ॥ २३ ॥ संवर्त्तकोऽनलप्रख्यः कुमारः प्रहसन्निव ॥ रूप लावण्यसम्पन्नस्तेजसा भासयन्दिशः ॥ २४ ॥ कुमारतुल्योऽप्रतिमो मेघगम्भीरया गिरा ॥ शिलादं तात तातेति प्राह नन्दी पुनः पुनः ॥ २५ ॥ तं दृष्ट्वा नन्दनं जातं शिलादः परिषस्वजे ॥ मुनीनां दर्शयामास तत्राश्रमनिवासिनाम् ॥ २६ ॥ जातकर्मादिकाः सर्वाः क्रियास्तस्य चकार ह ॥ उपनीय यथाशास्त्रं वेदमध्यापयत् स्वयम् ॥ २७ ॥ अधीतवेदो भगवान्नन्दी मतिमनुत्तमाम् ॥ चक्रे महेश्वरं दृष्ट्वा जेष्ये मृत्युमिव प्रभुम् ॥ २८ ॥ स गत्वा सागरं पुण्यमेकाग्रः श्रद्धयान्वितः ॥ जजाप रुद्रमनिशं महेशासक्तमानसः ॥ २९ ॥ तस्य कोट्याञ्च पूर्णायां शङ्करो भक्तवत्सलः ॥ आगतः सर्वसगणो वरदोऽस्मीत्यभाषत ॥ ३० ॥ स वव्रे पुनरेवेशं जपेयं कोटिमीश्वरम् ॥ भवदाहं महादेवं देहीति परमेश्वरम् ॥ ३१ ॥ एवमस्त्विति संप्रोच्य देवोऽप्यन्तरधीयत ॥ जजाप कोटिं भगवान् भूयस्तद्गत मानसः ॥ ३२ ॥ द्वितीयायाञ्च कोट्यां वै पूर्णायाञ्च वृषध्वजः ॥ आगत्य वरदोऽस्मीति प्राह भूतगणैर्वृतः ॥ ३३ ॥ तृतीयाञ्जप्तु मिच्छामि कोटिं भूयोऽपि शङ्कर ॥ तथास्त्वित्याह विश्वात्मा देव्या चांतरधीयत ॥ ३४ ॥ कोटित्रयेऽथ सम्पूर्णे देवः प्रीतमना भृशम् ॥ आगत्य वरदोऽस्मीति प्राह भूतगणैर्वृतः ॥ ३५ ॥ जपेयं कोटिमन्यां वै भूयोऽपि तव तेजसा ॥ इत्युक्ते भगवानाह न जतव्यं त्वया पुनः ॥ ३६ ॥ अमरो जरया त्यक्तो मम पार्श्वे गतः सदा ॥ महागणपतिर्देव्याः पुत्रो भव महेश्वरः ॥ ३७ ॥ योगे

१ पुत्रार्थं वृषभध्वजमिति पा० । २ ये तदाश्रयवासिनः इति पा० । ३ सुतमिति पा० । ४ सरितं पुण्यामिति पा० । ५ आगत्य शम्भुः सगण इति पा० ।

श्वरो महायोगी गणानामीश्वरेश्वरः ॥ सर्वलोकाधिपः श्रीमान् सर्वयज्ञमयो हितः ॥ ३८ ॥ ज्ञानं तन्नामकं दिव्यं हस्तामलकसंज्ञितम् ॥ आभूतसंप्लवस्थायी ततो यास्यसि तत्पदम् ॥ ३९ ॥ एतदुक्त्वा महादेवो गणानाहूय शङ्करः ॥ अभिषेकेण युक्तेन नन्दीश्वरमयोजयत् ॥ ४० ॥ उद्वाहयामास च तं स्वयमेव पिनाकधृक् ॥ मरुताञ्च शुभां कन्यां स्वयमेति च विष्णुताम् ॥ ४१ ॥ एतज्जप्येश्वरं स्थानं देवदेवस्य शूलिनः ॥ यत्र तत्र मृतो मर्त्यो रुद्रलोके महीयते ॥ ४२ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे जप्येश्वरमाहात्म्ये त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ अथ तीर्थमाहात्म्यमेव ॥ सूत उवाच ॥ अन्यच्च तीर्थप्रवरं जप्येश्वरसमीपतः ॥ नाम्ना पञ्चनदं पुण्यं सर्वपापप्रणाशनम् ॥ १ ॥ त्रिरात्रमुषितस्तत्र पूजयित्वा महेश्वरम् ॥ सर्वपापविशुद्धात्मा रुद्रलोके महीयते ॥ २ ॥ अन्यच्च तीर्थप्रवरं शङ्करस्यामिततेजसः ॥ महाभैरवमित्युक्तं महापातकनाशनम् ॥ ३ ॥ तीर्थानाञ्च परं तीर्थं वितस्ता परमा नदी ॥ सर्वपापहरा पुण्या स्वयमेव गिरीन्द्रजा ॥ ४ ॥ तीर्थं पञ्चतपो नाम शंभोरमिततेजसः ॥ यत्र देवाधिदेवेन शक्रार्थं पूजितो भवः ॥ ५ ॥ पिण्डदानादिकं तत्र प्रेत्यानन्दसुखप्रदम् ॥ मृतस्तत्राथ नियमाद्ब्रह्मलोके महीयते ॥ ६ ॥ कायावरोहणं नाम महादेवालयं शुभम् ॥ यत्र माहेश्वरा धर्मा मुनिभिः संप्रवर्तिताः ॥ ७ ॥ श्राद्धं दानं तपो होम उपवासस्तथाक्षयः ॥ परित्यजति यः प्राणान्रुद्रलोकं स गच्छति ॥ ८ ॥ अन्यच्च तीर्थप्रवरं कन्यातीर्थमनुत्तमम् ॥ तत्र गत्वा त्यजेत्प्राणाँल्लोकान् प्राप्नोति शाश्वतान् ॥ ९ ॥ जामदग्न्यस्य च शुभं रामस्याक्लिष्टकर्मणः ॥ तत्र स्नात्वा तीर्थवरे गोसहस्रफलं लभेत् ॥ १० ॥ महाकालमिति ख्यातं तीर्थं लोकेषु विश्रुतम् ॥ गत्वा प्राणान् परित्यज्य गाणपत्यमवाप्नुयात् ॥ ११ ॥ गुह्याद्गुह्यतमं तीर्थं नकुलीश्वरमुत्तमम् ॥ तत्र सन्निहितः श्रीमान् भगवान्नकुलीश्वरः ॥ १२ ॥ हिमवच्छिखरे रम्ये गंगाद्वारे सुशोभने ॥ देव्या सह महादेवो नित्यं शिष्यैश्च

---

१ सर्वज्ञो महदान्वितः इति, सर्वज्ञो महद्बलान्वित इति पा० । २ ज्ञानन्तु मामकं दिव्यं हस्तामलकवत्तत्र इति पा० । ३ विश्रुतामिति पा० । ४ जप्येश्वरसमीपगमिति पा० । ५ शङ्करस्यामितौजस इति पा० । ६ महाभारतमित्युक्तमिति पा० । ७ पुत्रार्थं इति पा० ।

सम्भृतः ॥ १३ ॥ तत्र स्नात्वा महादेवं पूजयित्वा वृषध्वजम् ॥ सर्वपापैर्विशुद्ध्येत मृतस्तज्ज्ञानमाप्नुयात् ॥ १४ ॥ अन्यच्च देवदेवस्य स्थानं पुण्यतमं शुभम् ॥ भीमेश्वरमिति ख्यातं गत्वा मुञ्चति पातकम् ॥ १५ ॥ तथान्यश्चण्डवेगायाः सम्भेदः पापनाशनः ॥ तत्र स्नात्वा च पीत्वा च मुच्यते ब्रह्महत्यया ॥ १६ ॥ सर्वेषामपि चैतेषां तीर्थानां परमा पुरी ॥ नाम्ना वाराणसी दिव्या कोटिकोट्ययुताधिका ॥ १७ ॥ तस्याः पुरस्तान्माहात्म्यं भाषितं वो मया त्विह ॥ नान्यत्र लभते मुक्तिं योगेनाप्येकजन्मना ॥ १८ ॥ एते प्राधान्यतः प्रोक्ता देशाः पापहरा नृणाम् ॥ गत्वा संक्षालयेत्पापं जन्मान्तरशतैरपि ॥ १९ ॥ यः स्वधर्मान् परित्यज्य तीर्थसेवां करोति हि ॥ न तस्य फलते तीर्थमिह लोके परत्र च ॥ २० ॥ प्रायश्चित्ती च विधुरस्तथा यायावरो गृही ॥ प्रकुर्यात्तीर्थसंसेवां यश्चान्यस्तादृशो जनः ॥ २१ ॥ सहाग्निर्वा सपत्नीको गच्छेत्तीर्थानि यत्नतः ॥ सर्वपापविनिर्मुक्तो यथोक्तां गतिमाप्नुयात् ॥ २२ ॥ ऋणानि त्रीण्यपाकुर्यात्कुर्वन्वा तीर्थसेवनम् ॥ विधाय वृत्तिं पुत्राणां भार्यां तेषु विधाय च ॥ २३ ॥ प्रायश्चित्तप्रसङ्गेन तीर्थमाहात्म्यमीरितम् ॥ यः पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥ २४ ॥ इति श्रीकूर्मपुराणे उत्तरार्द्धे तीर्थमाहात्म्यं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ अथ कूर्मरूपधारणवर्णनम् ॥ सूत उवाच ॥ एतदाकर्ण्य विज्ञानं नारायणमुखेरितम् ॥ कूर्मरूपधरं देवं पप्रच्छुर्मुनयः प्रभुम् ॥ १ ॥ मुनय ऊचुः ॥ कथितो भवता धर्मो मोक्षज्ञानं सविस्तरम् ॥ लोकानां सर्गविस्तारो वंशो मन्वन्तराणि च ॥ २ ॥ इदानीं देवदेवेश प्रलयं वक्तुमर्हसि ॥ भूतानां भूतभव्येश यथा पूर्वं त्वयोदितम् ॥ ३ ॥ सूत उवाच ॥ श्रुत्वा तेषां तदा वाक्यं भगवान् कूर्मरूपधृक् ॥ व्याजहार महायोगी भूतानां प्रतिसञ्चरम् ॥ ४ ॥ कूर्म उवाच ॥ नित्यो नैमित्तिकश्चैव प्राकृतोऽत्यन्तिकस्तथा ॥ चतुर्द्धायं पुराणेऽस्मिन् प्रोच्यते प्रतिसञ्चरः ॥ ५ ॥ योऽयं सन्दृश्यते नित्यं लोके भूतक्षयस्त्विह ॥ नित्यः संकीर्त्यते नाम्ना मुनिभिः प्रतिसञ्चरः ॥ ६ ॥

१ मृतस्तु ज्ञानमिति पा० । २ ऋणानि त्रीण्यपाकृत्य कुर्याद्वेति, ऋणानि त्रीण्यपाहृत्य कुर्याद्वा इति पा० । ३ मुच्यते सर्वपातकैरिति पा० । ४ कथिता भवता धर्माः इति पा० । ५ प्रतिसर्गमिदानीं नो वक्तुमर्हसि माधव इति, इदानीं प्रतिसर्गान्वा वक्तुमर्हसि माधवेति पा०। ६ प्रतिसञ्चरम्—आत्मनि पुनः संग्रहम् प्रतिसंहारमित्यर्थः । ७ प्राकृतात्यन्तिको मतः इति पा० ।

ब्रह्मनैमित्तिको नाम कल्पान्ते यो भविष्यति ॥ त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ॥७॥ महदाद्यं विशेषान्तं यदा संयाति संक्षयम् ॥ प्राकृतः प्रतिसर्गोऽयं प्रोच्यते कालचिन्तकैः ॥ ८ ॥ ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि ॥ प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः ॥ ९ ॥ आत्यन्तिकस्तु कथितः प्रलयो ज्ञानसाधनः ॥ नैमित्तिकमिदानीं वः कथयिष्ये समासतः ॥ १० ॥ चतुर्व्यूहसहस्रान्ते सम्प्राप्ते प्रतिसञ्चरे ॥ स्वात्मसंस्थाः प्रजाः कर्तुं प्रतिपेदे प्रजापतिः ॥ ११ ॥ ततोऽभवत्त्वनावृष्टिस्तीव्रा सा शतवार्षिकी ॥ भूतक्षयकरी घोरा सर्वभूतक्षयंकरी ॥ १२ ॥ ततो यान्यल्पसाराणि सत्त्वानि पृथिवीपते ॥ तानि चाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥ १३ ॥ ॥ सप्तरश्मिरथो भूत्वा समुत्तिष्ठन्दिवाकरः ॥ असह्यरश्मिर्भवति पिबन्नम्भो गभस्तिभिः ॥१४॥ तस्य ते रश्मयः सप्त पिबन्त्यम्बु महार्णवे ॥ तेनाहारेण ता दीप्त्वा सप्तसूर्या भवन्त्युत ॥ १५ ॥ ततस्ते रश्मयः सप्त शोषयित्वा चतुर्दिशम् ॥ चतुर्लोकमिमं सर्वं दहन्ति शिखिनो यथा ॥१६॥ व्याप्नुवन्तश्च ते दीप्ता ऊर्द्ध्वञ्चाधः स्वरश्मिभिः ॥ दीप्यन्ते भास्कराः सप्त युगान्ताग्निप्रदीपिताः ॥ १७ ॥ ते सूर्या वारिणा दीप्ता बहुसाहस्ररश्मयः ॥ खं समावृत्य तिष्ठन्ति प्रदहन्तो वसुन्धराम् ॥ १८ ॥ ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा ॥ साद्रिनद्यर्णवद्वीपा निःस्नेहा सम्प्रपद्यते ॥ १९ ॥ दीप्ताभिः सन्तताभिश्च रश्मिभिर्वै समन्ततः ॥ अधश्चोर्द्ध्वञ्च लग्नाभिस्तिर्यक् चैव समावृतम् ॥ २० ॥ सूर्याग्निना प्रमृष्टानां संसृष्टानां परस्परम् ॥ एकत्वमुपयातानामेकज्वालं भवत्युत ॥ २१ ॥ सर्वलोकप्रणाशश्च सोऽग्निर्भूत्वा तु मण्डली ॥ चतुर्लोकमिमं सर्वं निर्दहत्याशु तेजसा ॥ २२ ॥ ततः प्रलीने सर्वस्मिञ्जङ्गमे स्थावरे तथा ॥ निर्वृक्षा निस्तृणा भूमिः कूर्मपृष्ठा प्रकाशते ॥ २३ ॥ अम्बरीषमिवाभाति सर्वमापूरितं जगत् ॥ सर्वमेव तदर्चिर्भिः पूर्णं जाज्वलयते पुनः ॥ २४ ॥ पाताले यानि सत्त्वानि महोदधिगतानि च ॥ ततस्तानि

१ लयसाधनः इति पा० । २ कीर्त्तयिष्ये इति पा० । ३ चतुर्युगसहस्रान्ते इति पा० । ४ सूर्या भूत्वा चतुर्दशेति पा० । ५ प्रततानाभिति, सूर्याग्निना प्रवृतानाभिति पा० । ६ निर्दहत्यात्मतेजसेति, निहन्त्याशु स्वतेजसा इति पा० । ७ सर्वमेतत्तदर्चिर्भिरिति पा० । ८ तीर्थानीति पा० ।

प्रलीयन्ते भूमित्वमुपयान्ति च ॥ २५ ॥ द्वीपांश्च पर्वतांश्चैव वर्षाण्यथ महोदधीन् ॥ तान् सर्वान् भस्मसाच्चक्रे सप्तात्मा पावकः प्रभुः ॥ २६ ॥ समुद्रेभ्यो नदीभ्यश्च आपः शुष्काश्च सर्वशः ॥ पिबन्नपः समिद्धोऽग्निः पृथिवीमाश्रितोज्वलन् ॥ २७ ॥ ततः संवर्त्तकः शैलानतिक्रम्य महांस्तथा ॥ लोकान्दहति दीप्तात्मा मारुतेयो विजृम्भितः ॥ २८ ॥ स दग्ध्वा पृथिवीं देवो रसातलमशोभयत् ॥ अधस्तात्पृथिवीं दग्ध्वा दिवमूर्द्धं दहिष्यति ॥ २९ ॥ योजनानां शतानीह सहस्राण्ययुतानि च ॥ उत्तिष्ठन्ति शिखास्तस्य वह्नेः संवर्त्तकस्य तु ॥ ३० ॥ गन्धर्वांश्च पिशाचांश्च सयक्षोरगराक्षसान् ॥ तदा दहत्यसौ दीप्तः कालरुद्रप्रणोदितः ॥ ३१ ॥ भूर्लोकञ्च भुवर्लोकं महर्लोकं तथैव च ॥ दहेदशेषं कालाग्निः कालाविष्टतनुः स्वयम् ॥३२॥ व्याप्तेष्वेतेषु लोकेषु तिर्यगूर्द्धमथाग्निना ॥ तत्तेजः समनुप्राप्य कृत्स्नं जगदिदं शनैः ॥ ३३ ॥ अतो गूढमिदं सर्वं तदेवैकं प्रकाशते ॥ ततो गजकुलाकारास्तडिद्भिः समलंकृताः ॥ ३४ ॥ उत्तिष्ठन्ति तदा व्योम्नि घोराः संवर्त्तका घनाः ॥ केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः ॥ ३५ ॥ धूम्रवर्णास्तथा केचित्केचित्पीताः पयोधराः ॥ केचिद्रासभवर्णास्तु लाक्षारसनिभाः परे ॥ ३६ ॥ शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभास्तथा ॥ मनःशिलाभाश्च परे कपोतसदृशाः परे ॥ ३७ ॥ इन्द्रगोपनिभाः केचिद्धरितालनिभास्तथा ॥ इन्द्रचापनिभाः केचिदुत्तिष्ठन्ति घना दिवि ॥ ३८ ॥ केचित्पर्वतसंकाशाः केचिद्गजकुलोपमाः ॥ कूटांगारनिभाश्चान्य केचिन्मीनकुलोद्वहाः ॥ ३९ ॥ बहुरूपा घोररूपा घोरस्वरनिनादिनः ॥ तदा जलधराः सर्वे पूरयन्ति नभस्तलम् ॥ ४० ॥ ततस्ते जलदा घोरा राविणो भास्करात्मजाः ॥ सप्तधा संवृतात्मानं तमाग्निं शमयन्ति ते ॥ ४१ ॥ ततस्ते जलदा वर्षं मुञ्चन्तीह महौघवत् ॥ सुघोरमशिवं वर्षं नाशयन्ति च पावकम् ॥ ४२ ॥ अतिवृद्ध

१ रुद्रतेजोविजृम्भित इति पा० । २ अशोषयदिति पा० । ३ धक्ष्यति । इडागम आर्षः । ४ स्वर्लोकञ्च तथा परमिति, स्वर्लोकञ्च तथा मह इति पा० । ५ जात्याञ्जननिभाः परे इति पा० । ६ मनःशिलाभास्त्वन्ये चेति, मनःशिलाभास्त्वपरे इति पा० । ७ काकाण्डकनिभाः इति पा० । ८ प्रवृद्धैस्तैरिति, प्रवृत्तैस्तैरिति पा० ।

तदात्यर्थमम्भसा पूर्यते जगत् ॥ अद्भिस्तेऽम्भोऽभिभूतत्वात्तदाग्निः प्रविशत्यपः ॥ ४३ ॥ नष्टे चाग्नौ वर्षशतैः पयोदाः क्षयसम्भवाः ॥ प्लावयन्तो जगत्सर्वं महाजलपरिस्रवैः ॥ ४४ ॥ धाराभिः पूरयन्तीदं नोद्यमानाः स्वयम्भुवा ॥ अत्यन्तसलिलौघास्तु वेला इव महोदधेः ॥ ४५ ॥ साद्रिद्वीपा ततः पृथ्वी जलैः सञ्छाद्यते शनैः ॥ आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति ॥ ४६ ॥ पुनः पतति तद्भूमौ पूर्यन्ते तेन चार्णवाः ॥ ततः समुद्राः स्वां वेलामतिक्रान्तास्तु कृत्स्नशः ॥ ४७ ॥ पर्वताश्च विलीयन्ते मही चाप्सु निमज्जति ॥ तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजंगमे॥४८॥योगनिद्रां समास्थाय शेते देवः प्रजापतिः ॥ चतुर्युगसहस्रान्तं कल्पमाहुर्मनीषिणः॥४९॥ वाराहो वर्त्तते कल्पो यस्य विस्तर ईरितः ॥ असंख्यातास्तथा कल्पा ब्रह्मविष्णुशिवात्मकाः ॥ ५० ॥ कथिता हि पुराणेषु मुनिभिः कालचिन्तकैः ॥ सात्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः॥५१॥ तामसेषु हरस्योक्तं राजसेषु प्रजापतेः॥ योयं प्रवर्त्तते कल्पो वाराहः सात्त्विको मतः ॥५२॥ अन्ये च सात्त्विकाः कल्पा मम तेषु परिग्रहः॥ ध्यानं तपस्तथा ज्ञानं लब्ध्वा ते योगिनःपरम् ॥५३॥ आराध्य तञ्च गिरिशं यान्ति तत्परमम्पदम् ॥ सोऽहंतत्त्वं समास्थाय मायी मायामयीं स्वयम् ॥ ५४ ॥ एकार्णवे जगत्यस्मिन्योगनिद्रां व्रजामि तु ॥ मां पश्यन्ति महात्मानः सुप्तिकाले महर्षयः ॥५५॥ जनलोके वर्त्तमानास्तापसा योगचक्षुषा ॥ अहं पुराणः पुरुषो भूर्भुवःप्रभवो विभुः ॥ ५६ ॥ सहस्रचरणः श्रीमान् सहस्राक्षः सहस्रपात् ॥ मन्त्रोऽहं ब्राह्मणा गावः कुशोऽथ समिधो ह्यहम् ॥ ५७ ॥ प्रोक्षणीयं स्रुवश्चैव सोमो व्रतमथास्म्यहम् ॥ संवर्त्तको महानात्मा पवित्रं परमं यशः ॥५८॥ मेधाप्यहं प्रभुर्गोप्ता गोपतिर्ब्राह्मणो मुखम् ॥ अनन्तस्तारको योगी गतिर्गतिमतां वरः ॥ ५९ ॥ हंसः प्राणोऽथ कपिलो विश्वमूर्त्तिः सनातनः ॥ क्षेत्रज्ञः प्रकृतिः कालो जगद्बीजमथामृतम् ॥ ६० ॥ माता पिता महादेवो मत्तो ह्यन्यो न विद्यते ॥ आदित्यवर्णो भुवनस्य गोप्ता नारायणः पुरुषो योगमूर्त्तिः ॥ तं

१ अग्नितेजोभिऽभूतत्वात्तदाग्निः प्रविशत्यपः इति पा० । २ अत्यन्तसलिलैर्घैश्च परिप्लाव्य दिशो दश इति पा० । ३ महर्षय इति पा० । ४ शिवस्योक्तमिति पा० । ५ मां पश्यन्ति महात्मानः सुप्तं कालविपर्यय इति पा०। ६ मन्त्रोऽग्निर्ब्राह्मणः इति, मैत्राग्निर्ब्राह्मणः इति पा० । ७ प्रोक्षणीच स्रुवश्चैव सोमो घृतमिति पा० । ८ महादेव्यः इति पा० ।

पश्यन्ते यतयो योगनिष्ठा ज्ञात्वात्मानं मम तत्त्वं व्रजन्ति ॥६१॥ इति श्रीकूर्मपुराणे उत्तरार्धे व्यासगीतासु पंचचत्वारिंशोऽध्यायः॥४५॥
अथ व्यासकथनास्थित्युद्भवप्रलयव्याख्यानम्॥कूर्म उवाच॥ अतः परं प्रवक्ष्यामि प्रतिसर्गमनुत्तमम्॥प्राकृतं तत्समासेन शृणुध्वं गदतो मम
॥१॥ गते परार्द्धद्वितये काले लोकप्रकालनः ॥ कालाग्निर्भस्मसात्कर्तुं चरते चाखिलं जगत् ॥ २ ॥ स्वात्मन्यात्मानमावेश्य भूत्वा देवो
महेश्वरः ॥ दहेदशेषं ब्रह्माण्डं सदेवासुरमानुषम् ॥ ३ ॥ तमाविश्य महादेवो भगवान्नीललोहितः ॥ करोति लोकसंहारं भीषणं रूपमाश्रितः
॥४॥प्रविश्य मण्डलं सौरं कृत्वाऽसौ बहुधा पुनः। निर्दहत्यखिलं लोकं सप्तसप्तिस्वरूपधृक्॥५॥स दग्ध्वा सकलं विश्वमस्त्रं ब्रह्मशिरो महत्॥
देवतानां शरीरेषु क्षिपत्यखिलदाहकम् ॥६॥ दग्धेष्वशेषदेवेषु देवी गिरिवरात्मजा ॥ एषा सा साक्षिणी शम्भोस्तिष्ठते वैदिकी श्रुतिः ॥७॥
शिरः कपालैर्देवानां कृतस्रग्वरभूषणः ॥ आदित्यचन्द्रादिगणैः पूरयन्व्योममण्डलम् ॥ ८ ॥ सहस्रनयनो देवः सहस्राक्ष इतीश्वरः ॥ सहस्र
हस्तचरणः सहस्रार्चिर्महाभुजः ॥ ९ ॥ दंष्ट्राकरालवदनः प्रदीप्तानललोचनः ॥ त्रिशूलकृत्तिवसनो योगमैश्वरमास्थितः ॥ १० ॥ पीत्वा
तत्परमानन्दं प्रभूतममृतं स्वयम् ॥ करोति ताण्डवं देवीमालोक्य परमेश्वरः ॥ ११ ॥ पीत्वा नृत्यामृतं देवी भर्तुः परममंगलम् ॥
योगमास्थाय देवस्य देहमायाति शूलिनः ॥ १२ ॥ स भुक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् ॥ ज्योतिःस्वभावं भगवान्दग्ध्वा
ब्रह्माण्डमण्डलम् ॥ १३ ॥ संस्थितेष्वथ देवेषु ब्रह्मा विष्णुः पिनाकधृक् ॥ गुणैरशेषैः पृथिवी विलयं याति वारिषु ॥ १४ ॥ स वारि
तत्त्वं सगुणं ग्रसते हव्यवाहनः ॥ तेजः स्वगुणसंयुक्तं वायौ संयाति संक्षयम् ॥ १५ ॥ आकाशे सगुणो वायुः प्रलयं याति विश्वभृत् ॥
भूतादौ च तथाकाशो लीयते गुणसंयुतः ॥ १६ ॥ इन्द्रियाणि च सर्वाणि तैजसे याति संक्षयम् ॥ वैकारिको देवगणैः प्रलयं याति सत्तमाः
॥ १७ ॥ त्रिविधोऽयमहंकारो महति प्रलये व्रजेत् ॥ महान्तमेभिः सहितं ब्रह्माणममितौजसम् ॥ १८ ॥ अव्यक्तजगतो योनिः संहरे

१ पश्यन्ते इति आर्षमात्मनेपदम् । मां पश्यतीति पा० । २ ज्ञात्वात्मानममृतत्वं व्रजन्तीति, अमृतं त्वां व्रजन्ति इति पा० । ३ करोति निखिलां गतिमिति पा० । ४ स्वात्मना-त्मानमावेश्येति पा० । ५ सहस्राकृतिरीश्वर इति पा० । ६ तैजसं गुणसंयुक्तामिति, तेजस्तु गुणसंयुक्तमिति पा० । ७ वैकारिको देवगण इति पा० ।

देकमव्ययम् ॥ एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः ॥ १९ ॥ वियोजयति चान्योऽन्यं प्रधानं पुरुषम्परम् ॥ प्रधानपुंसोरजयोरेष संहार ईरितः ॥ २० ॥ महेश्वरेच्छाजनितो न स्वयं विद्यते लयः ॥ गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते ॥ २१ ॥ प्रधानं जगतो योनिर्मायातत्त्वमचेतनम् ॥ कूटस्थश्चिन्मयो ह्यात्मा केवलं पञ्चविंशकः ॥२२॥ गीयते मुनिभिः साक्षी महानेष पितामहः ॥ एवं संहारशक्तिश्च शक्तिर्माहेश्वरी ध्रुवा ॥ २३ ॥ प्रधानाद्यं विशेषान्तं देहे रुद्र इति श्रुतिः ॥ योगिनामथ सर्वेषां ज्ञानविन्यस्तचेतसाम् ॥ २४ ॥ आत्यन्तिकश्चैव लयं विदधातीह शंकरः ॥ इत्येष भगवान्रुद्रः संहारं कुरुते वशी ॥ २५ ॥ स्था[3]पिका मोहिनी शक्तिर्नारायण इति श्रुतिः ॥ हिरण्यगर्भो भगवाञ्जगत्सदसदात्मकम् ॥ २६ ॥ सृजेदशेषं प्रकृतेस्तन्मयः पञ्चविंशकः ॥ दुर्बलाः सर्वगाः शान्ताः स्वात्मन्येव व्यवस्थिताः ॥ शक्तयो ब्रह्मविष्ण्वीशा भुक्तिमुक्तिफलप्रदाः ॥ २७ ॥ सर्वेश्वराः सर्वबन्धाः शाश्वतानन्तभोगिनः ॥ एकमेवाक्षरं तत्त्वं पुम्प्रधानेश्वरात्मकम् ॥ २८ ॥ अन्याश्च शक्तयो दिव्यास्तत्र सन्ति सहस्रशः ॥ इत्येते विविधैर्यज्ञैः शक्त्यादित्यादयोऽमराः ॥ एकैकस्याः सहस्राणि देहानां वै शतानि च ॥ २९ ॥ कथ्यन्ते चैव माहात्म्याच्छक्तिरेकैव निर्गुणा ॥ तां[5] शक्तिं स्वयमास्थाय स्वयं देवो महेश्वरः ॥ ३० ॥ करोति विविधान्देहान्हश्यते चैव लीलया ॥ इज्यते सर्वयज्ञेषु ब्राह्मणैर्वेदवादिभिः ॥ ३१ ॥ सर्वकामप्रदो रुद्र इत्येषा वैदिकी श्रुतिः ॥ सर्वासामेव शक्तीनां ब्रह्मविष्णुमहेश्वराः ॥ ३२ ॥ प्राधान्येन स्मृताः देवाः शक्तयः परमात्मनः ॥ आभ्यः परस्ताद्भगवान् परमात्मा सनातनः ॥ ३३ ॥ गीयते सर्वमायात्मा शूलपाणिर्महेश्वरः ॥ एनमेके वदन्त्यग्निं नारायणमथापरे ॥ ३४ ॥ इन्द्रमेके परे प्राणं ब्रह्माणमपरे जगुः ॥ ब्रह्मविष्ण्वग्निवरुणाः सर्वे देवास्तथर्षयः ॥ ३५ ॥ एकस्यैवाथ रुद्रस्य भेदास्ते परिकीर्तिताः ॥ यं यं भेदं समाश्रित्य यजन्ति परमेश्वरम् ॥ ३६ ॥ तत्तद्रूपं समास्थाय प्रददाति फलं शिवः ॥ तस्मादेकतरं भेदं समाश्रित्यापि

१ वियोजयत्यथोऽन्योन्यमिति पा० । २ संसारकरणीति पा० । ३ स्थायिकेति, स्थापिता इति पा० । ४ सर्वतः इति । ५ तां तां शक्तिं समाधायेति, तां स्वशक्तिं समास्थायेति पा० । ६ सर्वशक्त्यात्मा इति पा० ।

शाश्वतम् ॥ ३७ ॥ आराधयन्महादेवं याति तत्परमं पदम् ॥ किन्तु देवं महादेवं सर्वशक्तिं सनातनम् ॥ ३८ ॥ आराधयेद् गिरिशं सगुणं वाथ निर्गुणम् ॥ मया प्रोक्तो हि भवतां योगः प्रागेव निर्गुणः ॥ ३९ ॥ आरुरुक्षुस्तु सगुणं पूजयेत्परमेश्वरम् ॥ पिनाकिनं त्रिनयनं जटिलं कृत्तिवाससम् ॥४०॥ रुक्माभं वा सहस्रार्कांश्चिन्तयेद्वैदिकी श्रुतिः ॥ एष योगः समुद्दिष्टः सबीजो मुनिपुंगवाः ॥ ४१ ॥ अत्राप्यशक्तोऽथ हरं विश्वं ब्रह्माणमर्चयेत् ॥ अथ चेदसमर्थः स्यात्तत्रापि मुनिपुङ्गवाः ॥४२॥ ततो वाय्वग्निशक्रादीन् पूजयेद्भक्तिसंयुतः ॥ तस्मात्सर्वान् परित्यज्य देवान् ब्रह्मपुरोगमान् ॥ ४३ ॥ आराधयेद्विरूपाक्षमादिमध्यान्तसंस्थितम् ॥ भक्तियोगसमायुक्तः स्वधर्मनिरतः शुचिः ॥ ४४ ॥ तादृशं रूपमास्थाय आसाद्यात्यन्तिकं शिवम् ॥ एष योगः समुद्दिष्टः सबीजोऽत्यन्तभावनः ॥ ४५ ॥ यथाविधि प्रकुर्वाणः प्राप्नुयादैश्वरम्पदम् ॥ द्वे चान्ये भावने शुद्धे प्रागुक्ते भवतामिह ॥ ४६ ॥ अथापि कथितो योगो निर्बीजश्च सबीजकः ॥ ज्ञानं तदुक्तं निर्बीजं पूर्वं हि भवतां मया ॥ ४७ ॥ विष्णुं रुद्रं विरञ्चिञ्च सबीजे साधयेद्बुधः ॥ अथ वाय्वादिकान्देवान् तत्परो नियतात्मवान् ॥ ४८ ॥ पूजयेत्पुरुषं विष्णुं चतुर्मूर्त्तिधरं हरिम् ॥ अनादिनिधनं देवं वासुदेवं सनातनम् ॥ ४९ ॥ नारायणं जगद्योनिमाकाशं परमम्पदम् ॥ तल्लिङ्गधारी नियतं यद्युक्तस्तदुपाश्रयः ॥ ५० ॥ एष एव विधिर्वा स्वभावने चान्तिमे मतः ॥ इत्येतत्कथितं ज्ञानं भावनासंश्रयम्परम् ॥ ५१ ॥ इन्द्रद्युम्नाय मुनये कथितं यन्मया पुरा ॥ अव्यक्तात्मकमेवेदं चेतनाचेतनं जगत् ॥ ५२ ॥ तदीश्वरं परं ब्रह्म तस्माद्ब्रह्ममयं जगत् ॥ सूत उवाच ॥ एतावदुक्त्वा भगवान्विरराम जनार्दनः ॥ तुष्टुवुर्मुनयो विष्णुं शक्रेण सह माधवम् ॥ ५३ ॥ मुनय ऊचुः ॥ नमस्ते कूर्मरूपाय विष्णवे परमात्मने ॥ नारायणाय विश्वाय वासुदेवाय ते नमः ॥ ५४ ॥ नमो नमस्ते कृष्णाय गोविन्दाय नमो नमः ॥ माधवाय च ते नित्यं नमो यज्ञेश्वराय च ॥ ५५ ॥

१ पद्मासनस्थं रुक्माभं चिन्तयेद्वैदिकीति पा० । २ विधाने भावने शुद्धे इति पा० । ३ संयतेन्द्रियः इति पा० । ४ तद्भक्तस्तदुपाश्रय इति, नियतस्तद्भक्तस्तदुपाश्रय इति पा० । ५ विधिर्ब्राह्मे भावने चान्तिके मत इति पा० । ६ प्रद्युम्नायेदं कथितं मुनये यन्मया पुरेति पा० । ७ माधवाय नमस्तुभ्यमिति पा० ।

सहस्रशिरसे तुभ्यं सहस्राक्षाय ते नमः ॥ नमः सहस्रहस्ताय सहस्रचरणाय च ॥ ५६ ॥ ॐ नमो ज्ञानरूपाय विष्णवे परमात्मने ॥ आनन्दाय नमस्तुभ्यं मायातीताय ते नमः ॥ ५७ ॥ नमो गूढशरीराय निर्गुणाय नमोऽस्तु ते ॥ पुरुषाय पुराणाय सत्तामात्रस्वरूपिणे ॥ ५८ ॥ नमः सांख्याय योगाय केवलाय नमोऽस्तु ते ॥ धर्मज्ञानाभिगम्याय निष्कलाय नमोऽस्तु ते ॥ ५९ ॥ नमस्ते योगतत्त्वाय[3] महायोगेश्वराय च ॥ परावराणां प्रभवे वेदवेद्याय ते नमः ॥ ६० ॥ नमो बुद्धाय शुद्धाय नमो युक्ताय हेतवे ॥ नमो नमो नमस्तुभ्यं मायिने वेधसे नमः ॥ ६१ ॥ नमोऽस्तु ते वराहाय नारसिंहाय ते नमः ॥ वामनाय नमस्तुभ्यं हृषीकेशाय ते नमः ॥ ६२ ॥ स्वर्गापवर्गदानाय नमोऽप्रतिहतात्मने ॥ नमो योगाधिगम्याय योगिने योगदायिने ॥ ६३ ॥ देवानां पतये तुभ्यं देवार्त्तिशमनाय ते ॥ भगवंस्त्वत्प्रसादेन सर्वसंसारनाशनम् ॥ ६४ ॥ अस्माभिर्विदितं ज्ञानं यज्ज्ञात्वामृतमश्नुते ॥ श्रुताश्च विविधा धर्मा वंशा मन्वन्तराणि च ॥ ६५ ॥ सर्गश्च प्रतिसर्गश्च ब्रह्माण्डस्यास्य विस्तरः ॥ त्वं हि सर्वजगत्साक्षी विश्वो नारायणः परः ॥ ६६ ॥ त्रातुमर्हस्यनन्तात्मा त्वामेव शरणङ्गताः ॥ सूत उवाच ॥ एतद्वः कथितं विप्रा भोगमोक्षप्रदायकम् ॥ ६७ ॥ कौर्मं पुराणमखिलं यज्जगाद गदाधरः ॥ अस्मिन् पुराणे लक्ष्म्यास्तु सम्भवः कथितः पुरा ॥ ६८ ॥ मोहायाशेषभूतानां वासुदेवेन योजितः ॥ प्रजापतीनां सर्गास्तु वर्णधर्माश्च वृत्तयः ॥ ६९ ॥ धर्मार्थकाममोक्षाणां यथावल्लक्षणं शुभम् ॥ पितामहस्य विष्णोश्च महेशस्य च धीमतः ॥ ७० ॥ एकत्वञ्च पृथक्त्वञ्च विशेषश्चोपवर्णितः ॥ भक्तानां लक्षणम्प्रोक्तं समाचारश्च भोजनम् ॥ ७१ ॥ वर्णाश्रमाणां कथितं यथावदिह लक्षणम् ॥ आदिसर्गस्ततः पश्चादण्डावरणसप्तकम् ॥ ७२ ॥ हिरण्यगर्भः सर्गश्च कीर्त्तितो मुनिपुङ्गवाः ॥ कालसंख्याप्रकथनं माहात्म्यञ्चेश्वरस्य च ॥ ७३ ॥ ब्रह्मणः शयनञ्चाप्सु नामनिर्वचनं तथा ॥ वराहवपुषो भूयो भूमेरुद्धरणं पुनः ॥ ७४ ॥ मुख्यादिसर्गकथनं मुनिसर्गस्तथापरः ॥ व्याख्यातो

---

१ परमात्मस्वरूपिणे इति, परमार्थस्वरूपिणे इति पा० । २ धर्मज्ञानाधिगम्याय निष्कलाय नमो नमः इति पा० । ३ व्योमरूपाय इति पा० । ४ स्वर्गापवर्गदात्रे च नमोऽप्रतिहताय चेति पा० । ५ अनन्तात्मन्निति, त्रातुमर्हसि नः सर्वानिति पा० । ६ माहात्म्य शेषभूतानामिति पा० ।

रुद्रसर्गश्च ऋषिसर्गश्च तापसः ॥ ७५ ॥ धर्मस्य च प्रजासर्गस्तामसात्पूर्वमेव तु ॥ ब्रह्मविष्णोर्विवादः स्यादन्तर्देहप्रवेशनम् ॥ ७६ ॥ पद्मोद्भवत्वं देवस्य मोहस्तस्य च धीमतः ॥ दर्शनञ्च महेशस्य माहात्म्यं विष्णुनेरितम् ॥७७॥ दिव्यदृष्टिप्रदानं च ब्रह्मणः परमेष्ठिना ॥ संस्तवो देवदेवस्य ब्रह्मणा परमेष्ठिना ॥७८॥ प्रसादो गिरिशस्याथ वरदानं तथैव च॥ संवादो विष्णुना सार्द्धं शङ्करस्य महात्मनः ॥७९॥ वरदानं तथा पूर्वमन्तर्द्धानं पिनाकिनः ॥ वधश्च कथितो विप्रा मधुकैटभयोः पुरा ॥ ८० ॥ अवतारोऽथ देवस्य ब्रह्मणो नाभिपङ्कजात् ॥ एकीभावश्च देवेन[1] ब्रह्मणा कथितः पुरा ॥ ८१ ॥ विमोहो ब्रह्मणश्चाथ संज्ञानात्तु[2] हरेस्ततः॥ तपश्चरणमाख्यातं देवदेवस्य धीमतः ॥८२॥ प्रादुर्भावो महेशस्य ललाटात्कथितस्ततः ॥ रुद्राणां कथिता सृष्टिर्ब्रह्मणः प्रतिषेधनम् ॥ ८३ ॥ भूति[3]श्च देवदेवस्य वरदानोपदेशकौ ॥ अन्तर्द्धानञ्च देवस्य तपश्चर्याण्डजस्य च ॥ ८४ ॥ दर्शनं देवदेवस्य नरनारीशरीरता ॥ देव्या विभागकथनं देवदेवात्पिनाकिनः ॥८५॥ देव्याश्च पश्चात्कथितं दक्षपुत्रीत्वमेव च ॥ हिमवद्दुहितृत्वं च देव्या याथात्म्यमेव च ॥ ८६ ॥ दर्शनं दिव्यरूपस्य विश्वरूपा[4]क्षदर्शनम् ॥ नाम्नां सहस्रं कथितं पित्रा हिमवता स्वयम् ॥ ८७ ॥ उपदेशो महादेव्या वरदानं तथैव च ॥ भृग्वादीनां प्रजासर्गो राज्ञां वंशस्य विस्तरः ॥ ८८ ॥ प्राचेतसत्व दक्षस्य दक्षयज्ञविमर्द्दनम् ॥ दधीचस्य च यज्ञस्य विवादः कथितस्तदा ॥ ८९ ॥ ततश्च शापः कथितो मुनीनां मुनिपुङ्गवाः ॥ रुद्रागतिः प्रसादश्च अन्तर्द्धानं पिनाकिनः ॥ ९० ॥ पितामहोपदेशः[5] स्यात् कीर्त्यते वै रणाय[6] तु ॥ दक्षस्य च प्रजासर्गः कश्यपस्य महात्मनः ॥ ९१ ॥ हिरण्यकशिपोर्नाशो हिरण्याक्षवधस्तथा ॥ ततश्च शापः कथितो देवदारुवनौकसाम् ॥९२॥ निग्रहश्चान्धकस्याथ गाणपत्यमनुत्तमम् ॥ प्रह्लादनिग्रहश्चाथ बलेः संयमनन्त्वथ ॥ ९३ ॥ बाणस्य निग्रहश्चाथ प्रसादस्तस्य शूलिनः ॥ ऋषीणां वंशविस्तारो राज्ञां वंशाः प्रकीर्त्तिताः ॥ ९४ ॥ वसुदेवात्ततो विष्णोरुत्पत्तिः स्वेच्छया हरेः ॥ दर्शनञ्चोपमन्योर्वै

१ वरदस्य ततः परमिति पा० । २ देवस्य कथितस्तवेति, देवस्य विष्णुना सह तत्त्वत इति पा०। ३ ततश्चेति, श्रुतिश्च इति पा० । ४ वैश्वरूपस्य दर्शनमिति, विश्वरूपस्य दर्शनमिति पा० । ५ पितामहस्योपदेश इति पा० । ६ रक्षणाय इति, कीर्त्तितं रक्षणाय चेति पा० ।

तपश्चरणमेव च ॥ ९५ ॥ वरलाभो महादेवं दृष्ट्वा साम्बं त्रिलोचनम् ॥ कैलासगमनञ्चाथ निवासस्तस्य शार्ङ्गिणः ॥ ९६ ॥ ततश्च कथ्यते भीतिर्द्वारवत्यां निवासिनाम् ॥ रक्षणं गरुडेनाथ जित्वा[2] शत्रून्महाबलान् ॥ ९७ ॥ नारदागमनं चैव यात्रा चैव गरुत्मतः ॥ ततश्च कृष्णागमनं मुनीनामाश्रमस्ततः[3] ॥ ९८ ॥ नैत्यकं वासुदेवस्य शिवलिङ्गार्च्चनं तथा ॥ मार्कण्डेयस्य च मुनेः प्रश्नः प्रोक्तस्ततः परम् ॥ ९९ ॥ लिङ्गार्च्चननिमित्तञ्च लिङ्गस्यापि सलिङ्गिनः ॥ याथात्म्यकथनं चाथ लिङ्गाद्दै भीतिरेव च ॥ १०० ॥ ब्रह्मविष्णोस्तथा मध्ये कीर्त्तिता मुनिपुंगवाः ॥ मोहस्तयोर्वै कथितो गमनञ्चोर्द्धतो ह्यधः ॥ १०१ ॥ संस्तवो देवदेवस्य प्रसादः परमेष्ठिनः ॥ अन्तर्द्धानञ्च लिङ्गस्य साम्बोत्पत्तिस्ततः परम् ॥ १०२ ॥ कीर्त्तिता चानिरुद्धस्य समुत्पत्तिर्द्विजोत्तमाः ॥ कृष्णस्य गमने बुद्धिर्ऋषीणामागतिस्तथा ॥ १०३ ॥ अनुशासनञ्च कृष्णेन वरदानं महात्मनः ॥ गमनञ्चैव कृष्णस्य पार्थस्याप्यथ दर्शनम् ॥ १०४ ॥ कृष्णद्वैपायनस्योक्तं युगधर्माः सनातनाः ॥ अनुग्रहोऽथ पार्थस्य वाराणस्यां गतिस्ततः ॥ १०५ ॥ पाराशर्यस्य च मुनेर्व्यासस्याद्भुतकर्मणः ॥ वाराणस्याश्च माहात्म्यं तीर्थानाञ्चैव वर्णनम् ॥ १०६ ॥ व्यासस्य तीर्थयात्रा च देव्याश्चैवाथ दर्शनम् ॥ उद्वासनञ्च कथितं वरदानं तथैव च ॥ १०७ ॥ प्रयागस्य च माहात्म्यं क्षेत्राणामथ कीर्त्तनम् ॥ फलञ्च विपुलं विप्रा मार्कण्डेयस्य निर्गमः ॥ १०८ ॥ भुवनानां स्वरूपञ्च ज्योतिषाञ्च निवेशनम् ॥ कीर्त्तितंश्चापि वर्षाणां नदीनाञ्चैव निर्णयः ॥ १०९ ॥ पर्वतानाञ्च कथनं स्थानानि च दिवौकसाम् ॥ द्वीपानां प्रविभागश्च श्वेतद्वीपोपवर्णनम् ॥ ११० ॥ शयनं केशवस्याथ माहात्म्यञ्च महात्मनः ॥ मन्वन्तराणां कथनं

---

१ सार्द्धत्रिशूलिनमिति पा० । २ त्रिधा शक्तिर्महात्मना इति, जित्वा शत्रून् महात्मनेति पा० । ३ मुनीनामागतिस्ततः इति, मुनीनामागम इति पा० । ४ यथार्थं कथितञ्चाथ लिङ्गाविर्भावएव चेति, सर्वात्मकथनञ्चाथ लिङ्गाविर्भाव एव च इति पा० । ५ तीर्थयात्रा तु व्यासस्य इति पा० । ६ क्षेत्राणां मुनिपुङ्गवाः इति पा० । ७ कीर्त्यन्ते चैव वर्षाणीति पा० । ८ श्वेतद्वीपस्य वर्णनमिति पा० ।

विष्णोर्माहात्म्यमेव च ॥ १११ ॥ वेदशाखाप्रणयनं व्यासानां कथनं ततः ॥ अवेदस्य च वेदस्य कथितं मुनिपुङ्गवाः ॥ ११२ ॥ योगेश्वराणां च कथा शिष्याणां चाथ कीर्त्तनम्॥गीताश्च विविधा गुह्या ईश्वरस्याथ कीर्त्तिताः॥११३॥ वर्णाश्रमाणामाचारः प्रायश्चित्तविधिस्ततः ॥ कपालित्वं च रुद्रस्य भिक्षाचरणमेव च ॥ ११४ ॥ पतिव्रतानामाख्यानं[2] तीर्थानां च विनिर्णयः ॥ तथा मंकणकस्याथ निग्रहः कीर्तितो द्विजाः ॥ ११५ ॥ वधश्च कथितो विप्राः कालस्य च समासतः ॥ देवदारुवने शंभोः प्रवेशो माधवस्य च ॥ ११६ ॥ दर्शनं षट्कुलीयानां देवदेवस्य धीमतः ॥ वरदानं च देवस्य नन्दने तु प्रकीर्तितम् ॥ ११७ ॥ नैमित्तिकश्च कथितः प्रतिसर्गस्ततः परम् ॥ प्राकृतः प्रलयश्चोर्द्ध्वं सबीजो[3] योग एव च ॥ ११८ ॥ एवं ज्ञात्वा पुराणस्य संक्षेपं कीर्त्तयेत्तु यः ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ११९ ॥ एवमुक्त्वा श्रियं देवीमादाय पुरुषोत्तमः ॥ सन्त्यज्य कूर्मसंस्थानं प्रजगाम हरस्तदा ॥ १२० ॥ देवाश्च सर्वे मुनयः स्वानि स्थानानि भेजिरे ॥ प्रणम्य पुरुषं विष्णुं गृहीत्वा ह्यमृतं द्विजाः ॥ १२१ ॥ एतत्पुराणं सकलं भाषितं कूर्मरूपिणा ॥ साक्षाद्देवाधिदेवेन विष्णुना विश्वयोनिना ॥ १२२ ॥ यः पठेत्सततं विप्रा नियमेन समासतः ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ १२३ ॥ लिखित्वा चैव यो दद्याद्वैशाखे कार्त्तिकेऽपि वा ॥ विप्राय वेदविदुषे तस्य पुण्यं निबोधत ॥ १२४ ॥ सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ॥ भुक्त्वा तु विपुलान्मर्त्यो भोगान्दिव्यान् सुशोभनान् ॥ १२५ ॥ ततः स्वर्गात्परिभ्रष्टो विप्राणां जायते कुले ॥ पूर्वसंस्कारमाहात्म्याद्ब्रह्मविद्यामवाप्नुयात् ॥ १२६ ॥ पठित्वाध्यायमेवैकं सर्वपापैः प्रमुच्यते ॥ योऽर्थं विचारयेत्सम्यक् प्राप्नोति परमं पदम् ॥ १२७ ॥ अध्येतव्यमिदं पुण्यं विप्रैः पर्वणि पर्वणि ॥ श्रोतव्यश्च द्विजश्रेष्ठा महापातकनाशनम् ॥ १२८ ॥ एकतस्तु पुराणानि

१ पुण्या ईश्वरस्यानुकीर्तिताः इति पा० । २ पतिव्रतायाश्चाख्यानमिति पा० । ३ मरीच्याद्याश्च एव चेति पा० । ४ रुद्रलोके इति, विष्णुलोके इति पा० । ५ स्वस्थानञ्च जगामहेति, स जगाम हरिः प्रभुरिति पा० । ६ वैशाखे मासि सुव्रतः इति पा० ।

सेतिहासानि कृत्स्नशः ॥ एकत्र परमं वेदमेतदेवातिरिच्यते ॥ १२९ ॥ इदं पुराणं मुक्तवैकं नान्यत्साधनकं परम् ॥ यथावदत्र भगवान्देवो नारायणो हरिः ॥ १३० ॥ कीर्त्यते हि यथा विष्णुर्न तथाऽन्येषु सुव्रताः ॥ ब्राह्मी पौराणिकी चेयं संहिता पापनाशनी ॥ १३१ ॥ अत्र तत्परमं ब्रह्म कीर्त्यते हि यथार्थतः ॥ तीर्थानां परमं तीर्थं तपसाञ्च परं तपः ॥ ३२ ॥ ज्ञानानां परमं ज्ञानं व्रतानां परमं व्रतम् ॥ नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ ॥१३३॥ योऽधीते चैव मोहात्मा स याति नरकान् बहून् ॥ श्राद्धे वा दैविके कार्ये श्राव्यं चेदं द्विजातिभिः ॥ १३४ ॥ यज्ञान्ते तु विशेषेण सर्वदोषविशोधनम् ॥ मुमुक्षूणामिदं शास्त्रमध्येतव्यं विशेषतः ॥१३५॥ श्रोतव्यश्चाथ मन्तव्यं वेदार्थपरिबृंहणम् ॥ ज्ञात्वा यथावद्विप्रेन्द्रान् श्रावयेद्भक्तिसंयुतान् ॥ १३६ ॥ सर्वपापविनिर्मुक्तो ब्रह्मसायुज्यमाप्नुयात् ॥ योऽश्रद्दधाने पुरुषे दद्याच्चाधार्मिके तथा ॥ १३७ ॥ सम्प्रेत्य गत्वा निरयान् शुनां योनिं व्रजत्यधः ॥ नमस्कृत्य हरिं विष्णुं जगद्योनिं सनातनम् ॥ १३८ ॥ अध्येतव्यमिदं शास्त्रं कृष्णद्वैपायनं तथा ॥ इत्याज्ञा देवदेवस्य विष्णोरमिततेजसः ॥ १३८ ॥ पाराशर्यस्य विप्रर्षेर्व्यासस्य च महात्मनः ॥ श्रुत्वा नारायणाद्देवान्नारदो भगवानृषिः ॥ १४० ॥ गौतमाय ददौ पूर्वं तस्माच्चैव पराशरः॥ पराशरोऽपि भगवान् गंगाद्वारे मुनीश्वराः ॥ १४१ ॥ मुनिभ्यः कथयामास धर्मकामार्थमोक्षदम् ॥ ब्रह्मणा कथितं पूर्वं सनकाय च धीमते ॥ १४२ ॥ सनत्कुमाराय तथा सर्वपापप्रणाशनम् ॥ सनकाद्भगवान् साक्षाद्देवलो योगवित्तमः ॥ १४३ ॥ अवाप्तवान्पञ्चशिखो देवलादिदमुत्तमम् ॥ सनत्कुमाराद्भगवान्मुनिः सत्यवतीसुतः ॥१४४॥ एतत्पुराणं परमं व्यासः सर्वार्थसञ्चयम् ॥ तस्माद्व्यासा

---

१ इदं पुराणं त्यक्त्वैकं नास्त्यन्यत्साधनं परमिति पा० । २ योऽधीते सत्तमो ह्यात्मा प्रयातीति, योऽधीत चैव माहात्म्यं स याति इति पा० । ३ कृष्णद्वैपायनोऽब्रवीदिति पा० । ४ परमात्मनः इति पा० ।

दद्दं श्रुत्वा भवतां पापनाशनम् ॥ १४५ ॥ ऊचिवान्वै भवद्भिश्च दातव्यं धार्मिके जने ॥ तस्मै व्यासाय मुनये सर्वज्ञाय महर्षये ॥ १४६ ॥ पाराशर्याय शान्ताय नमो नारायणात्मने ॥ यस्मात्सञ्जायते कृत्स्नं यत्र चैव प्रलीयते ॥ नमस्तस्मै सुरेशाय विष्णवे कूर्मरूपिणे ॥ १४७ ॥ इति श्रीकूर्मपुराणे षट्साहस्र्यां संहितायामुत्तरार्द्धे व्यासगीतासु षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

॥ समाप्तोऽयं ग्रंथः ॥

अथ कूर्मपुराणस्य पारायणं समाप्तम्। आरम्भ 23.10.2004

# श्रीकूर्ममहापुराणम् : श्लोकानुक्रमणी

**द**

प

**भ**

**श**

ह

